| विषयाः | पृ. | पं. |
|---|---|---|
| १४१४ पुरुषत्वे सतीति विशेषणे दोषप्रदर्शनम् | ३५५ | ६ |
| १४१५ आर्यदेशोत्पत्त्यादि विशेषणेऽपि दोषोद्भावनम् | ३५५ | ७ |
| १४१६ वस्त्रपरिग्रहस्य तृष्णापूर्वकत्वमाशङ्क्याऽऽहारादीनामपि तथात्वप्रसङ्गमुद्भाव्य निरसनम् | ३५५ | १५ |
| १४१७ आहारादेः क्लिष्टाध्यवसायाहेतुतामाशंक्य निरसनम् | ३५६ | २ |
| १४१८ वस्त्रादिग्रहणे प्राणिव्यापत्तिमाशंक्य प्रतिविधानम् | ३५६ | ८ |
| १४१९. वस्त्रादिग्रहणस्य नैर्ग्रन्थ्यविपक्षभूतत्वासिद्धिवर्णनम् | ३५६ | २२ |
| १४२० वस्त्रादेर्धर्मोपकरणतासाधनम् | ३५६ | २७ |
| १४२१ पात्रस्यापि धर्मोपकरणत्वसमर्थनम् | ३५७ | ९ |
| १४२२ करपात्रित्वे दोषप्रदानम् | ३५७ | १६ |
| १४२३ स्वीकृतग्रन्थत्वादिहेतो र्निराकरणम् | ३५८ | १ |
| १४२४ सोपानोसंहार. | ३५८ | १५ |


## स्त्रीमुक्तिसाधनम्


| विषयाः | पृ. | पं. |
|---|---|---|
| १४२५ मुक्तिभाक्त्वाभावसाधकस्त्रीत्वहेतोर्विकल्पविधानेन निरसनम् | ३५८ | २२ |
| १४२६ अविकलचारित्रप्राप्तिर्न स्त्रीणामित्यस्य दूषणम् | ३५८ | २७ |
| १४२७ विशिष्टचारित्रवत्त्वेऽपि न तासां परिणामविशेषप्राप्तिरित्याशंकायां निराकरणम् | ३५९ | ५ |
| १४२८ स्त्रीणां तद्वदपरिक्षयसामर्थ्यकथनम् | ३५९ | ११ |
| १४२९ उदितस्त्रीवेदत्वादिति हेतोर्निराकरणम् | ३५९ | १७ |
| १४३० चतुर्दशपूर्वसंवित्संबन्धित्वाभावसिद्धिर्यथा तथैव मुक्तिभाक्त्वसिद्धिरपीति वर्णनम् | ३५९ | २१ |
| १४३१ अविद्यमानाधःसप्तमनरकप्राप्त्यविकलकारणकर्मबीजभूताध्यवसानत्वहेतोर्विकल्पनातो निरसनम् | ३६० | २ |
| १४३२ स्त्रीणां तथाविधकर्मण्यागमस्य प्रमाणत्वे मुक्तियोग्यतापि तत एव प्रतिपन्नेत्यभिधानम् | ३६० | १४ |
| १४३३ स्त्रीणामाद्यशुक्लध्यानद्वयाभावान्न निर्वाणमित्यस्य दूषणम् | ३६१ | ३ |
| १४३४ क्रूराध्यवसायत्वं तासामित्याशंकानिराकरणम् | ३६१ | १६ |
| १४३५ भगवत्प्रतिमायाः आभरणादिर्न विधेयेति दैगम्बरमतप्रतिक्षेपः | ३६१ | २३ |
| १४३६ सिद्धान्तप्रत्यनीकः सम्यगर्थावधारणविधुरो भवतीति प्रदर्शिका कारिका | ३६२ | ६ |
| १४३७ तदर्थप्रतिपादनम् | ३६२ | १० |
| १४३८ स्वपरसमयविज्ञानाभावे दोषप्रदर्शनपरा कारिका | ३६२ | १७ |
| १४३९. तद्भावार्थवर्णनम् | ३६२ | २१ |
| १४४० ज्ञानक्रिययोरन्यतरन्न मोक्षसाधनमिति बोधककारिका | ३६३ | ३ |
| १४४१ तद्भावार्थप्रकाशनम् | ३६३ | ७ |
| १४४२ जिनवचनस्य मङ्गलं भवत्विति प्रतिपादनपरा कारिका | ३६३ | १९ |
| १४४३ तद्व्याख्यानम् | ३६३ | २३ |
| १४४४ प्रत्येकं नयानां दुर्नयत्वेऽपि सापेक्षाणां सुनयत्वमित्यभिधानम् | ३६४ | २ |
| १४४५ प्रकरणोपसंहारः | ३६४ | १२ |
| १४४६ सङ्कलयितुर्वृत्तानि | ३६४ | १४ |
| १४४७ सोपानस्य ग्रन्थस्य च पूर्णता | ३६४ | २८ |


—: इति विषयानुक्रमः :—

॥ अर्हम् ॥

जैनाचार्य-श्रीमद्विजयलब्धिसूरीश्वरेण सङ्कलितम्

# सम्मतितत्त्वसोपानम्



॥ ॐ अर्हम् ॥

श्री आत्मकमललब्धिसूरीश्वरेभ्यो नमः

जैनाचार्यश्रीमद्विजयलब्धिसूरीश्वरेण सङ्कलितम्

# सम्मतितत्त्वसोपानम् ॥



5

श्रीज्ञानादिगुणैककान्तनिलयं स्याद्वादविद्यागुरुम्
दुर्वादिद्विपगर्वभञ्जनचणं देवेन्द्रमुख्यैर्नुतम् ।
श्रीमद्वीरजिनेश्वरं भविहितं नत्वाऽल्पधीसुग्रहम्
कुर्वे सम्मतितत्त्वयोर्निलययोः सोपानमत्युज्ज्वलम् ॥

अथ करालकालकवलितमतीनां मोक्षानन्यसाधारणकारणरत्नत्रयावाप्तिकामनया सुदुर्ग- 10
म्यार्हद्वचनमहार्णवमवतितीर्षूणां भव्यानां तदवतरणकारणतया सम्मतितर्कनामानं ग्रन्थ-
मारिरिप्सुराचार्यः श्रीसिद्धसेनदिवाकरः शिष्टाः कचिदभीष्टे वस्तुनि प्रवर्त्तमाना अभीष्टदेव-
ताविशेषस्तवविधानपूर्वकं प्रवर्तन्त इति शिष्टाचारपरिपालनपरः शासनमतिशयतः स्तवार्हं
तीर्थकरैरपि शासनाभिव्यक्तिकरणसमये विहितस्तवत्वादिति मत्वा तदसाधारणगुणोत्कीर्तन-
मुखेन तत्स्तवमारचयति— 15

**सिद्धं सिद्धत्थाणं ठाणमणोवमसुहं उवगयाणं ।**
**कुसमयविसासणं सासणं जिणाणं भवजिणाणं ॥ १ ॥**

सिद्धं सिद्धार्थानां स्थानमनुपमसुखमुपगतानाम् ।
कुसमयविशासनं शासनं जिनानां भवजिनानाम् ॥ छाया ॥

'सिद्धं' इति, जीवादयः पदार्था यथावस्थितत्वेन शास्यन्तेऽनुशिष्यन्तेऽनेनेति शासनं 20
द्वादशाङ्गम् । तच्च कीदृशमित्यत्राह सिद्धमिति, स्वतो निश्चितप्रामाण्यकं नतु तत्र प्रकरणात्
प्रामाण्यं प्रतिष्ठाप्यमित्यर्थः । केषां तच्छासनमित्यत्राह जिनानामिति, तीर्थकृतामित्यर्थः,
तथा च जिनानां शासनमेव स्वतो निश्चितप्रामाण्यकमित्यर्थः । ननु जिनानां शासनमिति

शासनस्य जिनप्रणीतत्वं तत्प्रणीतत्वाच्च प्रामाण्यमुक्तं भवति तथा च कथं तस्य तत्प्रणीतत्वसि-
द्धिरित्यत्र हेतुगर्भविशेषणमाह–**कुसमयविशासनमिति**, सम्यक्–प्रमाणान्तराविसंवादित्वेन,
ईयन्ते–परिच्छिद्यन्त इति समया नष्टमुष्टिचिन्तालाभालाभसुखासुखजीवितमरणग्रहोपरागमंत्रौ-
षधशक्त्यादयः पदार्थाः, तेषां विविधमन्यपदार्थकारणत्वेन कार्यत्वेन चानेकप्रकारं शासनं प्रति-
5 पादकं समयविशासनम्, कुः–पृथिवी तस्या इव समयविशासने कुसमयविशासनमिति। एवं
च यो यद्विषयाविसंवादलिङ्गानुपदेशानन्वयव्यतिरेकपूर्वको वचनविशेषः स तत्साक्षात्कारि
ज्ञानविशेषप्रभवः, यथाऽस्मदादिप्रवर्त्तितः पृथिवीकाठिन्यादिविषयस्तथाभूतो वचनविशेषः,
नष्टमुष्टिविशेषादिविषयाविसंवादलिङ्गानुपदेशानन्वयव्यतिरेकपूर्वकवचनविशेषश्चायं शासनल-
क्षणोऽर्थः, तस्मात्तत्साक्षात्कारिज्ञानविशेषप्रभव इति प्रयोगः। तत्साक्षात्कारिज्ञानवान्
10 बुद्धादिः कुतो नेत्यत्राह–**सिद्धार्थानामिति**, निश्चितानामर्थानां शासनमिति भावः, बुद्धादी-
नामागमे हि येऽर्थाः प्रतिपादिता न ते प्रमाणविषयत्वेन निश्चिताः, अर्हच्छासनन्तु न तथा,
अत्र प्रमाणविषयत्वेन प्रतिपादितानामर्थानां तथैव निश्चितत्वादिति भावः। ननु मा भूत्त-
त्साक्षात्कारिज्ञानवान बुद्धादिः परं स्वभावसंसिद्धज्ञानादिसम्पन्न ईश्वरः स्यादित्यत्राह–**भव-
जिनानामिति**, नारकादिचतुःपर्यायत्वेन भवन्त्युत्पद्यन्ते प्राणिनोऽस्मिन्निति भवः संसारः,
15 तत्कारणत्वेन रागादिरत्रोपचाराद्विवक्षितः, तं जितवन्त इति भवजिनास्तेषाम्। अनेन
कारणरागादिविजयद्वारेण तत्कार्यभूतस्य भवस्य जयो यैः कृतस्तेषामेवेश्वरत्वं न तु कस्यचित्त-
द्व्यतिरिक्तस्येति सूचितम्। अथवा यतः सिद्धानामर्थानां शासनं–प्रतिपादकं द्वादशाङ्गं भव-
त्यतस्तच्छासनं भवजिनानां कार्यत्वेन सम्बन्धि, अत्र च प्रयोगः, शासनं जिनप्रणीतम्, प्रमा-
णान्तराविसंवादियथोक्तनष्टमुष्ट्यादिसूक्ष्मान्तरितदूरार्थप्रतिपादकत्वान्यथानुपपत्तेरिति, अत्र
20 च पक्षे साधनस्य स्वसाध्येन व्याप्तिः साध्यधर्मिण्येव निश्चिताऽतो न दृष्टान्तोपन्यासः
कृतः, बहिर्व्याप्तेर्विद्यमानत्वेऽपि साध्यधर्मिणि साध्यव्याप्त्यप्रतिपत्तौ तत्र साध्यासिद्धेः
सादृश्यमात्रस्याकिञ्चित्करत्वात्, दृष्टान्तव्यतिरेकेणापि साध्यस्य सिद्धेश्च। कुसमयविशा-
सनमिति पदन्तु बुद्धादिशासनानामसर्वज्ञप्रणीतत्वप्रतिपादनपरम्, तथा च कुत्सिता ये
समयाः बुद्धकपिलादिप्रणीतसिद्धान्तास्तेषां दृष्टादृष्टविषये विरोधाद्युद्भावकत्वेन विशासनं–
25 विध्वंसकं यतो द्वादशाङ्गमतस्तदेव भवजिनानां जिनानां शासनं भवति, अत एव च तत्सिद्धं
निश्चितप्रामाण्यकमिति भावः। ननु यदि संसारहेतुरागादिजेतृत्वं तीर्थकृतां न तर्हि तेषां
शास्त्रप्रणेतृत्वं स्यात्, तज्जयानन्तरमेवापवर्गप्राप्त्या शरीराभावेन वक्तृत्वासम्भवात्, यदि तु
तत्क्षयेऽपि नानन्तरमपवर्गप्राप्तिर्न तर्हि तज्जयोऽपवर्गहेतुर्भवेत्, न हि यस्मिन् सत्यपि यन्न
भवति तत्तदविकलकारणमिति व्यवस्थापयितुं शक्यम्, शाल्यङ्कुरस्य यवबीजमिव। अथ

तेषां निरवशेषं रागादिजयाभावेनापवर्गप्राप्तेः पूर्वमेव शासनप्रणेतृत्वान्न दोष इत्युच्यते तथा-
पि तच्छासनं रागलेशसंपृक्तपुरुषप्रणीतत्वेन नैकान्ततः प्रमाणं स्यात्, कपिलादिपुरुषप्रणी-
तशासनमिवेत्याशङ्कायामाह–स्थानमनुपमसुखमुपगतानामिति, यद्यपि जिनाः सर्वज्ञताप्र-
तिबन्धकघातिकर्मचतुष्टयक्षयाविर्भूतकेवलज्ञानवन्तस्तथापि भवोपग्राहिशरीरनिमित्तानामल्प-
स्थितिकानां कर्मणां सद्भावेन न शरीराभावनिबन्धनशासनप्रणेतृत्वानुपपत्तिः, न वा रागादि- 5
लेशसद्भावेन तत्प्रणीतागमस्याप्रामाण्यम्, विपर्यासनिमित्तस्य घातिकर्मणोऽत्यन्तं क्षयात् ।
नापि तदानीमपवर्गप्राप्तिः भवोपग्राहिकर्मणोऽद्यापि सामस्त्येनाक्षयात, तत्क्षय एव चापवर्ग-
स्यानन्तरभावित्वात्सकलकर्मक्षयस्यैवापवर्गप्राप्तावविकलकारणत्वादिति । शब्दार्थश्च तिष्ठन्ति
सकलकर्मक्षयावाप्तानन्तज्ञानसुखाद्यध्यासिताश्शुद्धात्मानोऽस्मिन्निति स्थानं लोकाग्रलक्षणं वि-
शिष्टक्षेत्रम्, न विद्यते उपमा स्वाभाविकात्यन्तिकत्वेन सकलव्याबाधारहितत्वेन च सर्व- 10
सुखातिशायित्वाद्यस्य तत्सुखमानन्दरूपं यस्मिंस्तदनुपमसुखम्, उपगतानां–कालसामीप्येन
तत्प्राप्तानां, यद्वा अनुपमसुखं स्थानं उप–प्रकर्षेण गतानां प्राप्तानामित्यर्थः, यद्यपि ते लोकाग्र-
लक्षणं स्थानं न प्राप्तास्तथापि 'पदार्थे प्रयुज्यमानाः शब्दा वतिमन्तरेणापि तमर्थं गमयन्ती'
ति न्यायादनुभूयमानतीर्थकरनामकर्मादिलेशसद्भावेऽपि तद्गता इव गता इत्युक्तास्तेन तस्या-
मवस्थायां शासनप्रणेतृत्वं तेषां नानुपपन्नमेव । अथवा 'मुक्ताः सर्वत्र तिष्ठन्ति व्योमवत्ताप- 15
वर्जिता 'इति दुर्नयनिरासायोक्तं' स्थानमनुपमसुखमुपगताना 'मिति, अनुपमसुखं स्थानं
प्रकर्षेणापुनरावृत्त्या गतानामुपगतानामित्यर्थः । यद्वा 'बुद्ध्यादीनां नवानां विशेषगुणानामा-
त्यन्तिकः क्षय आत्मनो मुक्ति 'रिति मतव्यवच्छेदार्थमुक्तं स्थानमनुपमसुखमुपगतानामिति,
स्थितिः–स्थानं स्वरूपप्राप्तिः, तदनुपमसुखं उप सकलकर्मक्षयानन्तरमव्यवधानेन गतानां–
प्राप्तानां शैलेश्यवस्थाचरमसमयोपादेयभूतमनन्तसुखस्वभावमात्मनः कथञ्चिदनन्यभूतं स्वरूपं 20
प्राप्तानामिति यावत् । अत्रापि प्राप्तव्यपदार्थसामीप्याद्विशेषणं सङ्गमनीयमिति कारिकार्थः ॥

अत्र सिद्धं शासनमिति पदाभ्यां शासनं स्वतस्सिद्धं नातःप्रकरणात् प्रामाण्येन प्रतिष्ठा-
प्यमिति युक्तमुक्तम्, इदन्त्वयुक्तं जिनानामिति, जिनानामसत्त्वेन शासनस्य तत्कृतत्वानुप
पत्तेः, उपपत्तौ च परतः प्रामाण्यं स्यात् तच्च न सम्भवति, तथाहि अर्थतथाभावप्रकाशक-
ज्ञातृव्यापारः प्रमाणम्, अर्थतथाभावप्रकाशकत्वं प्रमाणनिष्ठं प्रामाण्यम्, तच्चोत्पत्तौ स्वतः, 25
स्वोत्पादकसामग्र्यतिरिक्तगुणादिसामग्र्यन्तरानपेक्षत्वात्, अर्थपरिच्छेदलक्षणे स्वकार्येऽपि
स्वतः, प्रमाणान्तरानपेक्षत्वात्, तथा स्वज्ञप्तावपि स्वत एव, स्वसंवेदनग्रहणानपेक्षत्वात्,
तथा च स्वोत्पत्तिप्रभृतिषु इतरापेक्षारहितत्वेन प्रामाण्यं स्वत उच्यते, प्रयोगश्च प्रामाण्यं
स्वरूपनियतं अनपेक्षत्वात, यथाऽङ्कुरोत्पादनेऽविकला कारणसामग्रीति । नन्वसिद्धोऽयं हेतु-

रनपेक्षत्वादिति, अप्रामाण्यस्येवोत्पत्तौ प्रामाण्यस्य चक्षुराद्यतिरिक्तगुणाद्यन्वयव्यतिरेकानु-
विधायित्वेन गुणादिकारणान्तरसापेक्षत्वात्, अन्यथाऽप्रामाण्यस्याप्युत्पत्तौ स्वतस्त्वापत्तेरिति,
नैवम्, गुणानां प्रमाणतोऽनुपलम्भेनासत्त्वात्, न हि प्रत्यक्षेण चक्षुरादिगुणा ग्रहीतुं शक्याः,
इन्द्रियाणामतीन्द्रियत्वेन तद्गुणग्रहणासम्भवात् । नाप्यनुमानेन, उपादीयमानहेतौ साध्या-
5 विनाभावनिर्णयासम्भवात्, न हि प्रत्यक्षेण तन्निश्चयः, इन्द्रियगुणानामप्रत्यक्षत्वेन तद्व्या-
प्तेरप्यप्रत्यक्षत्वात् । व्याप्तेः साध्यहेत्वोः सम्बन्धरूपत्वेन सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य
हेतुत्वात् । नवाऽनुमानेन तन्निश्चयः, अनवस्थाप्रसङ्गात्, गृहीतसम्बन्धस्यैव तस्य व्याप्ति-
निश्चायकत्वेन तत्र सम्बन्धग्रहणेऽनुमानान्तरापेक्षणेऽनवस्थानात् । तस्मान्नासिद्धो हेतुरिति,
अत्रोच्यते ज्ञातृव्यापारस्य भवदभ्युपगमेनैव प्रमाणस्वरूपत्वासम्भवात्, तद्ग्राहकप्रमाणाभा-
10 वात् । न हि स्वसंवेदनलक्षणं प्रत्यक्षं तद्ग्राहकम्, तस्य भवता तद्ग्राह्यत्वानङ्गीकारात् । नापि
बाह्यम्, इन्द्रियाणां सम्बद्धवर्त्तमानप्रतिनियतरूपादिग्राहकतया ज्ञातृव्यापारेण तेषां सम्बन्धा-
सम्भवात् । न वा मानसम्, तथाप्रतीत्यभावादनभ्युपगमाच्च । अथानुमानं तद्ग्राहकमिति चेन्न,
तद्धि ज्ञातसम्बन्धस्यैकदेशदर्शनादसन्निकृष्टेऽर्थे बुद्धिरूपम्, तत्र सम्बन्धोऽपि नियमलक्षण ए-
वेति त्वयाऽभ्युपगम्यते, अपरेषां तादात्म्यादिसम्बन्धानां व्युदासात्, स च सम्बन्धः कथं
15 प्रतीयते, किमन्वयेन व्यतिरेकेण वा निश्चयेन, तत्र न तावत्प्रत्यक्षेणान्वयनिश्चयः सम्भवति,
ज्ञातृव्यापारस्य प्रत्यक्षविषयत्वासम्भवेन तद्भाव एव तद्भाव इत्येवमन्वयनिश्चयस्यासम्भवात् ।
नाप्यनुमानेन तन्निश्चयश्शक्यः कर्त्तुम्, तस्यापि निश्चितान्वयहेतुजन्यत्वेन तत्र प्रत्यक्षतस्तन्नि-
श्चयासम्भवात्, अनवस्थाप्रसङ्गेन चानुमानतस्तदसम्भवात् । नापि व्यतिरेकनिश्चयेन सम्ब-
न्धप्रतीतिः, व्यतिरेको हि साध्याभावे हेतोरभाव इत्येवंरूपः, तत्र न साध्यस्याभावः प्रत्यक्षे-
20 णानुमानेन वा समधिगम्यः, तयोरभावविषयत्वानङ्गीकारात्, अन्यथाऽभावप्रमाणवैयर्थ्यप्र-
सङ्गः स्यात् । न च साध्यस्यादर्शनात्तदभावो निश्चीयत इति वाच्यम्, यतः किमदर्शनमनुपल-
म्भरूपमुताभावप्रमाणरूपं वा स्यात्, अनुपलम्भोऽपि दृश्यानुपलम्भरूपोऽदृश्यानुपलम्भरूपो
वा स्यात्, तत्र न तावत्स्वस्यादृश्यानुपलम्भः साध्याभावनिश्चायकः, परचेतोवृत्तिविशेषाणां
स्वकीयानुपलम्भविषयत्वेऽपि तदभावासम्भवात् । नापि सर्वसम्बन्ध्यदृश्यानुपलम्भस्तथा,
25 तदसिद्धेः । दृश्यानुपलम्भोऽपि न, स हि चतुर्विधः, स्वभावानुपलम्भः, कारणानुपलम्भः,
व्यापकानुपलम्भो विरुद्धोपलब्धिश्चेति । तत्र न स्वभावानुपलम्भः साध्याभावनिश्चायकः, त-

१ उपलब्धिलक्षणप्राप्तस्यानुपलम्भरूप इत्यर्थः, एकज्ञानसंसर्गिणि एकस्मिन् दृश्यमाने तदितरद् यदि समस्त-
दर्शनसामग्रीकं भवेत् तर्हि दृश्यमेव भवेत्, तस्यानुपलम्भो दृश्यानुपलम्भ इति भावः, एकेन्द्रियज्ञानग्राह्यमन्यो-
न्यापेक्ष वस्तुद्वयमेकज्ञानसंसर्गीत्युच्यते ॥

स्यैकंविशविषये व्यापारासम्भवात्, तथाहि एकज्ञानसंसर्गि तुल्ययोग्यतास्वरूपं भावान्तरम-भावव्यवहारहेतुः, स च पर्युदासवृत्त्या तदन्यज्ञानस्वभावोऽभ्युपगम्यते न च प्रकृतस्य साध्यस्य केनचित्सहैकज्ञानसंसर्गित्वं सम्भवतीति । प्रकृतस्य साध्यस्यादृश्यत्वात्केनचित्सह कार्यत्वस्यानिश्चयेन न कारणानुपलम्भोऽपि तन्निश्चायकः प्रत्यक्षादीनामप्रवृत्त्या कार्यकारणभावस्यासिद्धेः । साध्यस्यादृश्यत्वादेव च कस्यापि पदार्थस्य प्रकृतसाध्यव्यापकत्वेन निश्चेतुम- 5 शक्यत्वान्न व्यापकानुपलम्भोऽपि तन्निश्चयसमर्थः । नापि विरुद्धोपलब्धिरत्र प्रवर्त्तते, विरोधो हि सहानवस्थानरूपो वा परस्परपरिहारस्थितिलक्षणो वा स्यात्, तत्र न प्रथमः, सकलकारणसमवधाने सति हि यत्सद्भावे यस्याभावस्तयोः सहानवस्थानलक्षणो विरोधो भवेत्, शीतोष्णयोरिव, साध्यस्य चात्रादृश्यत्वेन नाविकलकारणं तत्कस्यचिद्भावे निवर्त्तमानमुपलभ्यते । नापि द्वितीयो विरोधः, तस्य दृश्यत्वाभ्युपगमनिष्ठस्य दृश्यत्वाभ्युपगमनिमित्त- 10 प्रमाणैर्निबन्धनस्य प्रकृतसाध्यविषयेऽसम्भवात् । अर्थप्राकट्यलक्षणसाधनाभावनिश्चयोऽपि नादृश्यानुपलम्भेन सम्भवति, स्वपरसम्बन्धिनस्तस्यानैकान्तिकासिद्धत्वादिदोषदुष्टत्वात् । दृश्यानुपलम्भेऽपि न स्वभावानुपलम्भो निमित्तम्, तस्योद्दिष्टविषयाभावव्यवहारसाधकत्वात् । नापि कारणानुपलम्भो नियामकः, भवताऽर्थप्राकट्यलक्षणफलहेतुत्वेन ज्ञातृव्यापारस्याभ्युपगतत्वात् ज्ञातृव्यापारस्याप्रत्यक्षतया कारणत्वानिश्चयेन कारणानुपलम्भासम्भवात् । अत 15 एव न व्यापकानुपलम्भोऽपि तथा, अर्थप्राकट्यं प्रति हि ज्ञातृव्यापारस्य व्यापकत्वमभ्युपेयम्, नान्यं प्रति, अन्यथा विपक्षाद्व्यापकनिवृत्त्या निवर्त्तमानस्य साधनस्य साध्यनैयत्यं न भवेत् तथा च न पूर्वोदितरीत्या तस्य व्यापकत्वनिश्चयः सम्भवति । न वा विरुद्धोपलब्ध्या साधनाभावनिश्चयः, अत्यन्तपरोक्षत्वेन साध्येऽज्ञाते तद्विपक्षस्याप्यज्ञानात्तेन सहार्थप्रकाशन-

---

१ घटभूतलयोरेकज्ञानेन विषयीकरणात्तौ एकज्ञानसंसर्गिणौ, तयोः प्रत्यक्षे सामग्री तुल्याऽतस्ते तुल्ययोग्यतास्वरूपे, तत्रैकस्य भूतलादेरुपलम्भे घटादेरनुपलम्भे केवलं भूतलमेव घटाभावव्यवहारहेतुः, पर्युदासवृत्त्या च भावान्तरविनिर्मुक्तभाव एव घटाभावो नातिरिक्तः कश्चित्, तथास्वरूपोपलम्भभिन्नज्ञानान्तरमेव स्वभावानुपलम्भरूपम्, नास्ति च प्रकृते साध्यस्य केनचिदेकज्ञानसंसर्गित्वमिति न स्वभावानुपलम्भप्रवृत्तिरिति भावः ॥ २ यो हि उष्णस्पर्शस्याविकलकारणस्य जनको भूत्वा शीतस्पर्शजननशक्तिं प्रतिबध्नन् शीतस्पर्शस्य निवर्त्तकः स विरुद्धः, स च हेतुवैकल्यकारी जनक एव, अकिञ्चित्करस्य विरुद्धत्वासम्भवात् । दूरस्थयोर्विरोधाभावान्निकटस्थयोरेव निवर्त्यनिवर्त्तकभावः, निवर्त्तकश्चायं तृतीये क्षणे निवर्त्तयति, प्रथमक्षणे निपतन्नसमर्थावस्थानयोग्यो भवति, द्वितीयेऽसमर्थं विरुद्धं करोति, तृतीये त्वसमर्थे निवृत्ते तद्देशमाक्रामति, असमर्थावस्थाजनकत्वमेव निवर्त्तकत्वं बोध्यम् ॥ ३ यस्मिन् परिच्छिद्यमाने यन्नवच्छिद्यते तत्परिच्छिद्यमानमवच्छिद्यमानपरिहारेण स्थितं भवति, एवम्भूतो विरोधः । आद्येन विरोधेन शीतोष्णस्पर्शयोरेकत्वं बाध्यते, द्वितीये न तु सहावस्थानम् । आद्यः कतिपये वस्तुन्येव प्रवर्त्तते, द्वितीयश्च सकले वस्तुन्यवस्तुनि चेति बौद्धसिद्धान्तः ॥

रूपस्य हेतोः सहानवस्थानलक्षणविरोधस्यासिद्धेः, अर्थप्रकाशनाज्ञातृव्यापारयोरर्थप्रकाशना-
प्रकाशनयोरिव परस्परव्यवच्छेदरूपत्वाभावेन परस्परपरिहारस्थितिलक्षणविरोधस्यासिद्धेश्च ।
न चार्थप्रकाशनस्य ज्ञातृव्यापारनियतत्वात्साध्यविपक्षेण तस्य विरोध इति वाच्यम्, नियत-
तत्वसिद्धौ विपक्षविरोधसिद्ध्या तत्सिद्धौ च नियतत्वसिद्ध्याऽन्योऽन्याश्रयात् । ननु मा
5 भूदनुपलम्भेन व्यतिरेकनिश्चयः, अभावाख्यप्रमाणेन तु स्यादिति चेन्न, यदि हि तन्निषिध्य-
मानवस्तुविषये प्रमाणपञ्चकस्वरूपतयाऽऽत्मनोऽपरिणामलक्षणं तर्हि समुद्रोदकस्य पलादि
परिमाणनिर्णये प्रमाणपञ्चकस्याप्रवृत्त्या तद्रूपेणात्मनोऽपरिणामेऽपि पलादिपरिमाणाभावानि-
श्चयेन व्यभिचारः । यदि तु अन्यवस्तुविषयकज्ञानरूपं तत्तदापि किं तज्ज्ञानं साध्य-
नियतसाधनाद्भिन्नं यत्पदार्थान्तरं तद्विषयकमुत साध्यनियतसाधनाद्भिन्नो यः साध्याभावस्त-
10 द्विषयकम् । तत्राद्ये पदार्थान्तरस्य साधनेन सहैकज्ञानसंसर्गित्वेऽपि न तद्विषयकज्ञानात् यत्र
यत्र साध्याभावस्तत्र तत्रावश्यन्तया साधनस्याप्यभाव इति सर्वोपसंहारेण साधनाभाव-
नियतसाध्याभावनिश्चयात्मकस्य व्यतिरेकनिश्चयस्य साध्यनियतत्वलक्षणनियमनिश्चायकस्य
सिद्धिः, तथाविधज्ञानात् प्रतिनियतविषयस्यैव यथोक्तसाधनाभावस्य सिद्धेः । पदार्थान्तर-
स्य साधनेनैकज्ञानासंसर्गित्वे चातिप्रसङ्गः, न ह्यन्यपदार्थोपलम्भमात्रात्तदतुल्ययोग्यताव-
15 तोऽन्यस्य तेन सहैकज्ञानासंसर्गिणोऽभावनिश्चयः, अन्यथा सह्योपलम्भाद्विन्ध्याभावनिश्चयः
स्यात् । द्वितीयपक्षे च किं तज्ज्ञानं यत्र साध्याभावस्तत्र तत्र साधनाभाव इत्येवं प्रवर्त्तते
किं वा क्वचिदेव साध्याभावे साधनाभाव इत्येवम्, तत्र प्रथमस्तु पक्षो निखिलदेशकाला-
प्रत्यक्षतया न सम्भवति, निखिलदेशकालप्रत्यक्षाङ्गीकारे च सर्वज्ञाभावप्रसाधनं अनुपपन्नं
स्यात् । द्वितीयपक्षोऽपि सर्वोपसंहारेण साधनाभावनियतसाध्याभावानिश्चयेन व्यतिरेक-
20 स्यानिश्चयान्न सम्भवति । तस्मादन्यवस्तुविषयकविज्ञानस्वरूपाभावाख्यप्रमाणादपि व्यतिरे-
कस्यानिश्चयेन न ज्ञातृव्यापाररूपप्रमाणस्य प्रामाण्यधर्मिणः सिद्धिरिति ॥

किञ्चाभावाख्यं प्रमाणमपि न सम्भवति, अभावप्रमाणोत्पत्तौ हि वस्तुसद्भावग्रहः प्रति-
योगिस्मरणञ्च निमित्ततया भवद्भिरभ्युपगतम्, तत्र वस्तुसद्भावग्रहणं किं प्रतियोगिसंसृष्ट-
वस्त्वन्तरग्रहणरूपं तदसंसृष्टवस्त्वन्तरग्रहणरूपं वा, आद्ये प्रत्यक्षेण तत्संसृष्टतया वस्त्वन्त-
25 रस्य ग्रहणे प्रतियोगिनत एव ग्रहणान्न तदभावग्राहकत्वेनाभावप्रमाणप्रवृत्तिः, प्रवृत्तौ वा
प्रतियोगिसद्भावेऽपि तदभावग्राहकत्वेन विपर्यस्ततयाऽप्रामाण्यापत्तिः स्यात् । द्वितीये च
प्रत्यक्षेणैव प्रतियोग्यभावस्य गृहीतत्वेन अभावप्रमाणं तत्र प्रवर्त्तमानं निरर्थकं स्यात् । एवं
प्रतियोगिस्मरणमपि किं वस्त्वन्तरसंसृष्टस्य प्रतियोगिनः स्मरणं किं वाऽसंसृष्टस्य, नाद्यः
पूर्ववदभावप्रमाणस्याप्रवृत्त्यापत्तेः । न द्वितीयः, तथाऽनुभवमन्तरेण वस्त्वन्तरासंसृष्टप्रति-

योगिस्मरणासम्भवेन तथाऽनुभवेनैवाभावग्रहणात्पुनरभावप्रमाणप्रवृत्तेस्तत्र व्यर्थतापत्तेः । असंसृष्टताग्रहस्याभावप्रमाणेनाभ्युपगमे तु चक्रकापत्तिः, तथाविधप्रतियोगिग्रहणे हि तत्स्मरणं ततोऽभावप्रमाणप्रवृत्तिः, तत्प्रवृत्तौ चासंसृष्टताग्रहस्तद्ग्रहे च स्मरणमिति । किञ्चाभावप्रमाणस्याभावग्राहकत्वेनाभ्युपगमे तेनाभावस्यैव प्रतीतिः स्यात्, प्रतियोगिनो निवृत्तिश्च कथं तेन प्रतिपादिता स्यात् । न चाभावप्रतिपत्तौ प्रतियोगिनिवृत्तिरपि प्रतिपन्नैवेति वाच्यम्, 5 निवृत्तेरपि स्वप्रतियोग्यसंस्पर्शित्वेन तत्प्रतिपत्तावपि प्रतियोगिनिवृत्त्यसिद्धेः । अपि चाभावप्रतिपत्तौ तत्र प्रतियोगिस्वरूपं यद्यनुवर्त्तते तर्हि तत्र प्रतियोगिनोऽभावस्यासत्त्वप्रसङ्गः, अथ व्यावर्त्तते तर्हि कथं तत्प्रतिषेधः प्रतिपादयितुं शक्यः, न च प्रतियोगिविविक्तस्य प्रतिपत्त्या तत्प्रतिषेध इति वाच्यम्, प्रतियोग्यप्रतिभासे तद्विविक्तताया एवाप्रतिपत्तेः । न च प्रत्यक्षे प्रतियोगिनः प्रतिभासनान्नायं दोष इति वाच्यम्, तथा सति तन्निवृत्त्यसिद्धेः 10 प्रतियोगिसद्भावस्यैव सिद्धत्वात् । न च स्मरणे तत्प्रतिभासत इति वाच्यम्, प्रतियोगिस्वरूपादभावस्यान्यत्वे प्रतियोगिप्रतिपत्तावपि तन्निवृत्त्यसिद्धेः । अनन्यत्वे प्रतियोगिनः प्रतिपन्नत्वादेव निषेधासम्भवाच्च । किञ्चाभावाख्यं प्रमाणं निश्चितं सत् प्रकृताभावनिश्चायकं किंवाऽनिश्चितं सत्, नाद्यः, तन्निश्चयस्याभावाख्यप्रमाणान्तरमूलकत्वेऽनवस्थाप्रसङ्गात् । प्रमेयाभावात्तन्निश्चये चान्योऽन्याश्रयः, प्रमेयाभावनिश्चयादभावप्रमाणनिश्चयः, सोऽपि प्रमेयाभा- 15 वनिश्चयोऽभावाख्यप्रमाणनिश्चयादिति । नान्त्यः स्वयमनिश्चितस्यान्यनिश्चायकत्वासम्भवात्, खरविषाणादेरिव । अभावस्य प्रमाणाभावात्मकत्वेनावस्तुतयाऽन्यज्ञानं प्रति कारणत्वासम्भवाच्चेन्द्रियादिवदनिश्चितस्यापि निश्चायकत्वमिति नाभावाख्यं प्रमाणं सम्भवतीति ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजय-
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय- 20
लब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य प्रात्यक्षव्यापार-
निरसनं नाम प्रथमं सोपानम् ॥

## अथ स्वतःप्रामाण्यभङ्गः ।

एवं प्रामाण्यं स्वोत्पत्तौ स्वतः, अनपेक्षत्वादिति यदुक्तं तदसङ्गतम्, अविद्यमानस्यात्मलाभरूपाया उत्पत्तेर्निर्हेतुकत्वे देशकालस्वभावनियमाभावप्रसङ्गात्, अतो गुणवच्चक्षुरादिकारणसद्भावे यथावस्थितार्थप्रतिपत्त्या तदभावे तदभावेन चान्वयव्यतिरेकाभ्यां तद्धेतुकत्वं निर्णीयते, अन्यथा दोषस्यान्वयव्यतिरेकसत्त्वेऽप्यप्रामाण्यं स्वत एव स्यात् । अक्षाणाम- 25

तीन्द्रियत्वेन तद्गतगुणनिर्णयो न सम्भवतीत्यभिधानं अप्रामाण्यजनकदोषनिर्णयेऽपि समानमेव, इन्द्रियाश्रितदोषसद्भावे प्रमाणस्याप्रवृत्तेः । अतीन्द्रियत्वेन प्रत्यक्षस्याप्रवृत्तौ तन्मूलकानुमानादीनामप्यप्रवृत्तेः, प्रतिबन्धादिनिश्चयासम्भवात् । यदि लोको मिथ्याज्ञानं दोषवच्चक्षुरादिप्रभवमभिदधातीति न स्वतोऽप्रामाण्यमित्युच्यते तर्हि प्राक् लोचने सदोषे अभूतामि-
5 दानीं समासादितगुणे संजाते इति लोकाभिप्रायात् प्रामाण्यमप्युत्पत्तौ परतः कथं न स्यात् । न च नैर्मल्यादिकं दोषाभाव एव, तिमिरादेरपि गुणाभावरूपत्वप्राप्तेः । ननु प्रामाण्यस्य स्वसामग्रीतो विज्ञानोत्पत्तावप्यनुत्पत्तौ तस्य किंस्वरूपमभ्युपगम्यते, प्रामाण्याप्रामाण्यातिरिक्तस्य तत्स्वरूपस्याभावात् । प्रामाण्यस्य पश्चादुत्पत्तौ च विरुद्धधर्माध्यासात्कारणभेदाच्च तस्य भेद एव स्यात्तयोरेव भेदकत्वात्, अन्यथा सर्वमेकं जगत्स्यादतः स्वत
10 एव प्रामाण्यमिति चेन्न, अनवगतपराभिप्रायोपलम्भमात्रत्वात्, न हि चक्षुरादिसामग्रीतो ज्ञानस्योत्पत्तावपि प्रामाण्यं पश्चान्नैर्मल्यादिभ्य उत्पद्यत इत्यभ्युपगम्यते किन्तु गुणवच्चक्षुरादिसामग्रीत उत्पद्यमानं विज्ञानं प्रामाण्यविशिष्टस्वरूपमेवोपजायत इति, अतो ज्ञानवत्तदव्यतिरिक्तस्वभावं प्रामाण्यमपि परत उच्यते । न चार्थतथाभावपरिच्छेदरूपा शक्तिः प्रामाण्यं घटस्योदकाहरणशक्तिवत्स्वत एव भवति सा नोत्पादककारणकलापाधीना, तस्याः
15 कारणेष्वविद्यमानत्वात्, ये हि कार्यधर्माः कारणेष्वविद्यमाना न ते कारणेभ्य उदयमासादयन्ति कार्ये तत एव प्रादुर्भवन्ति किन्तु स्वत एवेति वाच्यम्, विपरीतार्थपरिच्छेदशक्तिरूपस्याप्रामाण्यस्यापि तुल्यन्यायेन स्वतस्त्वापत्तेः, इन्द्रियादिकारणेभ्य आत्मनि ज्ञानमेवोत्पद्यते न पुनश्शक्तय इत्यत्र नियामकाभावात् । शक्तीनामेव स्वत उत्पत्तिर्न पुनस्तदाधारज्ञानविशेषाणामित्यत्रापि नियामकाभावाच्च, न हि शक्तयो ज्ञानविशेषेभ्यो भिन्नाः, येन स्वकारणेभ्यो ज्ञान-
20 स्योत्पत्तावपि तेभ्य उत्पत्तिं नासादयेयुः । न वा तस्यास्ततो भिन्नत्वम्, ततोऽभवन्त्यास्तस्यास्तेन सम्बन्धासम्भवात्, भिन्नानां कार्यकारणभावातिरिक्तस्य सम्बन्धस्यासम्भवात्, तदभावे आश्रयाश्रयिभावस्याप्यसम्भवात् । न च धर्मत्वाच्छक्तेर्ज्ञानमाश्रय इति वाच्यम्, पारतंत्र्याभावे वस्तुतो धर्मत्वासम्भवात् । न च शक्तिरूपं प्रामाण्यं स्वोत्तरकालभाविसंवादप्रत्ययाज्ञ जन्यत इत्येतावता स्वतस्त्वमुच्यते न तु ज्ञानकारणान्नोत्पद्यत इतीति वाच्यम्,
25 सिद्धसाधनात, एवमप्रामाण्यस्यापि स्वतस्त्वापत्तेश्च, न ह्युत्पन्ने ज्ञाने तदप्युत्तरकालभाविविसंवादप्रत्ययात्तत्रोत्पद्यत इति कस्यचिदभ्युपगमः । तस्मात्प्रामाण्यस्य शक्तिरूपस्य गुणव-

१ अयं भाव: प्रामाण्याप्रामाण्ये नैकव्यक्त्याधारे स्वतो भवतः, परस्परपरिहारस्थितिकत्वेनैकत्र विरोधात्, नापि व्यक्तिभेदेन नियते, नियामकाभावात् । नवोभये परतः, उभयस्वभावात् पूर्वं ज्ञानस्य निःस्वभावतापत्तेः, अप्रामाण्यस्य स्वतस्त्वे प्रामाण्यस्य परत: स्वीकृतौ प्रामाण्याशङ्कैव न स्यात्, स्वयमेवाप्रमाणत्वात्, तस्माद्गत्यन्तराभावात् सर्वप्रमाणाना प्रामाण्यं स्वत. परतस्त्वप्रामाण्यमिति ॥

त्कारणजन्यत्वेन नौत्सर्गिकत्वम्, दुष्टकारणजन्येषु मिथ्याज्ञानेषु तदभावात् । न च प्रामाण्यस्योत्पत्तौ गुणानां नापेक्षा किन्तु तेभ्यो दोषाभावस्तदभावाच्च संशयविपर्ययलक्षणाप्रामाण्यस्यासम्भवादौत्सर्गिकं प्रामाण्यमनपोदितमेवास्त इति वाच्यम्, अप्रामाण्येऽपि तथा वक्तुं शक्यत्वात्, प्रामाण्यस्य गुणवत्कारणजन्यतयाऽन्वयव्यतिरेकसिद्धत्वात्, दोषाभावस्य तुच्छस्य गुणनिष्पाद्यत्वासम्भवाच्च । तुच्छाभावाभ्युपगमे च भावान्तरविनिर्मुक्त- 5 भावस्याभावत्वाभ्युपगमविरोधः, तस्मात्पर्युदासवृत्त्या दोषाभावो गुणात्मक एव स्यात्, एवञ्च सति गुणेभ्यो गुणा इति स्यात्, न च गुणेभ्यः कारणस्वरूपा गुणा जायन्ते, स्वात्मनि क्रियाविरोधात्, अन्येभ्य एव गुणोत्पत्तिसद्भावाच्च, तथा च जन्मापेक्षया गुणवच्चक्षुरादिकारणप्रभवं प्रामाण्यं परत इति सिद्धम् ॥

अथार्थपरिच्छेदलक्षणे स्वकार्ये प्रवर्त्तमानं प्रमाणं स्वोत्पादककारणातिरिक्तनिमित्तान- 10 पेक्षमेव प्रवर्त्तते न तु निमित्तान्तरापेक्षम्, यदि हि तदपेक्ष्येत तदा किं संवादज्ञानमुत स्वोत्पादककारणगतगुणाः, नाद्यः, स्वकार्ये प्रमाणस्य प्रवृत्तौ सत्यां हि भवेदर्थक्रियार्थिनां प्रवृत्तिः, सत्याञ्च प्रवृत्तावर्थक्रियाज्ञानरूपः संवादस्तञ्च संवादमपेक्ष्य प्रमाणं स्वकार्ये प्रवर्त्तते नान्यथेति चक्रको दोषः, न च भाविसंवादापेक्षया प्रवर्त्तत इति वक्तुं शक्यम्, भाविनः सहकारित्वासम्भवात्, असत्त्वात् । न द्वितीयः, अगृहीतानां गुणानां सत्त्वासिद्ध्या सहका- 15 रित्वासम्भवात् । गुणानां ज्ञानन्त्वनवस्थाप्रसङ्गेन न सहकारि, गृहीतस्वकारणगुणापेक्षं हि प्रमाणं स्वकार्ये प्रवर्त्तेत, स्वकारणगुणज्ञानमपि निजकारणगुणज्ञानापेक्षं सत्प्रमाणकारणगुणज्ञानरूपे स्वकार्ये प्रवर्त्तेत तदपि तथेति । न च प्रमाणकारणगुणज्ञानं निजकारणगुणज्ञानानपेक्षमेव प्रवर्त्तेत इति शक्यं वक्तुम्, प्रमाणस्यापि तथा प्रसङ्गात् । तस्मात्स्वकारणेभ्यः अर्थयाथात्म्यपरिच्छेदशक्तियुक्तमेव प्रमाणमुपजायत इति स्वकार्ये प्रवृत्तिः स्वत एवेति चेन्मैवम्, 20 निमित्तान्तरानपेक्षमित्यनेन हि किं कार्योत्पादकसामग्रीव्यतिरिक्तनिमित्तसामान्यानपेक्षमित्यभिप्रेतं यत्किञ्चिन्निमित्तानपेक्षमिति वा, न प्रथमः सिद्धसाधनात् । न द्वितीयः, सामग्र्येकदेशस्याकारणत्वात्, सामग्र्या एव जनकत्वात् । प्रमाणस्य कार्यमपि न केवलमर्थपरिच्छेदः, तस्याप्रमाणेऽपि भावात्, किन्तु याथात्म्यपरिच्छेदः, स च न ज्ञानस्वरूपकार्यः, भ्रान्तज्ञानेऽपि स्वरूपस्य सत्त्वेन यथार्थपरिच्छेदापत्तेः । न च ज्ञानस्वरूपविशेषकार्यः स इति 25 वक्तव्यम्, स हि स्वरूपविशेषो यद्यपूर्वार्थविज्ञानत्वं तर्हि तैमिरिकज्ञानस्यापि तादृशत्वेन यथार्थपरिच्छेदः स्यात्, यदि बाधारहितत्वम्, तदा तत्कालभाविनो बाधाविरहस्य मिथ्याज्ञानेऽपि भावात्तथात्वं स्यात्, उत्तरकालभाविनोऽज्ञातस्य तस्य विशेषत्वन्तु असत्त्वेन न सम्भवति, यदि ज्ञातस्य विशेषत्वं तर्हि पूर्वज्ञानेन बाधाविरहस्य ज्ञानं न सम्भवति,

तेन स्वसमानकालीनसन्निहितनीलादेरेवावभासात्, पूर्वमनुत्पन्नबाधकानामप्युत्तरकालं बाध्य-
त्वदर्शनाच्च । उत्तरज्ञानेन तस्य ज्ञातत्वेऽप्युत्तरकालभाविबाधाविरहस्य विनष्टपूर्वविज्ञानं
प्रति भिन्नकालतया विशेषत्वासम्भवात् । अपि च बाधकेन विज्ञानस्य स्वरूपं किं बाध्यते,
प्रमेयं वा, अर्थक्रिया वा, नाद्यः स्वसत्ताकाले विज्ञानस्य स्पष्टतया प्रतिभासमानत्वेन
5 तदानीं बाधायोगात्, उत्तरकाले च विज्ञानस्य स्वत एव नाशाभ्युपगमेन तत्र बाधकस्या-
किञ्चित्करत्वात् । न द्वितीयः, येन रूपेण प्रमेयं भासते तेन रूपेण तस्य सत्त्वादेव
बाधाऽसम्भवात्, अन्यथा सम्यग्ज्ञानावभासिनोऽप्यसत्त्वप्रसङ्गः । येन च रूपेण न भासते
तेन रूपेणापि बाधाऽसम्भवात्, अप्रतिभासमानरूपस्य प्रतिभासमानरूपादन्यत्वात्, न
ह्यन्यस्याभावेऽन्यस्याभावः सम्भवत्यतिप्रसङ्गात् । नाप्यन्त्यः, उत्पन्नाया अर्थक्रियायाः
10 सत्त्वादेव बाधाऽसम्भवात्, अनुत्पन्नायास्त्वनुत्पन्नत्वादेव बाधाऽसम्भवाच्च । एवमदुष्टकार-
णारब्धत्वमपि न विशेषस्तस्याज्ञातस्य विशेषत्वासम्भवात् । न च ज्ञातस्य विशेषत्वं स-
म्भवति तज्ज्ञानोपायाभावात् । अन्यस्माददुष्टकारणारब्धाद्विज्ञानात्तज्ज्ञानमिति चेदनवस्था,
तस्यापि तादृशाज्ज्ञानं तस्याप्यपरस्मात्तादृशादिति । न च संवादप्रत्ययात्तज्ज्ञानमिति वा-
च्यम्, तथाप्यनवस्थातादवस्थ्यात्, तस्याप्यदुष्टकारणारब्धत्वं विशेषः, स चान्यस्माद-
15 दुष्टकारणारब्धात्संवादप्रत्ययाद्विज्ञायते सोऽपि च तथेति । किञ्च ज्ञातमदुष्टकारणारब्ध-
त्वलक्षणं विशेषमपेक्ष्य प्रमाणं स्वकार्ये प्रवर्त्तत इति स्वीकारे परत इति स्वीकृतं स्या-
दिति स्वसिद्धान्तभङ्गप्रसङ्गः । अदुष्टकारणारब्धत्वनिश्चयमन्तरेण स्वकार्ये प्रमाणस्य प्र-
वृत्तिस्वीकारोऽपि न चारु, संशयादिविषयीकृतस्य प्रमाणस्य स्वार्थनिश्चायकत्वासम्भवात्,
अन्यथाऽप्रमाणस्यापि स्वार्थनिश्चायकत्वं स्यादिति । अथ संवादित्वं विशेष इति चेत्तर्हि
20 तन्निश्चयमन्तरेण स न ज्ञातुं शक्यते तदपेक्षश्च प्रमाणं स्वकार्ये प्रवर्त्तत इत्यभ्युपगमे तत्र
तत् परत एव स्यात् । न चात्र चक्रको दोषः, तस्याग्रे निराकरिष्यमाणत्वात् । तस्माद-
विसंवादित्वरूपार्थतथात्वपरिच्छेदशक्तेः परतो ज्ञायमानत्वात्तदपेक्षं प्रमाणं स्वकार्ये प्रवर्त्तत
इति निमित्तान्तरानपेक्षत्वमसिद्धमिति दिक् ॥

अथ प्रामाण्यं स्वनिश्चये नान्यापेक्षम्, अपेक्ष्यमाणानां कारणगुणानां निश्चयासम्भवात्,
25 न च संवादमपेक्षते, अपेक्ष्यमाणं हि संवादकज्ञानं यदि भिन्नसन्तानविषयं समानजातीयं
ज्ञानान्तरं तदा देवदत्तघटज्ञानं प्रति यज्ञदत्तघटज्ञानस्यापि संवादकत्वप्रसङ्गः, यदि च एक
सन्तानप्रभवस्य समानजातीयस्य ज्ञानान्तरस्य तथात्वे तज्ज्ञानान्तरं यदि पूर्वं प्रमाणतया-
भिमतविज्ञानगृहीतवस्तुविषयं तदा संवाद्यसंवादकयोरविशेषप्रसङ्गः, पूर्वज्ञानस्योत्तरज्ञानं
प्रत्यसंवादकत्ववदुत्तरस्याप्यसंवादकत्वात्, एकविषयत्वात् । भिन्नार्थविषयत्वे च शुक्तिकायां

रजतज्ञानस्य तथाभूतं शुक्तिकाज्ञानं प्रामाण्यनिश्चायकं स्यात् । अथैकसन्तानप्रभवं भिन्न-
जातीयं ज्ञानं संवादकं तर्हि तदर्थक्रियाज्ञानं वा स्यादन्यद्वा भवेत्, तत्र चार्थक्रिया-
ज्ञानस्य प्रामाण्यनिश्चये प्रवृत्तेरेवासम्भवः, तत्र प्रामाण्यनिश्चये क्रियमाणे चक्रकप्रसङ्गः
अन्यज्ज्ञानन्तु नोपयोगि, अन्यथा घटज्ञानमपि पटज्ञानप्रामाण्यनिश्चायकं भवेत् । न च
प्रामाण्यनिश्चयाभावेऽपि संशयादपि प्रवृत्तिसम्भवान्नार्थक्रियाज्ञानमनुपयोगीति वाच्यम्, 5
प्रामाण्यनिश्चयस्य वैयर्थ्यापत्तेः । विना हि प्रामाण्यनिश्चयं प्रवृत्तो विसंवादभाङ् मा भूवमि-
त्यर्थक्रियार्थी प्रामाण्यनिश्चयमन्वेषते सा च प्रवृत्तिर्निश्चयमन्तरेणापि सञ्जातेति प्रामाण्य-
निश्चयप्रयासो निष्फल एवेति चेत्, अत्रोच्यते, न वयं कारणगुणज्ञानात् प्रामाण्यनिश्चय इत्य-
भ्युपगच्छामः, कारणगुणानां संवादज्ञानमन्तरेण ज्ञातुमशक्यत्वात्, तस्मात्तन्निश्चयाभ्युप-
गमे तु तत एव प्रामाण्यनिश्चयस्यापि सिद्धत्वेन कारणगुणनिश्चयपरिकल्पनाया वैयर्थ्यप्रसङ्गः, 10
प्रामाण्यनिश्चयानन्तरञ्च गुणज्ञानस्य भावात् तन्निश्चयः प्रामाण्यनिश्चयेऽनुपयोगी भवेत् ।
न चैकदा संवादात्कारणगुणान्निश्चित्यान्यदा तदन्तरेणापि गुणनिर्णयादेव प्रामाण्यनिश्चय
इति वाच्यम्, अन्यदापि संवादमन्तरेण प्रामाण्यनिश्चयासम्भवात्, अतीन्द्रियेषु चक्षुरादिषु
तदा गुणानुवृत्तिनिश्चयाभावात्, अपि तु अर्थक्रियाज्ञानरूपात्संवादप्रत्ययात्प्रामाण्यनिश्चयोऽ-
भ्युपगम्यते, अविसंवादिज्ञानस्य प्रमाणत्वाभ्युपगमात् । न च संवादित्वलक्षणं प्रामाण्यं 15
स्वतो ज्ञायते, संवादज्ञानजननशक्तिरूपस्य प्रमाणनिष्ठस्य तस्य संवादज्ञानलक्षणकार्यदर्शनम-
न्तरेण निश्चेतुमशक्यत्वात् । संवादप्रत्ययस्य च स्वयं संवादरूपत्वेन संवादान्तरानपेक्षणा-
न्नानवस्थाप्रसङ्गः, प्राथमिकञ्च ज्ञानं संवादमपेक्षत एव, तस्य संवादजनकत्वलक्षणप्रामाण्या-
त्मकत्वादतः पूर्वस्य प्रामाण्यमुत्तरसंवादज्ञानाद्व्यवस्थाप्यते । अर्थक्रियाज्ञानन्तु साक्षाद-
विसंवादि, अर्थक्रियाविषयकत्वात् तस्य च प्रामाण्यं स्वविषयसंवेदनरूपमेव, तच्च स्वतः 20
सिद्धमिति न तत्रान्यापेक्षा । न चार्थक्रियाज्ञानस्याप्यवस्तुवृत्तिशंकायामन्यप्रमाणापेक्षत्वादन-
वस्थेति वाच्यम्, अर्थक्रियाज्ञानस्यार्थक्रियानुभवस्वभावत्वेनार्थक्रियामात्रार्थिनां किमेतज्ज्ञानं

१ अविसंवादिज्ञानं हि प्रमाणं, अविसंवादोऽर्थक्रियालक्षण एव, प्रमाणचिन्तायास्तदर्थत्वात्, सा चा-
र्थक्रिया दाहपाकादिनिर्भासिज्ञानोदयरूपा तदुत्पादादेवार्थक्रियार्थिनः प्रवृत्तस्याकाङ्क्षानिवृत्तेः । तच्चार्थक्रियाज्ञान-
मात्मसंवेदनप्रत्यक्षतया स्वयमेवाविर्भवति, स्पष्टानुभवत्वाच्चानन्तरं यथानुभवं परामर्शज्ञानोत्पत्त्या निश्चितमिति
स्वत एव सिद्धम्, न च तत्साध्यं फलान्तरमाकाङ्क्षितं पुरुषेण । लोके हि वृद्धिच्छेदादिकं फलमभिवाञ्छि-
तम्, तच्चाह्लादपरितापादिरूपज्ञानाविर्भावादेवाभिनिर्वृत्तमित्येतावताऽऽहितसन्तोषा निवर्त्तन्ते जना इति स्व-
त एव तस्य सिद्धिरुच्यते, यत्तु पूर्वं तत्कारणभूतं ज्ञानं तस्य च तत्प्रापणशक्तिः प्रामाण्यमुच्यते, सा च श-
क्तिरनभ्यासादविदितकार्यैरवधारयितुं न शक्यत इत्युत्तरकार्यज्ञानप्रवृत्त्या निश्चीयत इति प्रथमस्य परतः
प्रामाण्यमुच्यत इति भावः ॥

भिन्नार्थक्रियात उत्पन्नमुत तदन्तरेणेत्येवंभूतायाश्चिन्ताया निरर्थकत्वात् । न च स्वप्नेऽ-र्थक्रियाज्ञानमन्तरेणाप्यर्थक्रियां दृष्टमिति जाग्रदर्थक्रियाज्ञानमपि तथाशङ्काविषयः स्यादिति वाच्यम्, तस्य तद्विपरीतत्वात्, स्वप्नार्थक्रियाज्ञानं ह्यप्रवृत्तिपूर्वं व्याकुलमस्थिरञ्च तद्वि-परीतञ्च जाग्रज्ज्ञानम्, यदि जाग्रद्दशायामर्थक्रियाज्ञानमपि विनार्थं स्यात् तर्हि किमन्यज्ज्ञान-
5 मर्थाव्यभिचारि भवेत्, यतोऽर्थव्यवस्था स्यात् । तस्माद्यत् प्रमाणस्यात्मभूतं अर्थक्रियालक्ष-णपुरुषार्थाभिधानं फलं यदर्थोऽयं प्रेक्षावतां प्रयासः तेन स्वतःसिद्धेन फलान्तरं प्रत्यनङ्गीकृत-साधनान्तरात्मतया भवितव्यमिति तत्रानवस्था प्रेर्यमाणा परस्यासङ्गतैव । तदेतत्संवादज्ञानं न साधनज्ञानग्राहकत्वेन साधनज्ञानस्य प्रामाण्यं व्यवस्थापयति, किन्तु धूम इवाग्निं तत्कार्यविशेष-त्वेन, एतेन संवादज्ञानं किं साधननिर्भासिज्ञानग्राहि, किं वा तदग्राहि, नाद्यः, चक्षुरादिज्ञानेषु
10 ज्ञानान्तरस्याप्रतिभासनात्, प्रतिनियतरूपादीनामेवावभासनात् । न द्वितीयः, तज्ज्ञानप्रामा-ण्यानिश्चायकत्वप्रसङ्गात्, न हि धर्मिणोऽग्रहणे तद्गता धर्मा गृह्यन्त इत्यपास्तम्, संवाद-ज्ञानाच्च प्रामाण्यनिश्चये न वा चक्रको दोषः, यदि हि प्रथममेव संवादज्ञानात्साधनस्य प्रामाण्यं निश्चित्य प्रवर्त्तेत स्यात्तदा तद्दूषणम्, यदैकदा शीतपीडितः कश्चिदन्यार्थं केन-चिद्वह्नेरानयने तं दृष्ट्वा तत्स्पर्शमनुभवन् वह्निदर्शनस्पर्शनज्ञानयोः सम्बन्धमेवंस्वरूपो भाव
15 एवम्भूतप्रयोजननिर्वर्त्तक इत्येवंलक्षणमवगच्छति, अवगतप्रतिबन्धोऽसावन्यदाऽनभ्यासद-शायां ममायं रूपप्रतिभासोऽभिमतार्थक्रियानिर्वर्त्तकः एवंरूपप्रतिभासत्वात्, पूर्वोत्पन्नैवं रूपप्रतिभासवदित्यनुमानाद्वह्निज्ञानस्य प्रामाण्यं निश्चित्य प्रवर्त्ततेऽतो न चक्रकावकाशः । अभ्यासदशायामपि साधनज्ञानस्यानुमानात् प्रामाण्यं निश्चित्य प्रवर्त्तते तदान्वयव्यतिरेक-व्यापाराज्ञानेऽपि अकस्माद्धूमदर्शनादग्निप्रतिपत्ताविवानुपलक्ष्यमाणस्यापि तद्व्यापारस्याभ्यु-
20 पगमनीयत्वादित्येके । अपरे तु तदाऽनुमानमन्तरेणापि प्रवृत्तिः सम्भवति, विकल्पस्वरू-पानुमानमन्तरेणापि अभ्यासदशायां प्रत्यक्षादपि प्रवृत्तिदर्शनेन प्रवृत्तेरनुमानकार्यत्वे निया-मकाभावात् । न चादावनुमानमन्तरेण प्रवृत्तेरदर्शनात्पश्चादपि न तद्विना प्रवृत्तिसम्भव इति वाच्यम्, आदौ पर्यालोचनाद्व्यवहारदर्शनेऽपि पश्चात्तदन्तरेण पुरःस्थितवस्तुदर्शन-मात्रात्तद्भावात् । अनुमानं विना प्रवृत्तेरभावे तु व्याप्तिनिश्चयेऽपि प्रत्यक्षस्याप्रवृत्त्या तत्रा-
25 प्यनुमानस्यैव हेतुत्वेऽनवस्था दुर्वारा भवेदिति न कश्चित् प्रवृत्तिलक्षणो व्यवहारः स्या-दिति प्रत्यक्षं स्वत एव अभ्यासदशायां व्यवहारकृत्स्वीकार्यम् । अनुमानन्तु व्याप्तिनिश्चय-बलेन स्वसाध्यादुपजायमानत्वादेव तत्प्रापणशक्तियुक्तमतः संवादप्रत्ययात्पूर्वमेव प्रमाणाभा-सविवेकेन निश्चीयत इति स्वत एव न तु परतः प्रामाण्यनिश्चय इति न चक्रकचोद्यावतारः । प्रत्यक्षे त्वनभ्यासदशायामर्थादुत्पत्तिः संवादात्प्रागशक्यनिश्चयेति संवादापेक्षयैव तस्य प्रामा-

ण्याध्यवसितिरन्यथा संदेहविपर्ययौ न स्यातामिति उत्पत्तौ स्वकार्ये ज्ञप्तौ च सापेक्षत्वादनपेक्षत्वमसिद्धमिति स्थितम् । अत एव सर्वेषां प्रामाण्यं प्रति न संदेहविपर्ययौ स्यातामिति निराकृतम्, प्रेक्षापूर्वकारिणामेव प्रमाणाप्रमाणचिन्तायामधिकारात्, ते च कासाञ्चिज्ज्ञानव्यक्तीनां विसंवाददर्शनाज्जातशङ्का न ज्ञानमात्रादेवमेवायमर्थ इति निश्चिन्वन्ति, न वा तज्ज्ञानस्य प्रामाण्यमध्यवस्यन्ति, अन्यथा तेषां प्रेक्षावत्त्वमेव न स्यात्, अतो न कथं सन्देहविषये संदेहः । तथा कामलादिदोषप्रभवे ज्ञाने विपर्ययरूपताप्यस्तीति तद्बलाद्विपर्ययकल्पनाऽपरज्ञानेऽपि सङ्गतैव । न चाप्रमाणे तदुत्तरकालं बाधककारणदोषज्ञाने अवश्यम्भाविनी, अतस्तत्र ततोऽप्रामाण्यनिश्चयः, प्रमाणे च तयोरभावेन नाप्रामाण्यशङ्केति वाच्यम्, एतादृशविशेषग्राहकाभावात्, स हि विशेषः किं बाधकाज्ञाने वा तदभावनिश्चये, वा गृह्यते, नाद्यः, भ्रान्तानां बाधकसद्भावेऽपि कञ्चित्कालं तद्ग्रहणात्सर्वत्राग्रहणप्रसङ्गात् । न चैषां कालान्तरे बाधकप्रत्यय उदेति, सम्यग्ज्ञाने तु न कदापि तद्ग्रह इति वाच्यम्, एतादृशनिर्णयस्य सर्वविदामेव भावात् । न द्वितीयः, प्रवृत्तिप्राक्कालस्य बाधकाभावनिश्चयस्य भ्रान्तज्ञानेऽपि सम्भवेन प्रमाणताप्रसङ्गात्, प्रवृत्त्युत्तरकालस्य च तमन्तरेणैव प्रवृत्तेरुत्पन्नतया वैयर्थ्यप्रसङ्गादिति दिक् ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य स्वतःप्रामाण्यनिरसनं नाम द्वितीयं सोपानम् ॥



## अथ वेदापौरुषेयताभङ्गः ।

एवं प्रेरणाजनितबुद्धेरप्रामाण्यं सूचयितुं जिनानामिति पदम्, न हि प्रेरणाबुद्धेः प्रामाण्ये प्रत्यक्षस्येव संवादोऽस्ति न वाऽव्यभिचारिलिङ्गनिश्चयो वर्त्तते किन्तु तव न्यायेनाप्रामाण्यनिश्चय एव स्यात्, दुष्टकारणप्रभवज्ञानस्याप्रामाण्यनियतत्वात् । अग्निहोत्रं जुहुयादित्यादिवाक्यजं ज्ञानञ्च दोषवत्प्रेरणावाक्यजन्यम् । त्वदभिप्रायेण प्रेरणायां गुणवद्वक्त्रभावे तद्गुणानिराकृतदोषजन्यत्वस्य प्रेरणाजन्यज्ञाने दुर्वारत्वात् । न च प्रामाण्यापवादका दोषा वक्तृगुणैरेव निराक्रियन्त इति न नियमः किन्तु वक्त्रभावेन तत्र निराश्रयाणां दोषाणामसद्भाव इति वाच्यम्, तदपौरुषेयत्वे प्रमाणाभावात् । तथाहि किमपौरुषेयत्वं प्रसज्यप्रतिषेधरूपं पर्युदासरूपं वा, न प्रथमः, तस्य सदुपलम्भकप्रमाणाग्राह्यत्वात्, यद्यभावप्रमाणग्राह्यत्वमुच्यते तर्हि तदभावप्रमाणं निषेध्यविषयप्रमाणपञ्चकस्वरूपतयाऽऽत्मनोऽपरिणामलक्षणं

चेत्तदा तस्यागमान्तरेऽपि सद्भावेन व्यभिचारः । तदन्यवस्तुविषयज्ञानस्वरूपं तदिति चेत्
तर्हि तदन्यसद्विषयत्वेन न तदभावाख्यं प्रमाणं स्यात्, तस्य सद्विषयत्वविरोधात् । न च
पौरुषेयत्वादन्यो यस्स एव पौरुषेयत्वाभावः, तद्विषयं ज्ञानमेव तदन्यज्ञानमुच्यते तथा-
भावप्रमाणमिति वाच्यम्, सर्वसम्बन्धिप्रमाणपञ्चकाभावस्यासिद्धत्वेनाभावप्रमाणोत्थापक-
5 त्वासम्भवात्, स्वसम्बन्धिप्रमाणपञ्चकाभावस्याऽऽगमान्तरेऽपि सम्भवेन व्यभिचारात् ।
न चागमान्तरे परेण पुरुषसद्भावस्वीकारान्न स प्रमाणपञ्चकाभावोऽभावप्रमाणोत्थापक इति
वाच्यम्, भवतः पराभ्युपगमस्याप्रमाणत्वात् । वेदेऽपि परेण पुरुषसद्भावाभ्युपगमेन प्रमा-
णताप्रसङ्गाच्च । किञ्च प्रमाणपञ्चकाभावो ज्ञातः सन् यद्यभावप्रमाणस्योत्थापकस्तर्हि अनवस्था
तज्ज्ञानस्याप्यपरप्रमाणपञ्चकाभावेन ज्ञातेन भावात् । यद्यज्ञातस्तदा समयानभिज्ञस्यापि अ-
10 भावप्रमाणोत्थापको भवेत्, न चेष्टापत्तिः, कृतयत्नस्यैव प्रमाणपञ्चकाभावोऽभावज्ञापक इत्य-
भिधानात्, अभावस्य सर्वशक्तिवैधुर्यतयेन्द्रियादेरिवाज्ञातस्यापि अभावप्रमाणोत्थापकत्वमि-
त्यभ्युपगन्तुमशक्यत्वाच्च, अभ्युपगमे वा भावस्यैवाभाव इत्यभिधानान्तरं स्यात् । न वा प्रमा-
णपञ्चकरहित आत्माऽभावज्ञानजनकस्तस्यागमान्तरेऽपि भावात्, न च तस्य प्रमेयाभावः
सहकारी, आगमान्तरे च तदभावान्नाभावज्ञानमिति वाच्यम्, प्रमेयाभावाभावस्य प्रमेयात्म-
15 कतया तस्य प्रत्यक्षादिनाऽनिश्चये प्रमेयाभावाभावज्ञानासम्भवात् । यदि त्वभावज्ञानाभावात
प्रमेयाभावाभावप्रतिपत्तिर्न पुनः सदुपलम्भकप्रमाणादिति चेत्तर्हि कस्याभावज्ञानाभावात प्रमे-
याभावाभावज्ञानं किं वादिनः प्रतिवादिनः सर्वस्य वा, नाद्यः, वादिनस्तेनाऽऽगमान्तरे प्रमे-
याभावाभावज्ञानवत्प्रतिवादिनो वेदेऽपि तेन तज्ज्ञानं स्यात् । न च वेदे वादिनोऽभावज्ञानम-
स्तीति न प्रमेयाभावाभावावगम इति वाच्यम्, वादिनस्तज्ज्ञानस्य साङ्केतिकत्वात्, न हि साङ्के-
20 तिकादभावज्ञानादभावसिद्धिः । न द्वितीयः, वेदेऽपि तत्प्रसङ्गात । अत एव न तृतीयः, सर्वस्या-
भावज्ञानाभावासिद्धेश्च, तस्मान्नात्मा प्रमाणपञ्चकविनिर्मुक्तोऽभावज्ञानजनकः । न च वेदस्या-
नादिसत्त्वमभावप्रमाणोत्थापकमिति वाच्यम्, प्रत्यक्षादेरप्रवृत्त्या वेदानादिसत्त्वज्ञानाभावात्,
तत्प्रवृत्त्यभ्युपगमे वा तत एव पुरुषाभावसिद्ध्याऽभावप्रमाणवैयर्थ्यप्रसङ्गात्, अनादिसत्त्वसिद्धेः
पुरुषाभावज्ञाननान्तरीयकत्वात् । अगृहीतसमयस्यापि तत्र तदुत्पत्तिप्रसङ्गेन नानादिसत्त्वमज्ञात-
25 मुत्थापकमिति नाभावप्रमाणात्पुरुषाभावसिद्धिः । नाप्यपौरुषेयत्वं पर्युदासरूपम्, तस्य पौरुषे-
यत्वादन्यसत्त्वलक्षणत्वे इष्टापत्तेः, तस्यास्माभिरप्यभ्युपगमात् । अनादिसत्त्वस्वरूपन्तु न सिद्धं
तद्ग्राहकप्रमाणाभावात । अनादिकालस्येन्द्रियाविषयतया तत्सम्बद्धसत्त्वस्यापि प्रत्यक्षेणा-
ग्रहणात् । अथातीतानागतौ कालौ वेदकर्तृपुरुषरहितौ कालत्वात्, वर्त्तमानकालवदित्यनुमानं

१ प्रमेयाभावज्ञानाभावेन ॥

तद्ग्राहकमिति चेत्तर्हि किमिदानीं यादृशो वेदकरणासमर्थपुरुषयुक्तस्तत्कर्तृपुरुषरहितः काल उपलभ्यस्तादृशावेवातीतानागतौ कालौ साध्येते उतान्यथाभूतौ वा, न प्रथमः, सिद्ध-साधनात् कश्चित्कालविशेषे वर्तमानसदृशे तत्कर्तृरहितत्वस्यास्माकमपीष्टत्वात् । न द्वितीयः, अप्रयोजकत्वात्कालत्वहेतोः सन्निवेशादिहेतोरिव, यथाभूतानामभिनवकूपप्रासादादीनां हि सन्निवेशादिकं बुद्धिमत्कारणपूर्वकत्वेन व्याप्तमुपलब्ध तथाभूतानामेव जीर्णकूपप्रासादादीनां 5
सन्निवेशादिकं बुद्धिमत्कारणत्वप्रयोजकं भवति न त्वन्यथाभूतानां तत् । यदि त्वन्यथा-भूतस्य कालस्य कालत्वं तद्रहिततां साधयेत्तर्हि अन्यथाभूतभूभूधरादीनां सन्निवेशादिकमपि बुद्धिमत्कारणपूर्वकत्वं साधयेदिति जगत्कर्तुरीश्वरस्य सर्वज्ञस्य सिद्ध्यापत्त्या वेदानामपौरुषे-यत्वं न सिद्ध्येत् । नापि शब्दादपौरुषेयत्वसिद्धिः, अन्योऽन्याश्रयात्, शब्दस्यापौरुषेयत्व-सिद्धौ तस्य प्रमाणतयाऽपौरुषेयत्वं सिद्ध्येत्, सिद्धे च तस्मिन् प्रमाणं शब्दः स्यादिति, 10
नाप्युपमानात्तत्सिद्धिः, विधिवाक्यसदृशस्यापौरुषेयस्य कस्याप्यभावात् । नाप्यर्थापत्तेः, अपौरुषेयत्वाभावेऽनुपपद्यमानस्य कस्यचिद्धर्मस्य वेदेऽभावात् । नह्यप्रामाण्याभावस्तादृशो धर्मः, आगमान्तरेऽपि तादृशधर्मसद्भावेनापौरुषेयत्वप्रसङ्गात् । नाप्यतीन्द्रियार्थप्रतिपादनं तादृशो धर्मः, तस्याप्यागमान्तरे समानत्वात् । ननु परार्थवाक्योच्चारणान्यथानुपपत्त्याऽ-पौरुषेयताप्रतिपत्तिः, तथाहि अगृहीतसंकेतस्य पुरुषस्य वाक्यादर्थप्रतिपत्तेरभावेन स्वार्थे- 15
नावगतसम्बन्ध एव शब्दोऽर्थं गमयति, सोऽयं सम्बन्धावगमः प्रत्यक्षानुमानार्थापत्तिभ्यः सम्पद्यते, यथा देवदत्तः गामभ्याज एनां शुक्लेन दण्डेनेत्यादौ वाक्ये प्रतिपन्नसंकेताय वृद्धेन प्रयुक्ते सति पार्श्वस्थोऽव्युत्पन्नसंकेतः शब्दार्थौ प्रत्यक्षेण प्रतिपद्यते, श्रोतृचेष्टालक्षणलिङ्गेन तस्य गवादिबोधमवगच्छति, तत्प्रतीत्यन्यथानुपपत्त्या च शब्दस्य तत्र शक्तिं निर्धारयति तदेवं सङ्गत्यवगमो न सकृद्वाक्यप्रयोगात्सम्भवति, वाक्यात्संमुग्धार्थप्रतिपत्तावयवशक्त्य- 20
वधारणापोद्धापाभ्यां निश्चयात् । पुनः पुनरुच्चारणञ्चास्थिरत्वे शब्दस्य न सम्भवति, तदभावे च कथं वाचकशक्तेरन्वयव्यतिरेकतोऽवगमः, अतःपरप्रबोधाय वाक्यमनुच्चारणीयं भवेत् उच्चार्यते च प्रेक्षावद्भिः, तस्मात्परार्थवाक्योच्चारणान्यथानुपपत्त्या गृहीतशक्तिकोऽर्थप्रतिपादकः शब्दो नित्योऽभ्युपेयः । न च सादृश्यादेकत्वेन निश्चीयमानो भूयो भूय उच्चार्यमाणश्शब्दोऽर्थं गमयतीति वाच्यम्, सादृश्येन शब्दादर्थाप्रतिपत्तेः, य एव हि सम्बन्धग्रहणसमये मया प्रति- 25
पन्नश्शब्दः स एवायमित्येकत्वेन प्रतीयमानो वाचकतयाऽध्यवसीयते न पुनः सदृशतया, अन्यथा शब्दादर्थप्रतीतिर्भ्रमरूपा भवेत्, अन्यत्र सङ्केतग्रहादन्यतो बोधाच्चेति चेन्न, अनि-त्यस्यापि शब्दस्य धूमादेरिवावगतसम्बन्धस्यार्थप्रत्यायकत्वसम्भवात् नहि धूमत्वादिकं सा-मान्यं वह्न्यादिसामान्यस्य गमकम्, धूमत्वान्मया वह्निः प्रतिपन्न इत्यप्रतिपत्तेः, धूमाद्वह्निः

प्रतिपन्नः इत्येव प्रतिपत्तेः, सा च सामान्यविशिष्टयोर्विशेषयोः सम्बन्धग्रहणे सति युक्ता न तु धूमसामान्यवह्निसामान्ययोः, तथा च सामान्यविशिष्टविशेषयोरेव गम्यगमकभावो वाच्यवाचकभावश्चाभ्युपगन्तव्यः, अन्यथा सामान्यस्यैव अनुमेयत्वे वाच्यत्वे वा दाहाद्यर्थक्रियायास्तदसाध्यत्वात् तत्साध्यज्ञानाद्यर्थक्रियायाश्च तदैव समुद्भूतेरनुमेयस्य वाच्यस्य वा
5 सामान्यात्मकस्य प्रतिभासेऽपि दाहाद्यर्थिनां प्रवृत्त्यनुदयापत्त्याऽनुमेयवाच्यप्रतिभासयोरप्रामाण्यं भवेत्, तस्मात्सामान्यविशिष्टस्यानुमेयत्ववाच्यत्वयोरिव तथाविधस्यैव लिङ्गत्वं वाचकत्वञ्चाभ्युपगन्तव्यमेव। न च व्यक्तिं विना सामान्यस्यानुपपद्यमानतया व्यक्तौ लक्षणातः प्रवृत्तिर्भविष्यतीति वाच्यम्, आदौ सामान्यप्रतिभासस्ततो व्यक्तिप्रतिभास इति क्रमानुपलक्षणात्, तस्माद्धूमादेः सामान्यविशिष्टस्य विशेषस्य गमकत्ववच्छब्दादेर्वाच-
10 कत्वे सम्भवति किं नित्यत्वेन, विनापि तेनार्थप्रतिपत्तेः। ननु धूमादेर्गमकत्वं तत्र सामान्यस्य सम्भवाद्भवतु नाम, शब्दे तु नास्ति तथाविधं सामान्यं किञ्चित्, येन तस्य वाचकत्वं भवेत्। न च शब्दत्वं सामान्यमस्तीति वक्तुं शक्यम्, गोशब्दत्वेन गोः सम्बन्धाग्रहात्, शब्दत्वस्यैवाभावाच्च न तद्व्याप्यानां गोशब्दत्वगत्वादीनां सत्त्वम्, वर्णान्तरस्य ग्रहणे वर्णान्तरस्यानुसन्धानाभावाच्छब्दत्वादीनामभावः सिद्धः, दृष्टं हि यत्र सामान्य-
15 मस्ति तत्रैकस्य ग्रहणेऽपरस्यानुसन्धानम्, यथा शाबलेयग्रहणे बाहुलेयस्य। गादौ च गृह्यमाणे न कादीनामनुसन्धानमस्ति, तन्न शब्दत्वादीनां सम्भव इति चेन्नैवम्, कादिवर्णेषु अयमपि वर्णोऽयमपि वर्ण इत्यनुसन्धानस्यानुभूयमानत्वात्, कादौ गृह्यमाणे न गादीनामनुसन्धानमिति तु शाबलेयादावपि समानमिति गोत्वादीनामप्यभावप्रसङ्गेन न वक्तुं शक्यम्, न हि शाबलेयादौ गृह्यमाणेऽयमपि बाहुलेय इत्यनुसन्धानमस्ति, तथा च यथा
20 तत्र गौर्गौरित्यनुगताकारा प्रतीतिरस्ति तथात्रापि वर्णो वर्ण इत्यनुगताकारप्रतीतेः सद्भावेन कथं न वर्णत्वादीनां सद्भावः, निमित्तस्योभयत्र तुल्यत्वात्। न चात्र श्रोत्रग्राह्यत्वमेव निमित्तम्, तस्यातीन्द्रियत्वेन निमित्ताग्रहणे तद्ग्रहणनिबन्धनानुगतप्रतीतेरसम्भवात्। न च गादिवर्णानां प्रत्यभिज्ञयैकत्वान्न तत्र गत्वादिसामान्यसम्भव, इति वाच्यम्, दलितपुनरुदितनखशिखरादाविव प्रत्यभिज्ञाया भ्रान्तत्वात्, अन्तरालेऽदर्शनरूपबाधकस्योभयत्र समा-
25 नत्वात्। न च नखशिखरादेरन्तरालेऽदर्शनं तदभावनिमित्तं गादीनामदर्शनन्तु अभिव्यक्त्यभावनिमित्तमेव, न तु तदभावनिमित्तमिति वाच्यम्, यतो वायुविशेषेण वर्णस्य श्रोत्रस्योभयस्य चावारकाणां वायूनामपनयनमनुक्रमेण वर्णसंस्कारः श्रोत्रसंस्कार उभयसंस्कारश्चाभिव्यक्तिरिति वक्तव्यम्, तत्र वर्णसंस्कारस्याभिव्यक्तित्वाभ्युपगमे वायुनाऽऽवारकेण ज्ञानानुकूलशक्तिप्रतिघाताद्वर्णोऽपान्तराले ज्ञानं न जनयतीत्यभ्युपेयम्, एवञ्च तच्छक्तेर्वर्णो-

देकान्तभेदे ततस्तस्यानुपकारे तस्यैवासाविति सम्बन्धानुपपत्तिः, उपकारे चापरापरोपकारस्वीकारप्रसङ्गतोऽनवस्था भवेत्, अभेदे च तच्छक्तिप्रतिघाते वर्णस्वरूपमपि प्रतिहतमिति वर्णस्यानित्यत्वमेवायातम्, व्यञ्जकेनापि वायुना शक्तिप्रतिबन्धापनयनद्वारेण विज्ञानजननशक्तिमुल्लासयता वर्णस्वरूपमेवाविर्भावितं भवतीति वर्णस्य व्यञ्जकजन्यत्वमपि दुष्परिहरमेव, स्वभावभेदेन तत्स्वरूपभेदादन्यथा व्यञ्जकबलोद्भूतविज्ञानजननस्वरूपस्याव- 5
स्थानेऽनवरतं तज्ज्ञानोदयो भवेत् । श्रोत्रसंस्कारस्याभिव्यक्तित्वे तु सकृत्संस्कृतं श्रोत्रं सर्ववर्णानेकदैव शृणुयात्, अञ्जनादिसंस्कृतं नेत्रं यथाऽविशेषेण सर्वान् गृह्णाति स्वविषयान् । न च प्रतिनियतवर्णश्रवणान्यथानुपपत्त्या कर्णमूलादिविभिन्नावयवसम्बद्धानां व्यञ्जकानामभ्युपगमान्न यौगपद्येन सर्वेषां वर्णानां श्रवणप्रसङ्गः, यथा ताल्वादिसंयोगविभागलक्षणनिमित्ताविशेषेऽपि प्रतिनियतानामेव वर्णानामुत्पत्तिरनित्यपक्षे, न हि गकारजनकैः संयोग- 10
विभागैः ककारादिरन्यो वर्णो जन्यत इति वाच्यम्, इन्द्रियसंस्कारकाणां व्यञ्जकानां समानदेशसमानेन्द्रियग्राह्येष्वर्थेषु प्रतिनियतविषयग्राहकतया संस्कारकत्वस्यादर्शनात्, न ह्यञ्जनादिसंस्कृतं चक्षुः पुरस्थं कञ्चन स्वविषयं गृह्णाति न कञ्चन, तथा बाधिर्यनिराकरणद्वारेण बलातैलादिना संस्कृतं श्रोत्रं स्वग्राह्यान् गकारादीन् वर्णानविशेषेणैवोपलभमानमुपलभ्यते । किञ्च व्यञ्जकमिन्द्रियं संस्कुर्वद्यथावस्थितवस्तुग्राहकत्वेन यदीन्द्रियसंस्कारं विदध्यात्तदा 15
सकलनभस्तलव्यापिनो गादेः प्रतिपत्तिः स्यान्न चासौ दृष्टा, अथान्यथा न तर्हि वर्णस्वरूपप्रतिभास इति न तत्स्वरूपसिद्धिरिति न श्रोत्रसंस्कारोऽभिव्यक्तिः । एवमुभयसंस्कारोऽभिव्यक्तिरिति पक्षोऽपि प्रत्येकपक्षोक्तदोषानुषङ्गादुपेक्ष्य एव । तस्माद्गादिप्रत्यभिज्ञा लूनपुनर्जातनखादिष्विवाप्रमाणैवातोऽन्तरालेऽनुपलम्भो गादीनां नानभिव्यक्तिनिमित्तः, एवञ्च पूर्वोपलब्धगादेरयमल्पो महान् कर्कशो मधुरो वा गादिरित्यबाधितमहत्त्वादिभेदभि- 20
न्नगकारादेः प्रतिभासनाद्गादिनानात्वसिद्धौ सामान्यसद्भावेन संकेतावगमस्य धूमादीनां व्याप्यवगमस्येव सम्भवात्परार्थशब्दोच्चारणोपपत्तौ तदन्यथानुपपत्त्या शब्दस्य नित्यत्वकल्पनमयुक्तमेव । किञ्च किं वर्णानां नित्यत्वमुत तत्क्रमस्य, आहोस्विद्वर्णाभिव्यक्तेरुत वा तदभिव्यक्तिक्रमस्येष्टम्, तत्र न तावद्वर्णाभिव्यक्तेर्नित्यता, पुरुषप्रयत्नप्रेरितवायुजन्यत्वेनापौरुषे-

१ तथा च प्रयोगद्वयम्. श्रोत्रं समानेन्द्रियग्राह्यसमानधर्मापन्नानामर्थानां ग्रहणाय प्रतिनियतसंस्कारकसंस्कार्यं न भवति, इन्द्रियत्वात्, नयनवत् । तथा शब्दाः प्रतिनियतसंस्कारसंस्कार्येन्द्रियग्राह्या न भवन्ति, समानेन्द्रियग्राह्यत्वे सति युगपदिन्द्रियसम्बद्धत्वात्, कुम्भादिवदिति, एकेन्द्रियाभिसम्बद्धरूपरसादिभिराम्रफलगतैर्व्यभिचारवारणाय सत्यन्तम् । व्यवहिताव्यवहितघटाभ्यां व्यभिचारवारणाय विशेष्यम् ॥

यस्यासम्भवात् । नापि तदभिव्यक्तिक्रमस्य, अभिव्यक्तेरभावे तत्क्रमस्याप्यभावात्, तदभिव्यक्त्यभावश्च पूर्वं प्रसाधित एव । तस्याः पौरुषेयत्वे तत्क्रमस्यापि पौरुषेयत्वाच्च । न वा वर्णक्रमस्य, वर्णानां नित्यत्वेन तन्तुपटवत्कालकृतस्य व्यापकत्वेन मुक्तावलीवद्देशकृतस्य वा क्रमस्यासम्भवात् । नापि वर्णानामपौरुषेयत्वम्, लौकिकशब्दवैदिकशब्दयोस्त्वयाऽभेदाभ्युपगमेन लोकायतादिशास्त्राणां प्रमाणतापत्तेः, लौकिकवाक्येषूपलभ्यमानविवादासम्भवापत्तेः, लौकिकवैदिकशब्दयोः स्वरूपाविशेषेण सङ्केतग्रहणसापेक्षार्थप्रतिपादकत्वेनानुच्चार्यमाणयोरश्रूयमाणतया च समानत्वादपरविशेषाभावाच्च तयोः पौरुषेयत्वापौरुषेयत्वविभागानुपपत्तेश्च । न च नित्यत्वे पुरुषेच्छावशादर्थप्रतिपादकत्वं युक्तम्, उपलभ्यन्ते च यत्र पुरुषैः सङ्केतितास्तमर्थमविगानेन प्रतिपादयन्तः, अन्यथा नियोगाद्यर्थभेदपरिकल्पनमसारं स्यात् । एवञ्च ये नररचितरचनाऽविशिष्टाः ते पौरुषेयाः, यथाऽभिनवकूपप्रासादादिरचनाऽविशिष्टा जीर्णकूपप्रासादादयः, नररचितरचनाऽविशिष्टञ्च वैदिकं वचनमिति पौरुषेयत्वे प्रयोगः । न चाश्रयासिद्धो हेतुः वैदिकीनां तथाविधरचनानां प्रत्यक्षत उपलब्धेः । नाप्यसिद्धविशेषणः पक्षः, अभिनवकूपप्रासादादिषु पुरुषपूर्वकत्वस्य साध्यधर्मलक्षणस्य विशेषणस्य सिद्धत्वात् । न वा हेतुः स्वरूपासिद्धः, वैदिकीषु वचनरचनासु विशेषग्राहकप्रमाणाभावेन तदभावात् । अप्रामाण्याभावलक्षणविशेषस्य च पौरुषेयत्वनिराकरणासामर्थ्यात् । यादृशस्य च विशेषस्य तन्निराकरणसामर्थ्यं तादृशविशेषस्याभावेनाविशिष्टता दुरुद्धरैव । नाप्यनैकान्तिकता, पौरुषेयेषु प्रासादादिषु नररचितरचनाऽविशिष्टताया दर्शनादपौरुषेयेषु चाकाशादिष्वदर्शनात् । न चापौरुषेयेष्वपि नररचितरचनाऽविशिष्टत्वमाशंक्यते तत्र तत्सद्भावे विरोधाभावात्, अतः सन्दिग्धविपक्षवृत्तित्वादनैकान्तिक इति वक्तव्यम्, तत्रापि तत्सद्भावे निश्चितपौरुषेयेषु प्रासादादिषु सकृदपि तस्य सद्भावासम्भवात्, अन्यहेतुकस्य ततःकदाचिदप्यभावात् । भावे वा तद्धेतुक एवासाविति नापौरुषेये तस्य सद्भावः शङ्कनीयः । अत एव न विरुद्धः, पक्षवृत्तित्वे सति विपक्ष एव वृत्तिर्यस्य सविरुद्धः, न चास्य विपक्षे वृत्तित्वम् । प्रत्यक्षानुमानागमबाधितकर्मनिर्देशानन्तरप्रयुक्तत्वलक्षणं कालात्ययापदिष्टत्वन्तु नात्र सम्भवति, यत्र हि स्वसाध्याविनाभूतो हेतुर्धर्मिणि प्रवर्त्तमानः स्वसाध्यं व्यवस्थापयति तत्रैव न प्रमाणान्तरं

१ वेदो हि व्याख्यातः स्वार्थे प्रतीतिं जनयेत् नान्यथा, व्याख्यानञ्च न स्वतः, व्याख्याभेदानुपपत्तेः, पुरुषाच्चेत् तर्हि व्याख्यानात्पौरुषेयादर्थप्रतिपत्तौ दोषाशंकाऽनिवृत्तिर्भवेत्, पुरुषा हि रागादिमन्तो विपरीतमप्यर्थं व्याचक्षाणाः समुपलभ्यन्ते संवादेन प्रामाण्याङ्गीकारेऽपौरुषेयत्वकल्पनवैयर्थ्यम्, न च व्याख्यानानां संवादो दृश्यते परस्परविरुद्धतया विधेः नियोगभावनाऽऽत्माभिप्रायबलवदनिष्टाननुबन्धीष्टसाधनतादिरूपार्थव्याख्यानादन्योन्यं विसंवादोपलम्भादिति भावः ॥ २ कारणतयेति भावः ॥

प्रवृत्तिमासादयत् तदेव साध्यं व्यावर्त्तयितुं शक्नोति, एकस्यैकदैकत्र विधिप्रतिषेधयोर्विरो-
धात्, अत एव न प्रकरणसमत्वमपि, स्वसाध्याविनाभूतहेतुमद्धर्मिणो विपरीतधर्मवत्त्वासम्भ-
वात । न चाखिलं वेदाध्ययनं गुर्वध्ययनपूर्वकं वेदाध्ययनवाच्यत्वादाधुनिकाध्ययनवदिति
प्रत्यनुमानसद्भावात् प्रकृतहेतोः प्रकरणसमत्वं पक्षस्य वाऽनुमानबाधितत्वं स्यादिति वाच्यम्,
यतः किमत्र हेतुः अध्ययनशब्दवाच्यत्वं किं वा कर्त्तुरस्मरणरूपो विवक्षितः तत्रे प्राथमि- 5
कस्य हेतोर्निश्चितकर्तृकेषु भारतादिष्वपि सद्भावेनानैकान्तिकत्वं भवेत्, किञ्च यथाभूतानां
पुरुषाणामध्ययनपूर्वकं वेदाध्ययनं दृष्टं तथाभूतानामेवाध्ययनपूर्वकत्वं यद्यध्ययनवाच्यत्वं साध-
यति तदा सिद्धसाधनम, यद्यन्यथाभूतानामित्युच्यते तदाऽप्रयोजको हेतुः । न च कर्त्रस्मरण-
विशिष्टमध्ययनशब्दवाच्यत्वं हेतूक्रियत इति वाच्यम्, विशेष्यांशस्य वैयर्थ्यात्, केवलस्य
विशेषणस्यैव गमकत्वसम्भवात । इष्टत्वेऽपि न विशेषणमभावप्रमाणरूपम्, अभावप्रमाणस्य 10
प्रामाण्याभावात्, सदुपलम्भकप्रमाणपञ्चकनिवृत्त्यभावाच्च, पौरुषेयत्वानुमापकस्य नररचित-
रचनाऽविशिष्टत्वलक्षणानुमानस्य दर्शितत्वात् । नापि कर्त्रस्मरणमनुमानरूपम्, व्यधिकरण-
त्वात्, अस्मर्यमाणकर्तृकत्वस्य हेत्वर्थत्वे तु भारतादौ निश्चितकर्तृकेऽनैकान्तिकत्वम्, न च तत्र
परैः कर्त्ता स्मर्यत इति वाच्यम्, परकीयकर्तृस्मरणस्य तव प्रमाणत्वे वेदेऽपि परैः कर्त्तुः स्मर-
णाद्भवतोऽपि हेतोरसिद्धत्वापत्तेः । न च वेदे कर्तृविशेषे विप्रतिपत्तिसद्भावेन नासिद्धतेति 15
वाच्यम्, तथा सति कर्तृविशेषस्मरणस्यैवासत्यत्वेन सामान्यतः कर्तृस्मरणस्याबाधितत्वात्
अन्यथा कादम्बर्यादीनामपि कर्तृविशेषे विप्रतिपत्तेः कर्तृमात्रस्मरणस्यासत्यत्वेन तत्राप्यस्मर्य-
माणकर्तृकत्वस्य सद्भावादनैकान्तिकत्वं स्यात् । न च कादम्बर्यादौ कर्तृविशेष एव विप्रतिप-
त्तिर्न तु कर्तृसामान्ये, वेदे तु कर्तृसामान्येऽपीति वाच्यम्, विप्रतिपत्त्या कर्तृस्मरणस्या-
सत्यतेवास्मर्यमाणकर्तृकत्वस्याप्यसत्यत्वापत्तेः विप्रतिपत्तेरविशेषात । न वा कर्त्तुः स्मरण- 20
योग्यत्वे सति अस्मर्यमाणकर्त्तृकत्वं हेत्वर्थः स च न सिद्धकर्तृकेषु वर्त्तत इति नानैकान्तिक
इति वाच्यम्, आगमान्तरेऽप्यस्य हेतोः सद्भावे बाधकाभावात् सन्दिग्धविपक्षव्या-
वृत्तिकत्वेनानैकान्तिकतातादवस्थ्यात्, कर्तुः स्मरणयोग्यत्वलक्षणस्य विशेषणस्य विपक्षेण
पौरुषेयत्वेन सह विरोधस्यासिद्धत्वाद्वैयर्थ्याच्च । तस्मादपौरुषेयत्वसाधकप्रमाणाभावाच्छास-
नस्यापौरुषेयत्वासम्भवेन तस्य सर्वज्ञप्रणीतत्वानभ्युपगमे प्रामाण्यासम्भवतो धर्मे प्रेरणा 25

---

१ अत्र वेदाध्ययनवाच्यत्वं हेतुः, तच्च यदि निर्विशेषणं तदाऽनैकान्तिकम्, विपक्षेऽप्यस्याविरुद्धतया सद्भावसम्भवात् न खलु वेदाध्ययनवाच्यत्व कर्त्तृपूर्वकत्वलक्षणविपक्षेण विरुद्धम, भारताध्ययनवाच्यत्ववत्तस्य तेनाविरोधादिति भाव. । यदि भारतादौ कर्त्तृस्मृत्या बाध उच्यते तर्हि कर्त्तुरस्मरणं हेतुर्विवक्षितं स्यात्तच्च व्यधिकरणमिति भाव ॥ २ अपौरुषेयत्वं वेदे कर्त्रस्मरणं चात्मनि वर्तते इति कर्त्रस्मरणस्य व्यधिकरणत्वम् ।

प्रमाणमेवेत्ययोगव्यवच्छेदेनावधारणमनुपपन्नं मीमांसकस्य, सर्वज्ञस्वीकारे च चोदनैव त्रैकालिकमर्थमवगमयितुं समर्थो नान्या काचिदित्यभिधानमसङ्गतं स्यादित्युभयतःपाशा रज्जुः, अतो यदि सिद्धं शासनमभ्युपगम्यते तदा तज्जिनप्रणीतमेवाभ्युपगन्तव्यमिति मूलकृता मीमांसकापेक्षया प्रसङ्गसाधनं युक्तमनुष्ठितमिति स्थितम् ॥

5 इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजय-
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
लब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य
वेदापौरुषेयत्वभङ्गाभिधं
तृतीयं सोपानम् ॥

10

## अथ सर्वज्ञसाधनम् ।

ननु भवतु मीमांसकापेक्षया प्रसङ्गसाधनम्, अपौरुषेयत्वसाधकप्रमाणाभावेन शासनस्यापौरुषेयत्वासम्भवात्, सर्वज्ञप्रणीतत्वानभ्युपगमे तत्प्रामाण्यस्याप्यसम्भवाच्च, ये तु शासनस्याप्रामाण्यं स्वीकुर्वन्ति तान् प्रति जिनः सर्वज्ञस्तत्प्रणीतत्वाच्छासनं प्रमाणमिति 15 वक्तव्यं तन्न सम्भवति सर्वज्ञे प्रमाणाभावात्, प्रमाणाविषयस्य च सद्व्यवहारविषयत्वासम्भवात्, तथाहि ये सदुपलम्भकप्रमाणागोचरा भावा न ते प्रेक्षावतां सद्व्यवहारयोग्याः, यथा नाकपृष्ठादयस्तथात्वेनाभ्युपगमविषयाः, सदुपलम्भकप्रमाणाविषयश्च समस्तवस्तुव्यापिज्ञानवान् पुरुष इति सद्व्यवहाराविषयत्वसाधिकाऽनुपलब्धिः, न हि तथाविधः पुरुषः प्रत्यक्षसमधिगम्यो येन हेतोरसिद्धता भवेत्, पुरोवर्त्तिप्रतिनियतरूपादिविषयकचाक्षुषादि 20 विज्ञानानां परगतकतिपयग्राहिज्ञानमात्रस्यापि ग्रहणासमर्थानां निखिलविषयज्ञानस्य तदध्यासितस्य वा पुरुषस्यालम्बने सामर्थ्याभावात् । न वाऽनुमानसमधिगम्यः, निश्चितस्वसाध्यप्रतिबद्धपक्षधर्महेतूदितस्यैवानुमानस्य प्रमाणतया तथाविधहेतोरत्राभावात्, न हि सकलपदार्थवेदिपुरुषसत्तालक्षणस्वसाध्येन हेतोः प्रतिबन्धः प्रत्यक्षग्राह्यः, तदविषयत्वात्साध्यस्य, नानुमानग्राह्यः, अनवस्थापत्तेः न हि प्रतिबन्धग्रहं विना हेतोस्समुत्पद्यमानाऽनुमितिः प्रमाणभावं 25 भजते, नापि धर्मिसम्बन्धज्ञानं प्रत्यक्षतः, तादृशज्ञानवतः प्रत्यक्षे ऐन्द्रियकप्रत्यक्षस्याप्रवृत्तेः, अन्यथा तेनैव सर्वज्ञवेदनेऽनुमानोपन्यासोऽनर्थको भवेत् । हेतुपक्षधर्मत्वज्ञानं विना धर्मिग्राहकस्यानुमानस्याप्रवृत्त्याऽनुमानादपि न सर्वविदोऽवगमः । किञ्च सर्वज्ञसत्त्वे भावधर्मस्य हेतुत्वे भावस्यैवासिद्ध्या तद्धर्मस्यासिद्धता, अभावधर्मस्य हेतुत्वे विरोधः, तस्याभावाव्यभिचारित्वात् । उभयधर्मस्य हेतुत्वे चानैकान्तिकता, भावाभावाव्यभिचारित्वेन भावस्यैवासाधकत्वात् ।

नापि शब्दसमधिगम्यः, नित्यस्य तद्बोधकस्यागमस्याभावात्, भावेऽपि तत्प्रतिपादकस्य सिद्धा-
र्थस्य प्रामाण्याभावात्, कार्येऽर्थे तत्प्रामाण्यस्य स्वीकारात्। अनित्यस्य तत्प्रतिपादकस्याग
मस्य तत्प्रणीतत्वेऽन्योऽन्याश्रयः, अन्यप्रणीतत्वे च न प्रामाण्यमुन्मत्तवाक्यवत्। सर्वज्ञत्वेनोप-
मानभूतस्य कस्यचित् प्रत्यक्षादितोऽसिद्धेर्नोपमानादपि स समधिगम्यः, तत्सद्भावं विनाऽनुप-
पद्यमानस्य प्रमाणषट्कविज्ञातस्यार्थस्याभावेन नार्थापत्तिसमधिगम्योऽपि। न चाऽभावप्रमाण- 5
समधिगम्यः, तस्याभावसाधकत्वात्, तदेवं तत्सद्भावसाधकप्रमाणाभावात्कथं तत्प्रणीतं शासनं
प्रमाणं भवितुमर्हतीति प्राप्ते अत्र प्रतिविधीयते, वचनविशेषः विशिष्टकारणपूर्वकः वचनविशे
षत्वात् कठिना पृथिवीत्यादिवचोविशेषवदित्यनुमानेन सर्वविदः सिद्धेः सदुपलम्भकप्रमाणा-
विषयत्वमसिद्धम्, अत्र सर्वविदो धर्मित्वेनानुपादानान्नापक्षधर्मत्वादिदूषणमुद्भावयितुं युक्तम्,
अत्रायं मानार्थः, यो यद्विषयाविसंवाद्यलिङ्गानुपदेशानन्वयव्यतिरेकपूर्वको वचनविशेषः स 10
तत्साक्षात्कारिज्ञानविशेषप्रभवः, यथाऽस्मदादिप्रवर्त्तिनः पृथ्वीकाठिन्यादिविषयस्तथाभूतो
वचनविशेषः, नष्टमुष्टिचिन्तालाभालाभविशेषादिविषयाविसंवाद्यलिङ्गानुपदेशानन्वयव्यतिरे-
कपूर्वकवचनविशेषश्चायं शासनलक्षणोऽर्थ इति, न चात्र हेतोर्वचनविशेषत्वस्य विशेषणम-
विसंवादित्वमसिद्धं वक्तुं शक्यम्, तादृग्वचनविशेषप्रतिपादितार्थानां प्रमाणान्तरतस्तथैवो-
पलभ्यमानत्वात्, यत्र कचिद्वचनविशेषे त्वया विसंवादः परिकल्प्यते सोऽपि सम्यक् तदर्था- 15
परिज्ञानादेव न तु तस्यासत्यार्थत्वात्, सामग्रीवैकल्याद्वा। नाप्यलिङ्गपूर्वकत्वविशेषणम-
सिद्धम्, नष्टमुष्टिग्रहोपरागादीनामस्मदादीन्द्रियाविषयत्वे तद्धेतुतयाऽभिमतानामपि तथात्वा-
त्तलस्तत्प्रतिपत्त्यसम्भवात्, सम्भवे तु वचनविशेषमन्तरेणापि तल्लिङ्गदर्शनादस्माकमपि ग्रहो-
परागादिप्रतिपत्तिर्भवेत्। न चोपदेशपरम्परया प्रमाणभूतो वचनविशेषोऽनुवर्त्तत इत्यनुपदेश-
पूर्वकत्वविशेषणमसिद्धमिति वाच्यम्, तस्योपदेशपरम्परापूर्वकत्वे वक्तृदोषैरज्ञानादिभिः 20
श्रोतृदोषैः मन्दबुद्धित्वादिभिः क्षीयमाणस्य कदाचिन्मूलतोऽपि हान्यापत्तेः, तस्मादन्तराऽन्तरा
विच्छिन्नोऽपि सूक्ष्मादिपदार्थसाक्षात्कारिज्ञानवता केनचिदभिव्यक्त इयन्तं कालं यावदागच्छ-
तीत्यभ्युपगमनीयमिति नासिद्धत्वम्। अन्वयव्यतिरेकाभ्याञ्च ग्रहोपरागौषधशक्त्यादयो ज्ञातुं
न शक्यन्ते, ग्रहोपरागादीनां दिक्प्रमाणफलकालादिषु नियमाभावात्, एकस्याप्यौषधस्य
नानाद्रव्यसंमिश्रणप्रभवायाश्शक्तेः युगसहस्रेणापि ज्ञातुमशक्यत्वाद्द्रव्याणामनन्तत्वात्, त- 25
स्मान्न ग्रहोपरागादिवचनविशेषोऽन्वयव्यतिरेकपूर्वको येनानन्वयव्यतिरेकपूर्वकत्वविशेषण-
मसिद्धं स्यात्। न च प्रकृतवचनविशेषस्य साक्षात्कारिज्ञानपूर्वकत्वाभावेऽपि सम्भवाद-
नैकान्तिकत्वमिति शङ्क्यम्, सविशेषणस्य हेतोर्विपक्षे सत्त्वासम्भवात्। विपक्ष एव
वर्त्तमानस्य हेतोर्विरुद्धत्वेनावगतस्वसाध्यप्रतिबन्धस्य हेतोर्विपक्षवृत्तित्वासम्भवाच्च न विरु-

त्त्वम् । इत्थं संवादतो ग्रहोपरागादिवचनस्य तत्साक्षात्कारिज्ञानपूर्वकत्वे सिद्धे धर्मादि-
साक्षात्कारिज्ञानपूर्वकत्वमपि सिद्ध्यति तत्रापि तस्य संवादात् । ज्योतिःशास्त्रादेर्हि ग्रहोपरा
गादिकं विशिष्टवर्णप्रमाणदिग्विभागादिविशिष्टं प्रतिपद्यमानः प्रतिनियतानां प्रतिनियतदेश-
वर्त्तिनां प्राणिनां प्रतिनियतकाले प्रतिनियतकर्मफलससूचकत्वेन प्रतिपद्यते, उक्तञ्च 'नक्षत्र-
5 ग्रहपञ्जरमहर्निशं लोककर्मविक्षिप्तम् । भ्रमति शुभाशुभमखिलं प्रकाशयत् पूर्वजन्मकृत'
मिति । अतो ज्योतिःशास्त्रं ग्रहोपरागादिकमिव धर्माधर्मावपि प्रमाणान्तरसंवादतोऽवगमयति
अतस्तत्साक्षात्कारिज्ञानपूर्वकत्वमपि सिद्धम्, तत्सिद्धौ च सकलपदार्थसाक्षात्कारिज्ञान-
पूर्वकत्वमपि सिद्धिमासादयति, न हि धर्माधर्मयोः सुखदुःखकारणत्वसाक्षात्करणं सहकारि-
कारणाशेषपदार्थतदाधारभूतसमस्तप्राणिगणसाक्षात्करणमन्तरेण सम्भवति, सर्वपदार्थानां
10 परस्परप्रतिबन्धादेकपदार्थसर्वधर्मप्रतिपत्तिश्च सकलपदार्थप्रतिपत्तिनान्तरीयकाऽतो भवति स-
कलपदार्थसाक्षात्कारिज्ञानपूर्वकत्वसिद्धिरतो हेतोर्वचनविशेषस्य, तत्सिद्धौ च तत्प्रणेतुः
सूक्ष्मान्तरितदूरानन्तार्थसाक्षात्कार्यतीन्द्रियज्ञानसम्पत्समन्वितस्य कथं न सिद्धिरिति ।
ननु सर्वज्ञज्ञानेन यत्सर्ववेदनं तत्किं सकलपदार्थग्रहणलक्षणं किं वा शक्तियुक्तत्वम्, न
प्रथमः, क्रमेण तद्ग्रहणे सकलपदार्थानामतीतानागतवर्त्तमानानामपरिसमाप्त्या तज्ज्ञानस्याप्य-
15 परिसमाप्तितः सर्वज्ञत्वायोगात् । युगपत्तद्ग्रहणे च शीतोष्णादीनां परस्परविरुद्धानामेकज्ञाने
प्रतिभासो न स्यात्, अन्यथा तज्ज्ञानस्य प्रतिनियतार्थग्राहकत्वेनास्मदादिभ्योऽपि तज्ज्ञान-
वान् हीनतरः स्यात्, किञ्चैकक्षण एव युगपत्सर्वपदार्थग्रहणे द्वितीयादिक्षणेऽकिञ्चिज्ज्ञ एव
स्यात् । न द्वितीयः, सकलपदार्थवेदनं विना तच्छक्तेर्ज्ञातुमशक्यत्वात् । किञ्च सर्वपदार्थज्ञान-
परिसमाप्तावपि सर्वमियदेवेति कथं परिच्छेदशक्तिः, अपरवेदनाभावादिति चेत्कथं तन्निश्च-
20 यः, तदपेक्षयाऽन्यस्योपलब्धिलक्षणप्राप्तस्यानुपलम्भादभावनिश्चय इति चेत्तर्हीतरेतराश्रयः,
सर्वज्ञत्वनिश्चये तदभावनिश्चयः, तदभावनिश्चये सर्वज्ञत्वनिश्चय इति । न च प्रधानभूत-
पदार्थजातं यावदुपयोगि तावदसौ वेत्तीति तत्परिज्ञानात् सकलज्ञ इति वाच्यम्, सर्वपदा-
र्थावेदने सकलपदार्थव्यवच्छेदेनैषामेव प्रयोजननिर्वर्त्तकत्वमिति नियमासम्भवात् मैवम्,
क्रमेणातीतानागतपदार्थवेदनमित्यनभ्युपगमात्, किन्तु क्रमतोऽनुभूतेऽपि शास्त्रार्थेऽत्यन्ता-
25 भ्यासाद्यथा न क्रमेण संवेदनमनुभूयते तद्वदत्रापि स्यात् । विरुद्धानामपि जलानलादीनां
छायातपादीनाञ्चैकज्ञाने प्रतिभाससंवेदनात् प्रतिनियतार्थग्राहकत्वाच्च न यौगपद्येऽपि दोषः ।
न चैकदैव सर्वपदार्थसंवेदनात् द्वितीयक्षणे पदार्थानां तज्ज्ञानस्य चाभावः स्यादिति वाच्यम्,
तथाऽनभ्युपगमात्, अन्यथा द्वितीयक्षणे सर्वपदार्थाभावात् सकलसंसारोच्छेदः स्यात्, न
चाऽपरिसमाप्तिदोषः, अत्यन्ताभ्यस्तशास्त्रार्थज्ञानस्येव युगपदनाद्यनन्तार्थग्राहिणस्तज्ज्ञानस्यापि

परिसमाप्तिसम्भवात् । अन्यथा ' चोदना भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुं नान्यत्किञ्चनेन्द्रियमि 'त्यादिवचनस्य नैरर्थक्यं स्यात् । न वाऽन्योन्याश्रयः, यथा हि उपलब्धिलक्षणप्राप्ते सन्निहितदेशादावपरानुपलब्धेरपरमत्र नास्तीतीदानींतनानामियत्तानिश्चयस्तथा सर्वज्ञस्यापि सकलपदार्थग्रहणस्वशक्तिपरिच्छेदादियत्तानिश्चयसम्भवात्, अन्यथा घटादीनामपि क्वचित्प्रदेशेऽभावनिश्चयेऽन्य- 5 प्रकारासम्भवेन सकलव्यवहारविलोपप्रसङ्गः, तदेवं सकलपदार्थज्ञत्वसिद्धौ यावदुपयोगि तावदसौ जानातीत्याद्यपि निरस्तम् । ननु कथमतीतानागतवस्तुग्रहणम्, अतीतादीनां स्वरूपासम्भवात् । असत्स्वरूपग्रहणे च न तैमिरिकज्ञानवत्प्रमाणत्वं स्यात्, यदि त्वतीतादिकमपि वस्तु वर्त्तते तदाऽतीतादित्वादेरभावात्सर्वज्ञव्यवहारोच्छेदः । न च प्रतिपाद्यापेक्षया तस्याभाव इति युक्तम्, विद्यमानस्यैवापेक्षया तदैवाविद्यमानत्वासम्भवात् । न चानुपलब्ध्याऽविद्य- 10 मानतेति वाच्यम्, तदनुपलब्धेरेव सिद्धेः, न हि तावताऽविद्यमानत्वमपि सिद्ध्यति, एकस्याभावेऽपरस्याप्यभावाङ्गीकारेऽतिप्रसङ्गात् । न चाभावविद्यमानत्वेन तस्य प्रतिभातीत्यविद्यमानतेति वाच्यम्, असद्विकल्पसम्भवेन तस्य भ्रान्तत्वापत्तेः, असद्विकल्पस्य विषयीकरणेन च सर्वज्ञोऽपि भ्रान्त एव स्यात् । न च विकल्पोऽपि स्वरूपेऽभ्रान्त एव, तस्य वेदनञ्च सर्वज्ञज्ञानमभ्रान्तमिति वाच्यम्, तथा सति केवलं स्वरूपमाक्षात्करणादतीतादि- 15 विद्यमानसाक्षात्कारासम्भवात् । एवञ्चातीतानागतपदार्थाभावात्तत्साक्षात्करणासम्भवान्न तद्ग्रहणात् सर्वज्ञः । स्वरूपमात्रसंवेदने च तन्मात्रस्यैव विद्यमानतया तद्वेदनेऽद्वैतवेदनान्न सर्वज्ञव्यवहारः तद्भावे वा सर्वः सर्ववित् स्यात् । किञ्च पदार्थानामतीतानागतत्वं यदि अतीतानागतकालसम्बन्धित्वादुच्यते तर्हि कालस्यातीतानागतत्वं अपरस्मादतीतानागतकालसम्बन्धात्तर्ह्यनवस्था भवेत्, यद्यतीतानागतपदार्थक्रियासम्बन्धात्कालस्य तथात्वमुच्यते तदापि 20 पदार्थक्रियाणां तथात्वेऽपरापेक्षयाऽनवस्था । स्वरूपत एव कालस्यातीतानागतत्वे च पदार्थानामपि स्वत एव तथात्वसम्भवात् अतीतानागतकालसम्बन्धात्तथेत्ययुक्तम्, तथात्वे तु पदार्थस्वरूपस्य तस्यास्मदादिज्ञानेऽपि प्रतिभासनात्रास्मदादिभ्यः तादृशपदार्थग्राहित्वेन सर्वज्ञस्य कश्चिद्विशेषः इति चेदुच्यते, अतीतादेरसत्त्वासम्भव इति, यदि हि तस्यातीतादिकालसम्बन्धित्वेनासत्त्वमुच्यते तन्न युक्तं, वर्त्तमानकालसम्बन्धित्वेन वर्त्तमानपदार्थस्येव 25 तत्कालसम्बन्धितया तस्यापि सत्त्वात् । न चातीतादेः कालस्याभावोऽनवस्थाप्रसङ्गादिति वाच्यम्, अपरातीतादिकालसम्बन्धित्वात् पदार्थस्यातीतादित्वाद्वा कालस्यातीतादित्वमित्यनभ्युपगमात् । किन्तु स्वरूपत एवातीतादिसमयस्यातीतादित्वम्, अनुभूतवर्त्तमानत्वो

हि समयोऽतीत उच्यते अनुभविष्यद्वर्त्तमानत्वश्चानागतः, तत्सम्बन्धित्वात् पदार्थस्यातीता-
नागतत्वे अविरुद्ध एव । एकपदार्थधर्मस्यान्यत्रासञ्जयितुमशक्यत्वादेव च कालस्य स्वरूपे-
णैव तथात्वे पदार्थानामपि तथाभवत्वित्याशङ्काया अयोगः, अन्यथा निम्बादेस्तिक्तता
गुडादावप्यासञ्जनीया स्यात् । भवतु वाऽतीतादित्वं पदार्थधर्मस्तथापि नास्माकमभ्युपग-
5 मक्षतिः, विशिष्टपदार्थपरिणामस्यैवातीतादिकालत्वेनेष्टत्वात्, स्मरणविषयत्वं हि पदार्थस्या-
तीतत्वं, अनुभवविषयत्वं वर्त्तमानत्वं स्थिरावस्थादर्शनलिङ्गबलोत्पद्यमान 'कालान्तरस्थाय्ययं
पदार्थ' इत्यनुमानविषयत्वमनागतकालत्वमुच्यते, तस्मादतीतादिकालस्य सत्त्वान्न तत्काल-
सम्बन्धित्वेनातीतादेः पदार्थस्यासत्त्वम् । वर्त्तमानकालसम्बन्धित्वेन त्वतीतादेरसत्त्वाभिधा-
नमस्माकमपीष्टमेव, न ह्यतीतकालसम्बन्धित्वसत्त्वमेवैतज्ज्ञानकालसम्बन्धित्वमस्माभिरभ्युप-
10 गम्यते, न चैतत्कालसम्बन्धित्वेनासत्त्वे स्वकालसम्बन्धित्वेनाप्यतीतादेरसत्त्वं भवति, अन्य-
थैतत्कालसम्बन्धित्वस्याप्यतीतादिकालसम्बन्धित्वेनासत्त्वात्सर्वाभावः स्यादिति सर्वव्यव-
हारोच्छेदः स्यात् । न चातीतादेः सत्त्वेऽपि न सर्वज्ञज्ञाने तस्य प्रतिभासः, तज्ज्ञानकाले
तस्यासन्निहितत्वात्, सन्निहितत्वे च तज्ज्ञानावभासिन इव वर्त्तमानकालसम्बन्धिनोऽतीता-
देरपि वर्त्तमानकालसम्बन्धित्वप्राप्तेः, न हि वर्त्तमानस्यापि सन्निहितत्वेन तत्कालज्ञानप्रति-
15 भासित्वं मुक्त्वाऽन्यद्वर्त्तमानकालसम्बन्धित्वम्, एवमतीतादेस्तज्ज्ञानावभासित्वे वर्त्तमान-
त्वमेवेति वर्त्तमानमात्रपदार्थज्ञानवानस्मदादिवन्न सर्वज्ञः स्यात्, अतीतादेः तज्ज्ञान-
कालेऽसन्निहितत्वे तु तज्ज्ञाने न प्रतिभासः प्रतिभासे वा स्वज्ञानसम्बन्धित्वेन तस्य ग्रह-
णात्तज्ज्ञानस्य विपरीतख्यातिरूपताप्रसक्तिरिति वाच्यम्, तज्ज्ञानेऽतीतादिकालपदार्थस्या-
तीतादिकालसम्बन्धित्वेनैव प्रतिभासनात्तस्यार्थस्य वर्त्तमानकालसम्बन्धित्वाभावात्, यथा
20 सत्यस्वप्नज्ञानेऽस्मदादीनामसन्निहितकालोऽप्यर्थः प्रतिभाति न चासन्निहितस्य तस्यातीतादि
कालसम्बन्धिनो वर्त्तमानकालसम्बन्धित्वम्, नापि स्वकालसम्बन्धित्वेन सत्यस्वप्नज्ञाने तस्य
प्रतिभासनात्तद्ग्राहिणो ज्ञानस्य विपरीतख्यातित्वम्, यत्र ह्यन्यदेशकालोऽर्थोऽन्यदेशकालस-
म्बन्धित्वेनैव प्रतिभाति सा विपरीतख्यातिः । अत्र त्वतीतादिकालसम्बन्धी अतीतादिकालस-
म्बन्धित्वेनैव प्रतिभातीति न तत्प्रतिभासिनोऽर्थस्य तत्कालसम्बन्धित्वेन वर्त्तमानत्वम्, नापि
25 तद्ग्राहिणो विज्ञानस्य विपरीतख्यातित्वम् । अविसंवादवतोऽपि च ज्ञानस्याविसंवादविषये
विप्रतिपत्त्यभ्युपगमे सवेदनमात्रेऽपि विप्रतिपत्तिसद्भावादतिसूक्ष्मेक्षिकया तस्यापि तत्त्व-

१ सर्वज्ञो ह्यतीतादेः स्वेनैव रूपेण प्रतिपद्यते, नैतावता तज्ज्ञानस्य प्रत्यक्षतानुपपत्तिः, परिस्फुटत-
याऽर्थस्य ग्राहकत्वात्, परिस्फुटतयाऽर्थस्य प्रतिभास एव हि प्रत्यक्षलक्षणम्, स चेदतीतादेरप्यर्थस्यास्ति कथं
न तद्ग्राहकज्ञानस्य प्रत्यक्षतेति भावः ॥

रूपत्वासम्भवात् सर्वशून्यताप्रसङ्गात्सत्यस्वप्नज्ञानेऽतीताद्यर्थप्रतिभासे समानमेव दूषणमिति न वक्तुं शक्यम्। यथा वा सकलशास्त्रार्थापरिज्ञानेऽपि व्यवहारिणा सकलशास्त्रज्ञः कश्चिन्निश्चीयते तथा केनचित् सकलपदार्थापरिज्ञानेऽपि सर्वज्ञत्वेन कस्यचिन्निश्चयीकरणे बाधकाभाव एव, अन्यथा सकलपदार्थापरिज्ञानेऽपि कथं युष्माभिरपि जैमिनिरन्यो वा वेदार्थज्ञत्वेन निश्चीयते[1] तस्मात् सर्वज्ञसत्त्वेऽपि तत्कालेऽप्यसौ नासर्वज्ञैर्ज्ञातुं शक्यत इत्यादिजल्पनमल्पमेव। ननु सर्वज्ञज्ञानं प्रतिनियतचक्षुरादिजनितं किं धर्मादिग्राहकमुताभ्यासजनितं आहोस्वित् शब्दजनितं किं वाऽनुमानप्रभावितम्। नाद्यः प्रतिनियतरूपादिविषयस्य चक्षुरादेर्धर्मादिग्राहकत्वासम्भवात्। न द्वितीयः, अभ्यासो हि प्रतिनियते शिल्पकलादौ प्रतिनियतोपदेशात सम्भाव्यते न च सर्वपदार्थविषयोपदेशसम्भवः, न वा सर्वपदार्थविषयानुपदेशज्ञानसम्भवः येन तज्ज्ञानाभ्यासात्सकलज्ञानप्राप्तिः स्यात् सम्भवे वा सकलपदार्थविषयज्ञानस्य* सिद्धत्वेनाभ्यासप्रयासवैयर्थ्यात्। नापि तृतीयः पक्षः, शब्दस्य तत्प्रणीतत्वेन प्रामाण्ये सर्वपदार्थज्ञानसम्भवः, तत्सम्भवे च सर्वज्ञस्य तथाभूतशब्दप्रणेतृत्वमित्यन्योऽन्याश्रयात्। नान्त्यः कल्पः धर्मादिग्राहकत्वेनाभ्युपगम्यमानस्य हेतोस्तेन सह सम्बन्धासिद्धेः, धर्मादेरतीन्द्रियत्वात्। अस्पष्टत्वेनानुमानस्य तज्जनितज्ञानस्यावैशद्यात्तेन सर्वज्ञायोगाच्च। न चानुमानज्ञानमविशदमपि पुनः पुनर्भाव्यमानमभ्यासबलादनक्षजस्यापि ज्ञानस्य कामशोकभयोन्मादचौरस्वप्नाद्युपप्लुतस्य वैशद्यमिव भावनाप्रकर्षपर्यन्ते योगिज्ञानरूपं सद्वैशद्यभाग् भवतीति वाच्यम्, तज्ज्ञानवदतीन्द्रियार्थविद्विज्ञानस्याप्युपप्लुतत्वापत्तेः। न च रजोनीहाराद्यावरणावृतवृक्षादिदर्शनमविशदमपि तदावरणापाये विशदमिव रागाद्यावारकाणां विज्ञानावैशद्यहेतूनामपाये सर्वज्ञज्ञानं विशदतामनुभविष्यतीति वाच्यम्, रागादीनामावरणत्वासिद्धेः, कुड्यादीनामेव ह्यावारकत्वं लोके प्रसिद्धं न रागादीनामिति चेन्मैवम्, चक्षुरादिज्ञानस्य धर्मादिग्राहकत्वेऽविरोधात्, सर्वदा हि पदार्थजनकत्वेन द्रव्यगुणकर्मजन्यत्वेन च धर्मादेः सर्वपदार्थविशेषणतयाऽतीतातीन्द्रियकालादेरिव विशेष्यविशेषणग्रहणप्रवृत्तचक्षुरादिना ग्रहणं सम्भवत्येव, मन्त्रादिद्वारेण कालविप्रकृष्टार्थग्राहकं यथा चक्षुर्भवति तथैव कस्यचित्पुरुषविशेषस्य पुण्यादिसंस्कृतं चक्षुरादिकं धर्मादेर्ग्राहकं भविष्यतीति न कश्चिद्विरोधः। उत्पादव्ययध्रौव्यं सदित्यादेः सामान्यतः सकलपदार्थविषयोपदेशस्य सम्भवेनाभ्यासपक्षेऽपि दोषाभावः, अनुमानादिप्रवर्त्तनद्वारेणैतदर्थाभ्यासे सकलविषयाभ्याससम्भवात्। न चाभ्यासवैयर्थ्यम्, सामान्यविषयत्वेनास्पष्टरूपस्यैव ज्ञानस्य भावात्, अभ्यासजन्यस्य च सकलपदा-

[1] विषयापरिज्ञाने विषयिणोऽपरिज्ञानाभ्युपगमे असकलवेदार्थविदां कथं जैमिन्यादेः सकलवेदार्थपरिज्ञाननिश्चयः स्यात्, तदनिश्चये च कथं तद्व्याख्यातार्थाश्रयणादग्निहोत्रादावनुष्ठाने प्रवृत्तिर्भवेदिति भावः॥

र्थगतविशेषविषयत्वेन स्पष्टत्वात्। शब्दज्ञानजज्ञानपक्षेऽपि नान्योऽन्याश्रयः, अन्यान्यसर्वज्ञप्रणीतागमप्रभवत्वेन तदसम्भवात्, अनवस्था तु इष्यत एव, आगमसर्वज्ञपरम्पराया अनादित्वात्। स्वविषयग्रहणयोग्यज्ञानस्य तद्विषयाग्राहकत्वं विशिष्टद्रव्यसम्बन्धपूर्वकम्, यथा पीतहृत्पूरपुरुषज्ञानस्य, न गृह्णाति च सर्वमनेकान्तात्मकमिति सामान्यविषयं ज्ञानं तद्गत-
5 निखिलविशेषानिति पौद्गलिकातीन्द्रियधर्मादिसाधकहेतुसम्भवेन तज्ज्ञानस्य लिङ्गजत्वेऽपि न क्षतिः। न च भावनाबलात्तज्ज्ञानवैशद्ये कामादिविप्लुतविशदज्ञानवत् इवासर्वज्ञत्वं शङ्क्यम्, भावनाबलाज्ज्ञानं वैशद्यमनुभवतीत्येतावन्मात्रेण दृष्टान्तस्योपात्तत्वात् सकलदृष्टान्तधर्माणां साध्यधर्मिण्यासञ्जनायोगात्, अन्यथा सकलानुमानोच्छेदप्रसङ्गात्, न ह्यनुमानगृहीतार्थस्य भावनाबलात् प्रतिभासिन्यभ्यासजन्ये ज्ञाने वैशद्यमनुभवतो वैपरीत्यं सम्भवति,
10 येन तज्ज्ञानं कामाद्युपप्लुतज्ञानमिवोपप्लुतं स्यात्। अन्वयव्यतिरेकाभ्याञ्च कुड्यादीनामप्यावारकत्वं न सम्भवति, सत्यस्वप्रप्रतिभासस्य हि अर्थग्रहणे न कुड्यादीनामावारकत्वम्, निश्छिद्रापवारकमध्यस्थितेनापि भाव्यतीन्द्रियार्थस्यान्तरावरणाभावे प्रमाणान्तरसंवादिन उपलम्भात्, कुड्यादीनां त्वावरणत्वे तद्दर्शनमसम्भव्येव स्यात्, तथाप्रतिभासेनादृष्टार्थेऽपि कुड्यादीनां नावारकत्वम्। न च रागादीनां कथमात्यन्तिकः क्षयः, कथं वाऽविशदं ज्ञानम-
15 भ्यस्यमानमपि लङ्घनोदकतापादिवत् प्रकृष्टप्रकर्षावस्थायां वैशद्यञ्चावाप्नोतीति वाच्यम्, रागादीनां स्वरूपज्ञाने कस्या अप्यनुपपत्तेरभावात्, ज्ञानावरणहेतुत्वेन हि रागादीनामावारकत्वम्, तत्सद्भावे प्रबलप्रमाणनिश्चितस्य सर्वज्ञज्ञानस्याभावप्रसङ्गादनित्यत्वम्, अत एव च नाकस्मिकत्वं तस्य, मिथ्याज्ञानञ्च तस्योत्पादकम्, न च मिथ्याज्ञानस्य नित्यत्वम्, तत्सद्भावे रागादीनां सद्भावेन तदावृतत्वात्सर्वज्ञज्ञानस्याभावप्रसङ्गात्, आकस्मिकत्वे तु
20 तस्य कारणमन्तरेणापि प्रवृत्तेः रागादीनामपि प्रवृत्तौ सर्वज्ञज्ञानाभावप्रसङ्गतादवस्थ्यात्, अहेतुकस्य मिथ्याज्ञानस्य देशकालपुरुषप्रतिनियमाभावेन भ्रान्ताभ्रान्तविभागाभावप्रसङ्गाच्च। नापि तत्प्रतिपक्षभूतोपायस्यापरिज्ञानम्, मिथ्यात्वविपक्षतया सम्यग्ज्ञानस्य निश्चितत्वात्, तदुत्कर्षे च मिथ्याज्ञानस्यात्यन्त क्षयात्। तथा च यदुत्कर्षतारतम्याद्यस्यापचयतारतम्यं तस्य विपक्षप्रकर्षावस्थायामात्यन्तिकक्षयः यथोष्णस्पर्शस्य प्रकर्षावस्थायां

25 १ अयं भाव. यतो देशत क्षीयमाण समुपलभ्यते तत्तत. परमप्रकर्षावस्थाजायमानसर्वप्रक्षयम्, यथा चिकित्सावाग्वादिभ्यो रोगमेघादि, समुपलभ्यते च देशत क्षीयमानमावरण सम्यग्दर्शनादिभ्य इति। यत्र हि आवरणविरोधिसम्यग्दर्शनादिपरमप्रकर्षसद्भावस्तत्र तदत्यन्तनिवृत्तिसद्भाव आवश्यक यथा चक्षुषि तिमिरादि, आवरणविरोधिसम्यग्दर्शनादिपरमप्रकर्षश्च क्वचिदात्मनि यथा कस्यचिच्चक्षुषि तिमिरादेरत्यन्तनिवृत्तिमत्त्वप्रसिद्धे तद्विरोधिविशिष्टाञ्जनादिपरमप्रकर्षसद्भावसिद्धिश्च निर्विवाद सम्यग्दर्शनादेरावरणविरोधित्वञ्च तत्प्रकर्षे तदपकर्षदर्शनात्, यथोष्णस्पर्श शीतस्पर्शस्येति ॥

तथाविधशीतस्पर्शस्यात्यन्तिकः क्षयः, सम्यग्ज्ञानोपचयतारतम्यञ्चानुविधत्ते मिथ्याज्ञानापचयतारतम्यमिति तदुत्कर्षेऽस्यात्यन्तिकक्षयसद्भावान्मिथ्याज्ञानकार्यरागाद्यनुत्पत्तेरावरणाभावः सिद्ध इति, रागादिविपक्षभूतवैराग्याभ्यासाद्वा रागादीनां निर्मूलतः क्षय इति कथं नावरणाभाव इति । तथा च सर्वज्ञावेदकप्रमाणसद्भावाद्बाधकप्रमाणविरहाच्च सर्वज्ञसिद्धौ जिनानां शासनमिति विशेषणात्सर्वज्ञविशेषसिद्धिः, इतरकपिलादिप्रणीतसिद्धान्तानां दृष्टेष्टविषये विरोधात् । अतः स्थितमेतज्जिनशासनं तत्त्वादेव निश्चितप्रामाण्यमिति ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य सर्वज्ञसाधनं नाम तुर्यं सोपानम् ॥



## अथ परलोकव्यवस्थापनम् ।

इत्थं सर्वज्ञसिद्धौ स न तावत्कश्चिदतिरिक्तो जीवेभ्यः, न वा कश्चित्स्वभावत एव रागादिक्लेशरहितोऽपि तु स भवजिन एवेति परलोकसाधनार्थं नैयायिकाद्यभिप्रेतेश्वरनिरसनार्थञ्च भवजिनानामित्युक्तम् । ननु भवेति विशेषणेन नारकतिर्यङ्नरामररूपपरिणतिस्वभावतया भवन्ति उत्पद्यन्तेऽस्मिन्निति प्रतिपादितं तच्चायुक्तं परलोकस्यास्तित्वे मानाभावात्, तथाहि तदभ्युपगन्तृभिः प्रत्यक्षमनुमानमागमो वा तत्र प्रमाणमभिधानीयम्, तच्च न सम्भवति, परलोकप्रतिपादकत्वेन प्रत्यक्षस्याप्रवृत्तेः, तस्य सन्निहितप्रतिनियतरूपादिविषयत्वात्, योगिन एवाप्रसिद्ध्या तत्प्रत्यक्षस्याप्यसम्भवात् प्रत्यक्षाप्रवृत्तौ च तत्पूर्वकानुमानस्याप्यप्रवृत्तेः । सामान्यतो दृष्टस्यापि प्रतिपन्नलिङ्गप्रभवत्वेन तल्लिङ्गे तत एव प्रत्यक्षतोऽनवस्थानाच्चानुमानतो व्याप्तिप्रतिपत्तेरसम्भवात्, अस्मान् प्रति तस्य प्रमाणाभासवदनिश्चितार्थप्रतिपादकत्वेन प्रमाणत्वासिद्धेः, विषयविचारेणापि अनुमानस्य प्रामाण्यायोगाच्च । तथाहि धर्मस्य धर्मिणः स्वतन्त्रतयोभयस्य वा तेन साधने सिद्धसाध्यता स्यात्, अतो विशेषणविशेष्यभावः साध्यः, विशिष्टप्रमेयविषयप्रमाजनकं हि प्रमाणं प्रमाणभावमश्नुते, इतरेतरावच्छिन्नश्च समुदायोऽत्र प्रमेयः, तदपेक्षया च पक्षधर्मत्वादीनां रूपाणामप्रसिद्धिः, न हि हेतुः समुदायधर्मः, न वा समुदायेन हेतोरन्वयो व्यतिरेको वा, केवलं धर्म्यपेक्षया पक्षधर्मत्वे धर्मापेक्षया चान्वये व्यतिरेके वा प्रमाणस्य गौणता स्यात् । नापि एकदेशाश्रयेण त्रैरूप्यं युक्तं, व्याप्त्यसिद्धेः,

१ अयं भावः, अनुमानं तावन्न प्रमाणम्, गौणत्वात्, पक्षधर्मत्वं हि तज्जनकस्य हेतोः स्वरूपं पक्षश्च धर्मधर्मिसमुदायात्मा, तदनिश्चये कथं तद्धर्मताया हेतौ निश्चयः, तन्निश्चये चानुमानं व्यर्थम् । ततोऽवश्यं पक्षधर्मव्यवहारसिद्धये धर्मधर्मिसमुदाये रूढोऽपि पक्षशब्दस्तदेकदेशे धर्मिण्युपचरणीय, तस्मादित्थं पक्षस्य गौणत्वं तद्गौणत्वे च हेतोरपि गौणता तद्धर्मत्वात्, तज्जन्यत्वेनानुमानमपि गौणमिति न प्रमाणं गौणत्वादिति भाव. ॥

सत्तामात्रेण हि नाविनाभावो गमकोऽतिप्रसङ्गात् किन्त्ववगत एव, स चाविनाभावो निखिलसपक्षविपक्षाप्रत्यक्षीकरणे दुर्विज्ञेयः । न च भूयोदर्शनतस्तदवगमः, सहस्रशोऽपि दृष्टसाहचर्यस्य व्यभिचारात्, ततोऽप्रमाणमनुमानं नातीन्द्रियपरलोकसद्भावप्रतिपादकम् । न च जन्मेदं पूर्वजन्मान्तरमन्तरेण न युक्तमिति जन्मान्तरलक्षणपरलोकसिद्धिरिति वाच्यम्, यतो
5 यदीयमर्थापत्तिस्तदा तल्लक्षणाभावान्न परलोकसिद्धिः, अस्य जन्मनो जन्मान्तरमन्तरेणानुपपत्तेरभावात्, मातापितृसामग्रीमात्रेण तस्योपपत्तेः । न चागमादपि परलोकसिद्धिः, तस्य प्रामाण्यासिद्धेः । न चाप्रमाणसिद्धं परलोकादिकमभ्युपगन्तुं युक्तम्, तदभावस्यापि तथाऽभ्युपगमप्रसङ्गात् । न च भवतः परलोकनास्तित्वे किं प्रमाणमिति शङ्क्यम्, परोपन्यस्तप्रमाणपर्यनुयोगमात्रस्यैवास्माभिः क्रियमाणत्वादिति चेत् उच्यते, यत्कार्यं तत्कार्यान्तरोद्भूतम्, यथा
10 पटादिलक्षणं कार्यम्, कार्यञ्चेदं जन्मेति परलोकसिद्धिः न च प्रत्यक्षाभावेऽनुमानं कथं प्रवर्त्तेत इति वाच्यम्, प्रत्यक्षेण सम्बन्धग्रहणपूर्वं परोक्षे पावकादौ यथाऽनुमानप्रवृत्तिस्तथा परलोकसाधनेऽपि तस्य प्रवृत्तेः । न चेहजन्मनः कार्यत्वमसिद्धम्, अकार्यत्वे हेतुनिरपेक्षतया नित्यसत्त्वासत्त्वप्रसङ्गात् । न च कादाचित्कत्वं पदार्थानां स्वभावत एव भविष्यति, प्रत्यक्षतः कार्यकारणभावस्यैवासिद्ध्या तस्य कार्यकारणभावपूर्वकत्वस्य प्रत्यक्षतोऽनुपलब्धेरिति वाच्य-
15 म्, तथा सति सकलव्यवहारोच्छेदप्रसङ्गात्, बाह्येनाप्यर्थेन सह कार्यकारणभावस्यासिद्ध्या स्वसंवेदनमात्रत्वादद्वैतम्, विचारतस्तस्याप्यभावेन सर्वशून्यत्वं वा स्यात् । अतः आत्मनो बाह्यार्थप्रतिबद्धत्वं प्रत्यक्षतः प्रतीयत एव, अन्यथा इहलोकस्याप्यप्रसिद्धेः, प्रत्यक्षतस्तज्जन्यस्वभावत्वानवगमे तस्य तद्ग्राहकत्वासम्भवात्, यथा चेहलोकसाधनार्थं स्वार्थेन सहात्मनः प्रतिबन्धसाधकं प्रत्यक्षमङ्गीकर्त्तव्यम्, तथा परलोकसाधनार्थमपि तदेव साधनमिति सिद्धः पर-
20 लोकोऽनुमानतः, यथा च बाह्यार्थप्रतिबद्धत्वं प्रत्यक्षस्य कादाचित्कत्वेन साध्यते धूमस्यापि च वह्निप्रतिबद्धत्वम्, तथा इहजन्मनोऽपि कादाचित्कत्वेन जन्मान्तरप्रतिबद्धत्वमपि । ततोऽनलबाह्यार्थवत् परलोकेऽपि सिद्धमनुमानम् । न चेहजन्मादिभूतमातापितृसामग्रीमात्रादप्युत्पत्तेः कादाचित्कत्वं युक्तमेवेहजन्मन इति वाच्यम्, प्रदेशादिसामग्रीविशेषादेव धूमादेः समनन्तरप्रत्ययमात्रसामग्रीविशेषादेव प्रत्यक्षसंवेदनस्य च कादाचित्कत्वाद्वह्निबाह्यार्थप्रतीत्य-
25 सिद्ध्या सकलव्यवहाराभावप्रसङ्गात् । यदि अन्यथाऽसम्भविन आकारविशेषादेवानलबाह्यार्थसिद्धिरित्युच्यते तर्हि प्रज्ञामेधाद्याकारविशेषादेवेहजन्मनोऽपि मातापितृशरीरव्यतिरिक्तनिजजन्मान्तरपूर्वकत्वसिद्धिः । यथा च तैमिरिकादिज्ञानव्यावृत्त आकारविशेष एवायं प्रत्यक्षस्य बाह्यार्थमन्तरेण न सम्भवतीति निश्चीयते, अन्यथा बाह्यार्थासिद्ध्या ज्ञानाद्वैतप्रसङ्गात्, तथेहजन्मादिभूतप्रज्ञाविशेषात् इहजन्मविशेषाकारो निजजन्मान्तरप्रतिबद्ध इति

अनुमानेन निश्चीयते । न चैवंविधविषयेऽनुमानमितरेतराश्रयदोषान्न प्रवर्त्तत इति वक्तव्यम्, तथा सति सर्वभेदाभावात् व्यवहारोच्छेदात्, अतो तदुच्छेदमनभ्युपगच्छता व्यवहारार्थिनाऽवश्यमनुमानमभ्युपगन्तव्यम् । न चाऽनुमानपूर्वकत्वेऽनवस्थेति प्रतिबन्धाग्रह इति शङ्क्यम्, उक्तहेतोः व्याप्तिप्रसाधनाय केषांचिन्मतेन निर्विकल्पकस्य, अन्येषां तु चक्षुरादिकरणव्यापारजन्यस्य सविकल्पकस्य, अपरेषां मानसप्रत्यक्षस्य, केषाञ्चिद् व्यावृत्तिग्रहणोपयोगिज्ञानस्य, अन्येषां प्रत्यक्षानुपलम्भबलोद्भूतालिङ्गजोहाख्यस्य परोक्षस्य प्रमाणत्वेन प्रवृत्तेः । न चास्मान् प्रत्यनुमानं न प्रमाणमिति वाच्यम्, अनुमानमात्रस्य प्रतिषेधासम्भवात्, अन्यथा लोकव्यवहारोच्छेदप्रसङ्गात्, प्रतियन्ति हि कोविदाः कस्यचिदर्थस्य दर्शने नियमेन किञ्चिदर्थान्तरं न तु सर्वस्मात् सर्वस्यावगमः, अतः किञ्चिद् दृष्ट्वा कस्यचिदवगमे निमित्तं कल्पनीयम्, तच्च निमित्तं व्याप्तिरेव तदवगमश्च पूर्वोक्तप्रमाणादेव । यदि तन्निमित्ता व्याप्तिर्नाभ्युपगम्यते तदा कथं न सर्वस्मात्सर्वप्रतिपत्तिः । न च परलोकिन आत्मनोऽभावात् परलोकाभावः, न ह्यनाद्यनन्त आत्मा प्रत्यक्षेण सिद्धः, अनुमानेन चेदन्योन्याश्रय इति वाच्यम्, शरीरेन्द्रियविषयव्यतिरिक्तस्यात्मनोऽहंप्रत्ययप्रत्यक्षेणोपलम्भात्, तस्य च स्वसंवेदनप्रत्यक्षग्राह्यत्वात् । उपसहृतसकलेन्द्रियव्यापारस्य हि अन्धकारस्थस्य च अहमिति ज्ञानं सर्वप्राणिनामुपजायमानं स्वसंविदितमनुभूयते तत्र च शरीराद्यनवभासेऽपि तद्व्यतिरिक्तमात्मस्वरूपं प्रतिभाति । न चैतज्ज्ञानमपह्नोतुं शक्यम्, सर्वानुभवापलापप्रसङ्गात्, अनुभूयमानस्याप्यपलापात् । न चेदं नोत्पद्यते, कादाचित्कत्वविरोधात् । न च बहिरिन्द्रियव्यापारप्रभवम्, तद्व्यापाराभावेऽप्युपजायमानत्वात् । नापि शब्दलिङ्गादिनिमित्तोद्भूतम्, तदभावेऽप्युत्पत्तिदर्शनात् । न चेदं बाध्यत्वेनाप्रमाणम्, तत्र बाधकसद्भावस्यासिद्धेः । तथा कदाचिद् बाह्येन्द्रियव्यापारकालेऽपि यदा घटमहं जानामीति विषयमवगच्छति तदा स्वात्मानमपि, कर्मतया विषयस्य कर्तृतयाऽऽत्मनश्चावभासनात् । न च शरीरादीनामेव ज्ञातृत्वम्, घटादिविषयस्येव प्रतीतिकर्मतया शरीरादेः प्रतिभासनात्, 'मम घटादयः, अहं घटादीनां ज्ञाते'ति प्रतीतिवत 'मम शरीरादयः अहं शरीरादीनां ज्ञाते'ति प्रतीतेः । न वा ज्ञातुरप्रतिभासनम्, तदप्रतिभासे 'ममैते भावाः प्रतिभान्ति नान्यस्ये' त्येवं प्रतिभासाभावप्रसङ्गात् । तस्माल्लिङ्गाद्यनपेक्षस्याऽऽत्मावभासस्य सद्भावात्स कथं न प्रत्यक्षप्रसिद्धः । न चात्मावभासस्येन्द्रियव्यापाराजन्यत्वेन न प्रत्यक्षतेति वाच्यम्, इन्द्रियजन्यमेव प्रत्यक्षमित्यनभ्युपगमात्, इन्द्रियानिन्द्रियनिमित्तं यत्र यद्विशदं ज्ञानं तत्तत्र प्रत्यक्षमित्यभ्युपगमाच्च । न च शरीरसामानाधिकरण्येन 'कृशोऽहं स्थूलोऽह' मिति ज्ञानस्य भावाच्छरीरमेवाहंप्रत्ययविषयी नात्मेति वाच्यम्, चक्षुराद्यन्द्रियव्यापाराभावेन शरीरस्याग्रहणेऽपि अहमिति

प्रत्ययस्य सुखादिसमानाधिकरणत्वेन स्फुटप्रतिभासविषयतयोत्पत्तेः । न हि कृशोऽहमिति प्रत्ययस्य भ्रान्तित्वे ज्ञानवानहमिति प्रत्ययस्यापि भ्रान्तत्वं युक्तमन्यथाऽग्निर्माणवक इत्यादावुपचरितविषयस्याग्निप्रत्ययस्य माणवके भ्रान्तत्वेऽग्नावपि तत्प्रत्ययस्योपचरितत्वेन भ्रान्तत्वं स्यात् । न च तत्र पाटवपिङ्गलत्वादिलक्षणस्योपचारनिमित्तस्य सत्त्वेनोपचरितप्रत्ययसम्भवेऽ
5 पि प्रकृते तथाविधनिमित्ताभावान्न तथाप्रत्यय इति वाच्यम्, संसार्यात्मनः शरीराद्युपकृतत्वेन तदनुबद्धस्योपभोगाश्रयत्वेनोपभोगकर्तृत्वस्यात्राप्युपचारनिमित्तस्य सत्त्वात् । दृष्टश्च शरीरादिव्यतिरिक्तेऽप्यत्यन्तोपकारके स्वभृत्यादावुपचरितप्रत्ययस्तन्निमित्तः 'योऽयं भृत्यः सोऽह'मिति । न च सुखादिसामानाधिकरण्येनोपजायमानस्यैवाहम्प्रत्ययस्योपचरितविषयतेति वाच्यम्, अग्नावग्निप्रत्ययवदबाधितत्वेनास्खलद्रूपत्वेन चात्र मुख्यत्वात् गौरत्वादेस्तु पुद्गल-
10 धर्मत्वेन बाह्येन्द्रियग्राह्यतयाऽन्तर्मुखाकारानिन्द्रियाहंप्रत्ययविषयत्वासम्भवात् । न वा गौरत्वाद्याश्रयशरीरादेः प्रतिक्षणविशरारुत्वेनाभ्युपगमविषयस्य 'य एवाहं प्राङ् मित्रं दृष्टवान् स एवाहं वर्षपञ्चकादिव्यवधानेन स्पृशामी'ति स्थिरालम्बनत्वेनानुभूयमानप्रत्ययविषयत्वं सम्भवति, अन्यथा रूपविषयकत्वेनानुभूयमानस्य तस्य रसाद्यालम्बनं स्यात् । नापि सुखादिविवर्त्तात्मकात्मालम्बनत्वे किञ्चिद्बाधकमस्ति, नापि च तत्र तस्य स्खलद्रूपता, तस्मादबाधितास्खलद्रूपाहं-
15 प्रत्ययग्राह्यत्वादात्मनो नासिद्धिः । न चात्मन एकत्वे सिद्धे तत्प्रतिबद्धोऽनुसन्धानप्रत्ययः, तत्सिद्धौ च ततस्तस्यैकत्वमित्यन्योऽन्याश्रय इति वाच्यम्, य एवाहं घटमद्राक्षं स एवेदानीं तं स्पृशामीति प्रत्ययात् प्रत्यभिज्ञास्वरूपादात्मन एकत्वसिद्धेः । ननु किं प्रत्यभिज्ञायामात्मनो द्रष्टृता स्प्रष्टृतानुप्रवेशेन प्रतिभासते, अननुप्रवेशेन वा, आद्ये स्प्रष्टृतैव स्यात्, द्रष्टृतायास्तत्रानुप्रवेशात् तथा चाहं द्रष्टा स्पृशामीत्युभयावभासस्यैक प्रत्यभिज्ञानं न स्यात्, द्वितीयेऽप्येकं
20 प्रत्यभिज्ञानं न स्यात्, दर्शनस्पर्शनावभासयोर्भेदात्, तथाप्येकत्वे घटपटप्रतिभासयोरप्येकत्वं स्यात् । न च प्रतिभासभेदेऽपि तद्विषयस्यात्मनोऽभेद इति वक्तुं शक्यम्, अभेदासिद्धेः, प्रतिभासभेदात् । न च स्वतोऽभेदः, तस्यात्रापि विवादविषयत्वात् । न च दर्शनस्पर्शनावस्थयोर्भेदेऽपि चिद्रूपस्यावस्थातुरभिन्नत्वान्न दोष इति वाच्यम्, दर्शनावस्थाप्रतिभासकाले तत्सम्बद्धस्यैवात्मनो ग्रहणात् स्पर्शनावस्थाया अनुत्पन्नत्वात् । तत्प्रतिभासकाले च तत्सम्बद्धस्यैव
25 ग्रहणम्, दर्शनावस्थायास्तदानीं विनष्टत्वेनाप्रतिभासनात्, तथापि तत्प्रतिभासने चानाद्यवस्थापरम्पराप्रतिभासप्रसङ्गः, तथा च नोभयावस्थाव्याप्येकावस्थातृसिद्धिरिति चेन्न, नीलादिप्रतिभासेऽप्येवं वक्तुं शक्यत्वात् । तथाहि किमेकनीलज्ञानपरमाण्ववभासोऽपरनीलज्ञानपरमाण्ववभासानुप्रवेशेन प्रतिभाति, उतानुप्रवेशेन, नाद्यः, अपरनीलज्ञानपरमाण्ववभासानामेकनीलज्ञानपरमाण्ववभासानुप्रवेशेनैकपरमाणुरूपतया तस्य चाननुभवान्नीलसंवेदना-

सिद्धिः । न द्वितीयः, नीलज्ञानपरमाण्ववभासानामयःशलाकाकल्पानां प्रतिभासनात्स्थूलैकनीलज्ञानसंवेदनासिद्धेः, प्रतिनीलज्ञानपरमाण्ववभासं भिन्नत्वात् । न च स्वसंवेदनविषयभेदेऽपि न तत्प्रतिभासस्य नीलज्ञानस्य भेद इति वाच्यम्, नीलज्ञानस्याभेदासिद्धेः, स्वसंवेदनभेदात्, स्वतोऽभेदस्यासिद्धत्वाच्चेति । न च दर्शनावस्थायां स्पर्शनावस्थाया अप्रतिभासनादवस्थातु- दर्शनज्ञानेन स्पर्शनावस्थाव्याप्तिर्न ग्रहीतुं शक्येति वाच्यम्, तदव्याप्तेरपि ग्रहीतुमशक्यत्वात्, तस्या एवाप्रतिभासे तत इदमवस्थातृरूपं व्यावृत्तमित्यपि ग्रहीतुमशक्यत्वात् । अत एव तद्विविक्ततया अग्रहात् 'तद्विविक्तप्रतिभासादेव तदव्याप्तिर्ग्रहीतैवे'त्यपि वक्तुं न शक्यते । न च तदव्याप्तेस्तत्स्वरूपतया दर्शनज्ञानेन तत्स्वरूपग्रहे तदव्याप्तिरपि गृहीतैवेति वाच्यम्, तद्व्याप्तेरपि तत्स्वरूपत्वेन तत्स्वरूपग्रहे तस्या अपि ग्रहस्य वक्तुं शक्यत्वात् । न चाबाधितैकप्रत्ययविषयस्यात्मन एकत्वमसिद्धम्, न चास्यैकत्वाध्यवसायस्य किञ्चिद्बाधकमस्ति, नापि पूर्वदर्शितरीत्याऽन्योऽन्याश्रयः, एकत्वव्याप्ततायां अनुसन्धानस्यान्वयदृष्टान्तद्वारेणानिश्चयनात्, किन्त्वनेकत्वेऽनुसन्धानस्यासम्भवात्ततो व्यावृत्तमनुसन्धानं तदेकत्वेन व्याप्यत इत्येकसन्ताने स्मरणाद्यनुसन्धानदर्शनादनुमानतोऽपि तत्सिद्धिः । न च भेदेऽनुसन्धानं सम्भवति, देवदत्तानुभूतेऽर्थे यज्ञदत्तस्य स्मरणाद्यनुसन्धानादर्शनात्, तस्मादध्यक्षानुमानप्रमाणसिद्धत्वात् परलोकिनः तस्याभावात्परलोकाभाव इति वचो निर्मूलमेव । न च शरीरान्तर्गतं संवेदनं कथं शरीरान्तरसञ्चारि, जीवनस्तावन्न शरीरान्तरसञ्चारो दृष्टः, परस्मिन् मरणसमये भविष्यतीति दुरन्वयमेतदिति वाच्यम्, जीवत एव कुमारशरीरान्तर्गतपाण्डित्यादिविकल्पानां वृद्धावस्थाशरीरसञ्चारित्वेन दर्शनात् । न चैकमेवेदं शरीरं बालकुमारादिभेदभिन्नम्, जन्मान्तरशरीरन्तु मातापित्रन्तरशुक्रशोणितप्रभवं शरीरान्तरप्रभवमिति वाच्यम्, बालकुमारादिशरीरस्यापि भेदात्, तस्मान्न मातापितृशुक्रशोणितान्वयि जन्मादिशरीरमपि तु स्वसन्तानशरीरान्वय्येव, वृद्धादिशरीरवत्, अन्यथा मातापितृशरीरचपलतादिविलक्षण शरीरचेष्टावन्न स्यात् । न चेहजन्मबालकुमाराद्यवस्थाभेदेऽपि प्रत्यभिज्ञानात्तदवस्थाव्यापकस्य शरीरस्यैकत्वं सिद्धम्, तद्दृष्टान्तबलाच्चात्यन्तभिन्ने जन्मान्तरशरीरादौ न ज्ञानसञ्चारो युक्त इति वाच्यम्, पूर्वोत्तरजन्मशरीरज्ञानसञ्चारकारिणः कार्मणशरीरस्यात एव कथञ्चिदेकत्वसिद्धेः, इहजन्मादौ ज्ञानं हि अपरनिजजन्मज्ञानप्रभवम्, तस्य चेहजन्मबालकुमाराद्यवस्था भेदेषु तदेवेदं शरीरमित्यबाधितप्रत्यभिज्ञाप्रत्ययावगतैकरूपान्वयिषु सञ्चारदर्शनात् पूर्वोत्तरजन्मावस्थास्वपि तथाभूतानुगामिकार्मणशरीरसमन्वितासु तस्य सञ्चारोऽनुमीयते, न चास्मदादिप्रत्यक्षविषयौदारिकशरीरस्य जन्मान्तरावस्थास्वनुगमो दाहादिना तस्य ध्वंसोपलब्धेः ।

अतो जन्मद्वयावस्थाव्यापकस्योष्मादिधर्मानुगतस्य कार्मणशरीरस्य विज्ञानसंस्कारकारिणः सद्भावः सिद्धः । पूर्वोत्तरजन्मावस्थाव्यापकस्यावस्थातुस्तदवस्थाभ्यः कथञ्चिदभेदान्माता-पितृशरीरविलक्षणनिजपूर्वशरीरावस्थाचपलताद्यनुविधाने उत्तरावस्थायाः कथं नावस्थातृज्ञान-लक्षणधर्मानुविधानम्, तथा च कार्यविशेषस्य विशिष्टकारणपूर्वकत्वादुक्तरूपेण पूर्वजन्म-
5 सिद्धिः । यदुक्तं पर्यनुयोगमात्रमस्माभिः क्रियत इति तदयुक्तम्, पर्यनुयोगकारिणः प्रत्य-क्षप्रमाणरूपत्वासम्भवात्, प्रत्यक्षस्याविचारकत्वेन पर्यनुयोगलक्षणविचारकरणासामर्थ्यात् । भवदभ्युपगमेन प्रत्यक्षस्य प्रामाण्यलक्षणानाक्रान्तत्वाच्च । स्वरूपव्यवस्थापकधर्मो हि लक्षणम्, प्रत्यक्षस्य च प्रामाण्यव्यवस्थापको धर्मोऽविसंवादित्वमेव तच्च प्रत्यक्षप्रामाण्येन सहा-विनाभूतं स्वीकार्यम्, अन्यथा प्रत्यक्षप्रामाण्यासिद्धेः । अविनाभावावगमश्च निखिलदेश-
10 कालव्याप्त्या प्रमाणतोऽभ्युपगमनीयः, अन्यथा यस्यामेव व्यक्तौ संवादित्वप्रामाण्ययोरविना भावोऽवगतस्तस्यामेव ततस्तत्सिद्ध्येत, न व्यक्त्यन्तरे तत्र तस्यानवगमात् । न च यस्यां व्यक्तौ सोऽवगतः सा देशकालान्तरमनुवर्त्तते, तस्यास्तत्रैव ध्वंसात्, व्यक्त्यन्तराननु-गमात्, अनुगमे वा व्यक्तिरूपत्वाभावेन सामान्यरूपत्वापत्तिः सामान्यस्य च भवतान-भ्युपगमात्, अभ्युपगमे वा न सामान्यलक्षणानुमानविषयाभावप्रतिपादनेन तत्प्रतिक्षेपो
15 युक्तः । तादृशाविनाभावावगमकश्च प्रमाणं न प्रत्यक्षात्मकम्, सन्निहितस्वविषयप्रतिभास-मात्रे तस्य व्यापारात्, न चैकत्र व्यक्तौ प्रत्यक्षेण तयोरविनाभावावगमादन्यत्रापि एव-म्भूतं प्रत्यक्षं प्रमाणमिति प्रत्यक्षेणापि लक्ष्यलक्षणयोर्देशकालव्याप्त्या प्रतिबन्धावगम इति वाच्यम्, अन्यत्रापि प्रत्यक्षेणैव एवम्भूतं ज्ञानलक्षणं कार्यं एवम्भूतज्ञानकार्यप्रभव-मिति सर्वोपसंहारेण कार्यलक्षणहेतोः स्वसाध्याविनाभावावगमप्रसङ्गात्, तथा चानुमा-
20 नस्य प्रमाणमविनाभावसम्बन्धस्य व्याप्त्या ग्रहीतुमशक्यत्वादिति दूषणमसङ्गतं स्यात् । नाप्यनुमानादिकं पर्यनुयोगकारि, भवद्भिरनुमानादेः प्रमाणत्वेनानभ्युपगमात् । तदेवं परलोकस्य प्रत्यक्षादिप्रमाणसिद्धत्वाद्ध्रुवेति विशेषणं सार्थकमेवेति दिक् ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वर-चरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितस्य
सम्मतितत्त्वसोपानस्य परलोकव्यवस्थापनं नाम
25 पञ्चमं सोपानम् ॥

# अथेश्वरकर्तृत्वभङ्गः ।

**अत्र नैयायिकाः** पूर्वोदितरीत्या सर्वज्ञसिद्धावपि स नित्यज्ञानादिधर्मकलापान्वितः
शासनादिसर्वजगत्स्रष्टा ईश्वर एव । न च तत्र नास्ति प्रमाणमिति वक्तव्यम्, सामा-
न्यतो दृष्टानुमानस्य तत्र प्रमाणत्वात्, तनुभुवनकरणादिकं बुद्धिमत्कारणपूर्वकं कार्य-
त्वात्, घटादिवदित्यनुमानस्य सत्त्वात्, न च पृथिव्यादौ कार्यत्वमसिद्धम्, बौद्धैस्त- 5
स्य कार्यत्वाभ्युपगमात्, सर्वैः संस्थानवत्त्वस्य तत्राभ्युपगतत्वेन कार्यत्वस्यावश्यकत्वाच्च ।
नाकृष्टजातैः स्थावरादिभिर्व्यभिचारो व्याप्त्यभावो वा, साध्याभाववति वर्त्तमानस्यैव हेतो-
र्व्यभिचारित्वात्, तेषु तु न सकर्तृकत्वाभावनिश्चयः, किन्तु कर्त्रग्रहणमात्रम्, न चोप-
लब्धिलक्षणप्राप्तस्य कर्तुः तत्रानुपलम्भादभावनिश्चय इति वाच्यम्, उपलब्धिलक्षणप्राप-
ताया॰ कर्तुस्तेष्वनभ्युपगमात् कर्त्रग्रहणञ्च शरीराद्यभावात्, न त्वसत्त्वात् । न च शरी- 10
राद्यभावे कर्तृत्वस्याप्यभाव इति वाच्यम्, कार्यस्य शरीरेण सह व्यभिचारात्, शरीर-
स्य प्रवृत्तिनिवृत्त्यादिषु शरीरापेक्षाविरहात्, अन्यथाऽनवस्थानात् । साध्यान्विते चैक-
स्मिन् हेतौ स्थिते सति द्वितीयस्य साध्याभावान्वितस्य हेतोस्तत्रानवकाशतया न सत्प्र-
तिपक्षता, अबुद्धिमत्कारणपूर्वकत्वस्य प्रमाणेनाग्रहणान्न बाधः । नापि धर्म्यसिद्धता,
पृथिव्यादेर्भूतग्रामस्य च प्रमाणेन सिद्धत्वात् । न वा हेतोर्विशेषविरुद्धता, तद्विरुद्धत्वे 15
हेतोर्विशेषणेऽभ्युपगम्यमाने कस्यापि हेतोरविरुद्धत्वासम्भवात् । धूमस्य वह्निसाधक-
त्ववदेतद्देशकालावच्छिन्नवह्न्यभावस्यापि साधकत्वात्, न हि पूर्वधूमस्यैतद्देशकालावच्छि-
न्नवह्निना व्याप्तिः, यदि वह्निमात्रेण हेतोर्व्याप्तेर्न विरुद्धतेत्युच्यते तर्हि कार्यमात्रस्य
बुद्धिमत्कारणपूर्वकत्वेन व्याप्तेर्न विरुद्धता, एवञ्चोक्तहेतोर्ज्ञानाद्यनिशयवद्गुणयुक्तस्य सिद्धे-
स्तस्यैव शास्त्रप्रणेतृत्वं न तु योगिनामिति भवज्जिनानां शासनमित्ययुक्तमिति चेदुच्यते 20
सामान्यतो दृष्टानुमानस्यापि तत्साधकत्वेनाप्रवृत्तिः हेतोराश्रयासिद्धत्वादिदोषदुष्टत्वात्,
तथाहि प्रतीयमानं तन्वादिकमवयविरूपं न सम्भवति, देशादिभिन्नस्य तस्य स्थूलस्यै-
कस्यासम्भवात्, न ह्यनेकदेशादिगतमेकं भवितुमर्हति, देशादिभेदलक्षणविरुद्धधर्माध्या-
सेन भेदात्, अन्यथा घटपटादीनामपि भेदो न स्यात्, विरुद्धधर्माध्यासमन्तरेण प्रति-
भासस्यापि भेदासम्भवेन तद्भेदाद्घटपटादीनां भेदस्य वक्तुमशक्यत्वात् । न चैकत्व- 25
प्रतिभासाद्देशादिभेदेऽपि तन्वादेरेकत्वमिति वाच्यम्, देशभेदेन व्यवस्थितानामवय-
वानां प्रतिभासभेदेन भेदात्, न हि ते एकरूपा भासन्ते, पिण्डस्याणुमात्रतापत्तेः,
तद्व्यतिरिक्तस्य चापरस्य तन्वाद्यवयविनो द्रव्यस्योपलब्धिलक्षणप्राप्तस्यानुपलम्भेनासत्त्वात् ।
न च समानदेशत्वादवयविनोऽवयवेभ्यः पृथगनुपलम्भ इति वाच्यम्, समानदेशानामपि

वातातपादीनां पृथक् भिन्नतनुत्वेनोपलम्भात् । न च मन्दमन्दप्रकाशेऽन्तरेणावयवप्रति-
भासमवयविप्रतिभासो भवतीति वाच्यम्, अस्पष्टप्रतिभासस्य तस्यावयविस्वरूपव्यवस्थापक-
त्वायोगात्, अस्पष्टरूपस्य स्पष्टज्ञानावभासितत्स्वरूपेण विरोधात् । किञ्चावयविप्रतिभासः
किं कतिपयावयवप्रतिभासे सत्यभ्युपगम्यते निखिलावयवप्रतिभासे वा, नाद्यः, महतो
5 जलमग्नस्तम्भादेरुपरितनकतिपयावयवप्रतिभासे सत्यपि समस्तावयवव्यापिस्तम्भाद्यवय-
विनोऽप्रतिभासनात् । न द्वितीयः, मध्यपरभागवर्त्तिसमस्तावयवप्रतिभासासम्भवेनावय-
विनोऽप्रतिभासप्रसङ्गात् । न च भूयोऽवयवग्रहणादवयवी गृह्यत इति वाच्यम्, पुरोवर्त्त्य-
वयवग्राहिप्रत्यक्षतः परभागभाव्यवयवाग्रहणात्तद्व्याप्तेरवयविनो ग्रहणासम्भवात्, व्याप्या-
ग्रहणे तेन तद्व्यापकत्वस्यापि ग्रहीतुमशक्तेः ग्रहणे चातिप्रसङ्गात् । न च पुरोवर्त्त्यवयवद-
10 र्शने सत्युत्तरकालं परभागदर्शने ततः स्मरणसहकृतेन्द्रियजनितेन स एवायमिति प्रत्य-
भिज्ञालक्षणप्रत्यक्षेणावयविनः पूर्वापरावयवव्याप्तिर्गृह्यत इति वाच्यम्, एतद्विषयप्रत्यभिज्ञा-
नस्य प्रत्यक्षत्वानुपपत्तेः, प्रत्यक्षस्याक्षानुसारित्वेनेन्द्रियाणां व्यवहिते व्यापारासम्भवादर्वा-
क्परभागभाव्यवयवग्रहणे व्यापारासम्भवात्, अविषये स्मरणसहायस्यापीन्द्रियस्य व्या-
पारासम्भवाच्च, अन्यथा परिमलस्मरणसहायं लोचनमपि गन्धादौ प्रवर्त्तेत, एको घट इति
15 घटादिद्रव्यावसायेऽपि तदवयवस्वरूपं नामोल्लेखश्चाध्यवसीयते नावयविद्रव्यम्, वर्णाकृ-
त्यक्षराकारशून्यस्य तद्रूपस्य केनचिदप्यननुभवात् । न चावयव्यभावे दिग्भेदादिविरुद्ध-
धर्माध्यासाद्यावत्परमाणु भेदात् प्रतिभासविषयस्थौल्यादीनां तत्राभावेन स्थूलताप्रतिभासो
न स्यात्, तथा परमाणूनामपि नानादिक्सम्बन्धात्सांशतयाऽनवस्थापत्तितोऽभावप्रसक्ति-
रिति वाच्यम्, अवयव्यभावेऽपि निरन्तरोत्पन्नानां घटाद्याकारेण परमाणूनां सद्भावात्
20 तद्ग्राहकाणामपि ज्ञानपरमाणूनां तथोत्पन्नानां तद्ग्राहकत्वात्, परमाणूनां ज्ञानस्य चाभावे
सुतरां कार्यत्वादिहेतोराश्रयासिद्धतादिदोषाच्च । एवं बुद्धिमत्कारणमिति साध्यनिर्देशे बुद्धि-
मदिति मतुबर्थस्य साध्यधर्मविशेषणस्यानुपपत्तिः, तज्ज्ञानस्य ततो भिन्नत्वेऽकार्यत्वे च
तस्य तदिति सम्बन्धानुपपत्तेः । न च तद्गुणत्वात्तस्य तदिति वाच्यम्, नित्यत्वे च तस्यैव
तद्गुणो नाकाशादेरिति व्यवस्थापयितुमशक्तेः । न च समवायो व्यवस्थाकारी, तस्यापि
25 ताभ्यां भेदे तस्यैव दोषस्य सत्त्वात्, न चेश्वरात्मकार्यत्वादीश्वरगुणस्तज्ज्ञानमिति वाच्यम्,
तदसिद्धेः, तस्मिन् सति तद्भावस्याकाशादावपि समानत्वात्, नित्यव्यापित्वाभ्याञ्च तदभावे
तदभावस्यासम्भवात् । यदि तदात्मन्येव तस्य दर्शनात्तत्कार्यत्वमिति उच्यते तर्हि तदात्म-
न्येव तस्येत्यनेन तस्य तदात्मसमवेतत्वं समवेतत्वञ्च समवायेन वर्त्तनमिति वक्तव्यम्,
तत्र व्याप्त्या समवायेन वर्त्तने यथाऽस्मदादिज्ञानविलक्षणं तज्ज्ञानं तथा घटादौ कार्यत्वस्य

कर्मकर्तृकरणनिर्वर्त्यत्वेऽपि वनस्पत्यादिष्वकृष्टोत्पत्तिषु तचेतनकर्तृरहितमपि स्यादिति बुद्धिमत्कारणपूर्वकत्वे साध्ये हेतुः कार्यत्वं स्थावरैर्व्यभिचरितं स्यात् । अन्यादृशा च वर्तने देशान्तरोत्पत्तिमत्सु तन्वादिषु तस्यासन्निधानेऽपि यथा व्यापारस्तथाऽदृष्टस्याप्यग्न्यादिविशेषेषु असन्निहितस्यापि ऊर्ध्वज्वलनादिविषयो व्यापारो भविष्यतीति 'अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनं, अणुमनसोश्चाद्यं कर्मादृष्टकारितम्' (वैशेषिकद० अ० ५-२-१३) इत्यनेन 5 सूत्रेण सर्वगतात्मसाधकहेतुसूचनमसङ्गतं भवेत्, ज्ञानादिविशेषगुणवददृष्टगुणस्य तत्रासन्निहितस्याप्यग्न्याद्यूर्ध्वज्वलनादिकार्येषु व्यापारसम्भवात् । तस्मात्तस्यैव तन्नान्यस्येति सम्बन्धानुपपत्तिः, समवायस्यानुपपत्तेश्च, तथाहि समवायः किं सतां स्यादसतां वा, नाद्यः, समवायात्प्राक् तेषां सत्त्वासम्भवात्, न चापरसमवायात्सन्तस्ते, तस्यैकत्वाभ्युपगमात् । यदि च तेषां स्वत एव सत्त्वं तर्हि समवायाभावेऽपि सत्त्वाभ्युपगमे तत्परिकल्पनाऽऽनर्थक्यम् । 10 ननु ते समवायात्पूर्वं न सन्तो नाप्यसन्तः, सत्तासमवायाच्च सन्त इति चेन्न, ततः पूर्वं पदार्थानां योगिज्ञानस्याप्यजनकत्वेऽसत्त्वाभावासम्भवात्, जनकत्वे वा सत्त्वाभावासम्भवात्, अन्योन्यव्यवच्छेदरूपाणामेकनिषेधस्यापरसत्तानान्तरीयकत्वादसत्त्वनिषेधे सत्ताविधानस्य सत्त्वनिषेधे चासत्त्वविधानस्यावश्यकत्वाच्च । न द्वितीयः, शशशृङ्गादीनामपि तत्प्रसङ्गात् । न चात्यन्तासत्त्वात्तेषां न तत्प्रसङ्ग इति वाच्यम्, आत्मतज्ज्ञानयोरत्यन्तासत्त्वाभावासिद्धेः । 15 न च तत्समवायात्तत्सिद्धिरिति वक्तव्यम्, अन्योन्याश्रयात्, सिद्धे तत्समवाये तयोरत्यन्तासत्त्वाभावः, तदभावाच्च तत्समवाय इति । न च समवायः प्रत्यक्षप्रमाणसिद्ध इति वक्तव्यम्, इन्द्रियजे तदात्मा तज्ज्ञानं तत्समवायश्चेति त्रितयस्यागोचरत्वात्, स्वसंवेदनाध्यक्षस्य च भवतानभ्युपगमात्, एकार्थसमवेतानन्तरमनोऽध्यक्षविषयत्वे तदेकार्थसमवेतानन्तरप्रतीतेरप्यपरतथाभूतप्रतीत्यव्यवस्थापितत्वे न समवायव्यवस्थापकप्रतीतिव्यवस्थापकत्वमिति पुनरपि तथाभूताऽपरा प्रतीतिरभ्युगन्तव्येत्यनवस्था भवेत् । न च तन्तुषु पटः शृङ्गे 20 गौः, शाखायां वृक्ष इति लौकिकी प्रतीतिरस्ति, पटे तन्तवः गवि शृङ्गं वृक्षे शाखा इत्याकारेण प्रतीत्युत्पन्नः संवेदनात्, तस्याश्च समवायनिबन्धनत्वे तन्त्वादीनां पटाद्यारब्धत्वप्रसङ्गः । तदेवं बुद्धेस्तदात्मनो भेदे सम्बन्धासिद्धेर्मतुबर्थानुपपत्तिः । तयोरभेदे तु तदात्मनि तद्बुद्धेरनुप्रवेशेन बुद्धेरभावाद्गगनादिवत्तदात्मा जडस्वरूप इति कथं स जगत्स्रष्टा स्यात् । तदात्मनो 25 बुद्ध्यादिगुणगणवैकल्ये चास्मदाद्यात्मनोऽप्यात्मत्वेन तद्वैकल्यान्मुक्तात्मन इव संसारित्वं न स्यात्, नवानां विशेषगुणानामात्यन्तिकक्षयोपेतस्यात्मनो मुक्तत्वाभ्युपगमात् । यथात्मत्वाविशेषेऽपि तदात्माऽस्मदाद्यात्मभ्यो विशिष्टोऽभ्युपगम्यते तर्हि घटादिकार्येभ्यः कार्यत्वाविशेषेऽपि स्थावरादिकार्यमकर्तृकत्वेन विशिष्टं किं नाभ्युपगम्यते तथा च तैः कार्यत्वं व्यभिचारि । एवं

तदात्मनस्तद्बुद्धावनुप्रवेशे तस्या निराधारत्वेनास्मदादिबुद्धेरपि तथात्वापत्त्या मतुबर्थासम्भवा-द्घटादावपि बुद्धिमत्कारणत्वस्यासिद्धत्वात् साध्यविकलो दृष्टान्तः । अथ बुद्धित्वे समानेऽपि तद्बुद्धेरेवानाश्रितत्वलक्षणो विशेषोऽभ्युपगम्यते तर्हि पृथिव्यादिकार्यस्यापि समानेऽपि कार्यत्वेऽकर्तृपूर्वकत्वलक्षणो विशेषोऽभ्युपगन्तव्य इति पुनरपि तैर्हेतुर्व्यभिचारी। किञ्च किमिदं 5 तन्वादीनां कार्यत्वम्, प्रागसतः स्वकारणसमवायो वा सत्तासमवायो वा, नाद्यः, प्रागिति विशेषणानर्थक्यात् कारणसमवायात् प्रागिव कारणसमवायसमयेऽपि स्वरूपसत्त्ववैधुर्यात्, सति सम्भवे व्यभिचारे चोपादीयमानं विशेषणं ह्यर्थवद्भवति, यदि कारणसमवायसमये तन्वादिकं स्वरूपेण सद्भवेत्तदा तत्काल इव प्रागपि तस्य सत्त्वे कार्यत्वं न स्यादिति क्रियमाणं विशेषणं सार्थकं स्यात्, यदा तु प्रागिव कारणसमवायसमयेऽपि स्वरूपसत्त्वविकलता 10 तदा प्रागिति विशेषणं न कञ्चिदर्थं पुष्णाति, असत इत्येतावन्मात्रस्यैव सम्यक्त्वात् । न चासतः कारणसमवायोऽपि युक्तः, शशशृङ्गादीनामपि तत्प्रसङ्गात् । न च तेषामसत्त्वात्कारणविरहेण न तत्प्रसङ्ग इति वाच्यम्, तन्वादेः कारणमस्ति न शशशृङ्गादेरित्यत्र नियामकाभावात् । किञ्च तन्वादिरेव सन् न वन्ध्यासुतादिरिति कुतः, यदि कारणसमवायात्तथेत्युच्यते तर्हि सोऽपि कुतः, सत्त्वादिति चेत्तर्हि अन्योन्याश्रयः कारणसमवायात्सत्त्वं 15 ततश्च कारणसमवाय इति । नापि प्रागसतः सत्तासमवायलक्षणो द्वितीयः पक्षः, पूर्ववत् प्रागिति विशेषणवैयर्थ्यात्। असतः सत्तासमवाये च कूर्मरोमादेरपि तत्प्रसङ्गः, अविशेषात् । न च तस्यात्यन्तासत्त्वं तन्वादिकन्तु न स्वयं सत्, नाप्यसत् सत्तासम्बन्धात्तु तदेव सदिति वाच्यम्, अन्योन्यव्यवच्छेदरूपाणामेकतरनिषेधेऽपरविधानस्यावश्यकत्वात्, सत्तायाः स्वयमसत्त्वेन ततस्तन्वादेः सत्त्वासम्भवाच्च । तस्याः सत्त्वं यद्यन्यसत्तातस्तदाऽनवस्था, 20 स्वतः सत्त्वे च पदार्थानामपि स्वत एव सत्त्वात्तस्या वैयर्थ्यापत्तिः, तस्याः स्वतः सत्त्वे प्रमाणाभावश्च । न च सत्ता स्वयं सती, तत्सम्बन्धात्तन्वादेः सत्त्वादिति प्रमाणमस्तीति वाच्यम्, अन्योन्याश्रयात्, तत्सम्बन्धात् तन्वादिसत्त्वे सिद्धे सत्तासत्त्वसिद्धिः तत्सिद्धौ तत्सम्बन्धात् तन्वादिसत्त्वसिद्धिरिति । न च सदभिधानप्रत्ययविषयत्वात्सत्ता स्वतः सतीति वक्तव्यम्, द्रव्यं सत् गुणः सन्नित्येवं सदभिधानप्रत्ययविषयत्वेऽपि परेण 25 स्वतः सत्त्वानभ्युपगमेन व्यभिचारात्, स्वतस्तदभ्युपगमे तु सत्ताकल्पनाया वैयर्थ्यं स्यात् । न च द्रव्यादौ तद्विषयत्वं परापेक्षं न सत्तायामिति वाच्यम्, तस्यामपि तदपेक्षत्वसम्भवात्, यथैव हि सत्तासम्बन्धात् द्रव्यादिकं सत् तथा द्रव्यादिस्वरूपसत्त्वसम्बन्धात् सत्तापि सती । न च द्रव्यादेः स्वरूपसत्त्वं नास्तीति वाच्यम्, तस्य स्वतः सत्त्वे दोषाभावात्। न चावान्तरसामान्याभावो दोष इति वाच्यम्, स्वतोऽसत्त्वे खरविषाणादेरिव सुतरां द्रव्यादेर-

भावप्रसङ्गात् । न च यत्स्वतः सत् तन्नावान्तरसामान्यवत् यथा सामान्यविशेषसमवायाः, द्रव्यादयस्त्ववान्तरसामान्यवन्तोऽतः स्वतो न सन्त इति व्यतिरेकिहेतुना स्वतोऽसत्त्वं साध्यत इति वाच्यम्, प्रतिज्ञाया बाधितत्वात्, धर्मिणो हि द्रव्यादेः कस्याञ्चित्प्रतीतेर्गोचरतया सत्त्वे सैव प्रतीतिस्तस्य स्वतः सत्त्वं साधयतीति तदसत्त्वविषयां प्रतीतिं कुतो न बाधते । किञ्च द्रव्यादेरवान्तरसामान्यानां एकान्तेन भेदे तस्यैव तानीत्यत्र नियामकाभावादवान्तरसामान्यव- 5 त्त्वादिति हेतुरसिद्धः, तथापि तस्येत्यभ्युपगम्यमाने सामान्यादयोऽपि कथं न तद्वन्त इति सामान्यादिवदिति वैधर्म्यनिदर्शनमयुक्तं स्यात् । यदि द्रव्यादावेव समवेतानीत्यतो न दोष इत्युच्यते तदा समवायसत्त्वेऽपि यत्र द्रव्ये गुणे कर्मणि च द्रव्यत्वं गुणत्वं कर्मत्वञ्चावान्तर- सामान्यं तत्रैव पृथिवीत्वादीनि रूपत्वादीनि गमनत्वादीनि च तथाविधानि सामान्यानि समवा- योऽपि तत्रैव, सामान्यवत्तस्य सर्वगतत्वाच्च द्रव्यादिवत्सामान्यादीन्यप्यन्योन्यसत्तानीति न 10 द्रव्यादेः स्वतः सत्त्वबाधनमत आशङ्का न निवर्त्तते किं द्रव्यादिसम्बन्धात्सत्ता सती किं वा तया द्रव्यादिकं सदिति, तस्मान्न सत्तातस्तन्वादेः सत्त्वं तस्या एवासिद्धत्वात् । अथ प्रत्यक्षादि- प्रमाणसिद्धत्वं सत्तायाः, न च द्रव्यप्रतिभासवेलायां प्रत्यक्षबुद्धौ परिस्फुटरूपेण व्यक्तिविवेकेन सत्ता न प्रतिभातीति वाच्यम्, अनुगताकारस्य व्यावृत्ताकारस्य च प्रत्यक्षानुभवस्य संवेद- नात्, न हि विषयं विना द्व्याकारा बुद्धिर्घटते, अन्यथा नीलादिस्वलक्षणप्रतीतेरपि तथाभावप्रस- 15 ङ्गादिति, मैवम्, व्यक्तिदर्शनसमये स्वरूपतो बहिर्ग्राह्याकारतया प्रतीतौ जातेरप्रतिभासनात्, न हि घटपटवस्तुद्वयप्रतिभाससमये तदैव तद्व्यवस्थितमूर्तिर्भिन्नाऽभिन्ना वा जातिराभाति, तदाकारस्यापरस्य बहिर्ग्राह्यतया तत्राप्रतिभासनात्, बहिर्ग्राह्यावभासश्च बहिरर्थव्यवस्थाकारी, नान्तरावभासम् । घटपटादिषु च प्रतिभासमानेषु केवलं बुद्धिरेव सत् सदिति तुल्यतनुराभाति न तु बाह्या जातिर्निमित्तम् । न वा निर्निमित्तता, कासांचिद्ग्राह्यव्यक्तीनामेव तत्र निमित्तत्वात् । 20 न च व्यक्तीनामनुगताकारबुद्धिनिमित्तत्त्वे गिरिशिखरादिदर्शनेऽपि गौर्गौरिति एकाकाराप्रती- तिर्भवेदिति वाच्यम्, यत्रैव तादृशी बुद्धिरुदेति तासामेव व्यक्तीनां तथाविधबुद्धिजनने सामर्थ्यावधारणात्, यथाऽऽमलकीफलादिषु यथाविधानमुपभुक्तेषु व्याधिविरतिलक्षणं फलमुपलभ्यत इति तान्येव तद्विधौ समर्थानीत्यवसीयते, व्यक्तिभेदाविशेषेऽपि न पुन- स्त्रपुषद्ध्यादीनि । न च भिन्नेषु भावेषु सत् सदितिमतिरस्ति, तत्र यदेकत्वं सैव जातिरिति 25 वाच्यम्, यतः तदेकत्वं घटपटादिषु किमन्यत् उतानन्यत्, नाद्यस्तस्याप्रतिभासनात् । न द्वितीयः, एकरूपाप्रतिभासनात् न हि घटस्य पटस्य चैकमेव रूपं प्रतिभाति, सर्वा- त्मना प्रतिद्रव्यं भिन्नरूपदर्शनात्, तस्मादप्रतीतेरभिन्नापि जातिर्नास्ति तस्यादर्शनात्, बुद्धिरूपमप्यपरबुद्धिस्वरूपं नानुगच्छतीति तदपि न सामान्यमित्येकानुगतजातिवादो

मिथ्यावाद एव । किञ्च सामान्यस्य नानेकव्यक्तिव्यापित्वं केनचिज्ज्ञानेन व्यवस्थापयितुं शक्यम्, पुरोवर्त्तिव्यक्तिप्रतिभासकाले तद्व्यक्तिसंस्पर्शित्वेनैव जातेः स्फुटमवभासनात्, अपरव्यक्तीनां तदाऽसन्निधानात् । तथा च यदेव रूपं यस्याः परिस्फुटदर्शने प्रतिभाति तदेव तस्या युक्तम् दर्शनासंस्पर्शिनः स्वरूपस्यासम्भवात्, सम्भवे वा तस्य दृश्यस्वभावाद्भेद-
5 प्रसङ्गात् तदेकत्वे सर्वत्र भेदप्रतिहतेरेकरूपं जगत्स्यात् । तस्माद्दर्शनगोचरातीतञ्च व्यक्त्यन्तरसम्बद्धं जातिस्वरूपमप्रतिभासनादसत्, प्रतिभासे च तत्सम्बद्धव्यक्त्यन्तराणामपि प्रतिभासप्रसङ्गः । न च पुरोवर्त्तिव्यक्तिप्रतिभासकाले व्यक्त्यन्तरसम्बद्धजात्यप्रतिभानेऽपि व्यक्त्यन्तरदर्शनसमये तद्गतत्वेन जातिभानात्साधारणस्वरूपपरिच्छेदः पश्चात्सम्भवतीत्यनेकव्यक्तिव्यापिता इति वाच्यम्, व्यक्त्यन्तरदर्शनकालेऽपि तत्सम्बद्धत्वेनैव जातिस्वरूप-
10 प्रतिभासनात् । न च प्रत्यभिज्ञानादनेकव्यक्तिसम्बन्धित्वेन ग्रह इति वाच्यम्, प्रत्यभिज्ञाया अक्षजत्वे प्रथमव्यक्तिदर्शनकाल एव समस्तव्यक्तिसम्बद्धजातिस्वरूपपरिच्छेदप्रसङ्गात् । नापि पूर्वदर्शनजनितसंस्कारोद्बोधसञ्जातस्मरणसहकृतमिन्द्रियं तत्त्वदर्शनं जनयितुमीशम्, तत्सहकृतस्यापीन्द्रियस्यासन्निहितव्यक्तिप्रतिभासनसामर्थ्यविरहात्, तस्मादनेकव्यक्तिव्यापिजात्यसिद्धेः सत्तासमवाययोरभावेन सत्तासमवायलक्षणं कार्यत्वमसिद्धमिति स्वरूपासिद्धः
15 कार्यत्वहेतुः । अथ कार्यत्वमभूत्वा भवनरूपम्, तच्च भूभूधरादेः रचनावत्त्वेन साध्यते, भूभूधरादयः कार्यं रचनावत्त्वात्, घटादिवदतः कार्यत्वहेतुर्नासिद्ध इति चेन्न, पूर्ववदवयव्यसिद्ध्याऽऽश्रयासिद्धेः, हेतोरसिद्धविशेषणत्वाच्च, अवयवसन्निवेशोत्पाद्यत्वं हि रचनावत्त्वं भूभूधरादेः, तत्रावयवसन्निवेशस्य संयोगापरनाम्नः तद्ग्राहकप्रमाणाभावेन बाधकप्रमाणोपपत्तेश्चासिद्धिः, निरंतरोत्पन्नवस्तुद्वयप्रतिभासकाले तत्प्रतीतौ वस्तुद्वयव्यतिरेकेणापरस्य
20 संयोगस्य बहिर्ग्राह्यरूपतां दधानस्याप्रतिभासनात्, तदेवमुपलब्धिलक्षणप्राप्तस्य संयोगस्यानुपलब्धेरभावः शशविषाणवत् । न च संयुक्तप्रतीत्यन्यथानुपपत्त्या तत्सिद्ध्यतीति वाच्यम्, निरन्तरावस्थवस्तुद्वयस्यैव तत्र निमित्तत्वात्, भवतापि तदवस्थापन्नस्य संयोगजनकत्वेन संयुक्तप्रत्ययहेतुत्वस्य स्वीकारात् संयोगमन्तरेणैव तस्य तद्धेतुत्वसम्भवेऽन्तर्गडोः संयोगस्य निरर्थकत्वात् । न च चैत्रो न कुण्डलीत्यादौ न कुण्डलं चैत्रो वा प्रतिषिध्यते, तयोरन्यत्र
25 सत्त्वात् किन्तु चैत्रकुण्डलसंयोग इति संयोगस्यावश्यकत्वमिति वाच्यम्, तत्र चैत्रसम्बन्धिकुण्डलस्यैव निषेधात् न तु संयोगस्य, न च सम्बन्धव्यतिरेकेण चैत्रस्य कुण्डलसम्बन्धानुपपत्तिरिति वक्तव्यम्, यतः स सम्बन्धः किमसम्बन्धिनोरुत सम्बन्धिनोर्नाद्यः हिमवद्विन्ध्ययोरिवासम्बन्धिनोः सम्बन्धानुपपत्तेः, असम्बन्धिनोर्भिन्नेन सम्बन्धेन तदभिन्नसम्बन्धित्वविधानासम्भवाच्च, विरुद्धधर्माध्यासेन भेदात् । न वा भिन्नसम्बन्धित्वविधानम्,

तत्सद्भावेऽपि स्वरूपतस्तयोरसम्बन्धित्वप्रसङ्गात्, भिन्नस्य तत्कृतोपकारमन्तरेण तत्सम्बन्धित्वायोगात्, ततोऽपरोपकारकल्पनेऽनवस्थापत्तेः । न द्वितीयः, सम्बन्धकल्पनावैयर्थ्यात्, विनैव सम्बन्धं तयोः स्वत एव सम्बन्धिरूपत्वात् । तस्मादेकसामग्र्यधीनविशिष्टोत्पत्तिमत्पदार्थव्यतिरेकेण नापरः संयोगः, तस्य बाधकप्रमाणविषयत्वात्, साधकप्रमाणाभावाच्च, अतो रचनावत्त्वादित्यत्र विशेषणस्य रचनालक्षणसंयोगविशेषस्यासिद्ध्या तद्विशिष्टस्यापि हेतोर- 5
सिद्धिरिति स्वरूपासिद्धत्वम् । न च बौद्धैः पृथिव्यादौ कार्यत्वस्य स्वीकाराम्न तैरसिद्धता हेतोरुद्भावनीयेति वाच्यम्, तत्र कार्यत्वस्य प्रसिद्धत्वेऽपि बुद्धिमत्कारणत्वेन व्याप्तस्य कार्यत्वस्यासिद्धत्वात्, यादृशं हि देवकुलादिषु कार्यत्वमन्वयव्यतिरेकाभ्यां बुद्धिमत्पूर्वकत्वेन व्याप्तमुपलब्धं, यदक्रियादर्शिनोऽपि जीर्णदेवकुलादावुपलभ्यमानं लौकिकपरीक्षकादेः तत्र कृतबुद्धिमुत्पादयति तादृशस्य कार्यत्वस्य क्षित्यादावनुपलब्धेरसिद्धः कार्यत्वलक्षणो हेतुः, उपलम्भे 10
वा तत्र ततो जीर्णदेवकुलादिष्विवाक्रियादर्शिनोऽपि कृतबुद्धिः स्यात् । तथा च यद्बुद्धिमत्कारणत्वेन व्याप्तं देवकुलादौ कार्यत्वं प्रमाणतः प्रसिद्धं तच्च क्षित्यादावसिद्धं, यच्च क्षित्यादौ कार्यत्वमात्रं हेतुत्वेनोपन्यस्यमानं सिद्धं तत्साध्यविपर्यये बाधकप्रमाणाभावात्सन्दिग्धव्यतिरेकित्वेनानैकान्तिकमिति न ततोऽभिमतसाध्यसिद्धिः । किञ्च क्षित्यादेः किं व्यापकनित्यैकबुद्धिमत्कारणमभिप्रेतं किं वा बुद्धिमत्कारणमात्रम्, न प्रथमः, दृष्टान्तस्य साध्यविकलत्वात्, 15
तत्र तत्पूर्वकत्वेन कार्यत्वस्यानिश्चयात्, हेतोर्विरुद्धत्वाच्च, अनित्याव्यापकानेकबुद्ध्याधारकर्तृपूर्वकत्वेन व्याप्तस्य कार्यत्वस्य घटादौ निश्चयात् । नान्त्यः, नित्यव्यापकैकबुद्ध्याधारकर्तृपूर्वकत्वलक्षणस्य विशेषस्यासिद्ध्यापत्तेरसिद्धेः । न च बुद्धिमत्कारणत्वसामान्यमेव साध्यते तच्च पक्षधर्मताबलाद्विशिष्टविशेषाधारं सिद्ध्यति निर्विशेषस्य सामान्यस्यासम्भवात्, अनित्यज्ञानवतश्शरीरिणः क्षित्यादिविनिर्माणसामर्थ्यरहितत्वेन घटादावुपलब्धस्य विशेषस्य 20
बुद्धिमत्कारणत्वसामान्याधारस्य तत्रासम्भवादिति वाच्यम्, तथापि क्षित्यादौ बुद्धिमत्कारणत्वस्यासिद्धेः घटादौ सामान्याश्रयत्वेन प्रसिद्धाया व्यक्तेः क्षित्यादावसम्भवात् विवक्षितसामान्याश्रयत्वे चान्यस्या व्यक्तेरप्रसिद्धत्वात् निराधारस्य सामान्यस्यासम्भवाच्च । न चाकृ-

---

१ अयम्भावः प्रतिबन्धग्रहणं ह्यध्यक्षेण, तच्च कार्यजातिविशेषप्रतिबद्धम् कार्यजातिभेदे प्रवृत्तस्यापि प्रत्यक्षस्य कार्यमात्रविषयकत्वे कारणेऽपि प्रवर्त्तमानेन तेन कारणमात्रस्यैव व्यापकतया निश्चयनाद्बुद्धिमत्कारण एव तदसिद्धे । एवञ्च कार्यजातीनामत्यन्तविलक्षणानामानन्त्यात् प्रतिजातिभेदं व्याप्तिग्रहणापेक्षणात् यावज्जातिकं कार्यं बुद्धिमत्पूर्वकं परिच्छिन्नं तथाविध कार्यमेव बुद्धिमत्पूर्वकत्वं साधयति । तादृशी कार्यजातिश्च यद्दर्शनादक्रियादर्शिनोऽपि कृतबुद्धिरुदेति सा, इयञ्च कुविन्दादिस्वभावसाम्यबुद्धिः तदभावाच्च क्षित्यादेरत्यन्तविजातीयतया तद्व्याप्तकार्यत्वस्यासिद्धिः, तद्भिन्नकार्यत्वे वा न बुद्धिमत्पूर्वकत्वाविनाभावसिद्धिरिति ॥

ष्टोत्पन्नैः स्थावरादिभिर्न व्यभिचारो व्याप्त्यभावो वा, साध्याभावे हेतुर्वर्त्तमानो व्यभिचार्युच्यते, तेषु तु कर्त्रग्रहणं न कर्त्रभावनिश्चय इति वाच्यम, सर्वप्रमाणाविषयत्वेन कर्त्रभावनिश्चयात्, तथात्वेऽपि यदि न निश्चयस्तर्हि गगनादौ रूपाद्यभावनिश्चयो मा भूत्, न चाकृष्टजातेषु स्थावरादिषु न कर्त्तुरग्रहणेन प्रतिक्षेपः कर्त्तुं शक्यः अनुपलब्धिलक्षणप्राप्तत्वाददृष्टवत्,
5 न च सर्वा कारणसामग्र्युपलब्धिलक्षणप्राप्तेति वाच्यम, शरीरसम्बन्धरहितस्य मुक्तात्मन इव जगत्कर्तृत्वानुपपत्तेः । न च मुक्तात्मनोऽकर्तृत्वं ज्ञानप्रयत्नचिकीर्षासमवायाभावात् न तु शरीरसम्बन्धाभावादिति वाच्यम, ज्ञानादिसमवायस्य कर्तृत्वेनाभ्युपगतस्यान्योऽन्याश्रयात्तत्राप्यसिद्धेः, सिद्धे हि सकलजगदुपादानाद्यभिज्ञत्वे सकलजगत्कर्तृत्वसिद्धिः तत्सिद्धौ च तस्य तदभिज्ञत्वसिद्धिरित्यन्योन्याश्रयः, तस्माच्छरीरसम्बन्धादेव तस्य जगत्कर्तृत्वमभ्युप-
10 गन्तव्यं कुलालस्येव घटकर्तृत्वम, ततश्च कथं न तस्योपलब्धिलक्षणप्राप्तता, अतः स्थावरेषु तस्यानुपलम्भादभावसिद्धौ कार्यत्वं हेतुर्व्यभिचार्येव । न च तच्छरीरमदृश्यमिति वाच्यम, अस्मिन् सतीदं स्थावरादिकं जातमिति अन्वयप्रतिपत्त्यभावेऽपि यथान्यकारणसद्भावेऽपीन्द्रियस्यातीन्द्रियस्याभावे न भवति रूपादिज्ञानं तथा पृथिव्यादिकारणसाकल्येऽपि तच्छरीरविरहे तत्स्थावरादिकार्यं नोपजायत इति व्यतिरेका प्रतीतिः स्यात्, न च
15 भवति तथा । न च तच्छरीरं नियमेन सन्निहितमतो न तथा प्रतीतिरिति वक्तव्यम, त्रिलोकाधिकरणेषु युगपद्भाविषु पदार्थेषु सावयवस्य मूर्त्तस्यैकस्य तच्छरीरस्य युगपद्व्याप्त्यसम्भवात्, अमूर्त्तत्वे च निरंशप्रसङ्गेनाकाशमेव तच्छरीरमिति वाच्यम, तस्य तच्छरीरत्वेनाद्याप्यसिद्धत्वात् । नापि कार्यस्य शरीरेण सह व्यभिचारः स्वशरीरावयवानां प्रवृत्तिनिवृत्त्योर्विनापि शरीरान्तरं करणादिति वक्तव्यम, तत्रापि शरीरसम्बन्धव्यतिरेकेण चेतनस्य
20 कार्यनिर्वर्त्तकत्वादर्शनात, शरीररहितस्यापि कर्तृत्वे मुक्तस्यापि शरीरमन्तरेण ज्ञानसमवायिकारणत्वकल्पनापत्तेः, तथात्वे च ज्ञानादिगुणरहितात्मस्वरूपावस्थितिलक्षणमुक्त्यसम्भवेन तदर्थमीश्वराराधनस्यासंगतिप्रसङ्गः, व्यतिरेकमात्रादपि नेश्वरस्य कारणतासिद्धिः तस्य नित्यव्यापकतया व्यतिरेकासम्भवादतो न व्याप्तिसिद्धिः कार्यत्वहेतोः । तथा बाधितोऽपि हेतुः, तदभावग्राहकानुमानस्य सत्त्वात । यद्धि यस्यान्वयव्यतिरेकौ नानुविधत्ते तन्न तत्का-
25 रणम, यथा पटादयो न कुलालकारणाः, नानुविदधति चाङ्कुरादयो बुद्धिमत्कारणान्वयव्यतिरेकाविति व्यापकानुपलब्धिः, यच्च यत्कारणं तत्तस्यान्वयव्यतिरेकावनुविधत्ते यथा घटादिः कुलालस्य । न चोपलब्धिमत्कारणसन्निधाने प्रागनुपलब्धस्याङ्कुरादेरुपलम्भस्तदभावे

१ अत्र हि प्रतिषेध्य बुद्धिमत्कारण तद्व्यापक अङ्कुरादेर्बुद्धिमत्कारणान्वयव्यतिरेकानुविधानं तस्यानुपलम्भात्तत्कारणत्वाभावः सिद्ध्यतीति तात्पर्यम् ॥

चापरकारणसाकल्येऽपि तस्यानुपलम्भ इत्यन्वयव्यतिरेकानुविधानमङ्कुरादिकार्याणाम् । न चेयं व्यापकानुपलब्धिरेव बुद्धिमत्कारणानुमानेन बाध्यत इति वाच्यम्, लोहलेख्यं वज्रं पार्थिवत्वात् काष्ठवदित्यनुमानेन तस्य तद्लेख्यत्वग्राहकप्रत्यक्षस्य बाधितत्वापत्तेः । न च पार्थिवत्वानुमानमाभास इति वाच्यम्, प्रत्यक्षबाधितविषयत्वे सति तदनुमानस्याभासत्वम् तस्याभासत्वे च प्रत्यक्षमबाधितविषयत्वेनानाभासमिति तद्बाधकं भवेदित्यन्योऽन्याश्रयात् । न च प्रत्यक्षस्य स्वपरिच्छेद्याव्यभिचारादनाभासत्वमतो न दोष इति वाच्यम्, अनुमानस्यापि स्वसाध्याव्यभिचारादेवानाभासत्वात् । न चाबाधितविषयत्वे सति तस्य स्वसाध्याव्यभिचारित्वं परिसमाप्यत इति वाच्यम्, अबाधितविषयत्वस्यैव निश्चेतुमशक्यत्वेन क्वचिदपि स्वसाध्याव्यभिचारित्वस्याप्रसिद्धिप्रसङ्गात् । न हि बाधानुपलम्भाद्बाधाभावः, तस्य विद्यमानबाधकेष्वप्यनुत्पन्नबाधकप्रतिपत्तिषु भावात् । न च* यत्र बाधकमस्ति तत्र प्राक्तदनुपलम्भेऽपि उत्तरकालं नियमेन तदुपलब्धिः, यत्र तु नत्रोपलभ्यते तत्र न तत्सद्भाव इति वाच्यम्, अर्वाग्दृशा तदनुपलम्भमात्रेण नात्र कदाचनापि बाधकोपलब्धिरिति ज्ञातुमशक्यत्वात्, स्वसम्बन्धिनोऽनुपलम्भस्यानैकान्तिकत्वात्, सर्वसम्बन्धिनोऽसिद्धत्वात् । नापि बाधकाभावोऽभावग्राहिप्रमाणावसेयः, तस्य प्रमाणत्वासम्भवात् । न चाज्ञातः सोऽनुमानाङ्गम्, पक्षधर्मत्वादिवत् । न च स्वसाध्याव्यभिचारित्वनिश्चयादेव बाधकाभावनिश्चयः, तन्निश्चयमन्तरेण त्वदभिप्रायेण स्वसाध्याव्यभिचारित्वस्यापरिसमाप्तत्वेन निश्चयायोगात् । तस्मात् पक्षधर्मत्वान्वयव्यतिरेकनिश्चयलक्षणस्वसाध्याविनाभावित्वस्य प्रकृतानुमानेऽपि सद्भावात् प्रत्यक्षवन्न तस्यापि तदाभासत्वम् । यदि विपर्यये बाधकप्रमाणाभावात् पार्थिवत्वानुमानस्य नान्तर्व्याप्तिरिति तदाभासत्वमिति चेत्तर्हि कार्यत्वानुमानेऽपि विपर्यये बाधकप्रमाणाभावात् व्याप्त्यभावतस्तदाभासत्वमिति न व्यापकानुपलब्धिविषयबाधकत्वम् । तदेवं स्वसाध्याव्यभिचारस्यैव सर्वत्र प्रामाण्यनिबन्धनतया व्यापकानुपलब्धौ तस्य प्रमाणनिश्चितस्य पक्षधर्मत्वान्वयव्यतिरेकस्वरूपस्य सत्त्वात्तथाविधाया एव च तस्याः स्वसाध्यप्रतिपादकत्वेन प्रामाण्यं न तु बुद्धिमत्कारणानुमानस्य, स्वसाध्याव्यभिचाराभावादिति । न च व्यापकानुपलब्धावपि पक्षधर्मत्वाऽन्वयव्यतिरेकनिश्चयस्य स्वसाध्याव्यभिचारित्वनिश्चयलक्षणस्याभाव इति वाच्यम्, विपक्षे बाधकप्रमाणसद्भावात् तत्रान्वयव्यतिरेकयोरवगमात्, तत्कारणेषु हि कुम्भादिषु तदन्वयव्यतिरेकानुविधानस्योपलब्धिः तदनुपलब्धेर्बाधकं प्रमाणम् । अथवा तत्कारणत्वं तदन्वयव्यतिरेकानुविधानेन व्याप्तम्, तदभावेऽपि भवतस्तत्कारणत्वे सर्वं सर्वस्य कार्यं कारणञ्च स्यात्, ततश्च न कश्चित्कार्यकारणभावव्यवस्था स्यात्, अतस्तद्व्यवस्था-

मिच्छता तदभावे कार्यकारणभावो नाभ्युपगन्तव्य इत्यन्वयव्यतिरेकानुविधानेन कार्यकारण-
भावो व्याप्तः, स यत्रोपलभ्यते तत्रान्वयव्यतिरेकानुविधानसंनिधापनेन तदभावं बाधत
इत्यनुमानसिद्धो व्यतिरेकः, तत्सिद्धेश्चान्वयोऽपि सिद्धः, तथाहि य एव सर्वत्र साध्याभावे
साधनाभावलक्षणो व्यतिरेकः स एव साधनसद्भावेऽवश्यन्तया साध्यसद्भावस्वरूपोऽन्वय
5 इति व्यापकानुपलब्धेः पक्षधर्मत्वान्वयव्यतिरेकलक्षणः साध्याव्यभिचारः प्रमाणतः सिद्धः,
न चैवं कार्यत्वादेरयमविनाभावः सम्भवति, पक्षव्यापकत्वे सत्यन्वयव्यतिरेकयोरभाव-
स्य विपर्यये बाधकप्रमाणाभावतः प्रतिपादितत्वात् । तन्वादीनाञ्च बुद्धिमत्कारणत्वे सा-
ध्ये तद्विपर्ययोऽबुद्धिमत्कारणाः परमाण्वादयः, न च तेभ्यो बुद्धिमत्कारणव्यावृत्तिनि-
मित्तकार्यत्वनिवृत्तिप्रतिपादकं प्रमाणं प्रवर्तते अवयविनो भिन्नस्याभावेन विशिष्टावस्था-
10 प्राप्तपरमाणुरूपत्वात । न च तेभ्यः कार्यत्वव्यावृत्तिः प्रत्यक्षतः सिद्धा, बुद्धिमत्कारण-
निमित्तकार्यत्वग्राहकत्वेन प्रत्यक्षस्य प्रत्यक्षानुपलम्भशब्दवाच्यस्य तत्राप्रवृत्तेः, परमाण्व-
न्तरासंसृष्टपरमाणूनाञ्च प्रत्यक्षबुद्धावप्रतिभासनाच्च ततः साध्यव्यावृत्तिप्रयुक्ता साधनव्या-
वृत्तिप्रतिपत्तिः । नाप्यबुद्धिमत्कारणेषु कार्यत्वादेरदर्शनात साकल्येन ततो व्यतिरेक-
सिद्धिः, स्वसम्बन्धिनोऽदर्शनस्य परचेतोवृत्तिविशेषैरनैकान्तिकत्वात सर्वसम्बन्धिनोऽ-
15 सिद्धत्वाच्च ततो विपक्षाद्धेतोर्व्याप्त्या व्यतिरेकसिद्धिः । नापि परमाण्वादीनामनुमाना-
न्नित्यत्वसिद्धेरकार्यत्वस्य कार्यत्वविरुद्धस्य तेषु सद्भावात्ततो व्यावर्त्तमानः कार्यत्वलक्षणो
हेतुर्बुद्धिमत्कारणत्वेनान्वितः सिद्ध्यति, कार्यत्वस्याबुद्धिमत्कारणत्वेन विरोधासिद्धेरङ्कुरा-
दिष्वबुद्धिमत्कारणनिष्पाद्येष्वपि तस्य सम्भवात् । न च कार्यत्वमकृतकत्वादेव नित्येभ्यो
व्यावृत्तं, अङ्कुरादीनाञ्चोत्पत्तिमतां बुद्धिमत्कारणपूर्वकत्वेन पक्षीकृतत्वान्न तैर्हेतोर्व्यभि-
20 चार इति वाच्यम्, पक्षीकरणमात्रादेवाबुद्धिमत्कारणत्वाभावस्य तेष्वसिद्धेः, तथाभ्युपगमे
वा पक्षीकरणादेव साध्यसिद्धेर्हेतूपादानवैयर्थ्यात । तस्मात्साकल्येन व्यतिरेकासिद्ध्या
साकल्येनान्वयासिद्धेर्न कार्यत्वं हेतुः प्रकृतसाध्यसाधनसमर्थः । न च सर्वानुमानेष्वेष
दोषस्तुल्य इति वक्तव्यम्, अन्यत्र विपर्यये बाधकप्रमाणबलादन्वयव्यतिरेकसिद्धेः, प्रकृते
तु तदभावात । किञ्चेश्वरस्य शरीरसम्बन्धाभावेऽपि क्षित्यादिकार्यकर्तृत्वे कर्तृत्वं ज्ञानचि-
25 कीर्षाप्रयत्नानां समवायरूपं वक्तव्यम्, तच्च सम्भवति समवायस्य निषिद्धत्वात्, कुलालादौ
शरीरसम्बन्धव्यतिरेकेणान्यस्य कर्तृत्वस्यानुपलम्भात्, तथा चेश्वरेऽपि तदेव कर्तृत्वं कल्प-
नीयं दृष्टानुसारित्वात कल्पनायाः । न हि शरीरव्यतिरेकेण ज्ञानचिकीर्षाप्रयत्नानां सद्भावः
क्वचिदुपलब्ध इति नेश्वरेऽपि तदभावेऽसावभ्युपगन्तव्यः । ज्ञानाद्युत्पत्तौ हि समवायिकारण-
मात्मा, आत्ममनःसंयोगोऽसमवायिकारणं, शरीरादि निमित्तकारणम्, न च कारणत्रया-

भावे भवद्भिः कार्योत्पत्तिरभ्युपगम्यते, न चासमवायिकारणात्ममनःसंयोगादिसद्भाव ईश्वरेऽभ्युपगत इति न ज्ञानादेरपि तत्र भावः । न चासमवायिकारणादेरभावेऽपि तत्र ज्ञानमुत्पद्यत इति वक्तव्यम्, तथा सति निमित्तकारणव्यतिरेकेणापि क्षित्यादेरुत्पत्तिप्रसङ्गात् । तज्ज्ञानादीनाञ्च नित्यत्वे नित्यमङ्कुरादिकार्योत्पत्तिप्रसङ्गः । न च सर्वदा न सहकारिणां सन्निधानमतो न दोष इति वक्तव्यम्, तेषामपि तज्ज्ञानायत्तजन्मतया सर्वदा सन्निधानात्, नित्यज्ञानादीनामेव कारणसम्भवे तदाधारेश्वरकल्पनावैयर्थ्यप्रसङ्गाच्च, न चानाश्रितस्य ज्ञानादेः सम्भवोऽतस्तदात्मा कल्प्यत इति चेन्न, तदात्मनोऽप्यनाश्रितस्याप्यसम्भवेनापरापराश्रयकल्पनाप्रसङ्गात् । न च तस्यात्मनो द्रव्यत्वेनानाश्रितस्यापि सम्भव इति वाच्यम्, गुणाश्रितस्यैव द्रव्यत्वेन बुद्ध्यादेर्गुणत्वासिद्धेः, तत्समवेतत्वानिश्चयात्, इदमत्र समवेतमितीश्वरप्रतीतेरयोगात्तेनात्मनो ज्ञानस्य चाग्रहणात् । न वा तज्ज्ञानं स्वं स्वधारञ्चात्मानं वेत्ति, अस्वसंविदितत्वाभ्युपगमात् । न चापरं ग्राहकं नित्यं ज्ञानं तस्येश्वरस्य सम्भवति, येनैकेन सकलपदार्थजातमपरेण च तज्ज्ञानमवगमयतीति स्यात्, एकदा यावद्द्रव्यभाविसजातीयगुणद्वयस्यान्यत्रानुपलब्धेः, ज्ञानद्वयाङ्गीकारेऽपि ज्ञानस्य स्वाग्राहकत्वेन स्वाधारस्य स्वसहचारिज्ञानस्यान्यस्य गोचरस्य वा ग्राहकत्वासम्भवः, यद्धि स्वग्रहणविधुरं तन्नान्यग्राहकं, यथा घटादि, स्वग्रहणविधुरञ्च प्रकृतं ज्ञानमिति । तस्मान्न तत्समवेतत्वेन बुद्धेर्गुणत्वं नापि तदाधारस्य द्रव्यत्वं सिद्ध्यति, एवञ्च शरीरसम्बन्धस्यैव कुम्भकारादौ कर्तृत्वव्यापकत्वेन प्रतीतेस्तदभावे कर्तृत्वस्यापि व्याप्यस्याभावप्रसङ्गः, कर्तृत्वं हि क्वचित्करादिव्यापारेण कारणप्रयोक्तृत्वलक्षण यथा कुम्भकारस्य दण्डादिकारणप्रयोक्तृत्वम् । अपरं वाग्व्यापारेण यथा स्वामिनः कर्मकरादिप्रयोक्तृत्वस्वरूपम्, अन्यच्च प्रयत्नव्यापारेण यथा जाग्रतः स्वशरीरावयवप्रेरकत्वस्वभावम्, किञ्चिच्च निद्रामदप्रमादविशेषेण ताल्वादिकरादिप्रेरकत्वम् । अतः सर्वथा शरीरसम्बन्ध एव कर्तृत्वस्य व्यापकः, स यदीश्वरान्निवर्तते तर्हि स्वव्याप्यं कर्तृत्वमप्यादाय निवर्त्तते, इति न तस्य कर्तृत्वमभ्युपगन्तव्यमिति प्रसङ्गः । अथ तस्य जगत्कर्तृत्वमभ्युपगम्यते चेत्तदा शरीरसम्बन्धः कर्तृत्वव्यापकोऽभ्युपगन्तव्यः इति प्रसङ्गविपर्ययः, न हि कारकशक्तिपरिज्ञानलक्षणं तस्य कर्तृत्वम्, येन प्रसङ्गविपर्ययोर्व्याप्त्यसिद्धेरभावः स्यात्, कुम्भकारादौ मृत्पिण्डादिकारकशक्तिपरिज्ञानेऽपि शरीरव्यापाराभावे घटादिकार्यकर्तृत्वादर्शनात्, सुप्तप्रमत्तादौ च ताल्वादिकारणपरिज्ञानाभावेऽपि तद्व्यापारे प्रयत्नलक्षणे सति तत्प्रेरणाकार्यदर्शनात् । किञ्च मुमुक्षुभिः सर्वज्ञत्वेन विशिष्टधर्माधर्माद्युपदेशकर्त्तेश्वर उपास्यः अन्यथाऽज्ञोपदेशानुष्ठाने विप्रलम्भशंकया प्रवृत्तिर्न स्यात् । तस्य सर्वज्ञत्वे सत्यपि शरीराभावे वक्त्राभावादुपदेष्टृत्वासम्भवेन तदुपदेशस्य तत्कृतत्वेन प्रामा-

ण्यसिद्धिर्न स्यात्, तथा च मुमुक्षूणां तत्र प्रवृत्तिर्न भवेदेवातस्तस्योपदेशकत्वेऽवश्यं शरीर-
सम्बन्धो वक्तव्यः व्याप्याभ्युपगमस्य व्यापकाभ्युपगमनान्तरीयकत्वात्, शरीरसम्बन्धा-
भावे च व्याप्यस्याप्युपदेशकत्वस्याभावः इति प्रसङ्गविपर्ययौ, व्याप्यव्यापकभावप्रसा-
धकञ्च प्रमाणं प्रत्यक्षानुपलम्भशब्दवाच्यं कार्यकारणभावप्रसाधकं प्रत्यक्षमेव, ताल्वादि-
5 व्यापाराभावेऽप्युपदेशस्य सद्भावे तस्य तद्धेतुकत्वासम्भवात् । ततो न शरीराभावे ईशस्य
कर्तृत्वम्, तेन शरीरमनःसम्बन्धाभावे प्रयत्नबुद्ध्यादेरभावादीश्वरसत्तैवासिद्धा, तदेवमीश्वर-
कर्तृत्वसाधकस्य तन्नित्यत्वादिधर्मसाधकस्य च प्रमाणस्याभावात् क्लेशकर्मविपाकाशयैरपरामृष्टः
पुरुषविशेष ईश्वर इत्याद्यसिद्धमेव । तस्माद्भवहेतुरागादिजयात् शासनप्रणेतारो जिनाः
सिद्धाः, अतः सुव्यवस्थितं भवजिनानां शासनमिति दिक् ॥

10 इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजय-
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
लब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य ईश्वर-
कर्तृत्वभङ्गो नाम षष्ठं सोपानम् ॥



## 15 अथात्मविभुत्वनिराकरणम् ।

स्थानमनुपमसुखमुपगतानामित्यनेन नवानां बुद्ध्यादिविशेषगुणानामात्यन्तिकः क्षय
आत्मनो मुक्तिरिति मतस्य व्यवच्छेदः । ननु विभुतयाऽऽत्मनो विशिष्टस्थानप्राप्तिहेतुगत्य-
भावेन कथमनुपमसुखं स्थानमुपगतानामिति युज्यते, सुखस्यापि कर्मक्षयेन शरीरमनःसंयो-
गाभावान्निमित्तभूतासमवायिकारणाभावेन मुक्तात्मसूत्पत्त्यसम्भवात्, नित्यस्य चावैषयिकस्य
20 सुखस्यानुपलम्भेनासत्त्वात्, आत्मनो विभुत्वञ्च नित्यत्वे सत्यस्मदाद्युपलभ्यमानगुणाधि-
ष्ठानत्वाद्गगनादेरिव सिद्धम्, न च बुद्धेर्गुणत्वासिद्ध्या हेतुविशेषणासिद्धिरिति वाच्यम्,
प्रतिषिध्यमानद्रव्यकर्मस्वभावे सति सत्तासम्बन्धित्वात्तत्सिद्धेः, बुद्धिर्हि सामान्यविशेषवत्त्वे
सत्येकेन्द्रियप्रत्यक्षत्वात् रूपादिवत् सामान्यविशेषवत्त्वे सत्यगुणवत्त्वे च सति अचाक्षुष-
प्रत्यक्षत्वात् शब्दवदेकद्रव्या, एकद्रव्यत्वाच्च रूपादिवद्द्रव्यं न भवति, संयोगविभागाकारण-
25 त्वाच्च कर्म न भवति, एवं बुद्धिः सतीति प्रत्ययोत्पत्तेः सा सत्तासम्बन्धिनीति न गुणत्व-
साधकहेतोरसिद्धता । बुद्धेरस्मदाद्युपलभ्यमानत्वञ्च तदेकार्थसमवेतानन्तरज्ञानप्रत्यक्षत्वा-
न्नासिद्धम्, अकार्यत्वादाकाशवदात्मनो नित्यत्वमपि सिद्धम् । न वा विभुत्वसाधकस्य हेतो-
रनैकान्तिकत्वं, विपक्षेऽस्याप्रवृत्तेः । नापि विरुद्धः विभुन्याकाशे वृत्त्युपलम्भात् । नापि

बाधितविषयः, प्रत्यक्षागमयोरस्याविभुत्वप्रदर्शकयोरसम्भवात् । नापि प्रकरणसमः, तथा-विधहेत्वन्तरस्याभावात्, तस्मात्सकलदोषरहितादतो हेतोर्विभुत्वसिद्धिरिति मैवम्, सत्ताया असिद्ध्या बुद्धेर्गुणत्वासिद्धौ तदधिष्ठानत्वलक्षणहेत्वसिद्धेः, आत्मनो बुद्धेर्भिन्नत्वे समवायस्य सद्भावेऽसद्भावे वा तस्या आत्मगुणत्ववदन्यगुणत्वप्रतिषेधासम्भवेन तस्यैव गुणोऽसावि-त्यसिद्धेश्च । न चात्मसद्भावे भावात्तस्यास्तत्कार्यतया तद्गुणत्वमिति वक्तुं युक्तम्, आकाश- 5 सद्भावेऽपि तस्या भावात्तत्कार्यत्वेन तद्गुणत्वप्रसक्तेः, आत्माभावेऽभावात्तस्यास्तत्कार्यतया तथात्वमित्यपि न सम्यक्, आत्मनो नित्यत्वेन व्यापित्वेन च तदभावासम्भवात् । अथात्म-न्येव तस्याः प्रतीतेस्तद्गुणत्वमिति चेन्न, आत्मनः स्वसंविदितत्वानभ्युपगमेन स्वस्मिन् बुद्धेः प्रत्ययासम्भवात्, ज्ञानान्तरप्रत्यक्षत्वे विवादाच्च । स्वसंविदितत्वानभ्युपगमादेव च स्वात्मन आत्मव्यवस्थितत्वेन बुद्ध्या ग्रहीतुमशक्यत्वात्, बुद्ध्यन्तरग्राह्यत्वस्य चासंभवात्, 10 बुद्धेरात्माव्यतिरेके तु आत्मन इव तस्यापि द्रव्यत्वेन प्रतिषिध्यमानद्रव्यत्वे सतीति हेतुविशेषणासिद्धिः, इतरेतराश्रयश्च बुद्धेर्गुणत्वसिद्धौ निराधारगुणासम्भवेन तदाधारस्या-त्मनो द्रव्यत्वसिद्धिः, तत्सिद्धौ च द्रव्यप्रतिषेधेन तदाश्रितत्वाद्बुद्धेर्गुणत्वसिद्धिरिति । किञ्च यद्यात्माऽप्रत्यक्षो बुद्धिश्च तद्गुणस्तदाऽस्मदाद्युपलभ्यमानत्वं विरुद्धम्, अत्यन्तपरोक्षगुणि-गुणानामस्मदाद्यप्रत्यक्षताव्याप्यत्वस्य परमाणुरूपादौ निश्चितत्वात् । न च वायुस्पर्शेन 15 व्यभिचारः, वायोः कथञ्चित्तदव्यतिरेकेण तद्वत् प्रत्यक्षत्वात् । बुद्धिश्च यद्यस्मदादिप्रत्यक्ष-विषया तर्हि तस्या अत्यन्तपरोक्षात्मविभुद्रव्यविशेषगुणिगुणत्वं विरुद्धं स्यात्, घटरूपादाव-स्मदादिप्रत्यक्षत्वस्यात्यन्तपरोक्षगुणिगुणत्वाभावव्याप्यत्वनिश्चयात् । अतो बुद्धिर्यद्यस्मदादि-प्रत्यक्षविषया न तर्ह्यत्यन्तरोक्षात्मविशेगुणरूपा, तथाभूता यदि न तर्ह्यस्मदादिप्रत्यक्षवि-षयेति अस्मदाद्युपलभ्यमानत्वलक्षणं हेतुविशेषणमसिद्धम् । आत्मा प्रत्यक्षविषयो नात 20 उक्तदोष इति चेत्तर्हि तस्य हर्षविषादाद्यनेकविवर्तात्मकस्य देहमात्रव्यापकस्य स्वसंवेदन-प्रत्यक्षसिद्धतयाऽनुमानतो विभुत्वसाधनमसङ्गतं स्यात् । पक्षधर्मताविशिष्टहेतुसद्भावमात्रेण विभुत्वाभ्युपगमे पक्कान्येतानि फलानि, एकशाखाप्रभवत्वात्, उपभुक्तफलवदित्यप्यनुमानं भवेत्, न चास्य प्रत्यक्षबाधा, प्रकृतेऽपि समानत्वात्, अनुमानस्य प्रत्यक्षपूर्वकत्वाभ्युपगमाच्च नानुमानेन स्वसंवेदनलक्षणप्रत्यक्षस्य बाधितत्वम्, तथाविधप्रत्यक्षस्याप्रामाण्यसाधकस्याप- 25 रस्य कस्यचिदभावाच्च । तदेवं बुद्धिलक्षणो गुणो यद्यस्मदाद्युपलभ्यस्तदा हेतोः कालात्ययापदि-ष्टता, यदि चानुपलभ्यः तर्हि विशेषणासिद्धत्वम् । तथा व्यभिचारश्च परमाणूनां नित्यत्वे सत्यस्मदाद्युपलभ्यमानपाकजगुणाधिष्ठानत्वेऽपि विभुत्वाभावात् । न च परमाणुपाकज-गुणा अप्रत्यक्षा इति वक्तव्यम्, तथा सति कार्यत्वेन बुद्धिमत्कारणत्वे साध्ये व्याप्तिग्रहणा-

सम्भवात्, तेऽपि हि कार्यत्वेनाभिमताः, तेषाञ्च व्याप्तिज्ञानेनाविषयीकरणे कथं बुद्धिमत्कारणत्वेन व्याप्तिसिद्धिर्भवेत् तथा च कार्यत्वं हेतुरेतैरेव शङ्कितव्यभिचारी स्यात्। तत्र च व्यभिचारवारणाय यदि नित्यत्वे सत्यस्मदादिबाह्येन्द्रियोपलभ्यमानगुणाधिष्ठानत्वादित्युच्यते तर्हि तस्य बुद्धावभावेन हेतोर्विशेषणासिद्धत्वं स्यात्। एवमा-
5 काशलक्षणो दृष्टान्तो हेतुसाध्यविकलः, तयोस्तत्रासिद्धेः। न च तेनैव हेतुनाऽऽत्मदृष्टान्तेन शब्दाधिकरणस्य तस्य विभुत्वसिद्ध्या न साध्यविकलता, अस्मदाद्युपलभ्यमानशब्दलक्षणगुणाधिष्ठानत्वस्य तत्र सिद्धत्वाच्च न साधनविकलतेति वाच्यम्, इतरेतराश्रयप्रसङ्गात्, सिद्धे ह्यात्मनो विभुत्वे तद्दृष्टान्तेनाकाशस्य विभुत्वसिद्धिः, तत्सिद्धेश्चात्मनो विभुत्वसिद्धिरिति। तथा शब्दस्य गुणत्वमप्यसिद्धम्, न च प्रतिषिध्यमानद्रव्यकर्मत्वे सति
10 सत्तासम्बन्धित्वात्तस्य गुणत्वं सिद्ध्यतीति वाच्यम्, सत्तायास्तत्सम्बन्धस्य समवायस्य चाभावेन विशेष्यासिद्धेः शब्दस्य द्रव्यत्वेन विशेषणासिद्धेश्च। यद्धि क्रियावत्तद्द्रव्यं दृष्टं यथा शरादिः, क्रियावांश्च शब्दस्तस्माद्द्रव्यम्, निष्क्रियत्वे तु तस्य श्रोत्रेण सह सम्बन्धाभावात्ततो ग्रहणं न स्यात्, तथापि तस्य ग्राहकत्वेऽप्राप्यकारित्वापत्तिः स्यात्। तत्सम्बन्धकल्पनान्न दोष इति चेत्तर्हि शब्ददेशं गत्वा यदि श्रोत्रमभिसम्बध्यते तदा श्रोत्रस्य स्वा-
15 दृष्टाभिसंस्कृतकर्णशष्कुल्यवरुद्धाकाशरूपत्वं न स्यात्, आकाशस्य निष्क्रियत्वात्, सक्रियत्वेऽपि श्रोत्रं शब्ददेशं गच्छतीति प्रतीत्यभावात्। अन्तरालवर्तिनामन्यशब्दानां ग्रहणप्रसङ्गात्, अनुवातप्रतिवाततिर्यग्वातेषु प्रतिपत्त्यप्रतिपत्तीषत्प्रतिपत्तिभेदाभावप्रसङ्गाच्च, गच्छतश्श्रोत्रस्य तत्कृतोपकाराद्ययोगात्। यदि तु शब्दस्य श्रोत्रदेशे आगमनमुच्यते तर्हि न तस्य गुणत्वं गुणस्य निष्क्रियत्वात्, तथा च सक्रियत्वाद्द्रव्यत्वमेव तस्य। न च वीचीतरङ्ग-
20 न्यायेन श्रोत्रदेशे समुत्पन्न एव शब्दस्तेन गृह्यते न त्वाद्य एव तत्रागच्छतीति वाच्यम्, तथा सति तुल्ययुक्त्या पूर्वपूर्वशरादिप्रभवाणामन्येषामेव शरादीनां लक्ष्यदेशसमुद्भूतानां तेनाभिसम्बन्ध इति स्वीकारप्रसङ्गात्, इष्टापत्तौ सर्वत्र क्रियाया अभावप्रसङ्गेन क्रियावद्द्रव्यमिति द्रव्यलक्षणमसम्भवि स्यात्। न च शरादौ प्रत्यभिज्ञानादेकत्वमिति वक्तव्यम्, देवदत्तोच्चारितं शब्दं शृणोमीति प्रत्यभिज्ञयाऽत्राप्येकत्वस्य सिद्धत्वात्। न चेदं प्रत्यभि-
25 ज्ञानं सादृश्यनिबन्धनम्, शरादिप्रत्यभिज्ञानस्यापि तथात्वप्रसङ्गात्। न च शब्दैकत्वप्रत्यभिज्ञानं बाधितमिति वक्तुं शक्यम्, तत्क्षणिकत्वविषयकप्रत्यक्षस्य विवादविषयत्वेन तद्बाधकत्वायोगात्। प्रत्यभिज्ञायास्त्वया मानसप्रत्यक्षाभ्युपगमेन तया क्षणिकत्वसाधकानुमानस्यैव बाधनात्, अत एव क्षणिकः शब्दः, अस्मदादिप्रत्यक्षत्वे सति विभुद्रव्यविशेषगुणत्वात् ज्ञानादिवदित्यनुमानमपास्तम्, प्रत्यभिज्ञाप्रत्यक्षबाधितत्वात् धर्मा-

देर्विभुद्रव्यविशेषगुणत्वेऽपि क्षणिकत्वाभावेन व्यभिचाराच्च । न च विशिष्टस्य हेतोस्तत्राभावान्न व्यभिचार इति वाच्यम्, अस्मदादिप्रत्यक्षत्वस्य विपक्षेणाविरोधात् । विपक्षविरुद्धं हि विशेषणं ततो हेतुं निवर्त्तयति, यथाऽहेतुकत्वं ततः कादाचित्कत्वं निवर्त्तयति, न चास्मदादिप्रत्यक्षत्वं अक्षणिकत्वविरुद्धम्, अक्षणिकेष्वपि सामान्यादिषु भावात्, ततो यथाऽस्मदादिप्रत्यक्षा अपि केचित्क्षणिकाः प्रदीपादयः, अपरेऽक्षणिकाः सामान्यादयः 5 तथाऽस्मदादिप्रत्यक्षा अपि विभुद्रव्यविशेषगुणाः केचित् क्षणिका अपरेऽक्षणिका भविष्यन्तीति संदिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिको हेतुः । न च तादृशविशिष्टो हेतुरक्षणिके न दृष्ट इति ततो व्यावृत्त इति वाच्यम्, स्वसम्बन्ध्यदर्शनस्य परलोकादिनाऽनैकान्तिकत्वात्, सर्वसम्बन्धिनोऽसिद्धत्वाच्च । धर्माधर्मादेश्चास्मदाद्यप्रत्यक्षत्वे देवदत्तं प्रत्युपसर्पन्तः पश्वादयो देवदत्तगुणाकृष्टाः देवदत्तं प्रत्युपसर्पणवत्त्वात् यथा ग्रासादिरित्यनुमानं तत्साधकं न स्यात् 10 व्याप्तेरग्रहणात्, तथाप्यनुमाने यतः कुतश्चित् यत्किञ्चिदवगम्येत । ग्रासादेर्देवदत्तं प्रत्युपसर्पणस्य देवदत्तप्रयत्नगुणाकृष्टत्वेन व्याप्तिदर्शनात्तस्यैव तत्पूर्वकत्वानुमानं स्यात् तस्य च वैयर्थ्यात्। न च पश्वादेरपि देवदत्तं प्रत्युपसर्पणस्य देवदत्तप्रयत्नसमानगुणाकृष्टत्वेन व्याप्तिः प्रतीयत इति वाच्यम्, प्रयत्नसमानगुणस्य पश्वादेर्देवदत्तं प्रत्युपसर्पणस्य वाऽप्रतिपत्तौ तदाकृष्टत्वेन व्याप्त्यसिद्धेः, न हि प्रयत्नाप्रतिपत्तौ तदाकृष्टत्वेन प्रतिपन्नस्य ग्रासादेर्देवदत्तं प्रत्युप- 15 सर्पणस्य व्याप्तिप्रतिपत्तिः, तत्प्रतिपत्तिश्च यदि तेनैवानुमानेन तदाऽन्योऽन्याश्रयः, व्याप्तिसिद्धावनुमानं तत्सिद्धौ व्याप्तिसिद्धिरिति, न चास्ति तज्ज्ञापकं मानान्तरमतो मानमप्रत्यक्षेण सा गृह्यत इति स्वीकार्यम्, अतः समाकर्षकस्य प्रयत्नसमानगुणस्याकृष्यमाणपश्वादेश्चास्मदादिप्रत्यक्षत्वे धर्मादेरपि प्रत्यक्षत्वमेवेति । अस्मदादिबाह्यप्रत्यक्षत्वे सतीति तु न वाच्यम् ज्ञानादेस्तथाऽप्रत्यक्षतया दृष्टान्तस्य साधनविकलत्वात् । ज्ञानादेर्विभुद्रव्यविशेषगुणत्वासिद्ध्या 20 दृष्टान्तः साधनशून्यः, साध्यशून्यश्च ज्ञानादेः क्षणिकत्वासम्भवात् अन्यथा न ततः संस्कारः तदभावान्न स्मरणं तदभावाच्च न प्रत्यभिज्ञादिव्यवहारः, विनष्टात् कार्यानुत्पादात्, अन्यथा चिरविनष्टादपि स्यात्, अनन्तरस्य कारणत्वे तु सर्वमनन्तरं कारणं स्यात्। तस्मान्न क्षणिकत्वं शब्दस्येति सक्रियत्वाद्द्रव्यतैव । तथा गुणवत्त्वाच्छब्दो द्रव्यं, लोष्टादीनामिव स्पर्शवत्त्वात्तस्य गुणवत्त्वम्, तत्र च स्पर्शाभावे कांस्यपात्र्यादिध्वनिसम्बन्धेन कर्णशष्कुल्या अभिघातो 25 न स्यात् । अल्पः शब्दो महान् शब्द इति प्रतीत्या अल्पमहत्त्वाभिसम्बन्धादपि तस्य द्रव्य-

१ तथा च कथञ्चिद्द्रव्यं शब्दः, क्रियावत्त्वात्, बाणादिवदिति प्रयोग, अत्र परिस्पन्दरूपक्रियया क्रियावत्त्वं ग्राह्यम्, तेनास्ति भवतीत्यादिधात्वर्थलक्षणक्रियया क्रियावत्त्वेऽपि गुणादौ न व्यभिचारः ॥

त्वम् । न चाल्पमहत्त्वे न परिमाणरूपे, इयत्तानवधारणात्, शब्दोऽयं महानित्यध्यवस्यन् हि न इयानित्यवधारयतीति वाच्यम्, वायोरियत्तानवधारणेऽपि अल्पमहत्वयोः सम्भवेन व्यभिचारात्, न हि बिल्वबदरादेरिव तत्रेयत्तानिर्णयः । तत्र सत्यपीयत्ताऽप्रत्यक्षत्वाद्वायोः न निर्णीयते, शब्दस्य प्रत्यक्षतया स्यादेव तन्निर्णय इति चेन्न, स्पर्शविशेषरूपस्य वायोरप्रत्य-
5 क्षत्वासिद्धेः । इयत्तायाश्च परिमाणभिन्नत्वेऽन्यस्यानवधारणेऽपरस्याभावो न युक्तोऽतिप्रसङ्गात् । परिमाणरूपत्वे तु अल्पमहत्त्वपरिमाणनिर्णये कथं न तदवधारणम्, अन्यथा बिल्वादावपि तथाप्रसङ्गात् । किञ्चाल्पमहत्त्वयोः परिमाणरूपत्वाभावे शब्दे ते किंरूपे इति वक्तव्यम्, न च गुणवृत्तित्वादवान्तरजातिविशेषस्वरूपे इति वक्तुं शक्यम्, शब्दस्य गुणत्वासिद्धेः, तस्मात्तयोः परिमाणरूपतया गुणवत्त्वाद्द्रव्यं शब्दः । पांश्वादय इव वायुनाऽभि-
10 हन्यमानतया संयोगाश्रयत्वाच्छब्दो द्रव्यम्, वायुना शब्दस्याभिघातोऽपि देवदत्तं प्रत्यागच्छतः प्रतिकूलेन वायुना प्रतिनिवर्त्तनात्सिद्धः, प्रतिनिवर्त्तनमपि अन्यदिगवस्थितेन श्रवणात्सिद्धम् । न च गन्धादीनामागच्छतां वायुना निवृत्तिर्दृष्टा, तेषाञ्च गुणत्वेन न वायुना संयोग इति वाच्यम्, तद्वतो द्रव्यस्यैव तेन निवर्त्तनात, केवलानाञ्च गन्धादीनां निष्क्रियत्वेनागमनपरावर्त्तनासम्भवात । न चात्र तद्वतो निवर्त्तनम्, आकाशस्य सर्वगत्वेनाक्रिय-
15 त्वात्, न वाऽसंयुक्तस्य शब्दस्य निवर्त्तनम्, सर्वस्य निवर्त्तनप्रसङ्गात् । एकत्वादिसंख्यावत्त्वादपि शब्दो गुणवान्, प्रतीयते हि एकः शब्दो द्वौ शब्दौ बहवश्शब्दा इति, तस्मात् क्रियागुणवत्त्वाच्छब्दस्य द्रव्यतया प्रतिषिध्यमानद्रव्यत्वलक्षणं हेतुविशेषणमसिद्धम् । एकद्रव्यत्वमपि शब्दस्य न द्रव्यत्वाभावसाधकम्, एकद्रव्यसंयोगित्वस्य तदर्थत्वे विरुद्धत्वात, संयोगित्वस्य द्रव्यधर्मत्वात । समवायस्य निरस्ततया नैकद्रव्यसमवेतत्वं तदर्थः सम-
20 वायसत्त्वेऽपि शब्दस्य गुणत्वसिद्धावेवैकद्रव्यसमवेतत्वसिद्धेः । अनेकद्रव्यः शब्दोऽस्मदाद्यप्रत्यक्षत्वे सति स्पर्शवत्त्वात्, घटादिवदिति प्रत्यनुमानेन बाधितत्वाच्च सामान्यविशेषवत्त्वे सति बाह्येकेन्द्रियप्रत्यक्षत्वं तस्यैकद्रव्यत्वसाधकम्, वायोस्तथात्वेऽपि नैकद्रव्यत्वाद्व्यभिचारश्च । सत्तासम्बन्धित्वमपि यदि स्वरूपसत्तासम्बन्धित्वरूपं तदा सामान्यादिभिर्व्यभिचारः प्रतिषिध्यमानद्रव्यकर्मत्वे सति निरुक्तसत्तासम्बन्धित्वेऽपि गुणत्वाभा-
25 वात । तेषाञ्च स्वरूपसत्ताभावे खपुष्पादेरविशेषप्रसङ्गात् । यदि तु भिन्नसत्तासम्बन्धित्वरूपं तदा तादृशसत्ताया अभावेन शब्दस्यापि तत्सम्बन्धित्वासिद्धिः । तस्माच्छब्दस्य गुणत्वासिद्धेर्नित्यत्वे सत्यस्मदाद्युपलभ्यमानगुणाधिष्ठानत्वस्याकाशेऽसिद्धेः साधनविकलो दृष्टान्तः । एतेन ज्ञानं परममहत्त्वोपेतद्रव्यसमवेतं, विशेषगुणत्वे सति प्रदेशवृत्तित्वात् शब्दवदित्यपि प्रत्युक्तम्, अन्योऽन्याश्रयात् ज्ञानस्य परममहत्त्वोपेतद्रव्यसमवेतत्वे सिद्धे तद्दृष्टान्ततः

शब्दस्य तत्सिद्धिः, तत्सिद्धेश्च तद्दृष्टान्तेन ज्ञानस्य तत्सिद्धिरिति ! ज्ञानस्य चात्माभेदे
तद्व्यापित्वमिति न प्रदेशवृत्तित्वम्, तथापि तद्वृत्तित्वे ज्ञानेतरस्वभावतयाऽनेकान्तत्वासिद्धि-
रात्मनः । आत्मभेदे तु ज्ञानस्यात्मगुणत्ववदन्यगुणत्वाप्रतिषेधाद्विशेषगुणत्वासिद्धिः, आत्म-
नस्त्वया प्रदेशानभ्युपगमेन तद्वृत्तित्वस्यासिद्धिश्च, कल्पितप्रदेशस्वीकारे च तद्वृत्तित्वलक्षणो
हेतुरपि कल्पित इति न ततः साध्यसिद्धिः, अन्यथा सर्वतः सर्वस्य सिद्धिः स्यात्। अहमिति 5
स्वसंवेदनप्रत्यक्षेणात्मनः स्वदेहमात्रव्यापकत्वेन हर्षविषादाद्यनेकविवर्तात्मकस्य सिद्धत्वाद्वि-
भुत्वसाधकतयोपन्यस्यमानः सर्व एव हेतुः प्रत्यक्षबाधितकर्मनिर्देशानन्तरप्रयुक्तत्वेन काला-
त्ययापदिष्टः । एवं सत्प्रतिपक्षश्च तव हेतुः देवदत्तात्मा देवदत्तशरीरमात्रव्यापकः, तत्रैव
व्याप्योपलभ्यमानगुणत्वात्, यो यत्रैव व्याप्योपलभ्यमानगुणः स तन्मात्रव्यापकः, यथा देव-
दत्तस्य गृहे एव व्याप्योपलभ्यमानभास्वरत्वादिगुणः प्रदीपः देवदत्तशरीर एव व्याप्योपल- 10
भ्यमानगुणस्तदात्मा इत्यनुमानस्य सद्भावात्, तदात्मनो हि ज्ञानादयो गुणास्तद्देह एव व्याप्यो-
पलभ्यन्ते न परदेहे, नाप्यन्तराले । न च देवदत्ताङ्गनाङ्गं देवदत्तगुणपूर्वकम्, कार्यत्वे सति
तदुपकारकत्वात्, ग्रामादिवदित्यनुमानेन कारणस्य कार्यदेशे सन्निधानावश्यकत्वात्तदङ्गना-
ङ्गप्रादुर्भावदेशे तत्कारणतद्गुणसिद्ध्याऽसिद्धस्तव हेतुरिति वाच्यम्,यतो यदि तद्गुणा ज्ञानदर्शन-
सुखवीर्यस्वभावास्ते च तदङ्गनाङ्गे तदन्तराले च वर्तन्त इत्युच्यते तन्न सम्यक्, संवेदन- 15
स्वरूपाणां ज्ञानदर्शनसुखानां तत्र वृत्तितयाऽप्रतीतेः, शक्तिस्वरूपस्य वीर्यस्य च क्रियानु-
मेयतया देवदत्तशरीर एव क्रियादर्शनेन तत्रैव तस्यानुमानात् । नापि धर्माधर्मौ तदङ्गनादि-
कार्यनिमित्तभूतौ तद्गुणशब्देन विवक्षिताविति वक्तुं युज्यते, अस्वसंविदितत्वेनाचेतनत्वा-
त्तयोः शब्दादिवत्तदात्मगुणत्वासम्भवात् । सुखादीनाञ्च स्वसंविदितत्वेन चेतनरूपतया
नाचेतनत्वं व्यभिचारि, अभिमतपदार्थसम्बन्धसमय एव हि स्वसंवेदनरूपाह्लादस्वभावस्य 20
तदात्मनोऽनुभवः, अन्यथा सुखादेः स्वयमननुभवादनवस्थादोषप्रसङ्गादन्यज्ञानेनाप्यननुभवे
सुखस्य परलोकप्रख्यताप्रसक्तिः । न च धर्माधर्मयोर्ज्ञानरूपत्वाद् बौद्धदृष्ट्या ज्ञानस्य च
स्वग्रहात्मकत्वादसिद्धो हेतुरिति वाच्यम्, तयोः स्वरूपग्रहणात्मकत्वे सुखादाविव विवादाभाव-
प्रसक्तेः, अस्ति चासौ, तत्रानुमानोपन्यासान्यथानुपपत्तेः । न हि लौकिकपरीक्षकयोः प्रत्यक्षं
कर्मेति व्यवहारसिद्धम् । नाप्यचेतनत्वे तयोस्तदात्मगुणत्वे न विरोध इति शङ्क्यम्, अचे- 25
तनस्य चेतनगुणत्वासम्भवात् । न वा धर्माधर्मयोरभावादाश्रयासिद्धता हेतोः, चेतनस्य स्वपर-

१ शुभाशुभफलसंस्कारस्वरूपा ज्ञानविशेषात्मिका वासना कर्मेत्युच्यते बौद्धैः ॥ २ धर्माधर्मलक्षणस्य ह्यदृष्ट-
स्यात्मगुणत्वे आत्मपरतंत्रताहेतुर्न भवेत्, न खलु यो यस्य गुणः स तस्य पारतंत्र्यनिमित्तम्, यथा पृथिव्यादे-
रूपादिः आत्मगुणश्च धर्माधर्मादिसंज्ञकं कर्म परैरभ्युपगम्यतेऽतो न तदात्मनः पारतंत्र्यनिमित्तं स्यात्, तस्मान्नेदं
कर्माऽऽत्मगुणरूपम् किन्त्वचेतनं पुद्गलात्मकमेवेति तात्पर्यम् ॥

ह्यस्य हीनमातृगर्भस्थानप्रवेशः तत्सम्बद्धान्यनिमित्तः, तदनन्यनेयत्वे सति तत्प्रवेशात्, मत्तस्याशुचिस्थानप्रवेशवत्, योऽसावन्यः स द्रव्यविशेषो धर्मादिरिति । पूर्वशरीरपरित्यागेन शरीरान्तरगमनस्य पूर्वं प्रसाधितत्वान्न तत्प्रवेशस्यासिद्धता। कार्यत्वे सति तदुपकारकत्वादित्यत्र कार्यत्वे सतीति विशेषणं व्यर्थं, सति सम्भवे व्यभिचारे च विशेषणोपादानस्य सार्थकत्वात्,
5 प्रकृते च न व्यभिचारः तद्गुणपूर्वकत्वाभावे कस्मिँश्चिन्नित्ये तदुपकारकत्वस्यादर्शनात्, कालेश्वरादौ दृष्टमिति चेत्, न कालेश्वरादिकमतद्गुणपूर्वकमपि यदि तदुपकारकं तर्हि कार्यमपि किञ्चिदतद्गुणपूर्वकं तदुपकारकं स्यादिति संदिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिको हेतुः । तस्मान्न तत्रैव व्याप्त्योपलभ्यमानगुणत्वहेतोरसिद्धता । न च तद्देहव्यापकतयैवोपलभ्यमानगुणोऽपि तदात्मा सर्वगतो निजदेहैकदेशवृत्तिर्वा स्यादविरोधात्, अतः संदिग्धविपक्षव्या-
10 वृत्तिकत्वादनैकान्तिको हेतुरिति वाच्यम्, वाय्वादावपि तथाभावप्रसङ्गेन प्रतिनियतदेशसम्बद्धपदार्थव्यवहारोच्छेदप्रसक्तेः । यद्धि यथा प्रतिभाति तत्तथैव सद्व्यवहारपथमवतरति, यथा प्रतिनियतदेशकालाकारतया प्रतिभासमानो घटादिकोऽर्थः । अन्यथा प्रतिभासमाननियतदेशकालाकारस्पर्शविशेषगुणोऽपि वायुः सर्वगतः स्यात्, न चात्र प्रत्यक्षबाधा, त्वया तस्य परोक्षत्वोपवर्णनात् । स्वदेहैकदेशवृत्तित्वे सर्वत्र शरीरे सुखादिगुणानुपलब्धिप्रसङ्गः
15 तथा सर्वत्रोपलभ्यमानगुणोऽपि वायुरेकपरमाणुमात्रः स्यात्, अनुक्रमेण सर्वदेहभ्रमणात् तस्य तत्रोपलब्धिरिति चेन्न, युगपत्तत्र सर्वत्र सुखादिगुणस्योपलम्भात् । न चाशुवृत्तेर्यौगपद्याभिमानः, अन्यत्रापि तथाप्रसङ्गात्, शक्यं हि वक्तुं घटादिरप्येकावयववृत्तिः, आशुवृत्तेर्युगपत्सर्वेष्ववयवेषु प्रतीयत इति । तस्मान्नानैकान्तिको हेतुः, एवञ्च निर्दुष्टादस्माद्धेतोः कंशनत्वादिरहितशरीरमात्रव्यापकस्यात्मनः सिद्धया स्थानमनुपमसुखमुपगतानामिति युक्तमुक्तम् ॥

20 इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य आत्मविभुत्वनिरसनं नाम सप्तमं सोपानम् ॥



# 25 अथ परेष्टमोक्षखण्डम् ।

ननु तथापि स्थानमनुपमसुखमुपगतानामित्ययुक्तम्, आत्यन्तिकबुद्ध्यादिविशेषगुणध्वंसयुतस्यात्मन एव मुक्तिस्वरूपतया तस्यानुपमसुखत्वे मानाभावात्, न चेदृशस्य मुक्तित्वे प्रमाणं नास्तीति वक्तव्यम्, बुद्ध्यादिविशेषगुणसन्तानोऽत्यन्तमुच्छिद्यते सन्तानत्वात् प्रदीपसन्तानवदित्यनुमानसद्भावात्, बुद्ध्यादिषु सन्तानत्वस्य सत्त्वान्नासिद्धता हेतोः, प्रदीपादौ सा-

ष्यसमानधर्मिणि सत्त्वाच्च विरुद्धत्वं, विपक्षे परमाण्वादावभावाच्चानैकान्तिकत्वम्, साध्याभावसाधकयोः प्रत्यक्षागमयोरनुपलम्भाच्च कालात्ययापदिष्टत्वं, साध्याभावव्याप्तहेत्वन्तरस्य तत्राभावाच्च सत्प्रतिपक्षत्वमिति पञ्चरूपत्वात्प्रमाणम् । तत्सन्तानोच्छेदे हेतुश्च मिथ्याज्ञानादिव्यवच्छेदद्वारा तत्त्वज्ञानमेव, शुक्तिकादौ मिथ्याज्ञाननिवृत्तेः सम्यग्ज्ञानसाध्यत्वेनोपलम्भाच्च तत्त्वज्ञानस्य मिथ्याज्ञानव्यवच्छेदसामर्थ्यम् । न च सम्यग्ज्ञानस्य उत्तरकालभाविना मिथ्याज्ञानेनापि विरोधः स्यादिति वाच्यम्, मिथ्याज्ञानस्यासदर्थत्वेन दुर्बलत्वात्, सम्यग्ज्ञानस्य तु सत्यार्थत्वाद्बलीयस्त्वेन तदुच्छेदकत्वात् तथा च निवृत्ते मिथ्याज्ञाने तन्मूलत्वाद्रागादयो न भवन्ति कारणाभावे कार्यानुत्पत्तेः, तदभावे च तत्कार्यरूपप्रवृत्तेरभावस्ततश्च धर्माधर्मयोरनुत्पत्तिः आरब्धकार्ययोश्चोपभोगात् सञ्चितयोश्च तत्त्वज्ञानादेव प्रक्षय इति, अत्रोच्यते, सन्तानत्वलक्षणो हेतुराश्रयासिद्धत्वादिदोषदुष्टः, त्वया बुद्ध्यादीनां ज्ञानान्तरग्राह्यतास्वीकारात्तत्र चानवस्थानात्, अवेदनयाऽज्ञातस्य च सत्त्वासिद्धेः । तथा स्वरूपासिद्धः सन्तानत्वस्य सामान्यात्मकत्वे बुद्ध्यादिविशेषगुणेषु प्रदीपे च तेजोद्रव्ये सत्त्वातिरिक्तस्योभयसाधारणस्यापरसामान्यस्यासम्भवात् । सत्तास्वरूपत्वे तु तस्य सत् सत् इति प्रत्यये हेतुत्वमेव स्यान्न तु सन्तानप्रत्ययहेतुत्वम्, सन्तानत्वस्य विशेषगुणमात्राश्रितजातिरूपत्वे तस्य दृष्टान्ते प्रदीपेऽभावेन स साधनविकलो भवेत् । स्वाधारसर्वगतस्यैकस्य सामान्यस्य प्रतिवाद्यसिद्धत्वेन प्रतिवाद्यसिद्धोऽपि । समवायस्याभावेन बुद्ध्यादिषु व्याप्त्या तस्य वर्त्तमानत्वमप्यसिद्धम्, समवायाङ्गीकारेऽपि तस्य तत्र वृत्तित्वमिव आकाशादिष्वपि नित्येषु तस्य सद्भावादनैकान्तिकोऽपि । न च सम्बन्धाविशेषेऽपि सम्बन्धिनोर्विशेषात्सन्तानत्वं बुद्ध्यादिष्वेव वर्त्तते नाकाशादाविति वाच्यम्, अन्योन्याश्रयात्, सिद्धे हि समवायस्याकाशादिव्यवच्छेदेन बुद्ध्यादिवृत्तित्वे विशेषत्वसिद्धिः, तत्सिद्धेश्चान्यपरिहारेण तद्वृत्तित्वसिद्धिरिति । सर्वत्र समवायस्याविशेषेऽपि बुद्ध्यादिविशेषगुणसन्तानत्वयोः प्रतिनियताधाराधेयभावो यदि सिद्धस्तर्हि समवायाभ्युपगमो व्यर्थः, तद्व्यतिरेकेणापि तयोस्तद्रूपतासिद्धेः । न च समवायिनोर्विशेषरूपत्वान्यथानुपपत्त्या न समवायपरिकल्पनं किन्तु प्रमाणसिद्धत्वादिति वाच्यम्, तद्ग्राहकप्रमाणाभावात्, स हि किं सर्वेषु समवायिषु अनुगतैकस्वभावोऽभ्युपगम्यते व्यावृत्तस्वभावो वा, नाद्यः तस्य समवायत्वायोगात्, नित्यस्य सतोऽनेकवृत्तेः सामान्यस्य त्वया समवायत्वानभ्युपगमात् । न द्वितीयः, सर्वतो व्यावृत्तस्वभावस्यान्यासम्बन्धित्वेन नीलस्वरूपवत् समवायत्वानुपपत्तेः । निर्विकल्पकं सविकल्पकं वा प्रत्यक्षं न तावत्तत्स्वरूप[१]स्यापि ग्राहकं किमुताने-

१ समवायस्याश्रयतयाभिमतव्यक्तिदर्शनसमये समवायः स्वरूपतो ग्रहिग्राह्याकारतया हि न प्रतीतिपथमवतरन्नुद्भाति, बहिर्ग्राह्याकारतयाऽवभासश्च बहिरर्थव्यवस्थाकारो, कल्पनाभोऽपि दर्शनदृष्टमेव बहिरुल्लिखन्ती प्रतिभातीति दर्शनाभावे सापि न प्रवर्त्तत इति न समवायस्वरूपग्रहणमिति भाव. ॥

कानुगतैकत्वलक्षणतद्विशेषरूपस्य । न च सम्बन्धत्वेनाध्यवसीयत इति युक्तम्, स हि किं सम्बन्ध इति बुद्ध्या उत इहेतिबुद्ध्या किं वा समवाय इति बुद्ध्या अध्यवसीयते, आद्ये कोऽसौ सम्बन्धः, किं सम्बन्धत्वजातियुक्तः, आहोस्विदनेकोपादानजनितः, उत अनेकाश्रितः, किं वा सम्बन्धबुद्धिविषयः अथवा सम्बन्धबुद्ध्युत्पादकः, नाद्यः समवायस्या-
5 सम्बन्धत्वप्रसङ्गात्, तत्र त्वया जात्यनभ्युपगमात्[1] । न द्वितीयः, घटादेरपि सम्बन्धत्वप्रसङ्गात् । न तृतीयः, घटजात्यादेः सम्बन्धत्वप्रसङ्गात् । न तुर्यः, घटादिष्वपि सम्बन्धशब्दव्युत्पादने कृते सम्बन्धज्ञानविषयत्वेन तेषां सम्बन्धत्वप्रसङ्गात् । सम्बन्धेतरयोरेकज्ञानविषयत्वे इतरस्यापि सम्बन्धरूपताप्रसङ्गाच्च । न चरमः, चक्षुरादेरपि सम्बन्धत्वापत्तेः । न चेहबुद्ध्यवसेयत्वं समवायस्य, तद्बुद्धेरधिकरणाध्यवसायरूपत्वात्, न ह्यन्यस्मिन्नाकारे
10 प्रतीयमानेऽन्याकारोऽर्थः कल्पयितुं युक्तोऽतिप्रसङ्गात् । नापि समवायबुद्ध्या स प्रतीयते, तद्बुद्धेरनुपपत्तेः, न ह्येते तन्तवः, अयं पटः, अयञ्च समवाय इति परस्परं भिन्नतया त्रयं कस्यांचित् प्रतीतौ प्रतीयते, तथानुभवाभावात् । प्रत्यक्षाभावे च तत्पूर्वकानुमानस्याप्यप्रवृत्त्या न तेन स प्रतीयते । सामान्यतो दृष्टानुमानमपि समवायजन्यकार्यानुपलब्ध्या नात्र प्रवर्त्तते, न च इह तन्तुषु पट इतिप्रत्ययः सम्बन्धनिमित्तः, अबाधितेहप्रत्ययत्वात्,
15 इह कुण्डे दधीति प्रत्ययवदित्यनुमानमुखेनेहबुद्धिरेव समवायज्ञापिकेति वाच्यम्, विकल्पानुपपत्तेः, अनेन हि किं निमित्तमात्रं प्रतीयते सम्बन्धो वा, निमित्तमात्रप्रतीतौ सिद्धसाधनम्, द्वितीयेऽपि स किं संयोगः उत समवायः, न प्रथमः, अभ्युपगतसमवायासिद्धेः । अन्त्ये च व्याप्त्यभावः, न चान्यसम्बन्धे सत्यन्यस्य गमकत्वम्, न हि देवदत्तेन्द्रियघटसम्बन्धे यज्ञदत्तेन्द्रियं रूपादिकमर्थं करणत्वात् प्रकाशयद् दृष्टम्,
20 तस्मान्न समवायः कस्यचित्प्रमाणस्य गोचरः । असम्बद्धस्य तस्य सम्बन्धत्वासम्भवेन तत्र सम्बन्धान्तराभ्युपगमेऽनवस्था च । अतः समवायासिद्ध्या बुद्ध्यादिसन्तानेषु सन्तानत्वं न तेन सम्बन्धेन वृत्तिमदिति हेतुरसिद्ध एव । नापि उपादानोपादेयभूत बुद्ध्यादिस्वरूपं प्रवाहरूपमेव सन्तानत्वं वक्तुं शक्यम्, असाधारणानैकान्तिकत्वात्, तथाभूतहेतोरन्यत्राननुवृत्तेः, अभ्युपगमविरोधाच्च, न हि त्वया बुद्ध्युपादाना बुद्धिरिष्यते,
25 आत्मोपादानाङ्गीकारात् । तथाभ्युपगमे च मुक्तावस्थायामपि पूर्वपूर्वबुद्ध्युपादानक्षणादुत्तरोत्तरोपादेयबुद्धिक्षणस्य सम्भवेन बुद्धिसन्तानस्यात्यन्तोच्छेदो न स्यात्, तथा च हेतुर्बाधितः स्यात् । न वा पूर्वापरसमानजातीयक्षणप्रवाहमात्रं सन्तानत्वम्, असाधारणानैका-

१ द्रव्यगुणकर्मस्वेव जातेर्नैयायिकैः स्वीकारात् समवाये जात्यङ्गीकारेऽसम्बन्धस्य प्रतियोगिताऽनुयोगितान्यतरसम्बन्धेन समवायाभावलक्षणस्य बाधकत्वाभिधानात् ॥

न्तिकत्वतादवस्थ्यात् । एकसन्तानरूपस्यान्यत्राननुवृत्तेः, व्यक्त्यैक्यन्तरानानुगमात्, अनुगमे वा सामान्यपक्षभाविदोषानुषङ्गात् । पाकजपरमाणुरूपादिभिर्व्यभिचारश्च, तत्र तथाविधसन्तानत्वस्य सद्भावेऽपि अत्यन्तोच्छेदाभावात् । सन्तानत्वं स्यादत्यन्तोच्छेदश्च न स्यादिति विपर्यये हेतोर्बाधकप्रमाणाभावेन सन्दिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिकश्च, शब्दबुद्धिप्रदीपादिष्वत्यन्तानुच्छेदवत्स्वेव सन्तानत्वस्य भावाद्विरुद्धश्च, अत्यन्तनित्येष्विवात्यन्तानित्येष्वपि अर्थक्रियाकारित्वलक्षणसत्त्वस्यासम्भवात्, प्रत्यक्षतः प्रदीपादीनामुत्तरपरिणामस्यादर्शनमात्रेण ते तथा न सन्तीति व्यवस्थापयितुमशक्तेः, अन्यथा परमाणूनामपि पारिमाण्डल्यगुणाधारतया प्रत्यक्षतोऽप्रतिपत्तेस्तद्रूपतयाऽसत्त्वप्रसङ्गात् । अनुमानात्तद्रूपतया तस्य प्रतिपत्तिस्तु प्रदीपादावपि तुल्यैव । यथाहि स्थूलकार्यप्रतिपत्तिस्तदपरसूक्ष्मकारणमन्तरेणासम्भविनी परमाणुसत्तामवबोधयति तथा मध्यस्थितिदर्शनं पूर्वापरकोटिस्थितिमन्तरेणासम्भवि तामपि साधयत्येव । न च ध्वस्तस्य प्रदीपादेर्विकारान्तरेण स्थित्यभ्युपगमे प्रत्यक्षबाधा, वारिस्थे तेजसि भास्वररूपाभ्युपगमेऽपि तद्बाधोपपत्तेः । न चोष्णस्पर्शस्य भास्वररूपाधिकरणतेजोद्रव्याभावेऽसम्भवादनुद्भूतस्य तत्रानुमानतः कल्पनमिति वाच्यम्, प्रदीपादेरप्यनुपादानोत्पत्तिवत् सन्ततिविपत्त्यभावमन्तरेण न विपत्तिस्सम्भवतीत्यनुमानतोऽपि तत्सन्तत्यनुच्छेदस्यापि सिद्धेः । अन्यथा सन्तानचरमक्षणस्य क्षणान्तराजनकत्वेनासत्त्वे पूर्वपूर्वक्षणानामपि तत्त्वान्न विवक्षितक्षणस्यापि सत्त्वमिति प्रदीपादेर्दृष्टान्तस्य बुद्ध्यादिसाध्यधर्मिणश्चाभाव इति नानुमानप्रवृत्तिः स्यात्, तस्माच्छब्दबुद्धिप्रदीपानामपि सत्त्वे नात्यन्तिको व्युच्छेदोऽभ्युपगन्तव्यः अन्यथा विवक्षितक्षणेऽपि सत्त्वाभाव इति सर्वत्रानत्यन्तोच्छेदवत्येव सन्तानत्वलक्षणो हेतुर्वर्तत इति कथं न विरुद्धः । विपरीतार्थोपस्थापकानुमानान्तरस्य सद्भावादनुमानबाधितः पक्षः, हेतोर्वा कालात्ययापदिष्टत्वम् । तथाहि पूर्वापरस्वभावपरिहारावाप्तिलक्षणपरिणामवान् शब्दबुद्धिप्रदीपादिकोऽर्थः, सत्त्वात्, कृतकत्वाद्वा, यावान् कश्चिद्भावस्वभावः स सर्वस्तादृशस्वभावविवर्तमन्तरेण न सम्भवति । न हि तावत् क्षणिकस्य निरन्वयविनाशिनः सत्त्वसम्भवोऽस्ति स्वाकारानुकारि ज्ञानमन्यद्वा कार्यान्तरमप्राप्याऽऽत्मानं संहरतः सकलशक्तिविरहितस्य व्योमकुसुमादेरिव सत्त्वानुपपत्तेः । क्षणिकत्वभङ्गप्रसङ्गेन तादृशस्य कार्यकालं यावत्प्राप्त्यसम्भवात्, चिरतरविनष्टस्येव च कार्यकालेऽसतस्तज्जननसामर्थ्यविरहात्, स्वसत्ताकाले एव समनन्तरकार्योत्पत्तिजननसामर्थ्यसद्भावे कार्यकाल इव ततः पूर्वमपि कार्योत्पत्तिः स्यात्, समर्थस्य क्षेपायोगात्, न वा तत्सत्ताकालेऽभवतः तदभावे च भवतस्तत्कार्यत्वं तस्य च कारणत्वं युक्तमतिप्रसङ्गात् । न वा तत्समनन्तरभावमात्रेण तस्य कारणत्वं, सर्वेषां पूर्ववर्तिनां कारणत्वप्रसङ्गात्, अक्ष-

णिक इव क्षणिकेऽपि क्रमयौगपद्याभ्यामर्थक्रियाविरोधश्च, न हि कार्यकारणयोः क्रमः सम्भवति, कालभेदाज्जन्यजनकभावविरोधात्, चिरतरोपरते पितरि उत्पन्नपुत्रवत्। नापि तादृशस्यापेक्षासम्भवः, अनाधेयाप्रहेयातिशयत्वात्, न हि किञ्चिदतिशयं ततोऽनासादयत्तद् भावान्तरमपेक्षते येन क्रमः स्यात्। यौगपद्यन्तु तयोर्हेतुफलभावतयैवासम्भवि, समानकालयोर्हि न हेतुफलभावः, सव्येतरगोविषाणवदपेक्षानुपपत्तेः। अत एव कृतकत्वादयोऽपि हेतवो वस्तुस्वभावाः परिणामानभ्युपगमवादिनां न सम्भवन्ति, तथा हि अपेक्षितपरव्यापारो हि भावः स्वभावनिष्पत्तौ कृतक उच्यते, सा च परापेक्षा एकान्तनित्यवदेकान्तानित्येऽप्यसम्भविनी, तदपेक्षाकारणकृतस्वभावविशेषेण विवक्षितवस्तुनः सम्बन्धोऽपि नोपपद्यते स्वभावभेदप्रसक्तेः। अभेदे वाऽपेक्ष्यमाणादपेक्षकस्य सर्वथाऽऽत्मनिष्पत्तिप्रसङ्गात्। अतः स्वभावभिन्नयोः प्रत्यस्तमितोपकार्योपकारकस्वभावयोर्भावयोः सम्बन्धानुपपत्तेः अस्येदमिति व्यपदेशस्यानुपपत्तिः। यदि पुनरपेक्षमाणस्य तदपेक्ष्यमाणेन व्यतिरिक्तमुपकारान्तरं क्रियेत तदा तत्सम्बन्धव्यपदेशार्थं तत्राप्युपकारान्तरं कल्पनीयमित्यनवस्था प्रसज्येत, तस्मान्नित्यानित्यपक्षयोरर्थक्रियालक्षणं सत्त्वं कृतकत्वं वा न सम्भवतीति यत्किञ्चित्सत् कृतकं वा तत् सर्वं परिणामि, इतरथाऽकिञ्चित्करस्यावस्तुत्वप्रसङ्गात्, गगनारविन्दवत्, सन् कृतको वा शब्दबुद्धिप्रदीपादिरिति सिद्धः परिणामी, सत्त्वं चार्थक्रियाकारित्वमेव, अन्यस्यासम्भवात्, तच्चात्यन्तोच्छेदवत्सु न सम्भवत्येव, अतस्ततो व्यावर्त्तमानो हेतुरनत्यन्तोच्छेदवत्स्वेव सम्भवतीति सन्तानत्वहेतोः कालात्ययापदिष्टत्वम्, पक्षो वानुमानबाधितः। तथा सत्प्रतिपक्षश्च, बुद्ध्यादिसन्तानो नात्यन्तोच्छेदवान्, सर्वप्रमाणानुपलभ्यमानतथोच्छेदत्वात्, यो हि सर्वप्रमाणानुपलभ्यमानतथोच्छेदो न स तत्त्वेनोपेयः, यथा पार्थिवपरमाणुपाकजरूपादिसन्तानः तथा चायमिति प्रत्यनुमानसद्भावात्। एवं सम्यग्ज्ञानान्मिथ्याज्ञानव्यावृत्तिक्रमेण धर्माधर्मयोस्तत्कार्यशरीरादेरभावेऽपि सकलपदार्थविषयकसम्यग्ज्ञानानन्तानिन्द्रियसुखादिसन्तानस्य निवृत्त्यसिद्धिः। शरीरादेस्तत्रानिमित्तत्वात्, ज्ञानस्य ज्ञानोपादानताप्रतिपादनात्, ज्ञानादिस्वभावस्यात्मन उत्तरज्ञानाद्यवस्थारूपतया परिणामे देशकालादेः सहकारित्वसम्भवाच्च। आरब्धकार्ययोर्धर्माधर्मयोरुपभोगात्सञ्चितयोश्च तत्त्वज्ञानात् प्रक्षय इत्यपि न सम्यक्, उपभोगात् कर्मणः प्रक्षये तदुपभोगसमयेऽपरकर्मनिमित्तस्याभिलाषपूर्वकमनोवाक्कायव्यापारस्वरूपस्य सम्भवाद्विकलकारणस्य च प्रचुरतरकर्मणः सद्भावादात्यन्तिककर्मक्षयासम्भवात्, सम्यग्ज्ञानस्यैव पापक्रियानिवृत्तिलक्षणचारित्रोपबृंहितस्य मिथ्याज्ञाननिवृत्त्यादिक्रमेणागामिकर्मानुत्पत्तिसामर्थ्यवत् सञ्चितकर्मक्षयेऽपि सामर्थ्यसम्भवात्, तच्च सम्यग्ज्ञानं परिणामिजीवाजीवादिवस्तुविषयमेव न त्वेकान्तनित्यानित्यात्मादिविषयम्, तस्य विपरीतार्थग्राहकत्वेन मिथ्यात्वोपपत्तेः॥

अथ मोक्षावस्थायां चैतन्यस्याप्युच्छेदान्न तत्र विवेकिनः प्रवर्त्तेन्त इति चिदानन्दस्वरूप एव मोक्षोऽभ्युपगन्तव्यः, यथा तस्य चित्स्वभावता नित्या तथा परमानन्दस्वभावताऽपि, न चात्मनः सकाशाच्चित्स्वभावत्वमानन्दस्वभावत्वं वाऽन्यत्, तस्य तु परमानन्दस्वभावत्वस्य संसारावस्थायामविद्यासंसर्गादप्रतिपत्तिरात्मनोऽव्यतिरिक्तस्यापि, यथा रज्ज्वादेर्द्रव्यस्य तत्त्वाग्रहणान्यथाग्रहणाभ्यां स्वरूपं न प्रकाशते, यदा त्वविद्या- 5 निवृत्तिस्तदा तस्य स्वरूपेण प्रकाशनम्, एवं ब्रह्मणोऽपि तत्त्वाग्रहान्यथाग्रहाभ्यां भेदप्रपञ्चसंसर्गादानन्दादिस्वरूपं न प्रकाशते, मुमुक्षुयत्नेन तु यदाऽनाद्यविद्याव्यावृत्तिस्तदा स्वरूपप्रतिपत्तिः सैव मोक्ष इति, सत्यम्, परन्तु चित्स्वभावताया आनन्दस्वभावतायाश्चैकान्तनित्यता न सङ्गच्छते, आत्मस्वरूपता तु चिद्रूपताया आनन्दस्वरूपतायाश्च कथञ्चिदभ्युपगम्यत एव, अविद्यानिवृत्तौ स्वरूपप्रतिपत्तिरपि युक्तैव, अष्टविधपारमार्थिककर्म- 10 प्रवाहरूपानाद्यविद्याऽऽत्यन्तिकनिवृत्तेः स्वरूपप्रतिपत्तिलक्षणमोक्षावाप्तेरभीष्टत्वात् । न च मुक्त्यवस्थायां सुखोत्पत्तावपेक्षाकारणं वक्तव्यम्, आकस्मिककार्याभावादिति वाच्यम्, ज्ञानसुखादेः चैतन्यधर्मानुवृत्तितश्चैतन्योपादेयत्वात्, सेन्द्रियशरीरादिकन्तु न तदुत्पत्तावपेक्षाकारणमव्यापकत्वात्, सेन्द्रियशरीराद्यपेक्षाकारणव्यापाररहितं हि विज्ञानं समस्तज्ञेयविषयत्वेनानियतविषयमुपलभ्यत एव, यथाऽव्यापृतचक्षुरादिकरणग्रामस्य सदसती तत्त्व- 15 मिति ज्ञानम्, सकलाक्षेपेण व्याप्तिप्रसाधकं वा । न चात्राप्यात्मान्तःकरणसंयोगस्य शरीराद्यपेक्षाकारणसहकृतस्य व्यापारः, अन्तःकरणस्याणुपरिमाणद्रव्यस्य प्रमाणबाधितत्वेनासिद्धेः, संयोगस्य च निषिद्धत्वात्, ज्ञानोत्पत्तिवेलायाञ्च शरीरादीनां सन्निधानेऽपि तद्गुणदोषान्वयव्यतिरेकानुविधानस्य तज्ज्ञानेऽनुपलम्भान्नापेक्षाकारणत्वं कल्पयितुं युक्तम्, तथापि तत्कल्पनेऽ तिप्रसङ्गः । देशकालादिकन्तु विज्ञानक्षणस्यान्वयिनो ज्ञानान्तरोत्पादेऽपेक्षाकारणं न प्रतिषि- 20 ध्यते मुक्तावस्थायामपि, शरीरादिकन्तु तदा कारणाभावादेवानुत्पन्नं नापेक्षाकारणं भवितुमर्हति । यदि तु शरीराद्यभावे ज्ञानादेरुत्पत्तिर्नाभ्युपगम्यते तदा तथाभूतापेक्षाकारणजन्यस्य चक्षुरादिज्ञानस्येव प्रतिनियतविषयत्वं स्यादिति सदसत्पदार्थव्रातः कस्यचिदेकज्ञानावलम्बनः प्रमेयत्वात्, पञ्चाङ्गुलिवदित्यनुमानादनुमीयमानं सर्वज्ञज्ञानमपि प्रतिनियतविषयत्वान्न सर्वविषयं स्यात्, तत्र शरीरस्याकारणत्वेऽभ्युपगम्यमाने मुक्तावस्थायामपि तदजन्यं ज्ञानं कुतो न भवेत् । 25 किञ्च सकलपदार्थप्रकाशकत्वं ज्ञानस्य स्वभावः, स च सेन्द्रियदेहाद्यपेक्षाकारणस्वरूपावरणेनाच्छाद्यते, अपवरकावस्थितप्रकाश्यपदार्थप्रकाशकस्वभावः प्रदीप इव तदावारकशरावादिना । तदपगमे तु प्रदीपस्येव स्वप्रकाश्यप्रकाशकत्वं ज्ञानस्यायत्नसिद्धमिति कथमावरणभूत-

सेन्द्रियदेहाद्यभावे तदवस्थायां ज्ञानस्याप्यभावः प्रेर्येत, *अन्यथा प्रदीपावारकशरावाद्यभावे*
प्रदीपस्याप्यभावः प्रेरणीयः स्यात् । न च शरावादेरावारकस्य प्रदीपं प्रत्यजनकत्वमा-
शङ्कनीयम् , तथाभूतप्रदीपपरिणतिजनकत्वाच्छरावादेः, अन्यथा तं प्रत्यावारकत्वमेव तस्य
न स्यात् । उपलभ्यते च संसारावस्थायामपि वासीचन्दनकल्पस्य मुमुक्षोः सर्वत्र समवृत्तेः
5 विशिष्टध्यानादिव्यवस्थितस्य सेन्द्रियशरीरव्यापाराजन्यः परमाह्लादरूपोऽनुभवः, तस्यैव
भावनावशादुत्तरोत्तरामवस्थामासादयतः परमकाष्ठागतिरपि संभाव्यत एव । **परमार्थतस्तु**
आनन्दरूपताऽऽत्मनः स्वभावभूता तद्विबन्धककर्मक्षयात्तस्यामवस्थायामुत्पद्यते, एकान्तनि-
त्यस्य त्वविचलितरूपस्यात्मनो वैषयिकसुखदुःखभोगोऽप्यनुपपन्नः, एकस्वभावस्य तत्स्वभा-
वापरित्यागे भिन्नसुखदुःखसंवेदनोत्पादेऽप्याकाशस्येव तदनुभवाभावात् । ज्ञानञ्चोत्तरज्ञा-
10 नोत्पादनस्वभावम् , यच्च यत्स्वभावं न तत्तदुत्पादनेऽन्यापेक्षम् , यथाऽन्त्या बीजादिकारण-
सामग्री अङ्कुरोत्पादने, तत्स्वभावश्च पूर्वो ज्ञानक्षणः उत्तरज्ञानक्षणोत्पादन इति स्वभावहेतुः,
अन्यथाऽसौ तत्स्वभाव एव न स्यात् । न च संसारावस्थाज्ञानान्त्यक्षणस्योत्तरज्ञानजनन-
स्वभावत्वमसिद्धम् , तथाभ्युपगमे सत्तासम्बन्धादेः सत्त्वस्य निषिद्धत्वात्तदजनकत्वेन तस्या-
नर्थक्रियाकारित्वादवस्तुत्वापत्तेस्तज्जनकस्याप्यवस्तुत्वं ततस्तज्जनकस्येत्येवमशेषचित्तसन्तान-
15 स्यावस्तुत्वप्रसङ्गः । एवं साश्रवचित्तसन्ताननिरोधलक्षणापि मुक्तिर्विशेषगुणरहितात्मस्वरूपे
वाऽनुपपन्ना, निराश्रवचित्तसन्तत्युत्पत्तिलक्षणात्वभ्युपगम्यत एव, किन्तु सा सान्वया
युक्ता, बद्धस्यैव मोक्षणात्, न हि अन्वयिनोऽभावे बद्धस्य मुक्तिः सम्भवति, अन्यस्य ब-
न्धादन्यस्य च मोक्षणात् । सन्तानस्यैकत्वेऽपि सोऽयं सन्तानो यदि परमार्थतः सन् तर्ह्या-
त्मैव सन्तानशब्दाभिधेयः स्यात् , यदि तु संवृत्त्या सन् तदैकस्य परमार्थसतोऽभावाद्बन्ध-
20 मोक्षयोर्भिन्नाश्रयतया बद्धस्य मुक्त्यर्थं प्रवृत्तिर्न स्यात् , तस्माद्विज्ञानक्षणेष्वन्वयिनोऽभावे ब-
न्धमोक्षयोस्तदर्थप्रवृत्तेर्वाऽसम्भवात्सान्वया चित्तसन्ततिरभ्युपगन्तव्या । न च विज्ञानसन्त-
त्यनुच्छेदे सुषुप्तावस्थायामपि तत्सद्भावे तस्या जाग्रदवस्थातो विशेषो न स्यादिति वाच्यम् ,
मिद्धादिसामग्रीविशेषाद्विलक्षणस्य सुषुप्त्याद्यवस्थायां गच्छत्तृणस्पर्शज्ञानतुल्यस्य बाह्याध्या-
त्मिकपदार्थानेकधर्मग्रहणविमुखस्य ज्ञानस्य सद्भावात् , अन्यथा जाग्रत्प्रबुद्धज्ञानप्रवाहयो-
25 रप्यभावः स्यात् । यथा चाश्वविकल्पनकाले प्रवाहेणोपजायमानमपि गोदर्शनं ज्ञानान्तरवे-
द्यमपि भवदभिप्रायेणानुपलक्षितमास्ते, अन्यथाऽश्वविकल्पप्रतिसंहारावस्थायां इयन्तं कालं
यावन्मया गौर्दृष्टो न चोपलक्षित इति ज्ञानानुत्पत्तिप्रसक्तेः प्रसिद्धव्यवहारोच्छेदः स्यात् , तथा

१ निराश्रवचित्तसन्तानोत्पत्तिर्मोक्ष इति सौगताः, तत्राविद्यातृष्णारहितं चित्तं निराश्रवमभिधीयते, अविद्या-
रागद्वेषाभिलाष , तृष्णा तु भाविभोगाभिलाष । अपरे तु प्रदीपनिर्वाणवत्सर्वथा चित्तसन्तानोच्छेदो मोक्ष
इति सङ्गिरन्ते तेऽपि मिथ्यावादिनः, चित्तसन्तानाभावे शून्यतापत्ते. ॥

सुषुप्तावस्थायां स्वसंविदितज्ञानवादिनोऽप्यनुपलक्षितं ज्ञानं भविष्यतीति न तदवस्थायां विज्ञानासत्त्वात्तत्सन्तत्युच्छेदः । न च युगपज्ज्ञानानुत्पत्तेरश्वविकल्पकाले ज्ञानान्तरवेद्यं गोदर्शनं न सम्भवतीति वाच्यम्, सविकल्पाविकल्पयोर्ज्ञानयोर्युगपद्वृत्तेरनुभवात्, अन्यथा प्रतिनिवृत्ताश्वविकल्पस्य गोदर्शनस्मरणाध्यवसायो न स्यात्, क्रमभावेऽपि च तयोर्विज्ञानयोर्विज्ञानं ज्ञानान्तरवेद्यमपि अनुपलक्षितमवश्यं तस्यामवस्थायां परेणाभ्यु- 5 पगमनीयम्, तदभ्युपगमे च यदि स्वापावस्थायां तादृग् ज्ञानमभ्युपगम्यते तदा न कश्चिद्विरोधः । तस्मादनेकान्तभावनातो विशिष्टप्रदेशेऽक्षयसुखादिलाभो मुक्तिरिति स्थितम् । न चानैकान्तज्ञानं मिथ्या, नित्यत्वानित्यत्वयोर्विधिप्रतिषेधरूपत्वादभिन्ने धर्मिण्यभावादिति वाच्यम्, एकान्तज्ञानस्यैव बाधकमद्भावेन मिथ्यात्वोपपत्तेः, प्रतीयमाने वस्तुनि विरोधासिद्धेश्च, न हि यद्रूपेण नित्यत्वं तद्रूपेणैवानित्यत्वं विधीयते येनैकत्र विरोधः स्यात् 10 किन्त्वनुस्यूताकारतया नित्यत्वं व्यावृत्ताकारतया चानित्यत्वम्, तथा चान्यधर्मनिमित्तकत्वान्न विरोधः, अन्यथाऽतिप्रसङ्गात् । न चानुगतव्यावृत्ताकारयोरात्यन्तिको भेदः, पूर्वोत्तरकालभाविस्वपर्यायतादात्म्येन स्थितस्यानुगताकारस्य बाह्याध्यात्मिकस्यार्थस्याबाधितप्रत्यक्षप्रतिपत्तौ प्रतिभासनात् । न च घटादिर्मृत्त्वादिना नित्य इत्यत्र मृत्त्वादि यदि ततोऽर्थान्तरं सामान्यं न ततो घटो नित्यः, तस्य कारणाद्विलयोपलब्धेरिति वाच्यम्, सामान्यस्य विशे- 15 षादर्थान्तरत्वानुपपत्तेः समानासमानपरिणामात्मकत्वाद्घटादेः । तथाहि मृत्त्वादिजातिः सत्ता वा न स्वाश्रयादर्थान्तरभूता, तथात्वे स्वाश्रयैः सम्बन्धाभावात्, स्वसम्बन्धात् प्रागसद्भिरपि स्वाश्रयैः सम्बन्धेऽतिप्रसङ्गात्, स्वत एव सद्भिः सत्तासम्बन्धकल्पनावैयर्थ्यात् समवायस्य सर्वगतत्वाद्व्यक्त्यन्तरपरिहारेण व्यक्त्यन्तरैरेव सर्वगतस्यापि सामान्यस्य सम्बन्धेऽतिप्रसङ्गपरिहारायाभ्युपगम्यमाना च प्रत्यासत्तिः प्रत्येकं परिसमाप्ता व्यक्त्यात्मभूता 20 वाऽभ्युपगम्यमाना कथं समानपरिणामातिरिक्तस्य सामान्यस्य कल्पनां न निरस्येत्, शुक्लादिवच्च स्वाश्रये स्वानुरूपप्रत्ययादिहेतोः सामान्यात् सदादिप्रत्ययादिवृत्तिर्न भवेत् । सामान्यस्य तु स्वत एव सदादिप्रत्ययादिविषयत्वे द्रव्यादिषु कः प्रद्वेषः परतश्चेदनवस्था, तस्मात्पदार्थानामनेकान्तस्वभावतया नानेकान्तभावना मिथ्याभूता, ततो युक्तमुक्तमनुपमसुखमुपगतानामिति ॥ 25

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य परेष्टमोक्षखण्डनं नाम अष्टमं सोपानम् ॥



## अथादिवाक्यसाफल्यप्रदर्शनम् ।

तदेवं स्वेष्टदेवतास्तवेन प्रध्वस्तसमाप्तिप्रतिबंधकान्तराय आचार्यस्तच्छासनस्य प्रकरणमन्तरेणापि जिनप्रणीतत्वेन स्वतः सिद्धत्वात्तदभिधेयस्य निष्प्रयोजनत्वमाशङ्कमानः प्रकरणाभिधेयप्रयोजनमाह—

5 **समयपरमत्थवित्थरविहाडजणपज्जुवासणसयण्णो ।**
**आगममलारहियओ जह होइ तमत्थमुन्नेस्सं ॥ २ ॥**

**समयपरमार्थविस्तरविहाटजनपर्युपासनसकर्णः ।**
**आगममलारहृदयो यथा भवति तमर्थमुन्नेष्ये ॥ छाया ॥**

**समय** इति, मलमिव आरा प्राजनकविभागो यस्यासौ मलारः गौर्गली, आगमे 10 तद्वत्कुण्ठं हृदयं यस्य तदर्थप्रतिपत्तिसामर्थ्याभावात् असौ तथा, मन्दधीरित्यर्थः, सम्यगीयन्ते परिच्छिद्यन्तेऽनेनार्था इति समयः आगमः, तस्य परमार्थः, अकल्पितोऽर्थः, तस्य विस्तरो रचनाविशेषः, ननु 'प्रथने वावशब्दे' ( पाणि० ३-३-३३ ) इति सूत्रेण घञि कृते विस्तार इति रूपं स्यात् कथं तर्हि विस्तर इति चेदुच्यते, शब्दार्थयोर्भेदेऽपि पारमार्थिकसम्बन्धप्रतिपादनायाभेदविवक्षया घञ् न कृतः । तस्य रचनाविशेषस्य विहाटः प्रकाशकः, 15 श्रोतृबुद्धौ प्रकाशमानानर्थान् हाटयति दीपयतीति व्युत्पत्तेः, स चासौ जनश्च चतुर्दशपूर्वविदादिलोकः तस्य पर्युपासनं सेवाजनितं तद्व्याख्यानं कारणे कार्योपचारात्, तत्र सह कर्णेन वर्त्तत इति सकर्णः तद्व्याख्यातार्थावधारणपटुः, एवम्भूतो यथा येन प्रकारेण भवति तथाभूतमर्थमुन्नेष्ये प्रतिपादयिष्ये इत्यर्थः, यथाभूतेनार्थेन प्रतिपादितेनातिकुंठितधीरपि श्रोतृजनो विशिष्टागमस्य व्याख्यात्रा प्रतिपादितानामर्थानामवधारणे समर्थो भवति तमर्थमनेन प्रक- 20 रणेन प्रतिपादयिष्यामीति यावत् । अत्राकल्पितस्य बाह्यार्थस्यागमप्रतिपाद्यतया शब्दार्थयोश्च वास्तवसम्बन्धस्य समयपरमार्थविस्तरेत्यनेन निर्देशः कृतः, तथा च चतुर्दशपूर्वविदादिजनानां व्याख्यातॄणां प्रतिपादितार्थावधारणसामर्थ्यसम्पत्तिर्मन्दधियामेतत्प्रकरणप्रयोजनं प्रदर्शितम्, तज्ज्ञानं विना प्रेक्षावतां प्रवृत्त्यनुपपत्तेः । अनभिहितप्रयोजनं हि काकदन्तपरीक्षावत् प्रेक्षावतामनादरणीयं भवति तस्मात् प्रयोजनाभिधानमुखेन तेषां शास्त्रादौ प्रवर्त्त- 25 नायादौ तत्प्रतिपादनमावश्यकमिति ॥

**अत्र केचित्** प्रेक्षापूर्वकारिणां प्रवृत्तये प्रयोजनाभिधानायादिवाक्यमुपादीयते यदि तर्हि कथमप्रमाणके तेषां प्रवृत्तिः, प्रामाणिक एव प्रेक्षापूर्वकारिणां प्रवृत्तेः, न हि तद्वाक्यं तज्जन्यज्ञानं वा प्रमाणमिन्द्रियाजन्यत्वेन तस्य प्रत्यक्षत्वासम्भवात्, नाप्यनुमानं स्वभावकार्यलिङ्गप्रभवम्, तद्बोध्यप्रयोजनस्य तद्भावत्वेन तत्कारणत्वेन वा प्रमाणादप्रतिपत्तेः, तदुत्थापकस्य लिङ्गस्य

च तत्स्वभावतया तत्कार्यतया चानवधारणात्, अन्यस्य च स्वसामर्थ्याप्रतिबन्धात्, न चेदं वाक्यं स्वाभिधेयप्रयोजनप्रतिपादने प्रमाणम्, तत्र प्रवर्त्तमानस्यास्य स्वमहिम्नैव शब्दप्रमाणस्वरूपत्वेन स्वार्थप्रत्यायकत्वादिति वाच्यम्, बाह्येऽर्थे शब्दस्य प्रतिबन्धासम्भवेनाप्रामाण्यात्, विवक्षायां प्रामाण्येऽपि तस्या बाह्यार्थाविनाभावित्वायोगात्, न च येषां यदर्थविषयिणी विवक्षा ते तमर्थं तथैव प्रतिपादयन्ति, अन्यविवक्षायामप्यन्यशब्दोच्चारणदर्शनान्न 5 विवक्षाया एकान्ततो बाह्यार्थप्रतिबद्धता । तस्मान्न शब्दादपि प्रमाणादादिवाक्यरूपात् प्रयोजनविशेषोपायप्रतिपत्तिः, तदप्रतिपत्तौ च तेषां ततः प्रवृत्तौ प्रेक्षापूर्वकारिताव्याहतिप्रसङ्ग इत्याक्षिपन्ति तदयुक्तम्, प्रत्यक्षानुमानयोरसम्भवेऽपि बाह्यार्थेन शब्दप्रतिबन्धस्य साधयिष्यमाणत्वात्, बाह्यार्थ एव च प्रतिपत्तिप्रवृत्त्यादिव्यवहारस्योपलभ्यमानतया प्रत्यक्षवच्छब्दस्यापि तत्र प्रामाण्यात्, न ह्यर्थाव्यभिचारित्वलक्षणप्रामाण्यनिश्चयवतां ततः 10 प्रवृत्तौ प्रेक्षापूर्वकारित्वक्षतिः, न चानाप्तप्रणीतात् नद्यास्तीरे पञ्च फलानि सन्तीत्यादिवाक्यादस्य विशिष्टतानवगमान्नातः प्रवृत्तिरिति वाच्यम्, प्रत्यक्षाभासात् प्रत्यक्षस्येवानाप्तप्रणीतवाक्यादस्य विशिष्टतानिर्णयात्, यस्य तु न निर्णयो नासावतः प्रवर्त्तते, अनवधृतहेत्वाभासविवेकाद्धेतोरिवानुमेयार्थक्रियार्थी । न चाप्ताः परहितप्रवणाः प्रमाणभूतास्ततः स्ववाङ्मात्रेणापि ते प्रवर्त्तयितुं क्षमाः, तस्मात् किं प्रयोजनवाक्योपन्यासेनेति वाच्यम्, सुनि- 15 श्चिताप्तप्रणीतवाक्यादपि प्रतिनियतप्रयोजनार्थिनां तदुपायानिश्चये तत्र प्रवृत्त्ययोगात्, यदि आप्तप्रणीतशास्त्रेऽपि प्रयोजनविशेषप्रतिपादकं वाक्यं न स्यात्तदा कथं तत्र प्रयोजनविशेषप्रतिपादकतानिश्चयः स्यात् येनाप्तप्रणीतवाक्यादेव तदर्थिनां तत्र प्रवृत्तिः स्यात्, तदनभिमतप्रयोजनप्रतिपादकानामपि वाक्यानां सम्भवात्, अतः यत्र क्वचिदिदं कर्त्तव्यमिति पुरुषाः प्रतीततदाप्तभावा आप्तैर्नियुज्यन्ते तत्रावधारिततत्प्रेरणातथाभावविषयविचारास्तद- 20 भिहितं वाक्यमेव बहुमन्यमाना अनादृतप्रयोजनपरिप्रश्ना एव प्रवर्त्तन्ते, विनिश्चिततदाप्तभावानां प्रत्यवस्थानासम्भवादित्यपि निरस्तम्, आप्तप्रवर्त्तितप्रतिनियतप्रयोजनार्थिजनप्रेरणावाक्यस्यैव प्रयोजनवाक्यत्वनिश्चयाच्च । अन्यथाऽभिमतफलार्थिजनप्रेरकवाक्यस्याप्तप्रयुक्तत्वमेवानिश्चितं स्यात्, अनभिमतार्थप्रेरकस्याप्यवगताप्तवाक्यत्वे चातिप्रसङ्गः, न चाप्तवाक्यादपि प्रतिनियतप्रयोजनार्थिनस्तदनवगमे तत्र प्रवर्त्तितुमर्हन्त्ते, अतिप्रसङ्गात्तस्मादादा- 25 वभिधेयप्रयोजनं सार्थकमेवेति ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्याऽऽदिवाक्यसाफल्यप्रदर्शनं नाम नवमं सोपानम् ॥

# अथ शब्दसङ्केतसमर्थनम्.

अत्र बौद्धाः वदन्ति नन्वागमस्याकल्पितो बाह्यार्थः शब्दार्थयोर्वास्तवसम्बन्धश्च न घटते प्रमाणबाधितत्वात्, शब्दानां हि वस्तुतो वाच्यं वस्तुस्वरूपं न किञ्चिदस्ति, सर्वेषां शाब्दप्रत्ययानां भ्रान्तत्वात्, भिन्नेष्वर्थेष्वभेदाकाराध्यवसायेन प्रवृत्तेः, यत्र तु परम्परया
5 वस्तुप्रतिबन्धः तत्रार्थसंवादो भ्रान्तत्वेऽपि, तत्र यदारोपितं विकल्पबुद्ध्याऽर्थेष्वभिन्नं रूपं तदन्यव्यावृत्तपदार्थानुभवबलायातत्वात् स्वयञ्चान्यव्यावृत्ततया प्रतिभासनात् भ्रान्तैश्चान्यव्यावृत्तार्थेन सहैक्याध्यवसितत्वात् अन्यापोढपदार्थाधिगतिफलत्वाच्चान्यापोह उच्यते, अतोपोहः शब्दार्थ इति प्रसिद्धम् । अत्र शब्दार्थो विधिरेवेत्येवंवादिनो यदि द्रव्यगुणकर्मसामान्यादिपदार्थाश्शब्दप्रवृत्तिनिमित्ताः परमार्थतो न सन्ति तर्हि कथं लोके तन्निमित्ताः प्रत्य-
10 यव्यवहाराः प्रवर्त्तन्ते, तत्र हि दण्डी विषाणीत्यादिप्रतीतिव्यवहारौ लोके द्रव्योपाधिकौ, शुक्लः कृष्ण इत्यादि गुणोपाधिकौ, चलति भ्रमतीति क्रियोपाधिकौ, अस्ति विद्यत इति सत्तानिमित्तकौ, गौः अश्व इति सामान्यविशेषोपाधिनिमित्तौ, इह तन्तुषु पट इति समवायनिमित्तौ । तत्र द्रव्यादीनामभावे एतौ प्रतीतिशब्दौ निर्विषयौ स्याताम्, तथा च सति सर्वत्र सर्वदा तयोरविशेषेण प्रवृत्तिप्रसङ्गः न चास्ति तथा, तस्मात्सन्ति द्रव्यादयः पारमा-
15 र्थिकाः प्रत्ययशब्दविषयाः, तथा च ये परस्परासंकीर्णप्रवृत्तयस्ते सनिमित्ताः यथा श्रोत्रादिप्रत्ययाः, असंकीर्णप्रवृत्तयश्च दण्डीत्यादिप्रत्यया इति स्वभावहेतुः, अनिमित्तत्वे सर्वत्राविशेषेण प्रवृत्तिप्रसङ्गो बाधकं प्रमाणमिति प्राहुः । अत्र बौद्धाः किमत्र सिषाधयिषितं भवताम्, पारमार्थिकबाह्यपदार्थनिमित्तेन सनिमित्तत्वं येन केनचिन्निमित्तेन सनिमित्तत्वं वा, नाद्यः, साध्यविपर्यये बाधकप्रमाणविरहेण हेतोरनैकान्तिकत्वात्, न द्वितीयः सिद्ध-
20 साधनात्, अस्माभिरपि अन्तर्जल्पवासनाप्रबोधस्य निमित्तत्वोपगमात्, न तु विषयभूतस्य, भ्रान्तत्वेन सर्वस्य शाब्दप्रत्ययस्य निर्विषयत्वात्, न चैवं वाच्यं तस्य भ्रान्तत्वं निर्विषयत्वं च कथमिति, भिन्नेष्वभेदाध्यवसायेन प्रवर्त्तमानस्य प्रत्ययस्य भ्रान्तत्वात्, यो ह्यतस्मिंस्तदिति प्रत्ययो भ्रान्तः सः, यथा शुक्तिकायां रजतप्रत्ययः. तथा चायं भिन्नेष्वभेदाध्यवसायी शाब्दप्रत्यय इति स्वभावहेतुः न चायमसिद्धो हेतुः, वस्तुभूतस्य
25 सामान्यस्य ग्राह्यस्याभावात्, भावेऽपि तस्य भेदेभ्यो भिन्नत्वे भिन्नेषु भावेषु अभेदाध्यवसायस्य भ्रान्तित्वम्, न ह्यन्येनान्ये समाना युक्ताः, तद्वन्तो हि ते स्युः । यद्यभेदस्तर्हि सर्वस्यैव विश्वस्यैकत्वापत्त्या परमार्थत एकमेव वस्त्विति तत्र सामान्यप्रत्ययो भ्रान्तिरेव स्यात्, न हि सम्भवत्येकस्मिन् समानप्रत्ययः, तस्य भेदनिबन्धनत्वात् तथा च सिद्धे भ्रान्तत्वे निर्विषयत्वमपि सिद्धम्, स्वाकारार्पणद्वारेण जनकस्य कस्यचिदर्थस्य विषयभूतस्याभावात् ।

किञ्च सर्वे शब्दा न परमार्थतो वस्त्वभिधायकाः, तेषु परमार्थतः कृतसमयत्वाभावात्, ये
यत्र परमार्थतः कृतसमया न भवन्ति न ते परमार्थतस्तमभिदधति, यथा सास्नादिमति
पिण्डेऽश्वशब्दोऽकृतसमय इति व्यापकानुपलब्ध्या शाब्दप्रत्ययस्य निर्विषयत्वसिद्धिः, कृत-
समयत्वेनाभिधायकत्वस्य व्याप्तत्वात्, अन्यथाऽतिप्रसङ्गात्। न च हेतुरयमसिद्ध इति वाच्यम्,
स्वलक्षणस्य जातेस्तद्योगस्य जातिमतो बुद्ध्याकारस्य वा वस्तुतः शब्दार्थतया व्यवस्थापयितु- 5
मशक्यत्वात्, तत्र समयासम्भवात्, सांवृतस्य तु शब्दार्थत्वं न निषिध्यतेऽतो न स्ववचन-
विरोधः प्रतिज्ञायाम्[2], किन्तु यः तात्त्विकत्वं धर्मः परैस्तत्रारोप्यते तस्यैव निषेधः क्रियते न
तु शब्दवाच्यस्य धर्मिणः, न हि तावत्स्वलक्षणे शब्दस्य सङ्केतस्सम्भवति व्यवहारार्थमेव
सङ्केतस्य क्रियमाणत्वात् संकेतव्यवहारकालव्यापके एव समयस्य कर्त्तव्यतया स्वलक्षणस्य
तावत्कालव्यापकत्वासम्भवात्, देशादिभेदेन हि शाबलेयादिव्यक्तयः परस्परमत्यन्तव्या- 10
वृत्ता अतो न ताः सकेतव्यवहारकालव्यापिन्यः, तस्मादेकत्र कृतसमयस्य पुंसोऽन्यैर्व्यव-
हारो न स्यात् । न वाऽनैकान्तिकत्वं विपक्षे बाधकसत्त्वात्, अकृतसमयोऽपि शब्दो यदि
तदर्थप्रतिपादकः स्यात्तदा गोशब्दोऽप्यश्वं प्रतिपादयेदिति । अशक्यक्रियत्वाच्च न स्वलक्षणे
समयः । उत्पत्त्यनन्तरविनाशिषु भावेषु सकेतः क्रियमाणो यद्यनुत्पन्नेषु क्रियेत तदा न
परमार्थतः[3] समयः स्यात्, असतः सर्वोपाख्यारहितस्याधारत्वानुपपत्तेः । यद्युत्पन्ने तर्हि 15
प्रथमं तत्रानुभवोत्पत्तौ सत्यां तत्पूर्वकशब्दस्मरणे सति सकेतो भवेत्, स एव न सम्भवति,
शब्दस्मरणकाल एव स्वलक्षणस्य चिरविनष्टत्वात् । न च सादृश्यात्समयक्रियाकालभाविनि
क्षणे ऐक्यमध्यवस्य समयः क्रियत इति वाच्यम्, सादृश्यस्य विकल्पबुद्ध्याऽध्यारोपि-
तत्वेन तस्य शब्दैः प्रतिपादनेऽपि स्वलक्षणस्यावाच्यत्वतादवस्थ्यात् । एवं स्वलक्षणवज्जा-
तितद्योगजातिमत्स्वपि न समयसम्भवः, जातेस्तद्योगस्य समवायस्य च निषिद्धत्वात्, 20
तयोरभावे जातिमतोऽप्यसम्भवात्, तद्गतश्च स्वलक्षणात्मकत्वात्तत्र च दोषस्योक्तत्वात् ।
नापि बुद्ध्याकारे सकेतः सम्भवति, तस्य बुद्ध्यभिन्नत्वेन बुद्धिस्वरूपवत् प्रतिपाद्यमर्थं
बुद्ध्यन्तरं प्रति वाऽननुगततया सकेतव्यवहारकालाव्यापकत्वात् । तस्य व्यवहारकालान्वयि-

---

१ पररूपं हि स्वप्रतिभासेन यया बुद्ध्या संव्रियते यथार्थमप्रकाशनात् सा काल्पिका बुद्धिः संवृतिः, तया यद्व्यवस्थापितं रूपं तत्सांवृतमुच्यते संवृतिसत्त्वं तदेव, न पारमार्थिकं, तस्यासत्त्वात् ॥ २ एतान् स्वलक्षणजात्यादीन् शब्देनाप्रतिपाद्यैषामशब्दार्थत्वं प्रतिपादयितुमशक्यम्, तत्प्रतिपिपादयिषया च शब्देन स्वलक्षणादीन्युपदर्शयता शब्दार्थत्वमेषामभ्युपगतं स्यात्, पुनश्च तदेव प्रतिज्ञया प्रतिषिद्धमिति स्ववचनव्याघातः स्यात्, न हि सर्वथाऽस्माभिः शब्दार्थापवादः क्रियते, तस्याबालगोपालमपि प्रतीतत्वात्तर्हि किं क्रियत इत्याशयेनाह किन्त्विति ॥ ३ अत्र परमार्थत इति पदं गोत्रत्वव्यावृत्तये, तेनाजातेऽपि पुत्रादौ समयदर्शनान्न दृष्टविरोधः, तस्य विकल्पनिर्मितार्थविषयत्वेनावास्तविकत्वात् ॥

त्वेऽपि न तत्र व्यवहर्तॄणां समयो युक्तः, अस्माच्छब्दादर्थक्रियार्थी अर्थक्रियायोग्यार्थान् विज्ञाय प्रवर्त्ततामित्यभिप्रायेण हि व्यवहर्तृभिर्वाचका ध्वनयो नियोज्यन्ते, न चासौ विकल्पो बुद्ध्याकारोऽभिप्रेतशीतापनोदनादिकार्यं तदर्थिनां सम्पादयितुमलम्, तदनुभवोत्पत्तावपि तदभावात्। तस्माद्वाच्यवाचकयोरभावादागमस्य परमार्थ एव नास्तीति कथं समयपरमार्थ-
5 विस्तरेत्यादि इति चेन्नैवम्, शाब्दप्रत्ययस्य भ्रान्तत्वसाधनायोपन्यस्तस्य भिन्नेष्वभेदाध्यवसायित्वहेतोरसिद्धेः, तत्र तस्यानुपपत्तेः, गौर्गौरित्यबाधितप्रत्ययविषयतया वस्तुरूपस्याभिन्नस्य सामान्यस्य सिद्धत्वात्। अबाधितप्रत्ययविषयस्याप्यभावे विशेषस्याप्यभावः स्यात्, अबाधितप्रत्ययविषयताव्यतिरिक्तस्यान्यस्य तद्व्यवस्थापकस्य तत्राप्यभावात्। पुरस्थे गोवर्गे व्यावृत्ताकारा बुद्धिर्यथोपजायते तथैवानुगताकारेणापि तस्या उपजायमानत्वात्, तस्याश्च
10 तदात्मकवस्तुव्यतिरेकेणासम्भवात्, अबाधितप्रत्ययस्य विनापि विषयसद्भावे ततो वस्तुव्यवस्थाऽभावप्रसक्तेः। न चानुगताकारत्वं बुद्धेर्बाधितम्, सर्वत्र देशादावनुगतप्रतिभासस्यास्खलद्रूपस्य तथाभूताकारव्यवहारहेतोर्दर्शनात्। तस्मादिन्द्रियान्वयव्यतिरेकानुविधायिनी व्यावृत्ताकारानुभवांशानधिगतमनुगताकारमवभासयन्ती अनुभूयमाना बुद्धिर्वस्तुभूतं सामान्यं व्यवस्थापयति। न च नियतशाबलेयादिव्यक्तिभिन्नतया साधारणरूपस्यापरस्य
15 भेदेनाप्रतिभासनाद्व्यक्त्यभिन्नं भिन्नं वा सामान्यमभ्युपगन्तुं न युक्तमिति वाच्यम्, वातातपादीनां समानदेशसमानेन्द्रियग्राह्याणामपि प्रतिभासभेदादन्यस्य भेदव्यवस्थापकस्याभावाद्व्यक्तिजात्योरपि तत्सद्भावात्, शाबलेयादिव्यक्तिप्रतिभासाभावेऽपि बाहुलेयादिव्यक्तिप्रतिभासे गौर्गौरिति साधारणावभासस्य तद्व्यवस्थापकस्य सद्भावात्। एकान्ततो व्यक्त्यभेदे तु सामान्यस्य व्यक्तिस्वरूपस्येव तदभिन्नसाधारणरूपस्यापि व्यक्त्यन्तरे प्रतिभासो
20 न स्यात्, प्रतिभासते च व्यक्त्यन्तरेऽपि, अतो न कथं भिन्नसामान्यस्य सद्भावः। न च व्यक्तिदर्शनसमये जातेर्बुद्धिग्राह्याकारतया स्वेन रूपेण व्यक्तिभिन्नतया बहिर्नावभास इति वाच्यम्, अस्य व्यक्त्याकारेऽपि समानत्वात्, नापि केवलं गौर्गौरिति बुद्धिरेव तुल्याकारा बाह्यनिमित्तनिरपेक्षा प्रतिभासत इति युक्तं वक्तुम्, तथा सति तद्बुद्धेः प्रतिनियतदेशकालत्वं न स्यात्, न हि तत्र व्यक्तयो निमित्तम्, तासां भेदरूपत्वेनाविशिष्टत्वात्,
25 अश्वादीनामपि तद्बुद्धिनिमित्तत्वापत्तेः। न च तासामविशिष्टत्वेऽपि यास्वेव तादृशीबुद्धिरुदेति ता एव तां जनयितुं समर्था इति नाश्वादेः गौर्गौरितिप्रत्ययनिमित्तत्वमिति वाच्यम्, तथा सति स्वलक्षणस्याप्यभावप्रसङ्गात्, सामान्यलक्षणनिमित्तमन्तरेणापि प्रति-

१ तथा चायमनुगतप्रतिभासः बहिर्निमित्तसापेक्षः, प्रतिनियतदेशकालाकारत्वात्, विशेषप्रतिभासवदिति मानम्, व्यक्तेरेव निमित्तत्वे अश्वादेरपि गौर्गौरिति बुद्धिनिमित्तत्वानुषङ्ग इति ॥

नियतदेशकालतया साधारणबुद्धेरिव विशेषलक्षणनिमित्तव्यतिरेकेणापि तथाविधासाधारणबुद्धेस्सम्भवात् । परेणापि हि वक्तुमेवं शक्यं यद्भेदाविशेषेऽपि एकमेव ब्रह्मादिस्वरूपं प्रतिनियतानेकनीलाद्याभासनिबन्धनं भविष्यतीति किमपररूपादिस्वलक्षणपरिकल्पनयेति । यदि रूपादिस्वलक्षणमन्तरेणापि रूपाद्याभासज्ञानस्य सम्भवे प्रवृत्त्यादिलक्षणो व्यवहारो न स्यात्, अपरस्यार्थक्रियानिबन्धनार्थव्यवस्थापकस्याभावात्, अतस्स्वलक्षणाकारज्ञानस्य तन्निमित्तत्वेन तद्व्यवस्थापकत्वमिति चेत्, न, सदृशाकारज्ञानेऽप्यस्य समानत्वात्, अबाधितस्समानाकारप्रत्ययो हि तथाभूतविषयमन्तरेणोपजायमानो मिथ्यारूपः स्यादिति विशेषप्रत्ययस्येवाबाधितसमानप्रत्ययस्यापि सामान्यमालम्बनभूतं निमित्तमभ्युपगन्तव्यमिति सामान्यमस्ति वस्तुभूतम्, अन्यथा समानप्रतिभासायोगात् । ननु यदि सामान्यमनुगताकारज्ञानजनकैकस्वभावं तर्हि सर्वदा तज्ज्ञानं स्यात्, तस्यानपेक्षस्यापेक्षायोगात्, सहकार्यपेक्ष- 10 जनकत्वे वा तत्कृतोपकारस्य ततोऽभेदे उपकारस्य तत्कार्यत्वेन तदभिन्नं सामान्यमपि कार्यं स्यात्, भेदे वा सम्बन्धासिद्धिः, नित्यानाञ्चैककार्यकर्तृत्वरूपं सहकारित्वमपि न सम्भवति, तदवस्थाभाविस्वभावस्य प्रागूर्ध्वञ्च सत्त्वात्, असत्त्वे त्वनित्यत्वम् । कार्याजनकस्वभावत्वे तु न कदापि कार्यमुत्पादयेत्, अजनकस्वभावस्यान्यसन्निधानेऽप्यजनकत्वात्, साधारणज्ञानेऽपि सामान्यस्याप्रतिभासप्रसङ्गश्च, जनकाकारार्पकस्यैव ज्ञानविषयत्वात्, एवञ्च ज्ञानमप्य- 15 जनयदवस्त्वेव स्यात्, अर्थक्रियाकारित्वलक्षणत्वाद्वस्तुनः, तस्मात्सामान्यस्य नित्यत्वेन तद्विषयस्य ज्ञानस्य बाध्यमानतयाऽबाधितविषयत्वमसिद्धम् । किञ्च सामान्यस्य सर्वसर्वगतत्वे व्यक्त्यन्तरालेऽप्युपलब्धिप्रसङ्गः, न चाभिव्यक्तिहेतुव्यक्त्यभावात्तत्रानुपलम्भ इति वाच्यम्, प्रथमव्यक्तिप्रतिभासवेलायां तस्याभिव्यक्तत्वात्, अन्तरालेऽनभिव्यक्तत्वेऽभिव्यक्तानभिव्यक्तस्वभावभेदादनेकत्वापत्त्या सामान्यरूपताभङ्गापत्तिर्भवेत्, तस्मादवश्यमन्तराले तदुपलम्भ- 20 प्रसङ्गः, ततश्चोपलब्धिलक्षणप्राप्तस्य तत्रानुपलम्भादसत्त्वमिति तन्न सर्वसर्वगतम्, यदि तु स्वव्यक्तिसर्वगतं तदित्युच्यते तर्हि प्रतिव्यक्ति तस्य परिसमाप्ततया व्यक्तिस्वरूपतेव भेदः स्यात् । अभेदे चैकव्यक्तावभिव्यक्तस्य ग्रहणेऽन्यव्यक्तिस्थस्यापि तस्य प्रतिभासप्रसङ्गेन तदाधारप्रतिभासमन्तरेण तदाधेयप्रतिभासानुपपत्त्या सर्वव्यक्तीनां युगपत् प्रतिभासप्रसङ्गः । किञ्चैकत्र घटादौ समवेतं सामान्यमन्यत्रोत्पन्ने घटे निष्क्रियत्वान्न याति, न च तदुत्पत्तिपूर्वं 25 तत्रैवासीत् देशस्यापि तस्य तद्वत्ताप्रसङ्गात्, नाप्येकत्रांशेन वर्त्तमानमपरत्र व्यक्त्युत्पत्तावंशेन सम्बध्यते, सर्वसर्वगतत्वाभ्युपगमात् । नापि पूर्वव्यक्तिं परित्यज्यात्र सम्बध्यते पूर्वव्यक्तेरघ-

टादिरूपताप्रसङ्गादिति कृत्स्नैकदेशवृत्तिविकल्पानुपपत्त्या व्यक्तिभिन्नत्वे तस्य कथमबाधितप्रत्ययविषयत्वात् सत्त्वम् । व्यक्तिस्वभावत्वे च व्यक्तिवदुत्पादविनाशयोगित्वेन तस्यासाधारणरूपत्वं स्यात्, असदेतत् यदि सामान्यं नित्यं व्यापकमेकान्तेन व्यक्तिभ्यो भिन्नमभिन्नं वा स्यात्तदा निरुक्तबाधकानुषङ्गः स्यात्, यदा तु सदृशपरिणामलक्षणं सामान्यं
5 विसदृशपरिणामलक्षणस्तु विशेषस्तदात्मकञ्चैकं वस्तु तदाऽत्यन्तभेदाभेदपक्षभाविदोषानुषङ्गोऽनास्पद एव । न च साधारणं रूपमसाधारणस्वरूपाद्भिन्नं, तदाकारपरिहारेणावस्थितस्वरूपत्वात्, यद्यदाकारपरिहारावस्थितस्वरूपं तत्ततो भिन्नं यथा घटस्वरूपपरिहारावस्थितस्वरूपः पट इत्यनुमानेन साधारणासाधारणस्वरूपस्य एकत्वविरोधोऽत्रापि बाधकः, अन्यथा न किञ्चिदपि भिन्नं स्यात्, अन्यस्य भेदव्यवस्थापकस्याभावा-
10 दिति वाच्यम्, समानासमानाकारतया शाबलेयादेः परिस्फुटप्रतिपत्तौ बहिः प्रतिभासमानस्यैकत्वेन विरोधासिद्धेः, अन्यथा ग्राह्यग्राहकसंवित्तित्रितयाध्यासितं संवेदनं कथमेकं स्यात्, परस्परविरुद्धनीलाद्यनेकाकारं चित्रज्ञानं वा कथमेकमभ्युपगम्येत । यदीदमपि अनेकाकारमेकं न स्यात्तर्हि ग्राहग्राह्यकाकारादिविविक्तं तद् भवेत्, तथैव स्वसंवेदनेऽपि तदवभासेत चेत्तदा कचिदपि ज्ञाने ग्राह्यग्राहकाकारप्रतिभासाभावेनाप्रवृत्तिकं जगत्स्यात् । किञ्च
15 द्विविधो विरोधः, सहानवस्थानलक्षणः परस्परपरिहारस्थितिलक्षणश्च, स द्विविधोऽप्येकोपलम्भेऽपरानुपलम्भाद्व्यवस्थाप्यते साधारणासाधारणाकारयोऽस्तु प्रत्यक्षेण भेदाभेदात्मकतया प्रतीतेः कथं विरोधः, तद्रूपातद्रूपाकारते हि तयोर्भेदाभेदौ तथाऽवभासनमेव च भेदाभेदग्रहणमिति कथं विरोधादिदूषणम् । न च तयोः परस्परपरिहारस्थितिलक्षणता सम्भवति, अव्यवच्छेदरूपतया प्रत्यक्षे प्रतिभासनात् । न च सामान्यविशेषयोराकारभे-
20 देऽप्यभेदेऽन्यत्रापि *अन्यतोऽन्यस्यान्यत्वं न स्यादिति* वाच्यम्, *सामान्यविशेषवत्तादात्म्येनान्यत्र प्रत्यक्षतोऽग्रहणात्*, ग्रहणे वा भवत्येवाकारभेदेऽप्यभेदः । आकारनानात्वे सामान्यविशेषयोरभेदप्रतिपत्तिर्मिथ्येति चेन्न तथाविधप्रत्यक्षे बाधकाभावात् । सामान्यविशेषौ भिन्नौ स्वभावभेदात्, घटपटादिवदित्यनुमानं बाधकमिति चेन्न प्रत्यक्षेण बाधितत्वादत्रानुमानाप्रवृत्तेः दृष्टान्तस्य साधनविकलत्वाच्च, घटादेरपि केनचिदाकारेण सदृशतयाऽभेदात्तद्विरो-
25 धिनः सर्वथा स्वभावभेदस्याभावात् । एवं सामान्यविशेषयोर्भेद एव, भिन्नयोगक्षेमत्वात्, हिमवद्विन्ध्ययोरिवेत्यपि अनुमानमयुक्तं व्याप्त्यसिद्धेः, विपक्षेण सह साक्षादविरोधिनः भिन्न-

१ तथा च ये यत्र नोत्पन्ना नापि प्रागवस्थायिनो नापि पश्चादन्यतो देशादागमिनस्ते तत्र नोपलभ्यन्ते नापि वर्तन्ते यथा शशशिरसि विषाणम्, तथा च सामान्यं तच्छून्यदेशोत्पादवति घटादिके वस्तुनीति व्यापकानुपलब्धिः, न चायमनैकान्तिको हेतुः तत्र वृत्त्युपलम्भयोः प्रकारान्तराभावादिति बोध्यम् ॥

योगक्षेमत्वस्य व्यतिरेकानिश्चयात् । न च साध्याभावस्य साधनविरुद्धैकयोगक्षेमत्वव्याप्त-त्वात् पारम्पर्येण विरोधः सिद्ध एवेति वाच्यम्, अत्रापि अभेदलक्षणहेतोः एकयोगक्षेमत्व-रूपसाध्यविरोधिना विरोधासिद्धेः । न च भिन्नयोगक्षेमस्याप्यभेदाभ्युपगमे न कश्चिदपि भेदः सिद्ध्येदिति विश्वमेकं स्यादिति वाच्यम्, भिन्नयोगक्षेमत्वैकयोगक्षेमत्वाभ्यां भेदाभेद-व्यवहारव्यवस्थाया असिद्धेः किन्तु भेदाभेदप्रतिभासादेव, अतः सामान्यविशेषयोः सहो- 5 त्पादविनाशाभावेऽपि अभेदप्रतिभासादभेदो न विरुद्ध इति वस्तुभूतसामान्यसद्भावे बाधका-भावः । न च यदेव शाबलेयव्यक्तौ सदृशपरिणतिरूपं सामान्यं तदेव बाहुलेयव्यक्ता-वपि, व्यापकस्यैकस्य सर्वगोव्यक्त्यनुयायिनः तस्यानभ्युपगमात्, तदनभ्युपगमश्च शाबले-यादिव्यक्तीनां बाहुलेयादिव्यक्तिसदृशतया प्रतिभासेऽपि एकानुगतसामान्यक्रोडीकृत-त्वेनाप्रतिभासनात्, तस्मात्समानासमानपरिणामात्मनः शाबलेयादिवस्तुनोऽबाधिताकार- 10 प्रत्यक्षप्रतिपत्तौ प्रतिभासनाद्विशेषवन्न सामान्याभावः । ननु सजातीयविजातीयव्यावृत्तं निरंशं वस्तु तत्सामर्थ्यभाविनि च प्रत्यक्षे तत्तथैव प्रतिभाति, तदुत्तरकालभाविनस्तु विकल्पा अवस्तुसंस्पर्शिनः व्यावर्त्यवस्तुबलेन भिन्नभिन्नव्यावृत्तिनिमित्तान् सामान्यभेदान् व्यावृत्ते वस्तुन्युपकल्पयन्तः समुपजायन्ते, अतो न तद्वशात्तद्व्यवस्था युक्ता अतिप्रसङ्गात्, एवञ्च सर्वे भावाः स्वभावतः स्वभावपरभावाभ्यां व्यावृत्ताः, स्वस्वभावव्यवस्थितेरित्यनुमानेन सजा- 15 तीयविजातीयव्यावृत्तनिरंशवस्तुसिद्धिरिति चेन्मैवम्, स्वसाध्येन हेतोर्व्याप्त्यसिद्धेः, न ताव-दनुमानेन तत्सिद्धिः सर्वभावानां प्रत्यक्षाविषयत्वेन धर्म्यसिद्ध्याऽनुमाया अप्रवृत्तेः । साध्यहे-त्वोरविनाभावस्य सर्वोपसंहारेणानुमानान्तरेण साधनेऽनवस्थानात् । नापि प्रत्यक्षेण त-त्सिद्धिः, तस्य सन्निहितविषयग्राहकत्वेन देशादिविप्रकृष्टाशेषपदार्थालम्बनत्वानुपपत्तेः । न च प्रत्यक्षेण पुरोवर्त्तिषु भावेषु भेदेन साध्यलक्षणेन सह हेतोः सर्वोपसंहारेण व्याप्तिं प्रतिपद्यत 20 इति वाच्यम्, अध्यक्षस्य यत्रैव स्वव्यापारानुसारिस्वोत्तरविकल्पजनकत्वं तत्रैव तस्य प्रा-माण्येन सर्वतो व्यावृत्तात्मनि तद्बलेन विकल्पानुत्पत्तेः, सर्वदा विकल्पस्यानुवृत्तव्यावृत्ता-काराध्यवसायिन एवोत्पत्तेः, अन्यथा सजातीयाद्भेद इत्यभिधानानर्थकत्वापत्तेः । किञ्च क्षणि-कत्वानुमानमपि व्यर्थं स्यात्, अक्षणिकादिव्यावृत्तेः स्वलक्षणानुभवजन्यविकल्पेनाध्यवसा-यात्, तथा सर्वतो व्यावृत्ताकाराध्यवसायिनां विकल्पानां स्वलक्षणमपि विषयं स्यात्, 25 यथाह्यध्यक्षं प्रतिनियतस्वरूपस्यानुकरणात्स्वलक्षणविषयं तथैव सर्वतो व्यावृत्ताकारग्राही विकल्पोऽपीति सोऽपि स्वलक्षणविषयः कुतो न भवेत् । तस्याविशदावभासित्वान्न तथेति चेन्न दूरे वर्त्तमानवृक्षादिस्वरूपविषयस्याध्यक्षस्यापि अविशदावभासितया स्वलक्षणविषयत्वा-भावप्रसङ्गात् । न चेष्टापत्तिः अयथार्थाकारग्राहित्वेन तस्य भ्रान्तत्वादिति वाच्यम्, तद-

ध्यक्षस्यानधिगतार्थगन्तृत्वेनाविसंवादित्वेन च प्रमाणान्तरत्वप्रसक्तेः, न च तस्य प्रत्यक्षता, भ्रान्तत्वाभ्युपगमात्, नानुमानत्वमलिङ्गजत्वात्, नापि विकल्परूपता, तत्कारणं स्वलक्षणमन्तरेणापि बाह्यार्थसन्निधिबलतस्तस्योपजायमानत्वात् । न चाध्यक्षविषयस्वलक्षणाध्यवसायित्वात्तस्याप्रामाण्यम्, तथाभ्युपगमेऽध्यक्षेक्षितशब्दविषये क्षणिकत्वानुमानस्याप्यप्रामाण्यापत्तेः । न चानुमानमनिश्चितार्थाध्यवसायतोऽनधिगतार्थगन्तृत्वात् प्रमाणम्, निश्चितो ह्यध्यक्षविषयः, क्षणिकत्वस्य चानिश्चयान्नाध्यक्षविषयत्वमिति वाच्यम्, तथा सति क्षणिकत्वानुमानवद्विकल्पस्यापि प्रामाण्यं स्यात्, अनिश्चितार्थाध्यवसायत्वस्योभयत्र समानत्वात् । यत्रांशे प्रत्यक्षं निश्चयोत्पादनसमर्थं तत्र प्रतिभासाविशेषेऽपि विकल्पो न प्रमाणम्, प्रत्यक्षगृहीतांशग्राहित्वात्, अनुमानन्तु प्रमाणम्, अगृहीतार्थाधिगन्तृत्वात्, तद्विषयेऽर्थेऽध्यक्षस्य निश्चयोत्पादनासामर्थ्यादिति चेन्न, एकस्यैवानुभवज्ञानस्य स्वार्थविषयकनिश्चयोत्पादने विरोधेन सामर्थ्यासामर्थ्यानुपपत्तेः । नापि समारोपव्यवच्छेदकत्वेनानुमानं प्रमाणं न पुनः प्रत्यक्षपृष्ठभावी विकल्प इति वक्तव्यम्, अनुमानस्य समारोपव्यवच्छेदकत्वानुपपत्तेः क्षणिके ह्यक्षणिकज्ञानं समारोपः, तच्चानुमानप्रवृत्तेः प्रागिव पश्चादप्यविकलमेवेति । पश्चादस्खलद्रूपेण समारोपस्याप्रवृत्तेरवैकल्यमिति चेत्, न, तदा स्खलद्रूपेरक्षणिकप्रत्ययात् स्वपुत्रादौ प्रवृत्तिर्न स्यात् । किञ्च समारोपव्यवच्छेदः अभावरूपत्वेनाहेतुकः, स कथमनुमानेनान्येन वा क्रियते ज्ञाप्यते वा, अभावेन सह कस्यचित्सम्बन्धात्तथा तस्याप्रतिपत्तेश्च, अतो न क्षणिकसमारोपाव्यवच्छेदकत्वात् क्षणिकानुमानस्य प्रामाण्यम् । तस्मादनुमानप्रामाण्यवादिना सर्वोपसंहारेण व्याप्तिग्राहकः प्रत्यक्षप्रभवः स्वविषयाविसंवादी विकल्पः प्रमाणयितव्यः, स चास्मद्दर्शने आभिनिबोधिकं ज्ञानमिति प्रसिद्धः, अस्पष्टतया श्रुतं वा ऊहशब्दवाच्यतया न प्रत्यक्षपरोक्षप्रमाणद्वयव्यतिरिक्तं तत् प्रमाणान्तरम् । प्रत्यक्षानुमानवादिनान्तु व्याप्तिग्राहकं प्रमाणान्तरं प्रसक्तम्, ताभ्यां व्याप्तिग्रहणासम्भवात् । न च प्रतिबन्धग्राहकस्य प्रमाणस्य स्वार्थे व्यभिचारस्तत्र प्रतिबन्धाभावादिति वाच्यम्, तत्र योग्यतालक्षणप्रतिबन्धसद्भावात्, प्रत्यक्षेऽपि हि स्वार्थपरिच्छेदो योग्यतात एव, न तु तदुत्पत्त्यादेः, अन्यथा इन्द्रियादेरपि तत्परिच्छेद्यत्वप्रसङ्गात् । न च योग्यतायाः प्रतिबन्धसाधकत्वेऽनवस्था-

---

१ जात्यादेरपोहरूपस्य व्यक्तौ आलोचनाज्ञानेन गृहीतार्थो गृहीतत्वात्तद्विषयं सविकल्पकं गृहीतग्राहित्वात्स्मृतिवन्न प्रमाणम्. न च प्रथमं सम्मुग्धरूपेणालोचनाज्ञानेनाधिगतं न हि निश्चितरूपेण, उत्तरोत्तरस्तु निश्चयः प्रमाणं समारोपव्यवच्छेदविषयत्वादनुमानवदिति वाच्यम्. प्रवृत्तसमारोपव्यवच्छेदेनैवानुमानस्य प्रमाणत्वात्, न तु समारोपविषयव्यवच्छेदमात्रेण स्मृतेरपि प्रामाण्यप्रसङ्गात् । दर्शनानन्तरभाविनो गवादेर्विकल्पस्य तु न प्रवृत्तसमारोपव्यवच्छेदकता अन्तरा समारोपस्योपलब्धिलक्षणप्राप्तस्यानुपलम्भतोऽनुत्पन्नत्वादिति बौद्धाः ॥

प्रसङ्गः, लिङ्गवदस्य प्रतिबन्धनिश्चयापेक्षया गमकत्वाभावात्, प्रत्यक्षवत् योग्यतयैव स्वार्थ-
प्रकाशनात् स्वहेतोरेव नियतार्थप्रकाशनयोग्यस्योत्पत्तेः । न च स्वलक्षणाध्यक्षपृष्ठभाविनो
विकल्पस्याविशदावभासित्वान्न सामान्यग्राहकत्वमिति वाच्यम्, सदृशेष्वर्थेषु विस्फारिता-
क्षस्य पुरःस्थितेषु स्फुटं तस्यावभासनात् । सविकल्पाविकल्पयोर्युगपद्वृत्तेस्तयोरेकतां विमूढोऽ
ध्यवस्यति, अतः स्पष्टतावभासस्तत्र संलक्ष्यत इति चेन्न युक्त्याऽनुपपत्तेः, किं तयोरेक- 5
विषयत्वादेकत्वाध्यवसायः, उतान्यतरेणान्यतरस्य विषयीकरणात्, किं वाऽपरस्येतरत्राध्या-
रोपात् । नाद्यः, विकल्पस्य पूर्वानन्तरप्रत्ययग्राह्यस्वसमानकालवस्तुविषयत्वात् । न द्वितीयः
समानकालभाविनोरपारतंत्र्यात् । नान्त्यः, अविषयीकृतस्यान्यस्यान्यत्राध्यारोपासम्भवात् ।
न च तदुत्तरभाविज्ञानं तौ विषयीकृत्यापरमन्यत्राध्यारोपयतीति वाच्यम्, तयोर्विवेकेनोप-
लम्भप्रसङ्गात्, तस्मान्नैकत्वाध्यवसायः । किञ्च ज्ञानयोर्युगपद्वृत्तित्वमप्यसिद्धम्, तयोरेक- 10
दोत्पत्तौ हि युगपद्वृत्तिः स्यात्, अर्थेन्द्रियादिलक्षणैकसामग्रीविशेषाद्विकल्पाविकल्परूपकार्य-
द्वयोदयासम्भवात् सामग्रीभेदाद्धि तज्जन्यकार्यस्य भेदो युक्तोऽन्यथा स भेदो निर्हेतुकः
स्यात् । न च यस्य व्यतिरेकात्कार्यस्य व्यतिरेको दृष्टस्तत्र तस्य सामर्थ्यनिर्णयः, अर्थादिव्य-
तिरेके च न विकल्पस्य व्यतिरेकः, अर्थेन्द्रियाद्यभावेऽपि विकल्पसमानजातीयस्यातीता-
दिविषयविकल्पस्योदयात्, अतोऽर्थेन्द्रियादेरविकल्पोत्पादन एव सामर्थ्यनिश्चयादस्येव 15
सामग्रीभेद इति कार्यभेदोऽपि युक्त एवेति वाच्यम्, अविकल्पदर्शनस्यापि अनर्थजन्यत्व-
प्रसक्तेः, तैमिरिकचक्षुषोऽर्थाभावेऽपि कस्यचिदविकल्पस्योत्पत्तिदर्शनात्, तस्मात्सिद्धमक्ष-
जन्यस्य विकल्पस्यार्थसाक्षात्करणलक्षणं वैशद्यम् । तथा एकस्यैव विकल्पस्यार्थग्राहिण उप-
लभ्यमानतया तदपरं दर्शनं नास्ति यद्व्यापारानुसारिणो विकल्पस्य गृहीतग्राहितया भवद्भि-
रप्रामाण्यं प्रतिपाद्येत । न च सादृश्यात्तयोर्भेदेनानुपलक्षणमिति वाच्यम्, सन्तानतद्भिन्न- 20
विषयत्वेन तयोरेकविषयत्वकृतसादृश्याभावात्, ज्ञानत्वेन सादृश्ये नीलपीताकारज्ञानयोरपि
ज्ञानत्वेन सादृश्यात् भेदेनानुपलक्षणप्रसङ्गात्, अतो नाविकल्पकज्ञानसद्भावः । न च
प्रथमेऽक्षसन्निपात एव यदि सविकल्पकं दर्शनं भवेत्तद्ग्राह्यश्चार्थात्मा, तथा सत्यर्थग्रहणाभाव
एव स्यात्, तथाहि सति हि वस्तुदर्शने तत्सन्निधाने दृष्टे ततस्तद्वाचकशब्दस्मृतिः स्यात्,
तत्स्मृतौ तेनार्थं योजयति, तद्योजितञ्चार्थं विकल्पिका बुद्धिरध्यवस्यति, न हि सविकल्पक- 25
प्रत्यक्षवादी शब्दरहितमर्थं पश्यति, स्वाभिधानविशेषणापेक्षा एवार्था विज्ञानैर्व्यवसीयन्त इति
नियमात् । विना तद्दर्शनं न तद्वाचकशब्दस्मृतिः तामन्तरेण च न वचनपरिष्वक्तार्थदर्शन-
मित्यर्थदर्शनाभाव एव प्रसक्त इति वाच्यम्, शब्दसंयोजितार्थग्रहणमेव विकल्प इत्यन-
भ्युपगमात्, किन्तु निरंशक्षणिकानेकपरमाणुविलक्षणस्थिरस्थूलार्थग्रहणं विकल्पः, स च

प्रथमाक्षसन्निपातवेलायामप्यनुभूयते, संहृतसकलविकल्पावस्थायामपि स्थिरस्थूलरूपस्यैव स्तम्भादेर्बहिर्ग्राह्याकारतां दधानस्य प्रतिभासः, न तु निरंशक्षणिकानेकपरमाणुप्रतिभासः, अश्वादिविकल्पकालेऽपि पुरोऽवस्थितस्य गवादेस्तथाभूतस्यैवानुभवविषयतया प्रतिभासः। तस्मादभिलापसंसर्गयोग्यस्थिरस्थूलार्थप्रतिभासं ज्ञानं प्रथमाक्षसन्निपातोद्भवं सविकल्पकं
5 तथाभूतार्थव्यवस्थापकमभ्युपगन्तव्यम्, अन्यथा सकलव्यवहारोच्छेदप्रसङ्गः। अतः साधारणासाधारणरूपे वस्तुनि प्रमाणप्रवृत्तिः नासाधारणात्मनि, निर्विकल्पकस्याप्यसाधारणात्मनि विषये विकल्पानुत्पादकत्वादग्राहकत्वमेव, ग्राहकत्वे तु क्षणिकत्वानुमानस्याप्रामाण्यप्रसक्तिः, तस्मात्स्वस्वभावव्यवस्थितेरिति हेतोर्भेदेन सर्वपदार्थानां प्रत्यक्षेण व्याप्तिग्रहणाभावान्न सर्वभावानां सर्वतो भेदः, तस्मात्सदृशपरिणामलक्षणसामान्यस्याबाधितप्रत्ययविषयत्वेन
10 सत्त्वादसिद्धः स्वस्वभावव्यवस्थितेरिति हेतुरिति स्थितम्। यदुक्तं सर्वे शब्दा न परमार्थतो वस्त्वभिधायकाः तेषु परमार्थतः कृतसमयत्वाभावादित्यादि तदपि न सम्यक्, सामान्यविशेषात्मकस्य वस्तुनः पारमार्थिकस्य सङ्केतव्यवहारकालव्यापिनः प्रमाणसिद्धत्वात्, यद्यपि शाबलेयादयो व्यक्तिविशेषा नानुवर्तन्ते परस्परं तथापि समानपरिणामस्वरूपतया क्षयोपशमविशेषाविर्भूतोहाख्यज्ञाने तथैव प्रतिभासमानाः सङ्केतविषयतामुपयान्त्येव, अगोव्यावृत्तेषु
15 सङ्केतव्यवहारकालव्याप्तिमत्सु भावेष्वगोशब्दव्यावृत्तगोशब्दस्वरूपस्य सङ्केतितत्वात्, देशान्तरे कालान्तरे च ततश्शब्दात्तदर्थप्रतिपत्तिरर्थाव्यभिचारिण्युपजायत एव। एकत्वन्तु शब्दार्थयोः शाब्दप्रतिपत्तावनङ्गमेव, तदन्तरेणापि सङ्केतस्य कर्तुं शक्यत्वात् सार्थकत्वाच्च। न चोदयानन्तरमेव विनाशिषु भावेषूत्पन्नेष्वनुत्पन्नेषु वा न समयः कर्तुं शक्यत इति वाच्यम्, एकान्तेनोदयानन्तरं विनाशित्वस्य भावेष्वसिद्धेः। न च पर्यन्ते वस्तूनां क्षयदर्शनात्ततः
20 प्रागपि तत्स्वभावत्वसिद्धिरिति वाच्यम्, आदौ स्थितिदर्शनादन्तेऽपि तत्स्वभावतायाः सिद्धिप्रसङ्गात्। स्थिरत्वस्यान्तेऽनुपलम्भान्न तत्सिद्धिरिति तु वचः क्षणक्षयस्यादावनुपलक्षणान्न क्षणिकतासिद्धिरित्यनेन प्रतिहतम्, आदौ क्षणिकत्वानुपलम्भः सदृशापरापरोत्पत्तिविप्रलम्भादिति चेन्न क्षणिकत्वस्यैवासिद्ध्या तथाभिधानासम्भवात्। न च कृतकत्वात्तत्सिद्धिः, साध्यसाधनयोर्भेदासिद्ध्या ततस्तत्साधनायोगात्, न हि स्वात्मना स्वात्मनः सिद्धिः। न च तयोर्व्या-
25 वृत्तिभेदाद्भेद इति साम्प्रतम्, कुतो हि तयोर्भेदः, किं स्वतः किं वा व्यवच्छेद्यभेदात्, उतारोपात्, आहोस्वित् बुद्धिप्रतिभासभेदात्, न प्रथमः, स्वतो भेदे भेदस्य वस्तुत्वापत्तेः, न द्वितीयः, अनित्य-

१ इत्थभूत सर्वः शब्द इत्थंभूतस्य सर्वार्थस्य वाचक, इत्थम्भूतस्सर्वोऽर्थ इत्थम्भूतस्य सर्वस्य शब्दस्य वाच्य इत्येवम्भूतात्तर्कात्स्वविषयज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषसहकृतात् सामान्यविशेषात्मकेऽर्थे सामान्यविशेषात्मकस्य शब्दस्य सङ्केत. प्रतिपद्यत इति भाव. ॥

त्वादिव्यवच्छेद्यस्य नित्यादेर्वस्तुनोऽभावेन व्यवच्छेद्याभावाद्भेदासिद्धेः । कल्पितव्यवच्छे-
द्येन व्यवच्छेदभेदाभ्युपगमे तु अन्योन्याश्रयः, तत्र कल्पनाया अपीतरव्यवच्छेदेन क्रिय-
माणतयाऽन्योन्यव्यवच्छेद्येन व्यवच्छेदयोर्व्यवस्थितस्वरूपत्वात् । न तृतीयः, असत्त्वाद्या-
रोपस्य सत्त्वादावभावात्, भावे चानित्यत्ववत् साध्यत्वमनुषज्येत, तत्साधने च तद्धेतोर-
सिद्धविरुद्धानैकान्तिकदोषत्रयानतिवृत्तिर्भवदभिप्रायेण । न चरमः, शब्दत्वादेरपि बुद्धिप्रति- 5
भासभेदेन भेदात् साधनभावः स्यात्, तथा च न कश्चित् प्रतिज्ञार्थैकदेशासिद्धो हेतुः स्यात्,
न च शब्दाच्छब्दत्वस्य न प्रतिभासभेदः, तथा सति धर्मधर्मिव्यवस्थाऽभावप्रसक्तेः । न च
प्रतिभासभेदेऽपि व्यवच्छेद्यभेदाभावाच्छब्दत्वस्य प्रतिज्ञार्थैकदेशत्वम्, तथा सति भावद्रव्या-
भिधायिनोरभिधानयोरपर्यायता न स्यात्, शब्दशब्देन शब्दत्वस्याप्यभिधानात्, अन्यथा
प्रतिज्ञार्थैकदेशतापि न स्यात्, तस्मान्न कृतकत्वानित्यत्वयोः साध्यसाधनभावो भवदभिप्रा- 10
येण, तयोर्भेदाभावात् । वस्तुतस्तयोरभेदेऽपि निश्चयवशाद्गम्यगमकभाव इति कृतकत्वाध्य-
वसायिनिश्चयेन भेदेन निश्चीयमानं कृतकत्वमनित्यत्वस्य गमकमिति चेन्न, वस्तुगतयोर्ययोः
कृतकत्वानित्यत्वयोस्तादात्म्यप्रतिबन्धस्तयोरनिश्चयात्, ययोश्च विकल्पबुद्धिप्रतिभासिनोर्भे-
देन निश्चयस्तयोस्तादात्म्यनिबन्धनगम्यगमकत्वाभावात्, ते हि बुद्ध्यारूढे, अतोऽवस्तुत्वेन
न तयोः प्रतिबन्धः । ननु तयोर्भेद एव काल्पनिकः, न तु वस्तुस्वरूपमपि, शब्दस्वलक्षण- 15
स्याकृतकनित्यव्यावृत्तनिरंशैकस्वभावत्वात्, कृतकत्वादिविकल्पास्तु शब्दस्वलक्षणगतकृत-
कत्वादिभिन्नधर्माध्यवसायिनः तथाभूतस्वलक्षणानुभवद्वारायातत्वेन तत्प्रतिबद्धाः, अतस्त-
त्प्रतिभासिधर्मयोः साध्यसाधनभावोऽव्यभिचारश्च पारम्पर्येण वस्तुप्रतिबन्धादुपपद्यत एवेति
चेन्न, तथाविधस्वलक्षणस्य प्रत्यक्षतोऽसिद्धेः, स्वप्नेऽपि निरंशक्षणिकानेकपरमाणुरूपस्य
तस्यासंवेदनात्, कृतकत्वादिधर्माध्यासितस्य प्रत्यक्षे प्रतिभासमानस्य तस्य चानिरंशत्वात् । 20
न चाऽनुमानलक्षणविकल्पेन तस्य सिद्धिः, प्रतिबन्धासिद्धावनुमानाप्रवृत्तेः । किञ्च साध्य-
साधनयोर्भेदेऽपि न त्वत्पक्षे तयोरविनाभावसाधकं प्रमाणमस्ति । न च विनाशस्य निर्हेतु-
कत्वात् ' भावो विनाशस्वभावनियतः, तद्भावे भावस्यान्यानपेक्षणात्, यथा स्वकार्योत्पा-
दनेऽन्त्यकारणसामग्रीविशेष इत्यादि साधनसद्भावात् प्रकृतसाध्यसाधनयोरविनाभाव इति
वाच्यम्, साधनस्यानैकान्तिकत्वात्, शाल्यङ्कुरोत्पादनेऽनपेक्षमाणानामपि यवबीजादीनां 25
तदुत्पादनसामग्रीसन्निधानदशायां तद्भावनियमाभावात् । यवबीजादौ शाल्यङ्कुरोत्पादनस्व-
भावताविरहात्, तस्य तत्स्वभावापेक्षयाऽनपेक्षत्वमसिद्धमिति चेत्तर्हि कृतकानामपि विनाश-
स्वभावापेक्षत्वात् केषाञ्चित्तत्स्वभावाभावादनपेक्षत्वस्यासिद्धत्वापत्तेः । ननु विनाशितयोप-
लब्धानामर्थानां प्रतिक्षणं विनाशाभावे न स्याद्विनाशप्रतीतिः, द्वितीये क्षणेऽपि भावस्य सद्भावे

सर्वदा सद्भावप्रसङ्गात्, द्विक्षणावस्थायित्वे हि द्वितीयेऽपि क्षणे क्षणद्वयस्थितिस्वभावत्वम्। अन्यथा स्वभावभेदात् क्षणिकत्वप्रसङ्गात्, एवं तृतीयेऽपि क्षणेऽवस्थानं स्यात्, तदापि तत्स्वभावस्य भावात् तथा चतुरादिक्षणेष्वपि। तथा च सत्यासंसारं भावस्य स्थितेरविनाशाद्विनाशप्रतीतिर्न स्यात्, भवति च विनाशप्रतीतिः, अतस्तदन्यथानुपपत्त्या प्रतिक्षणविनाशानुमानं दृश्यात्मकस्य कार्यस्य। अदृश्यात्मनोऽप्याद्ये क्षणे यः स्वभावः प्रागभूत्वा भवनलक्षणः स एव चेद् द्वितीयक्षणेऽपि तर्हि प्रागभूत्वा भावस्य भावात् क्षणिकत्वम्। यदि प्रथमे क्षणे जन्मैव न तु स्थितिः, द्वितीये क्षणे स्थितिरेव न जन्मेत्युच्यते तथापि जन्म तद्वतोः स्थिति-तद्वतोश्चाभेदेन तयोश्च भेदात् प्रतिक्षणमनवस्थायित्वमेव सिद्धम्, परस्परभिन्नस्यापरापर-कालसम्बन्धित्वस्य भावस्वभावत्वादपि प्रतिक्षणमनवस्थायित्वमिति सिद्धं विनाशं प्रत्यनपेक्षत्वं भावस्येति चेन्नैवम्, स्वहेतोरेवानेकक्षणस्थायी भावो भूतक्षणेष्वभवन् वर्त्तमानक्षणेषु तिष्ठन् भविष्यत्क्षणेषु स्थास्यंश्च प्रथमक्षण एव जात इत्यसताप्यनागतादिना कालेन भावस्य विशेष्यत्वमविरुद्धम्, द्वितीयक्षणे कार्यकारिकारणसामर्थ्यवत्, अन्यथा कार्यकारणयोरेकदैवोत्पत्तेरेकक्षणस्थायि जगत् स्यादिति प्रागुत्पत्तेरभूत्वा भावेऽपि भावस्य द्वितीयादिक्षणे सत्त्वान्न क्षणिकत्वम्। न वाऽपरापरकालसम्बन्धेऽपि भावस्यान्यान्यस्वभावत्वम्, परमाणुषट्कसम्बन्धेऽप्येकपरमाणुवत्। न चासम्बन्धः परस्परं परमाणूनामयःशलाकाकल्पत्वादिति वाच्यम्, सम्बन्धस्य प्रतीयमानतया तदभावकल्पनाऽयोगात्। न च सम्बन्ध-कल्पने कृत्स्नैकदेशसम्बन्धविकल्पयोगः, सर्वात्मना हि परमाणूनां सम्बन्धे पिण्डस्याणुमात्रता स्यात्, एकदेशेनाभिसम्बन्धे तेषामेकदेशानां परमाण्वात्मभूतत्वे नैकदेशेनाभिसम्बन्धः, तेषामभावात्। परमाणुभिन्नत्वे तु एकदेशानां परमाणुभिः सर्वात्मना सम्बन्धेऽभेदात्, एकदेशैकदेशिनोरेकदेशाभावान्नैकदेशेनापि सम्बन्धस्तेषाम्, तत्राप्येकदेशकल्पनेऽनवस्थानात्। न च प्रकारान्तरेण सम्बन्धो दृष्टस्तेषां तस्मादनुपलभ्यमानस्यापि परमाण्वसम्बन्धस्य कल्पनेति वाच्यम्, अदृष्टस्यासम्बन्धस्येव सम्बन्धप्रकारान्तरस्यैव कल्पनाप्रसङ्गात्, यतः सर्वात्मना एकदेशेन वा सम्बन्धो नोपपद्यते, अथ च सम्बन्धः प्रतीयते तस्मात्प्रकारान्तरेणैषां सम्बन्ध इति कल्पनाया एव सम्यक्त्वात्, तथा च सति नापि प्रतीतिविरोधः स्यात्। यदि

१ पारतंत्र्यं हि सम्बन्धः सिद्धे का परतंत्रता। तस्मात् सर्वस्य भावस्य सम्बन्धो नास्ति तत्त्वतः॥ परापेक्षा हि सम्बन्धः सोऽसन् कथमपेक्षते। सश्च सर्वनिराशंसो भाव कथमपेक्षते॥ २ अर्थानां सम्बन्धो हि प्रतिभासतेऽबाधिताध्यक्षे, पटो हि तन्तुसम्बद्धः रूपादयश्च पटादिसम्बद्धाः अवभासन्ते, सम्बन्धाभावे तेषां विश्लिष्टताप्रतिभासः स्यात्, अर्थक्रियाघटनं च न स्यात्, परमाणूनां परस्परं सम्बन्धाभावेन जलधारणाद्यर्थक्रियाया अघटनात्। तस्मात् केनाचदंशेन सम्बन्धिनोस्तादात्म्यमतादात्म्यञ्चावश्यमभ्युपेयम्, भावानां प्रतीयमानोऽयं कथञ्चित्प्रत्यासत्तिविप्रकर्षश्च स्वस्वभाव न तु सर्वथा विप्रकर्षः प्रतीयते येन पारतंत्र्यादिप्रयुक्तदोषावकाशो भवेदिति भावः॥

प्रतीतिर्विकल्परूपत्वादारोपितगोचरा सम्बन्धेऽसत्यपि तमादर्शयत्यतो न तस्मात्सम्बन्धव्य-
वस्थेति कथ्यते तर्हि सम्बन्धप्रतीतेर्वैशद्यानुपपत्तिः विकल्पस्याविशदरूपताभ्युपगमात्, न हि
विकल्पाविकल्पयोर्युगपद्वृत्तेरेकत्वाध्यवसायाद्वैशद्यभ्रमः, तथा सति सहभाविनोर्गोदर्शनाश्व-
विकल्पयोरप्येकत्वाध्यवसायात् वैशद्यविभ्रमः स्यात् । न चासम्बद्धैः परमाणुभिस्सम्बन्ध-
ग्राहीन्द्रियज्ञानं जन्यते ततो न दोष इति वाच्यम्, असम्बद्धान् सम्बद्धानिव प्रकाशयतोऽ- 5
ध्यक्षज्ञानस्य भ्रान्तत्वापत्त्या प्रत्यक्षत्वासम्भवात, प्रत्यक्षत्वे च परमाणुसम्बन्धसिद्धिरेव
स्यात्, असम्बद्धानाञ्च परमाणूनां जलधारणाद्यर्थक्रियाकारित्वानुपपत्तेः, वंशादीनामेकदे-
शाकर्षणे परस्परं परमाणूनामसम्बन्धे तदपरदेशाकर्षणस्योपलभ्यमानस्याभावापत्तेश्च, तस्मा-
न्नैकान्ततः प्रतिक्षणविनाशस्यानपेक्षतासिद्धिः । न च क्रमयौगपद्याभ्यामर्थक्रियालक्षणस्य
व्यापकस्याक्षणिकेऽनुपलब्ध्या ततो व्यावर्त्तमानं सत्त्वलक्षणं कृतकत्वं गत्यन्तराभावात् क्षणि- 10
केष्वेवावतिष्ठत इति व्यापकानुपलब्ध्या साध्यसाधनयोरविनाभावसिद्धिरिति वाच्यम्,
नित्यानित्यात्मकस्य भावस्य प्रकारान्तरस्य सद्भावेन व्यापकानुपलब्ध्याऽविनाभावस्यासिद्धेः,
कृतकत्वस्य क्षणिकत्वेनैव व्याप्त्ययोगात, क्षणिकस्वभावापेक्षया कृतकानामपि केषाञ्चिन्मते
उभयात्मकत्वेन क्षणिकस्वभावाभावादनपेक्षत्वहेतोर्भागासिद्धेश्च । विपक्षाद्व्यापकानुपलब्ध्या
व्यावृत्तस्य हेतोरभीष्ट एव साध्याव्यभिचार इति चेन्न, अक्षणिकवादिनाऽक्षणिकाव्यभिचा- 15
रस्याप्येवं वक्तुं शक्यत्वात्, क्रमयौगपद्याभ्यां हि क्षणिकेऽर्थक्रियाविरोधः, एकसामग्र्यन्त-
र्गतयुगपदनेककार्यकारिण एकस्य स्वभावभेदमन्तरेण जनकत्वस्य कार्यभेदस्य वाऽयोगात्
स्वभावभेदे चानेकत्वप्रसङ्गान्नैकस्य युगपदनेककार्यकारित्वम, कारणस्वभावशक्तिभेदं विनापि
उपादानभेदात्कार्यस्य भेदमिच्छता शक्तिभेदोऽभ्युपगत एव, उपादानसहकारिभावेनानेकेषु
कार्येषु वस्तुक्षणस्यैकस्योपयोगाभ्युपगमात्, उपादानत्वसहकारित्वयोः परस्परं भेदात । न 20
चैकत्र योऽयमुपादानभावः स एवान्यत्र सहकारिभाव इति वाच्यम, तथा सति तत्कारणं
सहकारि वा स्यादुपादानं वा, सहकार्युपादानभावयोरभेदात, तद्यद्युपादानं स्यान्न तर्हि कार्य-
भेदः, सर्वं प्रत्युपादानत्वात, यदि तु सहकारि तर्ह्युपादानस्यैवाभावात् तद्भेदात्कार्यभेदो न
स्यात्, तथापि क्षणस्यैकत्रोपादानभाव एवापरत्र सहकारिभाव इति न शक्तिभेद उच्यते तर्हि
अक्षणिकस्याप्येकदैककार्यकारित्वमेवान्यदाऽन्यकार्यकारित्वमिति क्रमेणान्यकार्यकारिणः शक्ति- 25
भेदो न स्यात । न चोपादानभेदादेव कार्यभेदः, गोदर्शनसमयेऽश्वं विकल्पयतः मन-
स्कारलक्षणोपादानभेदाभावेऽपि सविकल्पाविकल्पयोः परेण भेदाभ्युपगमात् । तद्भेदेऽपि च
तदुत्तरकालभाविनोऽनुसन्धानस्याभेदान्नोपादानभेदादुपादेयस्य भेद एव । अतः शक्तिभेदा-

देव भेदः कार्यस्य, शक्तिश्च भिन्नाभिन्ना, शक्तिमतो ग्रहणेऽपि तस्या अग्रहणाद्भिन्ना, कार्यान्यथानुपपत्त्या च तत्रैव प्रतीयमाना सा ततोऽभिन्ना । शक्तिमतश्च शक्तेर्भेदेऽशक्तात् कार्यानुत्पत्तिः, न च शक्तेरेव कार्योत्पादकत्वम्, शक्तिमतोऽकारकत्वेनावस्तुत्वप्रसङ्गात्, न च शक्तिमतोऽपि कारकत्वम्, तस्यासामर्थ्यात् । नापि शक्तियोगात्तस्य शक्तत्वम्, भिन्नशक्त्या
5 योगेऽपि शक्तत्वानुपपत्तेः शक्तेस्तत्रानुपयोगात् । उपयोगाङ्गीकारे तु शक्तितः शक्तिमत उत्पत्तिरभ्युपगता स्यात्, तथा च स्वहेतोरेव शक्तस्योत्पत्तिरभ्युपगन्तव्या किं भिन्नशक्तिकल्पनेन, नापि शक्तिश्शक्तिमतोऽभिन्ना, शक्तिमतो ग्रहेण तद्ग्रहणात् । सर्वतो व्यावृत्तवस्तुवादिनां वस्तुभूतसाधर्म्याभावात् 'अतत्फलसाधर्म्याद्गृहीतामपि तां विप्रलब्धो नाध्यवस्यतीति' वक्तुमशक्यत्वात्, तस्माच्छक्तिशक्तिमतोर्भेदाभेद एव, अबाधिताकारप्रत्ययस्य
10 तथैव विषयत्वात्, निरंशे च क्षणे शक्तिभेदादपि न कार्यभेदो निरंशत्वादेव, तस्मान्न क्षणिकस्याक्रमकारित्वम्, नापि क्रमकार्यकारित्वम्, द्वितीयक्षणे क्षणिकस्याभावात्, अनेककालभाविकार्यकारित्वं ह्येकस्य क्रमकारित्वम्, तच्चैकक्षणस्थायिनि भावे न स्यादेव । क्रमिकाणां क्षणानामपेक्षयाऽक्रमोऽपि क्षणः क्रमकारी भवतीति चेन्न, अक्षणिकस्यापि क्रमवत्सहकार्यपेक्षया क्रमकारित्वसम्भवात् । अक्षणिकस्य स्वतोऽक्रमत्वेऽक्रमेणैव कार्योत्पत्तिः स्यात्,
15 अनाधेयातिशयस्याक्षणिकस्य कालान्तरसहकारिप्रतीक्षाऽयोगादिति चेन्न, क्षणिकस्येवाक्षणिकस्य अनाधेयातिशयस्यापि कार्यकारित्वस्य कालान्तरनियतत्वात्, सहकारित्वं ह्येककार्यकारित्वमतोऽक्षणिकस्य युक्ता सहकारिप्रत्ययापेक्षा । क्षणिकस्यापि हि न सहकारिणि कालान्तरे वाऽतिशयाधायकत्वेनापेक्षा, तस्यानतिशयत्वात् क्षणस्याविवेकाच्च, किन्तु कालान्तरभाव्येककार्यकारित्वेन सहकारिसहायस्यैव च सामर्थ्यात्, अन्यथा सामग्री जनिका
20 न स्यात्, इष्टापत्तौ द्वितीयक्षणापेक्षा न स्यात्, आद्यक्षण एव कार्यस्योत्पत्त्यापत्तेः । परस्परोपकारित्वञ्च सन्तानेष्वेककार्यकारित्वमेव, सहकारिक्षणात् कार्यकारिणः क्षणस्याप्यनुपकारात् सर्वत्रैकार्थकारित्वमेव सहकारित्वम्, अतोऽनुपकारिण्यपि सहकारिणि कालान्तरे वाऽपेक्षासम्भवात् क्रमवत्सहकार्यपेक्षयाऽक्रमस्यापि क्रमकारित्वं किं न स्यात्, तदेवं क्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् ततोऽर्थक्रियालक्षणसत्त्वविशिष्टं कृतकत्वं निवर्त्तमानं गत्य-
25 न्तराभावादक्षणिकात्वकाशमिति साध्यविपर्ययसाधनाद्विरुद्धं स्यात् । एवं शब्दविद्युत्प्रदीपादिचरमक्षणानामन्यत्रानुपयोगेनानर्थक्रियाकारिणामपि कार्यत्वेनानैकान्तिकं स्यात्, न च तेषामन्यत्रानुपयोगेऽवस्तुत्वादकार्यत्वमिति वाच्यम्, अशेषतत्सन्तानस्याप्यवस्तुत्वप्रसङ्गात् । न च तेषामनुपयुक्तताऽसिद्धा योगिविज्ञानलक्षणविजातीयकार्यकरणादिति वाच्यम्, सजातीयं प्रत्यनुपयोगे विजातीयेऽपि तेषामनुपयोगात्, एकत्रानुपयोगिनोऽन्यत्राप्यु-

पयोगे ज्ञानान्तरप्रत्यक्षज्ञानवादिनोऽपि स्वज्ञानानुपयुक्तस्यापि ज्ञानस्यार्थज्ञाने उपयोगसम्भवादर्थचिन्तनोच्छेदलक्षणदोषप्रसङ्गदानानौचित्यात्, स्वज्ञानजननासमर्थस्यापि ज्ञानस्यार्थज्ञानजनने सामर्थ्यसम्भवात् । तस्मादनर्थक्रियाकारिणोऽक्षणिकस्य यद्यवस्तुत्वेनाकार्यत्वं तर्हि चरमक्षणस्यापि तत्स्यात्, सर्वथाऽर्थक्रियाकारित्वाभावात् । अथानर्थक्रियाकारिणोऽपि चरमक्षणस्य कार्यत्वं न तर्हि कृतकत्वमक्षणिके क्षणिकवादिना प्रतिक्षेप्तव्यं न्यायस्य 5 समानत्वात्, तस्मान्नार्थक्रियालक्षणसत्त्वविशिष्टं कृतकत्वं नित्यादक्षणिकाच्च सत्त्वं व्यावर्तयितुमलम् । एतेन सामान्यस्यानर्थक्रियाकारित्वादवस्तुत्वं निरस्तम्, न च तस्य तत्साध्यकार्यस्यैवाप्रसिद्ध्याऽनर्थक्रियाकारित्वमिति वाच्यम्, तस्य वाहदोहाद्यर्थक्रियाकारित्वाभावेऽपि विज्ञानलक्षणकार्यकारित्वात्, अन्त्यशब्दक्षणवत् । न च केवलात्सामान्यात्तद्ग्राहिज्ञानोदये तेन व्यक्तेः कदाप्यग्रहणात्तत्सम्बन्धित्वेन व्यक्तिग्रहणाभावेन ततो व्यक्तौ न 10 प्रवृत्तिः स्यात्, व्यक्तिसहकृतसामान्यात्तज्ज्ञानोत्पादाङ्गीकारे च प्रत्येकं व्यक्त्यभावेऽपि सामान्याज्ज्ञानोत्पत्त्या तदुत्पत्तिं प्रति तासां सामर्थ्यानवधारणादिति उभयथापि ज्ञानक्रियाऽसम्भव इति वाच्यम्, अन्यतमव्यक्तिमव्यपेक्षस्यैव सामान्यस्य तत्र सामर्थ्यात्, अन्यतमवेमापेक्षस्य कुविन्दादेरिव, न हि प्रत्येकं वेमाभावे कुविन्दः पटं करोतीति कुविन्दादेव पटोत्पत्तिः, वेमरहितादनुत्पत्तेः । एवं प्रत्येकं व्यक्त्यभावे विज्ञानोत्पत्तावपि न केवलं सामा 15 न्यमेव तद्धेतुः अन्यतमव्यक्त्यपेक्षस्यैव सामर्थ्यात्, सामान्यस्य व्यक्त्यपेक्षत्वश्चैककार्यकारित्वेनैव, तस्मान्न ज्ञानलक्षणकार्यकारिणः सामान्यस्यावस्तुत्वम् । नाप्यभिधेयत्वात्तस्यावस्तुत्वम्, हेतोर्विपक्षाद्व्यावृत्त्यसिद्धेः । न च वस्तुनोऽभिधेयत्वे साक्षाच्छब्दादेव वस्तुनो ज्ञानादिन्द्रियसंहतेर्वैयर्थ्यं स्यात्, न चैवम्, तस्मात् प्रकृतहेतोर्विपक्षाद्व्यावृत्तिसिद्धिरिति वाच्यम्, शब्दादस्पष्टाकारतया प्रतीतस्य वस्तुनः स्पष्टाकारप्रतीत्यर्थमिन्द्रियसंहतेः साफ- 20 ल्यात्, एकस्यापि वस्तुनः स्पष्टास्पष्टप्रतिभासभेदः सामग्रीभेदात्, दूरासन्नादिभेदेन स्पष्टास्पष्टाप्रतिभासादिभेदवत् । ततो न सामान्यमवस्तु । इत्यभ्युपगमवादेन नित्यसामान्यपक्षभाविदोषपरिहारः कृतः । वस्तुतस्तु नैकान्ततः किञ्चिद्वस्तु नित्यमनित्यं वा, बहिर्नवपुराणाद्यनेकक्रमभाविपर्यायाक्रान्तस्य समानासमानपरिणामात्मकस्यैकस्य घटादेः अन्तश्च हर्षविषादाद्यनेकविवर्त्तात्मकस्य चैतन्यस्याबाधितप्रतीतिविषयस्य व्यवस्थितत्वात् । तस्मान्नै- 25 कान्ततः क्षणिकत्वं व्यक्तीनामिति सङ्केतव्यवहारकालव्यापकत्वस्य भावान्न तत्र शब्दसंकेतासम्भवः, न वा सङ्केतवैयर्थ्यम् । प्रधानोपसर्जनभावेनानेकान्तात्मकवस्तुनः प्रमाणविषयत्वात्तत्रैव प्रत्यक्षविषये सङ्केतः स एव सामान्यविशेषात्मकः शब्दार्थ इति केवलस्वलक्षणजा-

तितद्योमजातिमत्पदार्थबुद्ध्याकारपक्षभाविनो दोषा अनास्पदा एव, न ह्येकान्तपक्षभाविदोषा अनेकान्तवादिनं समाश्रिष्यन्ति इति ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजय-
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
5 लब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य शब्दसङ्केत-
समर्थनं नाम दशमं सोपानम् ॥

## अपोहवाच्यतानिरसनम् ।

**अपोहः** शब्दार्थः, स च द्विविधः, पर्युदासरूपः प्रसज्यप्रतिषेधरूपश्चेति, पर्युदासोऽपि
10 द्विविधः, अर्थेषु अनुगतैकरूपत्वेनाध्यवसितो ¹बुद्ध्यात्मा बुद्धिप्रतिभासः, विजातीयव्यावृत्त-
स्वलक्षणरूपोऽर्थात्मकश्च । तत्र यथा हरीतक्यादयो बहवस्सामान्यलक्षणमेकमर्थमन्तरेणापि
ज्वरादिशमनं कार्यमुपजनयन्ति तथा शाबलेयादयोऽप्यर्था वस्तुभूतं सामान्यमन्तरेणापि
प्रकृत्या एकाकारपरामर्शहेतवो भविष्यन्ति, तदनुभवबलेन यदुत्पन्नं विकल्पज्ञानं तत्रार्थाका-
रतया ज्ञानादभिन्नं यदर्थप्रतिबिम्बकमर्थाभासो भाति तत्रान्यापोह इति व्यपदेशः, न
15 चासावर्थाभासो बाह्यकृतः, ज्ञानतादात्म्येन व्यवस्थितः सन् बाह्यार्थाभावेऽपि तत्र तस्य
प्रतिभासनात् । न चात्रापोहव्यपदेशो निर्निमित्तः मुख्यगौणलक्षणनिमित्तसद्भावात् । विक-
ल्पान्तरारोपितप्रतिभासान्तराद्भेदेन स्वयं प्रतिभासनान्मुख्यस्तत्र तद्व्यपदेशः, अपोह्यत इत्य-
पोहः, अन्यस्मादपोह इति व्युत्पत्तेः । उपचारात्तु त्रिभिः कारणैस्तत्र तद्व्यपदेशः, अन्य-
व्यावृत्तवस्तुप्राप्तिहेतुत्वात् कारणे कार्यधर्मारोपः एकः, अपरः अन्यविविक्तवस्तुद्वाराऽऽ-
20 यातत्वात् कार्ये कारणधर्मारोपः, अन्यश्च विजातीयापोढपदार्थेन सह भ्रान्तैः प्रतिपत्तृभिरै-
क्येनाध्यवसानलक्षणः, कारणैरेभिस्तत्रोपचारः । अर्थस्तु विजातीयव्यावृत्तत्वात् मुख्यतस्त-
द्व्यपदेशभाक् । प्रसज्यप्रतिषेधलक्षणस्त्वपोहः गौरयमगौर्न भवतीत्येवं लक्षणः स्फुट एव ।
तत्र शाब्दे ज्ञाने साक्षाद्य एव हि भासते तस्यैव शब्दार्थत्वं युक्तम्, न च शाब्दे ज्ञाने प्रसज्य-
प्रतिषेधस्य भानम्, वाच्याध्यवसितस्य बुद्ध्याकारस्य शब्दजन्यत्वात्, न चेन्द्रियजज्ञानवद्वस्तु-
25 स्वलक्षणप्रतिभासः, किन्तु बाह्यार्थाध्यवसायिनी केवलशाब्दी बुद्धिरुपजायते, तेन तदेवार्थ-
प्रतिबिम्बकं शाब्दे ज्ञाने साक्षात्तदात्मतया प्रतिभासनात् शब्दार्थो युक्त इति अपोहत्रये प्रथ-
मोऽपोहव्यपदेशमासादयति। यश्च शब्दस्यार्थेन सह वाच्यवाचकभावलक्षणः सम्बन्धः प्रसिद्धो

१ स्वभावत परस्परविलक्षणानर्थानेकार्थकारितया समानहेतुत्वेन च समानानाश्रित्य यदेकप्रत्यवमर्शरूप अर्थप्रतिबिम्बस्वभावज्ञानमुत्पद्यते स बुद्ध्यात्मेति भाव ॥

नासौ कार्यकारणभावादन्यः, बाह्यरूपतयाऽध्यवसितस्य बुद्ध्याकारस्य शब्दजन्यत्वात् । तथा च शब्दस्तस्य प्रतिबिम्बात्मनो जनकत्वाद्वाचक उच्यते प्रतिबिम्बञ्च शब्दजन्यत्वाद्वाच्यम्, न तु निषेधमात्रम् । एवञ्च प्रतिबिम्बलक्षणोऽपोहः साक्षाच्छब्देरुपजन्यत्वान्मुख्यः शब्दार्थो व्यवस्थितः, शेषयोरन्यापोहयोर्गौणं शब्दार्थत्वमविरुद्धमेव, सामर्थ्यात्तयोरपि प्रतीतेः । सामर्थ्यञ्च गवादिप्रतिबिम्बात्मनोऽपरप्रतिबिम्बात्मभिन्नत्वात्तदसंयुक्ततया प्रतीयमानत्वम्, तथा तत्प्रतीतौ प्रसज्यलक्षणापोहप्रतीतेरप्यवश्यसम्भवातः सोऽपि गौणशब्दार्थः । स्वलक्षणमपि गौणशब्दार्थः प्रथमं हि यथावस्थितवस्त्वनुभवः, ततो विवक्षा, ततस्ताल्वादिपरिस्पन्दः ततश्शब्द इत्येवं परम्परया यदा शब्दस्य बाह्यार्थेष्वभिसम्बन्धः स्यात्तदा विजातीयव्यावृत्तस्यापि वस्तुनोऽर्थापत्तितोऽधिगम इत्यन्यव्यावृत्तवस्त्वात्माऽपोहशब्दार्थ इत्युपचर्यत इति, अत्र वदामः, विजातीयव्यावृत्तपदार्थानाश्रित्यानुभवादिमुखेन यच्छाब्दं विज्ञानं तथाभूतपदार्थाध्यवसाय्युत्पद्यत इत्यत्राविसंवाद एव, किन्तु तत्तथाभूतवास्तविकार्थग्राह्यभ्युपगन्तव्यम्, अध्यवसायस्य ग्रहणरूपत्वात्, विजातीयव्यावृत्तेस्तु समानपरिणतिरूपतया वस्तुधर्मत्वात्, तत्रान्यापोहशब्दवाच्यता न क्षतिकारिणी, सङ्केतविशेषसव्यपेक्षस्य तच्छब्दस्य तत्रापि प्रवृत्त्यविरोधात् । विकल्पप्रतिबिम्बकमात्रमपि न शब्दार्थः, शब्दात्तस्य बाह्यतयाऽप्रतिपत्तेः । किन्तु विशिष्टसङ्केतसव्यपेक्षाच्छब्दाद्बाह्यार्थप्रतिपत्तेः तत्पूर्वकप्रवृत्त्यादिव्यवहारस्यापि तत्रैव भावात् स एव बाह्यः शब्दार्थो युक्तः । एवं विजातीयव्यावृत्तस्वलक्षणस्योपचारेणापोहत्वमपि न युक्तम्, यदि शब्दवाच्यस्य वस्तुस्वरूपस्यापोहत्वं तदाऽनन्तधर्मात्मके वस्तुन्युपसर्जनीकृतविशेषस्य पारमार्थिकवस्त्वात्मकसामान्यधर्मकलापस्य शब्दवाच्यत्वादुपचारेणापोहत्वासम्भवात् । तुच्छस्वरूपायाः व्यावृत्तेः अन्यव्यावृत्तविकल्पाकारस्य चापोहत्वे सामान्यसामानाधिकरण्यविशेषणविशेष्यभावादिव्यवहारश्च सर्व एवाघटकमानः । तत्र सामान्यं साधितमेव । सामानाधिकरण्यव्यवहारश्च धर्मद्वययुक्तस्यैकधर्मिणो बहिर्भूतस्यासद्भावादयुक्तः स्यात्, नायं बाह्यार्थासंस्पर्शिविकल्पप्रतिबिम्बके युक्तः । न च धर्मद्वयानुरक्तैकधर्मिविकल्पेऽप्ययमुपपत्स्यत इति वाच्यम्, तथाविधविकल्पाभ्युपगमेऽनेकान्तवादप्रसङ्गात् । न चानेकत्वं न तात्त्विकमिति वक्तव्यम्, तथा सति ज्ञानस्वरूपेऽविद्यमानस्यानेकत्वस्य स्वसंवेदनेनापरिच्छेदप्रसङ्गात् परिच्छेदे वा स्वसंवेदनस्याप्रत्यक्षत्वप्रसङ्गात्, अविद्यमानवस्तुविषयकत्वात्, सदसतोरेकत्वानेकत्वयोर्मध्येऽनेकत्वादे ज्ञानतादात्म्यविरहेणानात्मभूतवैचित्र्यस्य अतदाकारज्ञानवेदनेन परिच्छेदासम्भवाच्च । यदि च वैचित्र्यं बुद्धिमाश्लिष्यतीत्यङ्गीक्रियते तदा बहिर्भूतोऽप्यर्थस्तदाश्लिष्येत्, एकत्वनानात्वयोर्विरोधस्तु विज्ञानेऽपि तुल्य एव । बुद्धेर्नीलादिप्रतिभासानाञ्चैकयोगक्षेमत्वादेकत्वमिति चेन्न, सहभा-

विनां चित्तचैत्तानां नानात्वेऽप्येकयोगक्षेमत्वात्तेन स्वभावभेदस्यानिराकरणात्, चित्तमर्थमात्रग्राहि, चैत्ताः विशेषावस्थाग्राहिणः सुखादयः। नीलादिप्रतिभासानां सर्वथैकत्वमपि प्रत्यक्षविरुद्धम्, प्रतिभासभेदाद्भेदसिद्धेः, भेदप्रतिभासस्याबाधितत्वेनाभ्रान्तत्वाच्च। अथ विकल्पस्यायं विभ्रमः, बहिरर्थे सामानाधिकरण्यादेरयोगात्, नानाफलयोर्नीलोत्पलादिशब्दविक-
5 ल्पयोरेकस्मिन्नर्थे वृत्तिविरोधात्, धर्मधर्मिणोरेकान्तभेदाभेदाभ्यां गत्यन्तराभावात्, धर्मधर्मिणोर्हि अभेदाभ्युपगमे शब्देनैकेन विकल्पेन च स्वलक्षणस्य विषयीकरणे निखिलस्वभावाक्षेपादपरस्य शब्दादेः स्वलक्षणैकवृत्तेस्तद्भिन्नफलत्वाभावात्तदभेदे सकृत् ग्रहणस्यावश्यंभावित्वम्, अभेदस्य तल्लक्षणत्वादन्यथा गृहीतागृहीतयोर्भेदप्रसक्तेः। धर्मधर्मिणोर्भेदाभ्युपगमपक्षेऽपि घटपटादिशब्दवत् एकत्रावृत्तेः, उपाधिद्वारेणैकत्रोपाधिमति शब्दविकल्पयोस्तदा प्रवृत्ति-
10 र्भवेत्, यदि तयोरुपकार्योपकारकभावः स्यात्, अन्यथा पारतंत्र्यासिद्धेः। तयोश्चोपाध्युपाधिमद्भावाभावाच्च तद्द्वारेणापि तयोस्तद्वति वृत्तिर्युक्ता। अथ तयोरुपकार्योपकारकभावस्तदोपाध्युपकारिका शक्तिरुपाधिमतो यद्यभिन्ना तदैकोपाधिद्वारेणाप्युपाधिमतः प्रतिपत्तौ सर्वोपाध्युपकारकस्वरूपस्यैव तस्य निश्चयादुपकार्यस्योपाधिकलापस्याप्यशेषस्य निश्चयप्रसक्तिः, उपकारकनिर्णीतेरुपकार्यनिश्चयनान्तरीयकत्वात्। उपाधिमतो भेदे तच्छक्तेः सम्बन्धाभावः,
15 ततस्तासामनुपकारात्, उपकारे वा तदुपकारशक्तीनामपि उपाधिमतो भेदाभेदकल्पनायामनवस्था सर्वात्मना ग्रहणञ्च प्रसज्यत इति, मैवम्, अभेदस्य सकृद्ग्रहणलक्षणत्वाभावात्, घटाद्याकारपरिणतानां परमाणूनां सकृद्ग्रहणेऽप्यभेदस्याभावेनातिव्याप्तेः, सत्त्वानित्यत्वयोरभेदेऽपि सकृद्ग्रहणाभावेनाव्याप्तेश्च, तयोस्सकृद्ग्रहणे च सत्त्वप्रतिपत्तौ क्षणक्षयस्यापि प्रतिपत्तेरनुमानवैयर्थ्यप्रसङ्गात्। न चानादिसंसाराभ्यस्ताक्षणिकादिवासनाजनितमन्दबुद्धेः पूर्वोत्तर-
20 क्षणयोर्विवेकनिश्चयाभावात्स्वलक्षणस्य सर्वात्मनाऽनुभवेनाधिगमेऽपि क्षणिकतायां निश्चयानुत्पत्तेरनुमानस्य साफल्यमिति वाच्यम्, घटकपालक्षणयोरप्यविवेकनिश्चयप्रसक्तेः। सदृशापरापरोत्पत्तेर्विप्रलम्भनिमित्तस्याभावान्नात्र तत्प्रसङ्ग इति चेन्न, ह्रस्ववर्णद्वयोच्चारणे तत्प्रसङ्गात्, न च तयोर्विप्रलम्भनिमित्तस्यानन्तर्यस्य वर्णद्वयान्तराले सत्त्वलक्षणसदृशधर्मस्याभावाच्च तत्प्रसङ्ग इति वाच्यं लघुवृत्तेर्विभ्रमनिमित्तस्य सद्भावात्, एवञ्च संयुक्ताङ्गुल्यो-
25 रप्यविवेकनिश्चयः स्यात्, देशनैरन्तर्यसादृश्ययोर्भावात्। किञ्चान्यापोहवादिनां भ्रान्तिनिमित्तं सादृश्यं वस्तुभूतं नास्त्येव, सामान्यवादप्रसक्तेः, न चैकविज्ञानजनकक्षणानां सादृश्यरूपता वाच्या, तस्माद् विवेकानिश्चये रूपालोकमनस्कारादीनामपि एकविज्ञानजनकत्वेन सादृश्यादेकत्वनिश्चयस्तेषामपि भवेत्। एवं देशनैरन्तर्यमपि न भ्रान्तिनिमित्तम्, तत्सद्भावेऽपि संयुक्ताङ्गुल्योर्भ्रान्त्यभावात्। कालनैरन्तर्यं लघुवृत्तिरेव, तदपि न भ्रान्ति-

निमित्तम्, ह्रस्ववर्णद्वयोच्चारणे तद्भावेऽप्यभावात्, नाप्युभयं निमित्तम्, संयुक्ताङ्गुल्योः पूर्वापरक्षणयोरपि उभयसद्भावेऽप्यभावात्, तस्मादान्तरेतरभ्रान्तिकारणाभावाद्यथानुभवं कुतो न विकल्पोत्पत्तिः, तस्मादुपाधितद्वतोरभेदेऽपि नानाफलत्वं शब्दविकल्पयोरविरुद्धम् । भेदपक्षेऽपि तयोरेकार्थवृत्तिर्घटत एव, तद्द्वारेण शब्दविकल्पयोरेकस्मिन् धर्मिणि वृत्तेः सामानाधिकरण्यादिव्यवहारसिद्धिः । उपकार्योपकारकप्रतीत्योरन्योन्याविनाभावित्वाभावात् 5 नैकोपाधिद्वारेण सर्वात्मनोपाधिमतः प्रतिपत्तिः, अन्यथा कथञ्चित्सर्वस्यापि परस्परं उपकार्योपकारकभावादेकपदार्थप्रतिपत्तौ तदाधारादिभावेनोपकारकभूतस्य भूतलादेस्तत्कार्यभूतसन्तानान्तरवर्तिज्ञानस्य वा ग्रहणं ततोऽपि तदुपकारिणस्तस्मादप्यपरस्य तदुपकारिण इति पारम्पर्येण सकलपदार्थाक्षेपात्सर्वः सर्वदर्शी स्यात् । ननु भवत्ययं दोषः सम्बन्धवादिनाम्, सम्बन्धस्य सम्बन्धिभ्यो व्यतिरेकेऽनवस्थाप्रसङ्गेनैकधर्मद्वारेणापि निखि- 10 लधर्मसम्बन्धात्मकस्यैव धर्मिणोऽवगमात् सम्बन्धिनो धर्मकलापस्याशेषस्य ग्रहणप्रसक्तिः, सम्बन्धिग्रहणमन्तरेण सम्बन्धप्रतिपत्तेरभावात्, अङ्गुलिद्वयप्रतिपत्तौ तत्संयोगप्रतिपत्तिवत् । सम्बन्धिष्वेकसम्बन्धानभ्युपगमवादिनामस्माकं नायं दोषः, न हि प्राग्भावोत्तरभावावन्तरेणापरः कार्यकारणभावादिरेकः सम्बन्धोऽस्माभिरभ्युपगम्यते येन समस्ताव- गमात् सर्वः सर्वदर्शी स्यादिति मैवम्, सम्बन्धवादिनः समस्तधर्मसम्बन्धानां धर्म्य- 15 भिन्नत्वेऽपि तदेकधर्मसम्बन्धात्मकस्यैव धर्मिणो ज्ञानादशेषधर्मग्रहणप्रसङ्गाभावात् । सम्बन्धाभाववादिनोऽपि यद्युपकारकप्रतिपत्तावपि एकसम्बन्धाभावान्नोपकार्यस्यावगतिस्तदा कथं रूपादे रसतोऽनुमानेनावगतिः, उपकार्यविशिष्टस्योपकारकस्याप्रतिपत्तेः, प्रतिपत्तौ च कथं भवन्मतेन न सर्वः सर्वविद्भवेत् । न च धर्मधर्मिप्रतीत्योरितरेतराश्रयत्वात्तत्प्रतीत्यभावेन न धर्मधर्मिभाव इति वाच्यम्, युगपत्तयोरध्यक्षे प्रतिभासनात्, न वा क्रमप्रतिभासेऽपि 20 तत्प्रतीत्योरितरेतराश्रयत्वम्, दूरादध्यक्षेण प्रतीतस्य वृक्षत्वविशिष्टस्य प्रत्यासत्तौ आम्रादिविशेषणविशिष्टस्य तस्यैवावसायात्, शाब्दप्रतिभासेऽपि गोशब्दाद्गोत्वमात्रोपाधेरवभातस्य शुक्लशब्दात्तदुपाधिविशिष्टस्य तस्यैवावभासनात् । न च गुणग्रहणमन्तरेण गुणिनोऽपि गवादेरग्रहः तदग्रहे च गुणाग्रह इति वाच्यम्, गोशब्दाद्विशेषणविशेष्ययोर्युगपदेव प्रतिपत्तेः । अथ सविकल्पप्रत्यक्षवादिनां स्यादयं दोषः, धर्मविशिष्टधर्मिणो निश्चयाद्धर्म- 25 धर्मिणोश्च परस्परसव्यपेक्षत्वात्, निर्विकल्पकप्रत्यक्षवादिनान्तु सर्वोपाधिनिरपेक्षनिरंशस्वलक्षणसामर्थ्यभाविना तद्रूपमेवानुकुर्वता निर्विकल्पकाध्यक्षेण अन्यनिरपेक्षस्वलक्षणग्रहणाभ्युपगमान्नायं दोष इति, न सम्यगेतत्, सकलोपाधिशून्यस्वलक्षणग्राहिणो निर्विकल्पकस्याभावात्, तदेवं भिन्ननिमित्तयोरेकविषयत्वाविरोधात् कथं न बहिरर्थे सामानाधिकरण्यव्य-

वहारः । विशेषणविशेष्यभावोऽपि बाह्यसमाश्रित एव, न च विशेषणविशेष्ययोरुपकार्योप-
कारकभूतत्वेनासमानकालयोस्तद्भावानुपपत्तेस्तथाभूतविकल्पाश्रय एवायं व्यवहार इति वक्त-
व्यम्, उपकार्योपकारकयोः पितापुत्रयोरिव समकालत्वाविरोधात्, एकान्तानित्यपक्षस्य च
निषिद्धत्वात् । लिङ्गसंख्यादियोगोऽपि अनन्तधर्मात्मकबाह्यवस्तुसमाश्रित एव । न चैकस्य
5 तटस्तटी तटमिति स्त्रीपुंनपुंसकाख्यं स्वभावत्रयं विरुद्धमिति वाच्यम्, विरुद्धधर्माध्यासस्य
भेदाप्रतिपादकत्वात्, अनन्तधर्माध्यासितस्य च वस्तुनः प्रतिपादितत्वात् । न चैकस्माच्छ-
दादेर्मेचकादिरत्नवच्छबलाभासताप्रसङ्गः प्रतिनियतोपाधिविशिष्टवस्तुप्रतिभासस्य प्रतिनि-
यतक्षयोपशमनिमित्तस्य साधितत्वात् । एवं दारादिष्वर्थेषु बहुत्वसंख्या वनसेनादिषु चैकत्व-
संख्या न विरुद्धा, यथाविवक्षमनन्तधर्माध्यासिते वस्तुनि कस्यचिद्धर्मस्य केनचिच्छब्देन
10 प्रतिपादनाविरोधादिति ॥

प्रज्ञाकरस्त्वेवमाह, तथाहि यद्यत्र प्रतिभाति तत्तस्य विषयः, यथाऽक्षजे संवेदने परिस्फुटं
प्रतिभासमानवपुरर्थात्मा नीलादिस्तद्विषयः, शब्दलिङ्गजे संवेदने दर्शनप्रभवे बहिरर्थस्वतत्त्व-
प्रतिभासरहितं स्वरूपमेव चकास्ति ततस्तदेव तस्य विषयः, परिहृतबहिरर्थसम्बन्धश्च संविद्रू-
पुरेवान्यापोहः, वस्तुनि शब्दलिङ्गवृत्तेरयोगात् । न हि जातिस्तयोर्विषयः, जातेरेवासम्भ-
15 वात्, दर्शने व्यक्तेरेव स्फुटतयाऽनुभवनात्, शाबलेयादिविवेकेन जातेरप्रतिभासनाद्गौरिति
प्रतीतावपि साधारणरूपस्याननुभवाच्च । न च शाबलेयादिरूपमेव साधारणम्, तस्य
प्रतिव्यक्ति भिन्नरूपोपलम्भात् । न च सर्ववस्तुषु व्यावृत्त्यनुगमात्मिका द्व्यात्मिका बुद्धिरिति
वक्तव्यम्, तस्या इन्द्रियबुद्धिरूपत्वं न सम्भवति, असाधारणरूपत्वात्तस्याः, नापि कल्प-
ना रूपा, तत्रापि जातेरनवभासनात्, पुरःपरिस्फुटमुद्भासमानं व्यक्तिस्वरूपं व्यवस्यन्ती
20 हृदि चाभिजल्पाकारं हि कल्पना प्रतीयते न तु तद्भिन्नो वर्णाकृत्यक्षराकारशून्यः प्रतिभासो
लक्ष्यते, वर्णादिस्वरूपरहितञ्च जातिस्वरूपमभ्युपगम्यते, तस्मान्न कल्पनावसेया जातिः
असती च, क्वचिदपि ज्ञाने स्फुटं व्यक्तिप्रतिभासवेलायां स्वरूपतोऽप्रतिभासनात् । न च शब्द-
लिङ्गजे ज्ञाने स्वरूपेण जातिः प्रतिभाति, तत्र सम्बन्धप्रतिपत्तेः न तु स्वलक्षणम्, तस्यासा-
धारणरूपतया प्रतिभासेन सम्बन्धग्रहणासम्भवादिति वाच्यम्, व्यक्त्याकारस्यैव तत्रापि
25 स्फुटं प्रतिभासनात्, न तु वर्णाकाररहितोऽनुगतैकस्वरूपः प्रयोजनसामर्थ्यव्यतीतः कश्चि-
दाकारः केनचिदपि लक्ष्यते, शब्दलिङ्गान्वयं हि दर्शनं अर्थक्रियासमर्थतयाऽस्फुटदहनाकारमा-
दधानं जनं प्रवर्त्तयति । यदि जात्यादिरेव लिङ्गादिविषयः स्यात्तर्हि जातेरर्थक्रियासामर्थ्य-
विरहादधिगमेऽपि शब्दलिङ्गाभ्यां न बहिरर्थे प्रवृत्तिर्जनस्येति विफलः शब्दादिप्रयोगः स्यात् ।
न च स्वलक्षणं तत्र समर्थं तदर्थां च प्रवृत्तिर्जनानामिति वक्तव्यं, तत्र स्वलक्षणस्याप्रतिभा-

सनात्, न ह्यात्मानमनारूढे विज्ञानं प्रवृत्तिं विधातुमलम्, अतिप्रसङ्गात् । नाप्याकृतिविशिष्टा व्यक्तिस्तयोरर्थः, तस्याः प्रतिभासाभावात्, न हि शब्दलिङ्गप्रभवे विज्ञाने व्यक्तरूपतया तस्याः प्रतिभासः, तदभावेऽपि तस्योदयात्, न च व्यक्तेरेवाकारद्वयं व्यक्तरूपमव्यक्तरूपञ्चेति, व्यक्तरूपमिन्द्रियज्ञानभूमिरव्यक्तरूपं शब्दार्थ इति वाच्यम्, रूपद्वयग्राहकाभावात् । न हि शब्देन ज्ञानेन तद्गृह्यते तत्र स्पष्टरूपानवभासनात्, नापीन्द्रियज्ञानेन, तत्र 5 स्पष्टाकारस्यैव प्रतिभासनात्, श्रुतं पश्यामीति व्यवसायाद् दृश्यश्रुतयोरेकतेति चेन्न, दृश्यरूपतया श्रुतस्यावगमे दृश्यरूपस्यैवावभासात्, श्रुतरूपतया दृश्यस्यावगमे तु व्यक्तेः श्रुतरूपस्यैवावगतेः, तस्मात् प्रतिभासरहितमभिमानमात्रमिन्द्रियशब्दार्थयोरध्यवमानम्, न तत्त्वम्, अन्यथा दर्शनवच्छाब्दमपि स्फुटप्रतिभासं स्यात् । न चेन्द्रियसम्बन्धस्य तत्राभावाद्व्यक्तिप्रतिभासेऽपि प्रतिपत्तिविशेषोऽस्तीति वाच्यम्, तथापि प्रतिपत्तिभेदासम्भवात्, यत इन्द्रि- 10 यैरपि स्वरूपमुद्भासनीयम्, शब्दलिङ्गाभ्यामपि तदेव दृश्येत इत्यन्यूनानतिरिक्तस्य स्वरूपस्याधिगमः स्यात् । व्यक्तिरूपं नीलादिकमेव केवलमुभयत्र प्रतीयते व्यक्ताव्यक्ताकारौ तु ज्ञानस्यात्मानाविति चेत्, तर्हि नीलादिस्वरूपतया तयोः प्रतिभासनं न भवेत्, प्रतिभासते च तथा तस्मान्नीलाकारावेतौ, न हि व्यक्तरूपतामव्यक्तरूपतां च मुक्त्वा नीलादिकमपरमाभाति तदनवभासनात्तस्याभाव एव, तस्मान्नाक्षशब्दयोरेको विषयः । किञ्च व्यक्तिर्यदि 15 शब्दलिङ्गयोरर्थस्तदा सम्बन्धवेदनं विनैव ताभ्यामर्थप्रतीतिः स्यात्, शब्दलिङ्गयोश्चार्थे सम्बन्धवेदनासम्भवात्, तथाहि व्यक्तौ सम्बन्धवेदनं प्रत्यक्षेण वा, अनुमानेन वा भवेत्, तत्र पुरस्थितरूपमात्रप्रतिभासकत्वात् प्रत्यक्षस्य तेन शब्दार्थयोर्वाच्यवाचकभावसम्बन्धस्य ग्रहणं न सम्भवति, अथेन्द्रियज्ञानारूढे रूपे इदमेतच्छब्दवाच्यम्, इदमस्य वाऽभिधानमिति सम्बन्धव्युत्पत्तिर्दृश्यत इति चेन्न विकल्पानुपपत्तेः, अस्येदं वाचकमित्यस्य हि 20 कोऽर्थः, किं प्रतिपादकं तथा सति किमधुनैव, उतान्यदा, तत्र नाधुनैव, अधुनेन्द्रियव्यापारेणैव स्फुटं नीलादेरवभासनात्, शब्दव्यापारस्य वैयर्थ्यात्, तत्र तस्य सामर्थ्यानधिगतेः । न वाऽन्यदा, तदा हि शब्दः किमर्थान् विशदाकारेणावभासयति, आकारान्तरेण वा, नाद्यः, तदानीमपि चक्षुरादिभिरेव विशदाकारेण तस्यावभास्यमानत्वात् किं शब्देन, तत्र तस्य सामर्थ्यादर्शनात्, दर्शनाकांक्षासद्भावाच्च । यदि हि शब्देनैवार्थः सर्वथा प्रतिपन्नस्तर्हि 25

१ यथा जातिर्जातिलिङ्गानि चाख्यायन्ते तामाकृतिं विद्यात्, तत्र लाक्षादाकृत्या शिरःपाण्यादिसंनिवेशदर्शनाद्गोत्वादिजातिर्व्यज्यते, यदा विषाणादिभिरवयवैः पृथक् पृथक् स्वावयवसन्निवेशाभिव्यक्तैर्गोत्वादिर्व्यज्यते, तदा जातिर्लिङ्गं तेन जातेस्तल्लिङ्गानाञ्च प्रख्यापिका भवत्याकृतिः, स्वलक्षणवच्चाकृतिविशिष्टव्यक्तेः शब्दार्थतानिराकरणं विज्ञेयम् ॥

किमर्थं दर्शने प्रवृत्तिः स्यात, स्फुटं प्रतिपन्नेऽपि पुनः प्रवृत्तौ प्रवृत्तेरविरामप्रसङ्गात् । नाप्याकारान्तरेणार्थः शब्दप्रतिपाद्यः, तदाकारस्य सम्बन्धव्युत्पत्तिकाले कालान्तरे वा अक्षागोचरत्वादतो नाध्यक्षतः सम्बन्धवेदनम् । नाप्यनुमानेन, प्रत्यक्षाभावेऽनुमानानवता- रात् । तस्मात्सम्बन्धवेदनासम्भवेन न वस्तु शब्दार्थः किन्तु शब्देभ्यः बहिरर्थासंस्पर्शिन्यः

5 कल्पनाः प्रसूयन्ते ताभ्यश्च शब्दा इति कार्यकारणभावमात्रं तत्त्वं न वाच्यवाचकभावः, शब्दाद्धि विज्ञानमुत्पद्यते न तु तत्तेन प्रतीयते, अत एव च ज्ञानतदाकारावपि न शब्दवाच्यौ । कथं तर्हि अन्यापोहः शब्दवाच्यः, लोकाभिमानमात्रेण तथाऽभिधानात्, लौकिकानां हि शब्दश्रवणात् प्रतीतिः प्रवृत्तिः प्राप्तिश्च बहिरर्थे दृश्यते । न च यदि लोकाभिप्राय इष्यते तर्हि बहिरर्थः शब्दार्थोऽस्तु, नान्यापोहः तदभावादिति वाच्यम, तस्यैवान्यापोहत्वात्, न च

10 तर्हि स्वलक्षणं शब्दार्थ इति वाच्यम्, विजातीयव्यावृत्तरूपेण तस्य शब्दभूमित्वस्ये- ष्टत्वात्, न तु सजातीयव्यावृत्तरूपस्य, तस्य शाब्देऽप्रतिभासात् । न च विजाती- यव्यावृत्तरूपाभिन्नत्वात्सजातीयव्यावृत्तरूपस्य शब्दैर्विकल्पैश्च विजातीयव्यावृत्तरूपस्याधि- गतौ तदप्यधिगतमेवेति वाच्यम्, विकल्पानामविद्यास्वभावतया स्वलक्षणासंस्पर्शित्वात्, तथा च शब्दलिङ्गाभ्यां बहिरर्थासंस्पर्शिप्रत्ययः क्रियते तत्संस्पर्शाभावेऽपि पारम्प-

15 र्येण वस्तुप्रतिबन्धादविसंवादः, पदार्थस्यास्तित्वाद्धि प्राप्तिर्न दर्शनात्, केशोण्डुकादेर्दर्श- नेऽपि प्राप्त्यभावात् । न च प्रतिभासमन्तरेण कथं प्रवृत्तिरिति वाच्यम, प्रतिभासेऽ- प्यनर्थित्वे प्रवृत्त्यभावात्, अर्थित्वे च सति दर्शनविरहेऽपि भ्रान्त्या प्रवृत्तिसद्भावात् किन्तु तत्र वस्तुप्रतिबन्धाभावाद्विसंवादः यत्र तु प्रतिबन्धसद्भावः तत्राविसंवादः, यदा तु विकल्पानां स्वरूपनिष्ठत्वान्नान्यत्र प्रतिबन्धः तदा स्वसंवेदनमात्रं परमार्थसत्त्वमिति, इद-

20 मपि मतं निरस्तम, सामान्यविशेषात्मकवस्तुनः शब्दलिङ्गविषयत्वात् । सामान्यविशे- षात्मकं हि वस्तु सर्वस्यां प्रतिपत्तौ प्रतिभाति केवलं प्रधानोपसर्जनभावेन जातिव्यक्त्योः सामग्रीभेदात् प्रत्यक्षादिबुद्धौ प्रतिभासनात्तत्र वैशद्यावैशद्यावभासभेदः । शब्दार्थयोश्च तादात्म्यतदुत्पत्तिलक्षणसम्बन्धमन्तरेणापि सम्बन्धः परेणाभ्युपगन्तव्यः, अन्यथा यत्स- त्तत्सर्वं क्षणिकं, अक्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् संश्च शब्द इति, तथा

25 यत्किञ्चित्सत् तत्सर्वमक्षणिकम् क्षणिकेऽर्थक्रियानुपलब्धेः संश्च शब्द इति साधनवाक्ययोः स्वपराभिप्रेतार्थसूचकयोः स्वलक्षणासंस्पर्शित्वेन भेदाभावात् साधनतदाभासव्यवस्थानुपप- त्तिप्रसङ्गः । न चान्यतरसाधनवाक्यस्य परम्परया स्वलक्षणप्रतिबन्धादपरस्माद्विशिष्टतेति वाच्यम, तथा सति वाच्यवाचकयोः कार्यकारणभावातिरिक्तस्य सामर्थ्यप्राप्तस्यानिष्टस्यापि सम्बन्धान्तरस्याभ्युपगमप्रसङ्गात् । न च शब्दस्य क्वचिदर्थे व्यभिचारदर्शनात्सर्वत्रानाश्वासाद प्रामाण्यकल्पना युक्ता, प्रत्यक्षस्यापि तथाभावप्रसङ्गात । किञ्चान्यविवक्षायामन्यशब्ददर्शना-

द्विवक्षायामपि कचिद्व्यभिचारात् सर्वत्रानाश्वासेन न तेषां विवक्षाविशेषसूचकत्वं स्यात्, न च सुविवेचितकारणस्य कार्याऽव्यभिचाराच्च शब्दविशेषाणां विवक्षाविशेषसूचकत्वं विरुद्ध-मिति वाच्यम्, येन प्रतिबन्धेन शब्दविशेषस्य विवक्षाविशेषसूचकत्वं तत एव तेषा-मर्थविशेषप्रतिपादकत्वौचित्यात् । स्वाभिधित्सितार्थप्रतिपादनशक्तिवैकल्यादन्यथापि प्राय-शोऽभिधानवृत्तिदर्शनाद्विचित्राभिसन्धित्वात् पुरुषाणां विसंवादशङ्कया वक्त्रभिप्रायेऽपि तेषा- 5 मप्रामाण्यमिति चेत्तर्हि सर्वव्यवहारोच्छेदप्रसङ्गः, तथाहि यज्जातीयात् कचित्कदाचिद्यथा-भूतं दृष्टं तादृशादेव सर्वदा सर्वत्र तथाभूतमेव भवतीति निरभिप्रायेष्वपि नियमो नोप-लभ्यते, इन्धनादिसामग्रीतोऽनलप्रादुर्भावदर्शनेऽपि एकदा मण्यादिप्रभवत्वेनापि तस्य समी-क्षणात् कथं कार्यहेतोरप्यव्यभिचारित्वनिबन्धनं प्रामाण्यं परेणाभ्युपगतं युक्तं स्यात्, बहुधा वृक्षस्य चूतस्योपलम्भेऽपि कचित् कदाचिल्लतात्मतयापि तस्य दर्शनात् शिंशपा वृक्ष- 10 स्वभावमेव बिभर्त्तीति कथं प्रेक्षापूर्वकारिणां निःशङ्कं चेतो भवेत्, यतो लता च स्यात् शिंशपा च, नैवात्र कश्चिद्विरोध इति वृक्षोऽयं शिंशपात्वादिति स्वभावहेतोरप्यव्यभिचार-निबन्धनप्रामाण्याभ्युपगमः परस्य विशीर्येत । यदि स्वभावसदसद्भावे भवतो भावस्य निःस्वभावतापत्त्या तादात्म्यादव्यभिचारलक्षणं प्रामाण्यं तथा कारणाभावे भवतः कार्यस्य कार्यत्वाभावापत्त्या तदुत्पत्तिस्वरूपाव्यभिचारनिबन्धनं प्रामाण्यमस्तीत्यनुमानं प्रमाणमित्यु- 15 च्यते तर्हि स्वसन्ताने यादृग्भूतं विज्ञानमुत्पन्नं तादृग्भूतस्यैव श्रोतृसन्ताने विज्ञानस्योत्पि-पादयिषया वचनमुच्चारयन् परार्थानुमानं वाऽभ्युपगच्छन् शब्दानां बहिरर्थे सम्बन्धनिमित्तं प्रामाण्यं कथं प्रतिक्षिपेत् । अनुमानस्यापि प्रामाण्यं यद्यव्यभिचारप्रतिपत्त्यभावान्नाभ्युप-गम्यते तदा तत्त्वव्यवस्था न स्यादेव, प्रत्यक्षेऽपि स्वार्थाव्यभिचारित्वस्य निश्चयासम्भवेन ततस्तद्व्यवस्थाऽसम्भवात्, न वा स्वसंवेदनमात्रात्तत्सम्भवः ग्राह्यग्राहकाकारशून्यस्य तस्या- 20 पि यथातत्त्वमभ्युपगतस्याननुभूयमानत्वेन स्वत एवाव्यवस्थितत्वात्तत्त्वव्यवस्थापकत्वास-म्भवात् । न च सर्वभावानां प्रतिभासोपमतया न किञ्चित्तत्त्वमस्तीति वक्तव्यम्, शून्य-ताया निराकरिष्यमाणत्वात् । तस्मात् प्रत्यक्षादिकं प्रमाणमभ्युपगम्यते यदि तदा शब्दोऽपि बहिरर्थे प्रमाणतयाऽभ्युपगन्तव्यः, तन्निबन्धनस्य सामान्यविशेषलक्षणबाह्यार्थप्रतिबन्धस्य तत्रापि सत्त्वात्, तत्रैव च शब्दाच्चक्षुरादेरिव नियमेन प्रतिपत्तिप्रवृत्तिप्राप्तिलक्षणव्यवहार- 25 दर्शनात्, गुणदोषयोश्चोभयत्र समानत्वात् । यथा चातद्व्यावृत्तिवह्निधूमव्यक्तीनामानंत्येऽपि परस्परं प्रतिबन्धो निश्चीयते तथा व्यक्तीनामानन्त्येऽपि तत्र सङ्केतः संभवत्येव, प्रतिबन्धो हि वह्निधूमव्यक्तीनां परेण प्रत्यक्षेणैवाभ्युपगन्तव्यो नानुमानेन, अनवस्थाऽन्योन्याश्रयदो-षानुषङ्गात् । तदपि प्रत्यक्षं विकल्परूपमेव, तस्यैव प्रामाण्यसम्भवात्, सत्यपि हि निर्विक-

त्पकप्रत्यक्षे यत्रैव विकल्पः तत्रैव प्रवृत्त्यादिव्यवहारकर्तृत्वेन तस्य प्रामाण्यं नान्यत्र, अनुमानविकल्पे च प्रत्यक्षाभावेऽपि प्रवृत्त्यादिव्यवहारविधायकत्वेन प्रामाण्यमित्यन्वयव्यतिरेकाभ्यां विकल्पस्यैव प्रामाण्यं तस्यैव च व्याप्तिग्राहकत्वमवश्यमभ्युपगन्तव्यम् । अन्यथा प्रत्यक्षं स्वलक्षणं विषयलक्षणं वा तत्त्वं न निश्चिनोति विकल्पस्तु साकल्येनावस्त्वेव
5 निश्चिनोति इति निश्चयक्रियाप्रतिषेधाच्च किञ्चित्केनचिन्निश्चेयमनिश्चितेन च स्वरूपेण न तत्त्वव्यवस्था स्यात्, तस्मात् प्रत्यक्षवच्छाब्दस्याप्युभयात्मकवस्तुनिश्चायकत्वेन प्रामाण्यमभ्युपेयम्, दृश्यन्ते हि स्वयमदृष्टेषु नदीदेशपर्वतद्वीपादिष्वाप्तप्रणीतत्वेन निश्चितास्तच्छब्दास्तत्त्वप्रतिपत्तिं कुर्वाणाः । न च पुरस्थं घटादिकं चक्षुर्जन्ये प्रत्यक्षे श्रोत्रजे च शब्दस्वरूपं प्रतिभासते नान्यः कश्चिद्वाच्यवाचकभावस्तयोरिति वाच्यम्, एकान्तेन ताभ्यां भिन्नस्य
10 वाच्यवाचकभावस्यास्माभिरनभ्युपगमात्, यद्यभ्युपगम्यते तदा तस्य पृथक् प्रतिभासप्रसङ्ग आपाद्येत, किन्तु संकेतसव्यपेक्षस्य शब्दस्य वाचकत्वं कथञ्चिदभिन्नो धर्मः, तदपेक्षया चार्थस्यापि वाच्यत्वं तथाभूत एव धर्मः, तच्च द्वयमपि शब्दार्थप्रतिभाससमये क्षयोपशमविशेषाविर्भूते क्वचिज्ज्ञाने प्रतिभासत एव । सङ्केतसमये हि इदमस्यवाच्यम्, इदमस्य वाचकमिति तद्ग्राहिविशिष्टेन्द्रियादिसामग्रीप्रभवं ज्ञानमनुभूयत एव । अविशदस्यापि दूर-
15 स्थवृक्षाद्यर्थग्राहिणः प्रत्यक्षत्वात् तत्प्रतिभासाविशिष्टस्य शाब्दस्यापि तत्र प्रामाण्येन तदुत्थापकशब्दस्य तत्र सामर्थ्यनिश्चयात् वाचकत्वस्य प्रतिपादकत्वस्वरूपपक्षे प्रदर्शितदोषाणां नावकाशः । श्रुतं पश्यामीत्यत्र दृष्टश्रुतरूपादिकल्पनानिमित्तदोषोद्भावनमपि न सम्यक् एकचित्रप्रतिभासिज्ञानेऽपि तथा प्रसङ्गात्, तथा हि तत्रापि पीताद्याकारतया नीलाद्याकारग्रहणे पीताद्याकारापत्त्या न नीलाद्याकारः, नीलाद्याकारतया च पीताद्याकारग्रहणे नीला-
20 द्याकार एवासाविति कुतः चित्र एकः, तथा नीलसंवेदनेऽपि प्रतिपरमाणु एव कल्पनया नैकं नीलप्रतिभासं ज्ञानं स्यात्, विविक्तस्य च ज्ञानपरमाणोरसंवेदनात् सर्वशून्यतापत्त्या सर्वव्यवहारोच्छेदः स्यात्, यद्येकत्वेन संवेदनादनेकनीलपरमाणुसमूहात्मकमेकं नीलज्ञानमित्युच्यते तर्हि दृष्टश्रुतरूपमबाधितैकत्वप्रतिभासादेकं बहिर्वस्तु किं नाभ्युपगम्यते । यथा युगपद्भाव्यनेकनीलज्ञानपरमाण्ववभासमानां स्वसंवेदने नैकत्वविरोधस्तथा क्रमेणापि दृष्ट-
25 श्रुतावभासयोरेकत्वेनाविरोधो दृष्टं शृणोमीति ज्ञानेन भविष्यतीत्येकत्वावभासिना दर्शनशब्दविषयस्यार्थस्यैकत्वं निश्चीयत इति परमार्थत एव तत्तत्त्वम् । शब्दार्थयोः सम्बन्धोऽपि न काल्पनिकः, प्रतिनियतसंकेतानुसारिणो नियताच्छब्दात् प्रतिनियतार्थप्रतिपत्तिदर्शनात् । न च श्रोतुः प्रतिपत्तिः संकेतानुसारिणी दृश्यते, कलिमार्यादिशब्देभ्यो द्रविडार्ययोर्यथाक्रममन्तकालवर्षोपमर्गादिप्रतिपत्तिदर्शनान्न नियतः सम्बन्ध इति वाच्यम्,

नियतसंकेतसहकृतस्य शब्दस्य नियतार्थप्रतिपत्तिदर्शनात्, कार्यगम्यं हि वस्तूनां नियतत्व-मन्यद्वा यदा च नियतं तत्कार्यमुपलभ्यते तदा कुतो न तस्य नियतत्वम् । तस्माद-बाधितशब्दार्थसम्बन्धप्रतिपत्तेरबाधिताकारप्रतिपत्त्या तात्त्विकार्थधर्मव्यवस्थापकत्वाद्युक्तमे-वोक्तं समयपरमार्थविस्तरेति ॥ २ ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वर- 5
चरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितस्य
सम्मतितत्त्वसोपानस्य अपोहस्य शब्दार्थतानिरसनं नाम
एकादशं सोपानम् ॥



## नयद्वयघटकद्रव्यार्थिकस्वरूपम् । 10

अथ प्रकरणस्यास्यारम्भः कुण्ठधियामप्यन्तेवासिनां योग्यतासम्पादनार्थं कृतः, सा च योग्यता विशिष्टसामान्यविशेषात्मकपदार्थतदुपायभूतनयप्रतिपादनं विनाऽस्मात् प्रकरणान्न सम्पद्यतेऽतो योग्यताया उपायभूतं प्रकरणाभिधेयमर्थं निर्दिशति—

**तित्थयरवयणसंगहविसेसपत्थारमूलवागरणी ।**
**दव्वट्ठिओ य पज्जवणओ य सेसा वियप्पा सिं ॥ ३ ॥** 15

तीर्थकरवचनसङ्ग्रहविशेषप्रस्तारमूलव्याकरणी ।
द्रव्यार्थिकश्च पर्यवनयश्च शेषा विकल्पा एषाम् ॥ छाया ॥

**तीर्थकरेति,** संसारार्णवं येन तरन्ति तत्तीर्थं, द्वादशाङ्गम्, तदाधारो वा सङ्घः, उत्प-द्यमानं तत् कुर्वन्ति उत्पादयन्ति तत्स्वाभाव्यात् तीर्थकरनामकर्मोदयाद्वेति तीर्थकराः, तेषां वचनमाचारादि, तस्यार्थतस्तैरुपदिष्टत्वात्, तस्य सङ्ग्रहविशेषौ सामान्यविशेषशब्दवाच्यौ 20 अभिधेयभूतौ द्रव्यपर्यायौ, तयोः प्रस्तारः, सङ्ग्रहादिकेन नयराशिना येन प्रस्तीर्यते विस्ती-र्यते स प्रस्तारः, तत्र सामान्यप्रस्तारस्य सङ्ग्रहव्यवहारप्रस्ताररूपस्य तस्य मूलव्याकरणी मू-लतो व्याकर्त्ता आद्यवक्ता ज्ञाता वा द्रव्यार्थिकः द्रव्यमेव सत्त्वेनार्थोऽस्येति द्रव्यार्थिकः, प-र्यवो विशेषः तज्ज्ञाता वक्ता वा स चासौ नयनं नयः पर्यवनयः पर्यायास्तिकः, स च विशे-षप्रस्तारस्य ऋजुसूत्रशब्दादेराद्यो वक्ता, अत्र द्रव्यार्थिकपर्यायनययोर्मूलव्याकरणीशब्दाभि- 25 धेयतया मूलव्याकरणीशब्दस्य द्विवचनान्ततया औचित्येऽपि प्रत्येकं वाक्यपरिसमाप्तेरेक-वचनान्ततया निर्देशः, अत एव चकारद्वयं मूले आदृतम्, शेषा नैगमादयो विकल्पा भेदा

अनयोः द्रव्यार्थिकपर्यायार्थिकयोः। अत्र सिं इति प्राकृतशैल्या, 'बहुवयणेण दुवयणं' इति द्विवचनस्थाने बहुवचनमित्यर्थः ॥

तथाहि द्रव्यार्थिकपर्यायार्थिकावेव नयौ, परस्परविविक्तसामान्यविशेषविषयत्वात्, न चास्त्याभ्यां भिन्नो विषयो यद्ग्राहकतयाऽन्यः कश्चन तृतीयो नयः स्यात्, भेदाभेदरहितस्या-
5 परस्य भावस्वभावस्यानुपपत्त्या तृतीयस्य विषयस्यासम्भवः। न च भेदाभेदाभ्यामन्यस्तद्वान् एकोऽर्थोऽस्तीति वाच्यम्, सोऽपि भावस्वभावो वा स्यादभावस्वभावो वेति विकल्पानतिवृत्त्या तस्य तदुभयभिन्नस्वभावत्वासम्भवात्, तत्स्वभावातिक्रमे हि भावः खपुष्पसदृशो भवेत्। ताभ्यां तद्वतोऽर्थान्तरत्वे तु सर्वथा तत्सम्बन्धप्रतिपादनोपायो नास्त्येव, समवायस्य च तस्य भेदाभेद-तद्वद्भिरसम्बन्धे तेन तद्व्यपदेशो न स्यात्, समवायान्तरस्य तैः तस्य सम्बन्धकतया कल्पने
10 चानवस्था, तथैव विशेष्यविशेषणभावसम्बन्धकल्पनेऽप्यपरापरतत्कल्पनाप्रसङ्गान्न सम्बन्ध-सिद्धिः, तस्मान्न नयद्वयबहिर्भाविभावस्वभावान्तरसम्भवः। किन्तु तयोरेव शुद्ध्यशुद्धिभ्यां वस्तु-स्वरूपनिरूपणविकल्पाभिधानवृत्तयो व्यवतिष्ठन्ते नयाः। तत्र सङ्ग्रहनयाभिमतविषयनिरू-पणपरो द्रव्यार्थिकनयः शुद्धः, तत्रेत्थं सङ्ग्रहनयाभिप्रायः सर्वमेकं सदविशेषात्, सर्वे हि भावाः स्वरूपेण प्रतिभान्ति, तदेतेषां सल्लक्षणं स्वरूपं निर्विकल्पकप्रत्यक्षग्राह्यम्, भेदलक्षणो
15 विशेषश्चान्यापेक्षत्वान्न तेषां स्वरूपम्, इतरानपेक्षया झटित्यप्रतीतेः, यद्धि तथा प्रतीयते तत्तस्य स्वरूपम्, भेदश्च विकल्पविषयत्वादितरापेक्षत्वेन काल्पनिकम्, तच्चापरमार्थसदुच्यते। इदमस्माद्व्यावृत्तमिति हि भेदप्रतीतिः, स च नाध्यक्षस्य गोचरः, अतः सर्वावस्थासु यदनुगतं रूपं तदेव तात्त्विकम्, यथा सर्पादिविकल्पेषु बोधमात्रं सर्वेष्वनुगच्छत्तात्त्विकम्, सर्पाद्या-कारास्तु व्यावृत्ताः परस्परतो भिन्नरूपा बाधकेन बाध्यन्ते न तु बोधमात्रम्, तथा घटादिषु
20 विभिन्नेष्वपि यावद्द्रव्यावस्थानं तावन्मृद्रूपतानुवृत्तेः मृद्रूपतायाः सत्त्वम्, घटादीनान्तु किञ्चि-त्कालं प्रतीयमानानामप्यर्थक्रियाञ्च कुर्वतां स्वप्नदृष्टपदार्थवन्न सत्त्वम्, एवं यथा स्वभेदे-ष्वनुगतायाः मृद्रूपतायाः सत्त्वं तथा मृद्रूपत्वादीनामपि सत्त्वापेक्षया भेदरूपत्वान्न तात्त्वि-कत्वम्, अत एवोक्तम् 'आदावन्ते च यन्नास्ति वर्त्तमानेऽपि तत्तथा। वितथैः सदृशाः सन्तोऽ-वितथा इव लक्षिताः' [ गौडपा. का० ६ पृ. ७० वैतथ्य प्र० ] तथा 'सर्वमेकं सल्लक्षणं
25 ब्रह्म' इति। 'एकमेवाऽद्वितीयं' (छान्दोग्य. अ. ६ खं० २ मं० १) 'पुरुष एवेदं सर्वं' (ऋक्सं० मण्ड० १० सू० ९० अ. २) इत्यादिकोऽनेकोऽद्वैतप्रतिपादक आम्नायः। न चाभेदप्रतिपादक आगमः प्रत्यक्षबाधितः, प्रत्यक्षस्यानुगतरूपग्राहकत्वेनाभ्युपगमात्, न तु भेदग्राहकतयापि, न चाभ्युपगममात्रमेवेति वक्तव्यम्, प्रत्यक्षप्रतीतिविषयतयाऽभ्युपगम्यमानो भेदः किं देशभेदात्, उत कालभेदात्, किंवाऽऽकारभेदादभ्युपगम्यते, न तावत्प्रथमः पक्षः,

स्वतोऽभिन्नस्यान्यभेदेन भेदानुपपत्तेः न ह्यन्यभेदोऽन्यत्र संक्रामति । देशस्यापि भेदकान्तरा-
पेक्षायामपरदेशभेदादिकल्पनेऽनवस्था, स्वतो भेदे च भावभेदोऽपि तथा स्यादिति देशभेदा-
द्भेदकल्पनाऽन्याय्या । देशभेदस्य च ज्ञानाभावे न तद्भेदाद्भेदोऽपि ज्ञातुं शक्यः स्वतोऽव्यव-
स्थितस्यापरव्यवस्थापकत्वायोगात्, न द्वितीयः, प्रत्यक्षस्य सन्निहितमात्रवृत्तित्वेन ततः काल-
भेदाद्वस्तुभेदस्य प्रतीत्ययोगात्, मृत्पिण्डोपलम्भक्षणे हि घटस्य भावित्वेनाप्रतीत्या प्रतियोगि- 5
ग्रहणाभावेन ततो भिन्नमिदमिति न प्रतीतिः मृत्पिण्डमात्रस्य प्रतीयमानत्वात्, घटकालेऽपि
प्रत्यक्षस्य पूर्वदृष्टार्थग्रहणाक्षमत्वात् पुरः प्रतिभासमाने वस्तुनि मृत्पिण्डभेदो न ततो ग्रहीतुं
शक्यः, तस्मान्न कालभेदादपि भेदावगमः । न च पूर्वदृष्टार्थस्मरणसहकृतेन दर्शनेन भेदोऽव-
गम्यत इति वाच्यम्, स्मृत्या पूर्वदृष्टार्थावगमेऽपि भेदस्य पूर्वमदृष्टत्वात्, भिन्नस्य प्रतियोगिनोऽ-
वगमने तस्या असामर्थ्यात् । किञ्च स्मृतिः स्वरूपनिमग्ना कथं भेदमादर्शयितुं क्षमा भवेत्, 10
तथाहि स्मृतौ किं स्मर्यमाणरूपेणार्थ आरूढः, दृश्यमानरूपेण वा, नाद्यः, स्मर्यमाणरूपस्य
तत्राभावात्, पूर्वं हि तस्य दर्शनारूढं परिस्फुटं रूपमधिगतं न च तत्स्मृतौ प्रतिभाति, न
द्वितीयः, दृश्यमानरूपेणार्थस्य स्मृतावप्रतिभासनात् । न चोत्तरदर्शने स्मृतौ वा पूर्वरूपाप्र-
तिभासनमेव भेदवेदनमिति वाच्यम्, प्रत्यक्षे स्मृतौ च पूर्वरूपविविक्तताप्रतिभासकस्य कस्या-
प्यभावात्, न हि पूर्वरूपस्यैव प्रतिभासकं किञ्चिदस्ति तदनवगमाच्च न तद्विविक्तताया 15
अवगमश्शक्यः । न च भावस्वरूपमेव भेदः तत्प्रतिभासे सोऽप्यवगत इति वाच्यम्, भा-
वरूपमेव भेद इत्यसङ्गतेः, प्रतियोग्यपेक्षया ततो भिन्नमेतदिति भेदव्यवस्थापनात् । भाव-
स्वरूपस्यैव भेदरूपत्वे च परापेक्षया भेद इव स्वापेक्षयापि भेदः स्यात्, परापेक्षयैव भेदो
न स्वात्मापेक्षयेति चेन्न पररूपस्यैवाप्रतिपत्तेरिति न पूर्वापरकालभेदात्पदार्थभेदः । नाप्या-
कारभेदाद्भेदः, समानकालयोर्नीलपीतयोरिवेति वक्तुं शक्यं विकल्पानुपपत्तेः, सोऽयं हि स्व- 20
रूपभेदः किं स्वत एव प्रतिभाति, उत व्यतिरिक्तप्रतिभासावसेयः, नाद्यः, नीलादेः स्वतः
प्रकाशने स्वप्रकाशत्वप्रसङ्गात्, तथात्वे च नीलस्वरूपं स्वात्मनि निमग्नं न पीतस्वरूपसंस्पर्शि,
पीतस्वरूपमपि स्वस्वरूपावभासं न नीलस्वरूपसंस्पर्शीति परस्परासंवेदनात् स्वरूपतोऽपि न
भेदसंवेदनम्, भेदस्य द्विष्ठत्वेन द्वयासंवेदने तद्वेदनासम्भवात् । न चैकस्वरूपप्रतिभासेऽपरस्व-
रूपाप्रतिभासनमेव भेदवेदनम्, नीलस्वरूपप्रतिभासे नीलस्यैव विदितत्वेन पीतादेरनवभा- 25
सनात्तत्र पीतादिकं नास्तीति नास्तित्ववेदनात्स्वरूपमात्रप्रतिभासेन भेदासिद्धेः । न द्वितीयः,
व्यतिरिक्तो हि बोधः स च न भेदमवगमयितुं समर्थः, अपरोक्षनीलसुखाद्याकारव्यतिरिक्तस्य
तस्याप्रतिभासमानत्वेनासत्त्वात्, बहिर्नीलादेरन्तश्च सुखादेरेव प्रतिभासमानतया तदुभयव्य-
तिरिक्तस्य बोधात्मनः स्वप्नेऽप्यनुपलम्भात् । न चाहंप्रत्ययेन बोधात्माऽवसीयते, विशुद्ध-

बोधस्यात्राप्यप्रतिभासनात्, अहं सुखी, अहं दुःखी स्थूलः कृशो वेति सुखादिशरीरा-
दीनवलम्ब्यैव तस्य समुदयात, तस्मान्न स्वरूपेणाप्रतिभासमानवपुर्बोधो भावान् व्यवस्था-
पयितुं समर्थः । व्यतिरिक्तस्य बोधस्य प्रकाशेऽपि स्वरूपनिमग्नत्वान्न भिन्ननीलादेर्ग्राह-
कत्वम्, बोधकाले हि न नीलादिकं प्रतिभासते येन बोधस्तस्य ग्राहको भवेत्, नीलादेर
5 पि बोधं प्रति ग्राहकतापत्तेः । न च पुरोवर्त्तिषु नीलादिषु प्रत्यक्षतां प्रति बोधस्य व्याप्रिय-
माणतयोपलम्भाद्ग्राहकत्वं तद्विषयत्वाच्च नीलादेर्ग्राह्यत्वमिति वाच्यम, तद्व्यतिरिक्तस्य व्यापा-
रस्यानुपलम्भेनासत्त्वात्, उपलम्भे च तस्य बोधस्य तत्राप्यपरो व्यापार इत्यनवस्था-
प्रसङ्गात् । स्वत एव व्यापारोपलम्भेऽङ्गीकृते स्वानन्त्येणोपलम्भान्न तस्य बोधव्यापारत्वम्,
बोधपरतंत्रतया तद्व्यापारत्वमिति चेन्न समानकाले प्रतिभासिनस्तस्य पारतन्त्र्यायोगात,
10 अन्यथा बोधस्यापि व्यापारपरतंत्रतापत्तेः । तस्माद्बोधनीलव्यापारलक्षणस्य त्रितयस्यैककाल-
मुपलम्भान्न कर्तृकर्मक्रियाव्यवहारः सम्भवतीति न वस्तुतो ग्राह्यग्राहकभावः, भिन्नकालयोस्तु
ज्ञानज्ञेययोः परस्परसन्निधिनिरपेक्षतया न वेद्यवेदकतासम्भव इति न बोधात्मा तुल्यकाल-
योर्नीलपीतयोर्भेदस्य साधकः, स्वरूपनिष्ठत्वात् । किञ्च भेदो न क्वापि स्वरूपेण स्थितिमासा-
दयति, स्थूलावभासिनो नीलादेरनेकदिक्सम्बन्धात परमाणुरूपतया तस्यापि नानादिक्सम्ब-
15 न्धेन भेदात, तथा चानवस्थानान्न भेदस्थितिः, एकस्य कस्याप्यसिद्ध्या तत्रान्यभेदस्यावस्था-
नासम्भवात् । न च नीलादेः सुखाद्यात्मनाऽननुभवाद्भेदस्यैवाभेदस्यापि प्रत्यक्षतो न प्रसि-
द्धिरिति वाच्यम्, नीलादिप्रतिभासानां भेदावेदनस्यैवाभेदवेदनरूपत्वात । न च तेषामभेदावे-
दनमेव भेदवेदनम्, न हि देशकालाकारैरेकत्वं जगतः प्रतीयते, परस्परोपलम्भपरिहारेण देशा-
दीनां प्रतिभासनादिति वक्तव्यम, अन्योन्यपरिहारेणोपलम्भस्याद्वैतवादिनोऽप्रसिद्धत्वात्, न
20 च भेदवादिनः परस्परानुप्रवेशोपलब्धिरसिद्धेति वाच्यम्, सर्वत्र सन्मात्रोपलब्धेः सद्भावात,
तस्मान्न कुतश्चित्प्रमाणाद्भेदसिद्धिः । ननु सल्लक्षणमेकं यदि ब्रह्म तर्हि तत्किं विद्यास्वभावम्,
उताविद्यास्वभावम, नाद्यः निवर्त्यस्य प्राप्तव्यस्य वा कस्यचिदभावेन तदर्थानां शास्त्राणां प्रवृत्ती-
नाञ्च वैयर्थ्यापातात । न द्वितीयोऽसत्यताप्रसङ्गात, मैवम, ब्रह्मणोविद्यास्वभावत्वेऽप्यवि-
द्याया व्यापारनिवर्त्तनीयस्वरूपायाः सद्भावेन शास्त्रादीनां साफल्यात् । न चाविद्या तत्त्वतो ब्र-
25 ह्मणो भिन्ना नास्त्येव, या प्रयत्ननिवर्त्या भवेदिति वाच्यम, तदभेदे तात्त्विकायास्तस्याः स-
द्भावे तत्स्वरूपस्य केनापि निवर्त्तयितुमशक्यत्वात, न चास्माकमेव मुमुक्षूणां पुरुषप्रयत्नोऽ
विद्यानिवर्त्तकः किन्तु सर्वत्र प्रवादेषु अतात्त्विकानाद्यविद्योच्छेदार्थो मुमुक्षुयत्नः । ननु नाना-
वेर्नोच्छेद इति वदामः, किन्तु नित्यस्य ब्रह्मणोऽविद्या किं स्वभावः, उतार्थान्तरभूता, तत्र
नाद्यः, तस्य तद्विरुद्धविद्यास्वभावत्वात्, न द्वितीयः, तस्यास्तत्त्वतः सद्भावे उच्छेदासम्भवात्,

द्वैतप्रसङ्गाच्च। न च अग्रहणमविद्या, सा कथमर्थान्तरम्, न चानिवर्त्त्या, सर्वप्रमाणव्यापाराणामग्रहणनिवृत्त्यर्थत्वादिति वाच्यम्, यतः तत्त्वाग्रहणस्वभावाऽविद्या तत्त्वग्रहणस्वभावया विद्यया निवर्त्त्यते सा च विद्या ब्रह्मणि नित्या, न चास्ति ब्रह्मणोऽन्यो यस्य तत्त्वतोऽग्रहणं ब्रह्मणि प्रयत्नलभ्यया विद्यया निवर्त्त्येत, ब्रह्मणि तु युगपद्ग्रहणाग्रहणे विरोधेन विप्रतिषिद्धे, अविरोधे वा न विद्यया तत्त्वाग्रहणव्यावृत्तिर्भवेत्, यस्य तु मते अन्यथाग्रहणरूपाऽविद्या तन्म- 5
तेऽपि तस्या ब्रह्मस्वभावत्वेऽनिवृत्तिः, अर्थान्तरत्वे च द्वैतापत्तिः, नित्यप्रबुद्धत्वे च ब्रह्मणः कस्यान्यथात्वग्रह इति वक्तव्यम्, तद्व्यतिरिक्तस्यान्यस्यासत्त्वात्, तस्य च विद्यास्वभावत्वान्न तद्विपरीताऽविद्यास्वभावता, विरुद्धधर्मसमावेशायोगात्, अविरोधे विद्यया नाविद्याव्यावृत्तिरिति चेत्, अत्राहुः अविद्या न तावद्ब्रह्मणोऽनन्या, न वा तत्त्वान्तरं नाप्येकान्तेनासती, एवमेवेयमविद्या माया मिथ्याभास इत्युच्यते, वस्तुत्वे हि तत्त्वान्यत्वविकल्पावसरः, अत्य- 10
न्तासत्त्वे च खपुष्पवद्व्यवहारानङ्गम्, अतोऽनिर्वचनीया सा। तस्मान्नाविद्या सती, नाप्यसती, नाप्युभयरूपा, अत एवास्या अदृढस्वभावत्वेन निवृत्तिर्मायामात्रत्वात्। कस्यामावविद्येति चेज्जीवानामिति ब्रूमः, ननु तेऽपि न ब्रह्मणोऽर्थान्तरभूता इति चेत्सत्यं, न परमार्थतः, किन्तु काल्पनिकस्तेषां ततो भेदः,। ननु कस्य कल्पना भेदिका, न हि ब्रह्मणः, तस्य विद्यास्वभावत्वेन सकलविकल्पातीतत्वात्, नापि जीवानाम्, कल्पनायाः प्राक् तेषामसत्त्वात्, 15
इतरेतराश्रयप्रसङ्गाच्च, कल्पनातो जीवविभागः तद्विभागे सति कल्पनेति, अत्र केचिद्ब्रह्मवादिनः, वस्तुत्वे सति हि 'असिद्धं वस्तु वस्त्वन्तरसिद्धये सामर्थ्यं नासादयती'ति दोषः स्यात्, मायामात्रे तु नेतरेतराश्रयदोषप्रसङ्गः, न हि मायायाः कथञ्चिदनुपपत्तिः, अनुपपद्यमानार्थैव हि माया लोके प्रसिद्धा, उपपद्यमानार्थत्वे तु यथार्थभावान्न मायेति वदन्ति। अन्ये तु मायाया जीवविभागस्य चानादित्वाद् बीजाङ्कुरसन्तानयोरिव नेत- 20
रेतराश्रयदोषप्रसङ्गः। न च कल्पनया जीवविभागेऽपि तेषां तत्त्वतो ब्रह्माभिन्नतया विशुद्धस्वभावत्वान्न तत्राविद्याऽवकाशं लभत इति वाच्यम्, विशुद्धस्वभावाद्बिम्बात् कृपाणादिषु यत्कल्पनाप्रदर्शितं प्रतिबिम्बं तत्र श्यामताद्यशुद्धिरिव जीवेषु अविद्याया अवकाशसम्भवात्। न च कृपाणादीनां मुखाद्भिन्नत्वेन भ्रान्तिहेतुता युक्ता, अत्र तु ब्रह्मव्यतिरिक्तस्याभावात्कथं विभ्रम इति वाच्यम्, जीवविभागस्यानादित्वेन परिहारात्, अनादित्वेऽपि 25
चोच्छेदः शक्यत एव विधातुं यथा भूमेरूषरस्येति वदन्ति। तदेवं सर्वमेकं सदविशेषादिति शुद्धद्रव्यास्तिकाभिप्रायः॥

अशुद्धस्तु द्रव्यार्थिको व्यवहारनयमतार्थावलम्बी एकान्तनित्यचेतनाचेतनवस्तुद्वयप्रति-

पादकसांख्यदर्शनाश्रितः, अत एव तन्मतानुसारिणः सांख्या प्राहुः–सत्त्वरजस्तमसां साम्यावस्थानलक्षणं प्रधानं महदादिसकलकार्यजनकशक्तियुक्तम्, तस्माद्बुद्धिर्महदभिधाना घटः पट इत्यध्यवसायलक्षणा जायते, ततोऽहङ्कारः अहं सुभगः अहं दर्शनीय इत्याद्यभिमानस्वरूपः, तस्मात् शब्दस्पर्शरूपरसगन्धात्मकानि पञ्च तन्मात्राणि, बुद्धीन्द्रियाणि पञ्च कर्मे-
5 न्द्रियाणि पञ्चमनश्चेति षोडशको गणः प्रवर्त्तते, पञ्चतन्मात्रेभ्यश्च पञ्चभूतानि आकाशवायुतेजोजलपृथिवीरूपाणि जायन्ते, तथा च महदादयः प्रधानं पुरुषश्चेति पञ्चविंशतिरेषां तत्त्वानि। महदादयः कार्यभेदाः प्रधानान्नात्यन्तभिन्नाः किन्तु प्रधानात्मका एव, त्रैगुण्यादिना प्रकृत्यात्मकत्वात् त्रिगुणं प्रधानम्, एवमविवेकि, इमे सत्त्वादयः इदञ्च महदादिकमिति पृथक् कर्त्तुमशक्तेः, व्यक्तस्वरूपा महदादयोऽव्यक्तस्वरूपं प्रधानञ्च विषयः, भोग्यस्वभावत्वात्,
10 सामान्यं सर्वपुरुषभोग्यत्वात् पण्यस्त्रीवत्, अचेतनं सुखदुःखमोहावेदकत्वात्, प्रसवधर्मि त्रैगुण्यादिरूपेण तद्रूपमहदादिकार्यप्रवर्तकत्वात्, तदुक्तम् 'त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि। व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्' इति [सांख्यका० ११] तत्र महदादयो व्यक्ताः कुतश्चिदुत्पत्तेः, उत्पत्तिधर्मकत्वात्, अव्यापित्वात्, क्रियावत्त्वात्, अनेकत्वात्, कारणाश्रितत्वात्, कारणे लीयमानत्वात्, शब्दाद्यवयवयुक्तत्वात् सर्वदा
15 कारणायत्तत्वाच्च, न त्वेवं प्रधानपुरुषौ। तदुक्तम् 'हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्। सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्' इति [ सांख्यका० १० ] ननु कारणे कार्याणां महदादीनां लीयमानत्वोक्त्या कारणे सत एव कार्यस्योत्पादो गम्यते तत्कथं ज्ञायते, तत्रोक्तम् ' असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात्। शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ' इति [ सांख्यका० ९ ] उत्पत्तेः प्राक् कारणे यदि कार्यं न स्या-
20 त्तदा तत् केनचिन्न स्यात् गगनारविन्दवत्, न चैवं भवति, अतः पूर्वमपि कार्यं कारणे सत्, तत्र तस्य शक्तिरूपेणाङ्गीकारात्, न तु व्यक्तरूपतयापि, तथा चासदकरणात् कार्यं कारणे सत्। कारणे च कार्यस्यासत्त्वे पुरुषाणां प्रतिनियतोपादानग्रहणं न स्यात्, शालिफलार्थिनो हि शालिबीजमेवोपाददते न कोद्रवबीजम्, कारणे कार्यस्यासत्त्वेऽसत्त्वाविशेषात् किमिति प्रतिनियतान्येव कारणानि गृह्णन्ति नान्यानि, तत्फलशून्यत्वान्न गृह्णन्तीति चेत्तर्हि शालिफलार्थिना
25 शालिबीजमपि न गृह्येत, न चैवं तस्मात्तत्र शक्तिरूपेण कार्यमस्तीति गम्यते। तथा यद्यसदेव कार्यमुत्पद्यते तदा सर्वस्मात्तृणपांश्वादेस्सर्वं स्वर्णरजतादिकार्यमुत्पद्येत, सर्वस्मिन्नुत्पत्तिमति भावे तृणादिषु कारणभावात्मताविरहस्याऽविशिष्टत्वात्, पूर्वं कारणमुखेन प्रसङ्गः, सम्प्रति कार्यद्वारेणेति विशेषः न च सर्वं सर्वतो भवति, तस्मात्सर्वसम्भवाभावात्तत्रैव तस्य सद्भावो गम्यते। ननु कारणानि प्रतिनियतकार्येषु प्रतिनियतशक्तिमन्ति, तेन तत्र कार्यस्यासत्त्वेऽपि

किञ्चिदेव कार्यं क्रियते न सर्वम्, किञ्चिदेव चोपादानमुपादीयते तदेव समर्थं न तु सर्वम्,
किञ्चिदेव च कुतश्चिद्भवति न तु सर्वं सर्वस्मादिति चेन्न, शक्तानामपि हेतूनां कार्यं कुर्वाणानां
शक्यक्रियस्यैव कार्यस्य करणान्नाशक्यस्य । न च नाशक्यं कुर्वन्तीति वदामः किन्तु असदपि
कार्यं कुर्वन्तीति, तच्च शक्यक्रियमेवेति वाच्यम्, असत्कार्यकारित्वाभ्युपगमादेवाशक्य-
क्रियं कुर्वन्तीति प्राप्तेः, यद्ध्यसत् तन्नीरूपं यच्च नीरूपं तच्छशविषाणादिवदनाधेयातिशयम्, 5
यच्चानाधेयातिशयं तदाकाशवदविकारि, तथाभूतश्चासमासादितविशेषरूपं कथं केनचिच्छ-
क्येत कर्तुम् । न च सदवस्थाप्रतिपन्नमविकारीति वाच्यम्, तथा सत्यात्महानिप्राप्तेः,
विकारे ह्यभीष्टे निरुपाख्यलक्षणस्य स्वरूपस्य हानिर्भवेत्, न ह्यसतः स्वभावापरि-
त्यागे सद्रूपतापत्तिर्युक्ता, परित्यागे वाऽसदेव सद्रूपतां प्रतिपन्नमिति न सिद्ध्येत, अन्यदेव
हि सद्रूपमन्यदेवासद्रूपम्, परस्परपरिहारेण तयोरवस्थानात्, तस्मात्तदसत्तदशक्यक्रियमेव, 10
अतस्तथाभूतपदार्थकारित्वाभ्युपगमे कारणानामशक्यकारित्वमेवाभ्युपगतं स्यात्, न चाशक्यं
केनचित् क्रियते यथा गगनांभोरुहम्, अतः शक्तिप्रतिनियमादित्यनुत्तरम्, तस्मात् शक्तस्य
शक्यकरणात्सत् कार्यम् । पूर्वोदितेभ्यो हेतुभ्योऽसत्कार्यवादे कथमपि कार्यस्यायोगाद्बीजादिकं
किं कुर्वत्कारणं स्यात्, ततश्चैवं वक्तुं शक्यं न कारणं बीजादिः, अविद्यमानकार्यत्वात्,
गगनाब्जवत्, न चैवं भवति तस्मात्कारणभावात् सिद्धं प्रागुत्पत्तेः सत्कार्यमिति । भवतु 15
सत्कार्यमिति, प्रधानादेव महदादिकार्यभेदाः प्रवर्त्तन्त इति कथं सिद्ध्यति, उच्यते 'भेदानां
परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च । कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य । कारण-
मस्त्यव्यक्तम्' इति [ सांख्यका० १५ ] अस्ति प्रधानं, भेदानां परिमाणात्, लोके हि यस्य
कर्त्ता भवति तस्य परिमाणं दृष्टम्, यथा कुलालः परिमितान्मृत्पिण्डात् परिमितं घटमुत्पाद-
यति प्रस्थग्राहिणमाढकग्राहिणं वा, महदादिव्यक्तञ्च परिमितमुपलभ्यते, एका बुद्धिरेकोऽहङ्कार 20
इत्येवम्, तस्मादस्ति प्रधानं यत्परिमितं व्यक्तमुत्पादयति, यदि तन्न स्यान्निष्परिमाणमिदं
व्यक्तं स्यादिति । भेदानां समन्वयादस्ति प्रधानम्, यद्धि यज्जातिसमन्वितमुपलभ्यते तत्तन्म-
यकारणसम्भूतम्, यथा घटशरावादयो मृज्जात्यन्विता मृदात्मककारणसम्भूताः, व्यक्तञ्चेदं
सुखदुःखमोहादिजातिसमन्वितं तस्मात्तन्मयप्रकृतिसम्भूतं तदिति प्रधानसिद्धिः। शक्तितः प्रवृत्ते-
रस्ति प्रधानम्, इह लोके यो यस्मिन्नर्थे प्रवर्त्तते स तत्र शक्तः, यथा तन्तुवायः पटकरणे, अतः 25
प्रधानस्यास्ति शक्तिर्यया व्यक्तमुत्पादयति, सा च शक्तिर्न निराश्रया, अतोऽस्ति प्रधानं यत्र
शक्तिर्वर्त्तेत इति । कारणकार्यविभागादस्ति प्रधानम्, लोके हि कार्यकारणयोर्विभागो दृष्टः
यथा मृत्पिण्डः कारणं घटः कार्यं स च मृत्पिण्डाद्भिन्नस्वभावः, घटो हि जलधारणादिसमर्थो
न मृत्पिण्डः, एवमिदं महदादिकार्यं दृष्ट्वाऽस्ति प्रधानं कारणं यस्मादिदं महदादिकार्यं जायत

इति साधयामः । वैश्वरूप्यस्याविभागादस्ति प्रधानम्, वैश्वरूप्यमिति त्रयो लोका उच्यन्ते, एते हि प्रलयकाले कचिदविभागं गच्छन्ति, तथा हि पञ्चभूतानि पञ्चसु तन्मात्रेष्वविभागं गच्छन्ति, तन्मात्राणीन्द्रियाणि चाहङ्कारे, अहङ्कारस्तु बुद्धौ, बुद्धिः प्रधाने, तदेवं प्रलयकाले त्रयो लोका अविभागं गच्छन्ति, अविभागोऽविवेकः, यथा क्षीरावस्थायामन्यत्
5 क्षीरमन्यद्दधीति विवेको न शक्यतेऽभिधातुं तथा प्रलयकाले इदं व्यक्तमिदमव्यक्तमिति विवेकोऽशक्यक्रिय इति मन्यामहे अस्ति प्रधानं यत्र महदादिलिङ्गमविभागं गच्छतीति । सत्त्वरजस्तमोलक्षणं सामान्यमेकमचेतनं द्रव्यं अनेकं च चेतनं द्रव्यमर्थोऽस्तीति द्रव्यार्थिकः, अशुद्धो व्यवहारनयाभिप्रेतार्थाभ्युपगमस्वरूपो बोद्धव्यः । वक्ष्यति चाचार्यः 'जं काविलं दरिसणं एयं दव्वट्ठियस्स वत्तव्वं' इति ( गा० १४५ ) । नैगमनयाभिप्रायस्तु
10 द्रव्यास्तिकः शुद्धाशुद्धतयाऽऽचार्येण न प्रदर्शित एव, नैगमस्य सामान्यग्राहिणः संग्रहेऽन्तर्भूतत्वात्, विशेषग्राहिणश्च व्यवहारे इति नैगमाभावादिति द्रव्यप्रतिपादकनयप्रत्ययराशिमूलव्याकरणी द्रव्यास्तिकः शुद्धाशुद्धतया व्यवस्थित इति ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
15 लब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य नयद्वयघटकद्रव्यार्थिकस्वरूपनिरूपणं नाम द्वादशं सोपानम् ॥

---

## नयद्वयघटकपर्यायार्थिकस्वरूपम् ।

अथ ऋजुसूत्रशब्दसमभिरूढैवम्भूतनयप्रत्ययराशिमूलव्याकरणी पर्यायार्थिकश्शुद्धा-
20 शुद्धतया व्यवस्थितः पर्यायलक्षणविषयव्यवस्थापनपरो द्रव्यार्थिकनयाभिप्रेतवस्तुव्यवस्थापनयुक्तिं प्रतिक्षिपति, तथाहि सर्वमेकं सदविशेषादिति द्रव्यार्थिकेन भेदस्य प्रमाणबाधितत्वात् किमेकमुच्यते, किं वाऽभेदे प्रमाणसद्भावात् । न प्रथमः, प्रत्यक्षादिप्रमाणस्य भेदपोषकतया तद्बाधितुमप्रवृत्तेः, न हि भेदं विना प्रमाणेतरव्यवस्था सम्भवति, प्रमाणञ्च प्रत्यक्षानुमानादिभेदेन भिन्नं सद्भेदमावकमेव, न तु तद्बाधकम्, चक्षुर्व्यापारसमनन्त-
25 रभाविप्रत्यक्षं हि वस्तुभेदमधिगच्छदुत्पद्यते, भाव एव च भेदः, अतस्तमधिगच्छता प्रत्यक्षेण भेदोऽप्यधिगत एव । न च भेदः कल्पनाविषयः, इदमस्माद्व्यावृत्तमिति तस्य व्यवस्थापनात्, अभेदस्तु निरपेक्षप्रत्यक्षज्ञानसमधिगम्य इति वाच्यम्, अभेदस्यैव कल्पनाज्ञानविषयत्वात्, इदमनेन समानमित्यनुगतार्थप्रतिभासस्यैव परापेक्षस्य कल्पनाज्ञानं विनाऽनुपपत्तेः । भेदस्तु परस्परासंमिश्रवस्तुबलसम्भूतेन तदाकारसंवेदनेन विज्ञेयः,

तदाभासाध्यक्षस्यानुभवसिद्धत्वात्, अध्यक्षस्य भावग्रहणरूपत्वाच्च। भावाश्च स्वस्वरूप-व्यवस्थिताः परेण साकं नात्मानं विना कल्पनाज्ञानं योजयन्ति । परस्परासंकीर्णरूप-प्रतिभासेन हि भावा व्यवहाराङ्गं नान्यथा । न च पदार्थान्तरात् पदार्थस्य भेदं प्रत्यक्षं न प्रतिपादयतीति वाच्यम्, सर्वतो व्यावृत्तभावानामेवाध्यक्षे प्रतिभासनात्, पुरोव-स्थिते हि घटपटादिके वस्तुनि चक्षुर्व्यापारसम्भूतप्रतिनियतार्थप्रतिभासादेव सर्वस्मादन्यतो 5 भेदोऽध्यक्षेण प्रतिपन्नः, अन्यथा प्रतिनियतप्रतिभासायोगात् । न ह्यघटरूपतयाऽपि प्रति-भासमानो घटः प्रतिनियतप्रतिभासो भवति, अघटरूपपदार्थाप्रतिभासने च तत्र कथं न ततो भेदप्रतिभासः स्यात्, न हि घटस्तदात्मा भवति, सर्वभावानां स्वस्वभावव्यवस्थितेः, अन्यथा सर्वत्र सर्वस्योपयोगादिप्रसङ्ग इत्यन्याप्रतिभासनमेव घटादेः प्रतिनियतरूपपरिच्छेदः । यदि प्रतिनियतरूपस्य परिच्छेदे सत्यपि अन्यरूपपरिच्छेदो न स्यात्तदा प्रतिनियतैकस्व- 10 रूपस्यापि परिच्छेदो न स्यात । घटरूपे हि यद्यध्यक्षप्रत्ययेनापि अघटरूपभेदो नाधिगत-स्तदाऽघटरूपमपि घटरूपं स्यादिति न प्रतिनियतघटरूपप्रतिपत्तिः स्यात्, तथा च सति प्रतिनियतवस्तुदर्शनात् क्वचिदेव कस्यचित्पुरुषस्य प्राप्तिपरिहारार्थो दृष्टो व्यवहारो न स्यात्, न च तत्रासतो रूपस्य प्रतिभासो युक्तः, तदप्रतिभासने च प्रतिभासमानरूपस्य ततो विवेकप्रतिभासो युक्त एव । न च भेदः कल्पनाज्ञानविषयोऽबाधितानुभवगो- 15 चरत्वात् । अत एव भेद इतरेतराभावरूपो न प्रत्यक्षविषय इति प्रत्युक्तम्, भाव-स्वरूपग्रहणे इतरेतराभावरूपस्य भेदस्य प्रतिभासनात् । अनुमानागमयोः स्वरूपस्य तु भेदनिबन्धनत्वान्न भेदबाधकत्वम्, एवं प्रमेयभेदनिश्चये प्रमाणादपि प्रमेयस्य भेदो निश्चित एव भवतीति प्रमाणनिश्चिते भेदे तस्याबाधितत्वादभेदाभ्युपगमो न युक्तः । यदपि देशका-लाकारभेदैर्भेदो न प्रत्यक्षादिभिः प्रतीयत इत्युक्तं तदभेदप्रतिपत्तावपि समानम्, यदि 20 पदार्थानामभेदोऽपि देशाभेदात्तदा पूर्ववदेवानवस्थादिदोषप्रसङ्गः । ननु नानादेशसम्ब-न्धित्वेन प्रतिभासमानाः सर्वे घटपटादयः सद्रूपतया प्रतिभासन्ते सद्रूपत्वस्य सर्वदाऽ-विच्युतेरबाधितप्रत्ययविषयत्वेन पारमार्थिकत्वम्, घटादिभेदाश्च देशान्तरेषु प्रच्युतिमन्तो बाधितप्रत्ययविषयतया न पारमार्थिका इति चेन्न, यतः अन्यतमदेशगतघटादिभेदाना-मध्यक्षेण प्रतिपत्तिसमये तत्सम्बन्धितया यत्स्वरूपं स्फुटं प्रतिभासते तदा नापरदेशस्थघटा- 25 दिभेदसम्बन्धितत्स्वरूपमवभासते, तत्र तद्भेदानामसन्निधानेन तथा प्रतिभासायोगात्, अतः कथं तत्स्वरूपस्य देशान्तरस्य घटादिभेदानुगतत्वं प्रतिभासेत, यादृशं हि रूपं तद्भेदप-रिष्वक्तं प्रत्यक्षेण स्पष्टमवगतं तस्य तदेव रूपमभ्युपेयम्, अन्यदेशस्थभेदानुगतस्य स्वरूपस्य तद्दर्शनासंस्पर्शिनोऽसम्भवात, सम्भवे वा तस्य स्वरूपस्य दृश्यस्वभावाभेदत एकत्वात् सर्वत्र

भेदप्रतिहतेरनानैकं जगत् स्यात्। तथा च दर्शनविषयमेतद्देशभेदसंसक्तं स्वरूपं नान्यभेदसंसक्तमिति न तदस्ति, यदि तु तत्स्वरूपमन्यभेदपरिगततया भासेत तर्हि निखिलदेशगता भेदा अपि प्रतिभासेरन्। न च प्रथमदेशस्थभेदप्रतिभासकाले देशान्तरगतभेदसम्बन्धिसद्रूपत्वस्याप्रतिभासेऽपि देशान्तरगतभेदान्तरोपलम्भसमये तन्निष्ठसद्रूपस्य प्रतिभासनात् 5 पश्चादभेदप्रतिपत्तिर्भवतीति वाच्यम्, तदापि भेदान्तरपरिष्वक्ततयैव सद्रूपस्य भानेन पूर्वभेदसंस्पर्शितया तस्यानधिगतेः, पूर्वभेदस्यासन्निहितत्वेनाप्रतिभासनात्, तस्मान्नापरापरदेशभेदसमन्वयिसद्रूपताया अवगमः। नापि प्रत्यभिज्ञाप्रत्यक्षेण तद्देशभेदेष्वनेकेष्वन्वयिसद्रूपत्वं प्रतीयत इति वाच्यम्, तस्याः प्रत्यक्षत्वे तदवसेयस्य सद्रूपस्य नानाभेदेषु एकत्वासिद्धेः, तस्याः प्रत्यक्षरूपताऽसम्भवाच्च। न चाक्षव्यापारसम्भूतायास्तस्याः कथं न प्रत्य- 10 क्षत्वं विकल्पातिरिक्तस्य भेदग्राहिणो विशददर्शनस्याप्यक्षव्यापारजन्यत्वादेव प्रत्यक्षत्वादिति वाच्यम्, तथा सति प्रथमभेददर्शनकाल एव अपरभेदसमासक्ततया सद्रूपतायाः परिच्छेदप्रसङ्गात्। अथ तदा सहकारिण्याः स्मृतेर्विरहान्नान्वयितया सद्रूपताया अवगमः किन्तु अपरभेददर्शने सति, तदोद्बुद्धसंस्कारजन्यायाः स्मृतेः सत्त्वादिति चेन्न, तत्सहकृतस्यापि लोचनस्य सन्निहित एव घटादिभेदे तत्परिष्वक्तसद्रूपत्वे च प्रतिपत्तिजननसामर्थ्यात्, 15 न पूर्वदर्शनाधिगतभेदान्तरे, तस्यासन्निहितत्वेनातद्विषयत्वात्, न हि गन्धस्मरणसहकृतं चक्षुर्गन्धवद्द्रव्ये सुरभि द्रव्यमिति प्रतिपत्तिं जनयितुमीष्टे, तस्मान्न देशभेदादभेदः सन्मात्रस्य केनचित्प्रमाणेनावगन्तुं शक्यः। नापि पूर्वापरकालसम्बन्धित्वं सन्मात्रस्याभेदः प्रत्यक्षविषयः, पूर्वापरविविक्तवर्त्तमानमात्रपरिच्छेदस्वभावस्य प्रत्यक्षस्य कालान्तरपरिगतपदार्थप्रकाशनासामर्थ्यात्। उपलम्भो हि सत्ता, उपलब्धिश्चाक्षान्वया वर्त्तमानमेव रूप- 20 मुद्भासयति, अक्षस्य वर्त्तमान एव व्यापारोपलम्भात्, तदनुसारिणी चाध्यक्षप्रतीतिरक्षगोचरमेव पदार्थस्वरूपमुद्भासयितुं प्रभुरिति दर्शनविषयो वर्त्तमानमात्रं सदिति स्थितम्। न चाक्षप्रभवे दर्शने साम्प्रतिकरूपप्रतिभासेऽपि कथं पूर्वापरक्षणभेदोऽध्यक्षावसेयः, मध्यमक्षणस्य परमाणोरण्वन्तरात्ययकालतुलितमूर्त्तिः क्षणभेदः, स चाध्यक्षस्य मध्यक्षणदर्शित्वेऽपि न तद्रूपः सिद्ध्यतीति वाच्यम्, यस्य पूर्वापरकालसम्बन्धौ न स्तः परिहृत- 25 पूर्वापरकालविभागस्य तस्य क्षणभेदव्यवहारविषयत्वात्, न हि पूर्वापरकालस्थायित्वेना-

---

१ प्रत्यक्षेण सताऽवश्यं स्वलक्षणविषयत्वात् कल्पनापोढेन भवितव्यम्, प्रमाणत्वाच्चाभ्रान्तेन। न च प्रत्यभिज्ञानं कल्पनापोढम्, स एवायमित्येवं अभिजल्पाकारतया संवेद्यमानत्वात्। नाप्यभ्रान्तं भिन्नेष्वभेदाध्यवसायेन प्रवृत्तेरिति भाव ॥ २ यदि हि पूर्वोपलब्धार्थविषया सा तर्हि पूर्वमेव भवेत्, अविकलकारणत्वात् पूर्वज्ञानवत्, अत्राविकलकारणत्वमसिद्धमित्याह अथ तदेति ॥

गृह्यमाणो भावोऽभेदव्यपदेशभाग्भवति कालान्तरव्यापित्वमनुभवतामेव भावानां नित्यत्वेना-
भेदवत्त्वेन वा व्यपदेशार्हत्वात्, न च तत्राध्यक्षप्रत्ययः प्रवर्त्तते, भाविभूतकालतायामनु-
मानस्मृत्योरेव व्यापारदर्शनात्, दृश्ये हि वस्तुनि पूर्वमिदं दृष्टमिति स्मरन् स्थिरावस्था-
दर्शनाद्भाविकालस्थितिमनुमिन्वन् पूर्वोत्तरकालसम्बन्धित्वमधिगच्छति जन इति न परि-
स्फुटसंवेदनपरिच्छेद्यः कालभेदः, न हि भूतावस्था भाविकालता वा स्फुटदृशां विषय इति 5
कथमध्यक्षगम्योऽभेदः । अथ क्षणभेदो न संविदोल्लिख्यत इति कथं तद्ग्राह्यः, मैवम्, क्षणभेद-
स्याभेदविपर्यासरूपत्वेन कालान्तरस्थितिविपर्यासेन मध्यक्षणसत्त्वमेव गृह्णता प्रत्यक्षेण क्षण-
भेदस्याधिगतेः । ननु प्रत्यक्षमभेदं नाधिगच्छति, तदुत्थापितन्त्वनुमानं तमधिगच्छति, अर्थानां
स्थिरावस्थामुपलभ्य वर्षादिकालस्थितिमधिगच्छन्ति व्यवहारिणः, यतो यदि ध्वंसहेतुरस्य न
संनिहितो भवेत् तदा वर्षादिकमेष स्थास्यतीति, तस्माद्यस्य विनाशः सहेतुकः तस्य तद्धेतु- 10
सन्निधानमन्तरेण स्थितिसद्भाव इति कालाभेदः, यस्य तु मन्दरादेर्नाशहेतुर्न विद्यते स सर्वदा
स्थितिमनुभवतीत्युभयथाऽप्यभेदोऽनुमानावसेयः, मैवम्, अध्यक्षस्याभेदे कदाप्यप्रवृत्त्याऽनु-
मानस्यापि तत्राप्रवृत्तेः, न हि कालान्तरस्थायी भावोऽध्यक्षगोचरः, अध्यक्षगोचरत्वे वा तदा
स्पष्टदृगवगत एवाभेद इति किमनुमानेन, तस्माद्यत्र प्रतिभाति तत्सकलं क्षणान्तरस्थितिवि-
रहितमिति पदार्थाना सिद्धः क्षणभेदः । ननु यस्य ध्वंसहेतुसन्निधानं न विद्यतेऽसौ भावोऽ 15
ध्यक्षविषयतामतिक्रान्तोऽपि तिष्ठतीति कथं क्षणभेदः, यद्यपि पूर्वोत्तरकालसंस्पर्शित्वेन ना-
ध्यक्षोदयः, तथापि स पूर्वोत्तरकालवृत्तिभावग्रहणे समर्थ एव, न हि तथा ग्रहणाभावादेवार्था
न सन्तीत्यभ्युपगन्तुं युक्तोऽतिप्रसङ्गादिति चेन्न, तस्य भावस्य स्थिरत्वे दर्शने तस्यास्थिरतया
प्रतिभासायोगात्, न हि शुक्लं वस्तु पीततया परिस्फुटप्रत्ययेऽदुष्टेन्द्रियजे प्रतिभाति तयोः
परस्परं विरोधात्, प्रतिभासते चास्थिरतया तस्मात् क्षणभेदोऽध्यक्षगृहीत एव भावानाम् । 20
न वा भावानां विनाशो हेतुसान्निध्यापेक्षः, येन तदभावे भावः स्थायी भवेत्, अदर्शनस्यैवा-
भावरूपत्वात्, नाशहेत्वसम्भवाच्च, प्रतिभासमाने हि पुरोवस्थिते वस्तुनि न पूर्वापररूप-
योर्दर्शनमस्ति, यतो ध्वंसस्य मुद्गरादिहेतुत्वं स्यात्, मुद्गराद्यन्तरेणाप्यदर्शनस्य सम्भवात् ।
न च तदानीमदर्शनमेव न वस्तुनोऽभावः मुद्गरव्यापारानन्तरन्तु घटादेरभावो नादर्शन-
मात्रमिति वाच्यम्, यतः कोऽयमभावो नाम, किमस्तमयः उतार्थक्रियाविरहो वा, यद्य- 25
स्तमयः, पर्यायभेद एव तदा, अदर्शनं अभाव इति । अर्थक्रियाविरहोऽप्यभाव एव, स च
परिदृश्यमानस्य नास्तीत्यदर्शनयोग्य एव विद्यते, तथा चादर्शनमेवाभावस्तस्माद्भावादर्श-
नस्वरूपो नाशो मुद्गरादिव्यापारात् प्रागपि भावस्यास्तीति न तज्जन्यो ध्वंस इत्यदृश्य-
मानोऽप्यस्तीत्यभिधानं विरुद्धं स्यात् । न च मुद्गरपातानन्तरं न घटादिः केनचिद्

दृश्यते, स्वस्याक्षव्यापाराभावे च पुरुषान्तरदर्शने प्रतिभाति सः, स्वयमप्यक्षव्यापारे पुनरुपलभ्यते, तस्मान्मुद्गरव्यापारजन्यो ध्वंस इति वाच्यम्, पुनर्दर्शनस्यैवासम्भवात्, तद्धि किं पूर्वदृष्टस्य, उतान्यस्य । उत्तरकाले दर्शनं यदि पूर्वदृष्टस्यैव तदा स्यादभेदसिद्धिः, किन्तु तस्यैवोत्तरदर्शनमित्यत्र प्रमाणं नास्ति, अन्यस्य चेन्न तर्ह्यभेदः । नापि अनवरतमविच्छे-
5 देन यद्ग्रहणं तदेवाभेदग्रहणम्, अविच्छेददर्शनस्यानन्यदर्शनरूपत्वासिद्धेः, परम्परासंघटितवर्त्तमानसमयसम्बद्धपदार्थप्रतिभासनात्, न ह्यत्र वर्त्तमानदर्शने पूर्वरूपग्रहणं प्रत्यक्षेण, तस्य वर्त्तमानस्यैव ग्रहणे प्रवृत्तेः, नापि स्मृतिः तत्र पूर्वरूपतां संघटयति, तस्याः स्वग्रहणव्यापारपर्यवसितत्वेन बहिरर्थमप्रतिभासयन्त्याः पूर्वापरयोरेकत्वसंघटनेऽशक्तेः । प्रत्यभिज्ञानाच्चाभेदोऽध्यारोप्यमाणो दलितपुनरुदितनखशिखरादाविव प्रतिभासभेदेनापाक्रियमाणो न
10 वास्तवः, किन्त्वविच्छिन्नदर्शनेऽपि प्रतिकलमपरापरज्ञानप्रसवैरवगतस्याप्यर्थस्य भेदः । न च दर्शनमेव भिन्नं भिन्नमनुक्षणमर्थस्त्वभिन्न एवेति वक्तव्यम्, दर्शनभेदादेव दृश्यमानार्थस्य भेदसिद्धेः, यदा ह्येकं दर्शनं स्वकालेऽर्थसत्तां वेत्ति न तदाऽपरं दर्शनं यदा च तत्स्वकालमर्थं वेत्ति न तदा पूर्वं दर्शनमिति न तत्प्रतिभासित्वम्, अतो वर्त्तमानसंविदस्तीति तदुपलभ्यमानतैवार्थस्यास्तु न तु पूर्वदर्शनोपलभ्यमानता, तस्मादुपलम्भभेदादुपलभ्यमानता-
15 भेदः । न च पूर्वोत्तरदर्शनोपलभ्यमानतैव भिन्ना नार्थ इति वाच्यम्, पूर्वदर्शनोपलभ्यमानतायुक्तार्थप्रतिभासकाले उत्तरदर्शनोपलभ्यमानतायुक्तस्य तत्प्रतिभासवेलायाञ्च पूर्वदर्शनोपलभ्यमानतासङ्गतस्याप्रतिभासनात्, तस्मादुपलभ्यमानताभेदादपि तद्भेदः, तदतिरिक्तस्योपलभ्यमानरूपस्यापरस्य अननुभवेनाभावात्, केवलं प्रत्यभिज्ञानादभेद आरोप्यते स च न वास्तवः । न चापरापरसंविन्मात्रव्यतिरिक्तस्यैकस्यात्मनोऽभावे क्रमवत्संवेदना-
20 भावादर्थक्रमस्याप्यभाव इति वाच्यम्, अनेकत्वे सति पूर्वापरयोरपत्ययोरिव दर्शनस्याप्यनेकत्वे क्रमसंभवात्, न चानेकत्वं न प्रतीतिविषय इति वक्तव्यम्, एकत्वप्रतिभासाभावप्रतिभासस्यानेकत्वप्रतिभासरूपत्वात्, तस्य च स्वसंवेदनसिद्धत्वात् । न च कालं विना न पूर्वापरभावः अतोऽनेकत्वमात्रमवशिष्यते इति कथं क्रम इति वाच्यम्, दृश्यमानस्मर्यमाणतया पौर्वापर्यसद्भावेन क्रमसङ्गतेरविरोधात्, हेतुसन्निधानासन्निधानाभ्यां
25 कार्याणां क्रमत्वात्, हेतुसन्निधानासन्निधाने अपि तद्धेतुसन्निधानासन्निधानाभ्यामित्यनादिर्हेतुपरम्परा, अतः स्वभावविशेष एव क्रम इति न किञ्चित् कालेन, कालस्याप्यन्व-

१ अविच्छेददर्शनं हि धारारूपेण वस्तुनो दर्शनं तच्च प्रतिक्षणवस्तूनां सम्बद्धानां दर्शने सति स्यात्, तदेव न सम्भवति प्रतिक्षणभाविवस्तूनां परस्परं सम्बन्धानुपपत्तेः दर्शनस्य च पूर्वोत्तरक्षणग्रहणासामर्थ्याच्चेति भावः ॥

कालापेक्षक्रमत्वे चानवस्था, स्वतः क्रमत्वे पदार्थानामपि स्वत एव युक्त इति। तदेवं क्रमेणो-
पलभ्यमानमपरापरस्वभावमिति सिद्धः स्वभावभेदोऽत एव न स्वभावाभेदादभेदः सिद्ध्यति।
अथ क्षणिकेऽपि संवेदने पदार्थजातं युगपद्भासतेऽतो न क्षणभेदः, मैवम्, अनेकक्षणस्थितिर्हि
कालाभेदलक्षणं नित्यत्वमुच्यते, न चानेकक्षणस्थितिर्युगपदवभाति, यदा ह्येका क्षणस्थितिरव-
भासते तदैव यदि द्वितीयक्षणस्थितिरपि तद्भिन्ना प्रतिभाति तदा क्षणद्वयस्य परस्परविविक्तस्य 5
युगपत्प्रतिभासनात् कथं नित्यतालक्षणः कालाभेदः। ननु दर्शनमेव न क्षणिकं येन तद्भेदा-
द्ग्राह्यभेदो भवेत्, किन्तु तत्कालान्तरस्थितिमत्, तस्मात्कालान्तरानुषक्तमर्थमवगमयति,
असदेतत्, स्थिरं हि दर्शनं किमनेककालतां युगपदवभासयति, आहोस्वित् क्रमेण, नाद्यः,
यदा हि घटिकाद्वयपरिगतमर्थमनुभवति न तदैव तदवभाससम्बन्धिनं, तदनुभवे च तस्य
वर्त्तमानतापत्तेर्न कालान्तरता। यदि च प्रथमदर्शनमेव भाविरूपतामवगच्छति तदा ग्रहण- 10
विरतौ किमिति न जानाति पदार्थस्तिष्ठतीति। तदा ग्रहणमुपरतमतो नाधिगच्छतीति चेत्,
तर्हि तत्कालताया: परिग्रहणासम्भवः, यदा तदासीत्तदैव भाविरूपताया अपि परिच्छेदो जात
इति न वाच्यम्, तत्कालताया एव तेन ग्रहणात्, न भाविरूपतायाः, असन्निहितत्वात्,
सन्निधाने तु भाविरूपत्वानुपपत्तेः। नापि द्वितीयः, वर्त्तमानताप्रकाशसमये कालान्तरस्थितेः
तत्प्रकाशसमये च पूर्वकालताया अप्रतिभासेन परस्परासंस्पर्शिक्षणपरम्परैव दर्शनविष- 15
यो भवेत्। न च निरन्तरं दर्शिनस्तदेवेदमिति अभेदप्रतिपत्तिर्भविष्यतीति वक्तव्यम्,
दृश्यमानात्तद्रूपस्य भेदे तद्रूपाभेदो न स्यात्, अभेदे च पूर्वरूपतया दृश्यमानस्य प्रतिभासे
पूर्वरूपानुभव एव स्यात्, न वर्त्तमानरूपावभास इति सर्वेषामध्यक्षज्ञानानां स्मृतिरूपता-
प्रसङ्गः। यदि दृश्यमानतया पूर्वरूपस्याधिगतिः तदापि तस्य स्फुटमनुभूयमानरूपमेव
स्यात्, न पूर्वरूपता, न हि सा तिरोहिताऽप्रतिभासमानमूर्त्तिरस्तीति शक्यं वक्तुम्, यदेव 20
हि तत्र दृशि प्रतिभाति वर्त्तमानं रूपं तदेव सद्युक्तम्, पूर्वरूपता तु तत्र न प्रतिभाति,
असन्निहितत्वात्, असन्निहिताया अपि तया दृशा प्रतिभासने साऽनृता भवेत्, पूर्वरूप-
तायाः सन्निधाने वा तद्दृशि प्रतिभासमाना सा वर्त्तमानैव भवेन्नातीता, तथा च न पूर्वापररू-
पभेदः। तथापि दर्शनं यद्युभयरूपतामवगमयति तदा सन्निहितासन्निहितस्वरूपग्राहित्वा-
त्संविदपि परस्परभिन्ना भवेत्, वर्त्तमानतासाक्षात्कारिसंविदः पूर्वरूपग्राहिस्वरूपतया, पूर्व- 25
रूपतावेदिकायाश्च वर्त्तमानरूपसाक्षात्कारिस्वरूपतयाऽप्रतिभासनात्, अन्यथा सर्वत्र भेदो-
परतिप्रसङ्गः, तस्मान्न क्वापि स्थायितालक्षणोऽभेदः प्रतिभासते। यच्च भेदप्रतिभासोऽविद्या-
विरचितत्वादपारमार्थिक इत्युक्तं तच्चेतरेतराश्रयप्रसङ्गादसङ्गतम्, भेदप्रतिभासस्य ह्यपारमा-

र्थिकस्वरूपत्वेऽधिगतेऽविद्याविरचितत्वं स्यात्, तत्सद्भावाच्च तदधिगतिरिति। किञ्चाभेदप्रति-
भासस्य पारमार्थिकत्वं विद्यानिर्मितत्वादिति त्वया वक्तव्यं तत्राप्यन्योऽन्याश्रयो दुर्वार इति,
तस्मान्न भेदे प्रमाणबाधा । किञ्च यद्यविद्याऽवस्तुसती तदा प्रयत्ननिवर्त्तनीया न स्यात्, न
ह्यवस्तुसन्तः शशशृङ्गादयो यत्ननिवर्त्तनीयतया दृष्टाः, अतो मुमुक्षुप्रवृत्तीनां शास्त्राणाञ्च
5 वैयर्थ्यं दुर्वारम् । न च वाच्यं तस्याः सत्त्वे कथं निवृत्तिः, तदनिवृत्तौ कथं वा
मुक्तिरिति, सत एव घटादेर्निवृत्तिदर्शनात् । घटादीनामपि न परमार्थसत्त्वं तेषा-
मतादवस्थ्यादिति चेत्तर्हि अतादवस्थ्यात्तेषामनित्यत्वमेवास्तु नासत्त्वमन्यथा तेषां व्य-
वहाराङ्गत्वं न भवेत् । न च परमार्थसत्त्वात्तेषां न व्यवहाराङ्गता, अपि तु संवृत्त्येति
वाच्यम्, संवृतेः स्वभावासंवेदनात्, सांवृतं ह्युपचरितं काल्पनिकं रूपमभिधीयते, यच्च
10 काल्पनिकं तद्बाधकप्रत्ययेन व्यावर्त्त्येत इति कथं व्यवहाराङ्गं भवेत् । तथा सर्वमेकं
सत्, अविशेषादिति यदुक्तं किमयमक्षव्यापारो निर्दिष्टः, उतानुमानम्, नाद्यः, अद्वैत-
ग्राहकत्वेनाध्यक्षस्य प्रतिषिद्धत्वात्, न द्वितीयः, दृष्टान्तदार्ष्टान्तिकभेदे सत्येव तस्य प्रवृत्तेः,
स चेत्पारमार्थिकस्तर्हि कुतोऽद्वैतम्, अपारमार्थिकश्चेन्न ततः पारमार्थिकाद्वैतसिद्धिः, तत्सा-
धको हेतुरपि भिन्नश्चेत्कथमद्वैतम्, अभिन्नश्चेन्न ततः साध्यसिद्धिः, प्रतिज्ञार्थैकदेशासिद्ध-
15 त्वेन तस्यागमकत्वात्, नापि कल्पितभेदात्ततस्तत्सिद्धिः, कल्पनाविरचितस्य कार्य-
निर्वर्त्तनाक्षमत्वात्, तदेवमभेदे प्रमाणाभावाद्भेदस्य चाबाधितप्रमाणविषयत्वान्न तदभ्युपगमो
ज्यायानिति शुद्धद्रव्यास्तिकमतप्रतिक्षेपिपर्यायास्तिकाभिप्रायः ॥

अशुद्धद्रव्यास्तिकसांख्यमतप्रतिक्षेपकस्तु पर्यायास्तिकः प्राह—यदुक्तं प्रधानादेव महदादि
कार्यविशेषाः प्रवर्त्तन्त इति, तत्र महदादयो यदि कार्यविशेषाः प्रधानस्वभावा एव तदा नैषां
20 कार्यतया प्रवृत्तिः कार्यकारणयोर्भिन्नलक्षणत्वेन तदभिन्नस्य तत्कार्यत्वेन तस्य च कारणत्वेन
व्यपदेशायोगात्, अन्यथैकस्यैव कार्यत्वे कारणत्वे च तयोरसंकीर्णव्यवस्था न स्यात्,
तथा च प्रकृतिः कारणमेव भूतेन्द्रिययोः कार्यत्वमेव, महदादयः कार्यरूपाः कारणरूपाश्चे-
त्यभिधानमसङ्गतमेव स्यात्, सर्वेषां परस्परमभेदात् कार्यत्वं वा कारणत्वं वा स्यात्
कार्यकारणभावस्यान्योऽन्यापेक्षत्वेनापेक्षणीयान्यरूपाभावात् पुरुषवत्सर्वेषां न प्रकृतित्वं न
25 विकृतित्वञ्च स्यात्, अन्यथा पुरुषस्यापि प्रकृतिविकारव्यपदेशप्रसङ्गः । एवञ्च हेतुमत्त्वादि-
धर्मवत्त्वान्महदादिकं व्यक्तं तद्विपरीतमव्यक्तमित्यभिधानमपि न सङ्गतम्, विपरीततायाः
रूपान्तरलक्षणत्वान्महदादिव्यतिरिक्तस्य प्रधानस्य तद्विपरीतत्वासम्भवात्, अन्यथा भेद-
व्यवहारोच्छेदप्रसङ्गः, ततश्च सत्त्वरजस्तमसां चैतन्यानां च परस्परभेदाभ्युपगमो निमित्तो
भवेत्, एवञ्च विश्वरूपस्यैकत्वात्सहोत्पत्तिविनाशप्रसङ्गः, अभिन्नयोगक्षेमलक्षणत्वादभेद-

व्यवस्थितेः । व्यक्तस्वरूपाव्यतिरेकाच्चाव्यक्तमपि हेतुमदादिधर्मासङ्गि स्यात्, अहेतुमत्त्वादिधर्मवद्वा व्यक्तं भवेत् । किञ्च कार्यकारणभावस्यान्वयव्यतिरेकनिमित्तकत्वेन तदभावान्न महदादिकारणं प्रधानम्, नित्यस्य च प्रधानस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधान्न महदाद्युत्पादकत्वम् । ननु सर्पः कुण्डलादिरूपेणेव प्रधानं महदादिरूपेण परिणमति, तावतैव तन्महदादिकारणमुच्यते, महदादयश्च तत्परिणामरूपाः तत्कार्य- 5 व्यपदेशभाजः, न चाभेदे परिणामो विरुद्धः, एकवस्त्वधिष्ठानत्वात्तस्य, अपूर्वस्वभावोत्पत्त्या कार्यकारणभावाभ्युपगमे हि स्वरूपाभेदात्तयोः कार्यकारणभावो विरुद्धो भवेदिति चेन्मैवम्, परिणामासिद्धेः, पूर्वावस्थापरित्यागमन्तरेणावस्थान्तरप्रादुर्भावेऽवस्थासाङ्कर्येण वृद्धावस्थायामपि युवत्वाद्यवस्थोपलब्धिप्रसङ्गात्, तत्परित्यागे च स्वरूपहानिप्रसङ्गात्, पूर्वस्वभावस्य निरुद्धत्वादपरस्य चोत्पन्नत्वात्, अतो न कस्यचित् परिणामः सिद्ध्येत् । 10 किञ्च तस्यैवान्यथाभावो भवद्भिः परिणाम उच्यते, स किमेकदेशेन, सर्वात्मना वा, नाद्यः, एकस्यैकदेशासम्भवात्, न द्वितीयः, पूर्वपदार्थविनाशेन पदार्थान्तरोत्पादप्रसङ्गात्, ततो न तस्यैवान्यथात्वं तस्य स्वभावान्तरोत्पादनिबन्धनत्वात् । न च धर्मिणो व्यवस्थितत्वेऽपि धर्मान्तरनिवृत्त्या धर्मान्तरप्रादुर्भावलक्षणः परिणामोऽभ्युपगम्यते न तु स्वभावान्यथात्वमिति वाच्यम्, निवर्त्तमानप्रादुर्भवद्धर्मयोर्धर्मिभिन्नत्वापत्तेः, अन्यथा धर्मी 15 व्यवस्थितो धर्मयोरेव प्रच्युतिरुत्पादश्चेत्यभिधानमनर्थकं भवेत्, धर्मिभिन्नत्वे च तयोः कथं धर्मी परिणतः स्यात्, न ह्यर्थान्तरभूतयोः कटपटयोरुत्पादविनाशेऽविचलितस्वरूपस्य घटादेः परिणामो भवति, अन्यथा चैतन्यमपि परिणामि स्यात् । तत्सम्बद्धधर्मयोरुत्पादविनाशात्तस्यासावभ्युपगम्यते नान्यस्येति चेन्न, सदसतोः सम्बन्धाभावेन तत्सम्बन्धित्वायोगात्, न हि सतः सम्बन्धो युक्तः समधिगताशेषस्वभावस्यान्यान- 20 पेक्षतया क्वचिदपि पारतन्त्र्यासम्भवात्, न वाऽसतः सम्बन्धः, तस्य निरुपाख्यत्वेन क्वचिदाश्रितत्वानुपपत्तेः, न हि शशविषाणादिः क्वचिदप्याश्रितः । न वा व्यतिरिक्तधर्मान्तरोत्पादविनाशयोः सत्योः परिणामो भवद्भिर्व्यवस्थापितः, यत्रात्मभूतैकस्वभावानुवृत्तिरवस्थाभेदश्च तत्रैव तद्व्यवस्थापनात् । धर्मयोर्व्यतिरेके च नैकस्वभावानुवृत्तिरस्ति, धर्म्येव हि तयोरेक आत्मा स च व्यतिरिक्त इति नात्मभूतैकस्वभावानु- 25 वृत्तिः, न च धर्मद्वयव्यतिरिक्तो धर्मी उपलब्धिलक्षणप्राप्तो दृग्गोचरमवतरतीति तादृशोऽसद्व्यवहारविषय एव । अभेदे चैकस्माद्धर्मिस्वरूपादव्यतिरिक्तत्वात्तिरोभावाविर्भाववतोर्धर्मयोरप्येकत्वं धर्मिस्वरूपवदिति केन रूपेण धर्मी परिणतः स्याद्धर्मो वा, अवस्थातुश्च धर्मिणः सकाशादव्यतिरेकाद्धर्मयोरवस्थातृस्वरूपवन्न निवृत्तिर्नापि प्रादुर्भावः, धर्माभ्याञ्च

धर्मिणोऽनन्यत्वाद्धर्मस्वरूपवदपूर्वस्य चोत्पादः पूर्वस्य च विनाश इति नैकस्य कस्यचित् परिणतिः सिद्ध्येदिति न परिणामवशादपि सांख्यानां कार्यकारणव्यवहारः सङ्गच्छते । एवं कार्यं न सत्, सदकरणात्, यदि हि दुग्धादिषु दध्यादीनि मध्यमावस्थायामिव सन्ति तदा तेषां किमपरमुत्पाद्यमस्ति, यत्तैर्जन्यं स्यादतः सत्कार्यवादे कार्यत्वाभिमतानामकार्यत्वापत्तिः ।
5 ननु न वयमभिव्यक्त्यादिरूपेण कारणे सत्त्वमभ्युपगच्छामः किन्तु शक्तिरूपेणातो न दोष इति चेन्न, यतः सोऽयमभिव्यक्त्यादिलक्षणोऽतिशयो यं हेतवः कुर्वन्ति किमभिव्यक्त्याद्यवस्थातः प्रागासीत् किं वा नासीत्, नाद्यः, अकार्यत्वप्रसङ्गात्, न द्वितीयः, असतो हेतुभ्यः प्रादुर्भावासम्भवात्, तस्मात्सदकरणान्न सत् कार्यम् । एवञ्च साध्यस्य कस्यचिदभावादुपादानग्रहणादित्यादिहेतवोऽप्यनुपपन्नाः । किञ्च प्रवर्त्तमानं हि सर्वमेव साधनं स्वप्रमेयार्थ-
10 विषये उत्पद्यमानौ संशयविपर्ययौ निवर्त्तयति, स्वसाध्यविषयं निश्चयञ्चोपजनयति, न चैतत्सत्कार्यवादे सङ्गच्छते, तथाहि संदेहविपर्ययौ किं चैतन्यस्वभावौ, उत बुद्धिमनःसङ्कल्परूपौ, न प्रथमः, चैतन्यरूपतया तयोरनभ्युपगमात्, अभ्युपगमे वा मुक्त्यवस्थायामपि चैतन्यसद्भावेन तयोरुत्पत्त्यनिवृत्तेरनिर्मोक्षताप्रसङ्गात्, साधनव्यापारात्तयोरनिवृत्तिश्च चैतन्यवन्नित्यत्वात् । न द्वितीयः, बुद्धिमनसोर्नित्यत्वेन तयोरपि नित्यत्वान्निवृत्त्ययोगात् । न वा निश्चयो-
15 त्पत्तिः साधनात्सम्भवति, तस्या अपि सर्वदाऽवस्थितेः, अन्यथा सत्कार्यवादो विशीर्येतेति साधनोपन्यासप्रयासो विफलः कापिलानाम् । तथा निश्चयोत्पादनार्थं हि साधनं ब्रुवताऽसतो निश्चयस्योत्पत्तिरङ्गीकृता भवेत्, सा च सत् कार्यमिति प्रतिज्ञया निषिद्धेति स्ववचनविरोधः स्पष्ट एव । यदि च साधनप्रयोगमार्थक्याय निश्चयोऽसन्नेवोत्पद्यत इत्यङ्गीक्रियते तर्हि असदकरणादित्यादिहेतवो व्यभिचरिता भवेयुः । न च साधनप्रयोगात् पूर्वं निश्चयोऽनभि-
20 व्यक्तः साधनप्रयोगाच्चाभिव्यक्ततामासादयतीति वाच्यम्, विकल्पानुपपत्त्याऽभिव्यक्तेरसिद्धत्वात्, तथाहि किं स्वभावातिशयोत्पत्तिरभिव्यक्तिः, आहोस्विन् तद्विषयं ज्ञानम्, किं वा तदुपलम्भावारकापगमः, तत्र प्रथमपक्षेऽपि स्वभावातिशयो निश्चयस्वभावाद्व्यतिरिक्तो व्यतिरिक्तो वा, नाद्यः, निश्चयस्वरूपवत् तस्य सर्वदैवावस्थितेरुत्पादायोगात्, न द्वितीयः, तस्यासाविति सम्बन्धानुपपत्तेः, तयोः परस्परमनुपकार्योपकारकत्वेनाधाराधेयलक्षणसम्ब-
25 न्धासम्भवात्, उपकाराभ्युपगमे तस्य भिन्नत्वे सम्बन्धानुपपत्तिः, अपरोपकारकल्पनायां

१ तथा च प्रयोगः, यत्सर्वाकारेण सत् तत्केनचिज्जन्यम्, यथा प्रकृतिश्चैतन्यं वा, सदेव च कार्यं प्रथमावस्थायाम्, सच्च सर्वात्मना तव मतेन दध्यादि क्षीरादाविति व्यापकविरुद्धोपलब्धिः, अत्र प्रतिषेध्यं केनचिज्जन्यत्वं तद्व्यापकं सर्वात्मनाऽसत्त्वं तेन विरुद्धं सर्वात्मना कारणे सत्त्वं तच्चोपलभ्यमानं केनचिज्जन्यत्वं निवर्त्तयति इति व्यापकविरुद्धोपलब्धिः । अनुत्पन्नातिशयस्यापि दध्यादेर्जन्यत्वे सर्वेषां जन्यत्वप्रसङ्गोऽनवस्थाप्रसङ्गो वा विपक्षे बाधकं प्रमाणम् ॥

त्वनवस्था स्यात्, अभिन्नत्वे च साधनोपन्यासो व्यर्थः, निश्चयादेवोपकाराभिन्नस्यातिशय-
स्योत्पत्तेः, न चातिशयस्य कश्चिदाधारो युक्तः, अमूर्त्तत्वेनाधःप्रसर्पणाभावात्, अधोगति-
प्रतिबन्धकत्वेनाधारस्य व्यवस्थानात् । जन्यजनकभावलक्षणोऽपि सम्बन्धो न युक्तः, सर्व-
दैव निश्चयाख्यस्य कारणस्य सन्निहितत्वेन नित्यमतिशयोत्पत्तिप्रसक्तेः । न च साधनप्रयो-
गापेक्षया निश्चयस्यातिशयोत्पादकत्वं युक्तम्, अनुपकारिण्यपेक्षायोगात् । नापि तद्विषय-
ज्ञानोत्पत्तिरभिव्यक्तिः, तद्विषयज्ञानस्य त्वन्मतेन नित्यत्वात्, आसर्गप्रलयादेका बुद्धिरिति
भवन्मतेन संविद एकत्वाच । न वा तदुपलम्भावारकापगमोऽभिव्यक्तिः, द्वितीयस्योपलम्भ-
स्यासंभवेनोपलम्भावरणस्याप्यभावात्, न ह्यसत आवरणं युक्तम्, तस्य वस्तुसद्विषयत्वात्,
न चासतस्तदावरणस्य कुतश्चित् क्षयो युक्तः, सत्त्वेऽपि तदावरणस्य नित्यत्वान्न क्षयः, नापि-
तिरोभावः, अपरित्यक्तपूर्वरूपस्य तिरोभावानुपपत्तेः । तद्विषयोपलम्भस्य सत्त्वेऽपि नित्य-
त्वान्नावरणसम्भव इति कुतस्तत्क्षयोऽभिव्यक्तिः । न चापि तत्क्षयः केनचिद्विधातुं शक्यः,
तस्य निःस्वभावत्वात्, तस्मादभिव्यक्तेरघटमानत्वात् सत्कार्यवादपक्षे साधनोपन्यासवैयर्थ्यम् ।
यदपि भेदानामन्वयदर्शनात् प्रधानस्यास्तित्वमुक्तं तत्र हेतुरसिद्धः, न हि शब्दादिलक्षणं
व्यक्तं सुखाद्यन्वितं सिद्धम्, सुखादीनां ज्ञानरूपत्वात्, शब्दादीनाञ्च तद्रूपविकलत्वात्,
शब्दादयो ज्ञानरूपविकलत्वान्न सुखाद्यात्मकाः, यथा परोपगत आत्मेति व्यापकानुपलब्धेः[1] ।
ननु सुखादिरूपत्वं यदि ज्ञानमयत्वेन व्याप्तं सिद्धं तदा तन्निवर्त्तमानं सुखादिमयत्वमादाय
निवर्त्तेत, व्याप्तिश्च न सिद्धा, पुरुषस्यैव संविद्रूपतयेष्टत्वादिति मैवम्, सुखादीनां स्वसंवेदन-
रूपतया स्पष्टमनुभूयमानत्वात्, शब्दादिविषयसन्निधानेऽसन्निधाने च प्रीतिपरितापादिरूपेण
प्रकाशान्तरनिरपेक्षा प्रकाशात्मिका सुखादीनां हि स्वसंवित्तिः स्पष्टा । यदेव हि प्रकाशान्तर-
निरपेक्षं सातादिरूपतया स्वयं सिद्धिमवतरति तज्ज्ञानं संवेदनं चैतन्यं सुखमित्यादिभिः
पर्यायैरभिधीयते, न च सुखादीनामन्येन सवेदनेनानुभवादनुभवरूपता प्रथत इति वाच्यम्,
तत्संवेदनस्यासातादिरूपताप्रसक्तेः, स्वयमतदात्मकत्वात् । तथाहि योगिनोऽनुमानवतो वा
परकीयं सुखादिकं संवेदयतो न सातादिरूपता, अन्यथा योग्यादयोऽपि साक्षात् सुखाद्यनु-
भाविन इवातुरादयः स्युः, योग्यादिवद्वा अन्येषामप्यनुग्रहोपघातौ न स्यातामविशेषात् ।
संवेदनस्य च सातादिरूपत्वाभ्युपगमे संविद्रूपत्वं सुखादेः सिद्धम् । इदमेव हि नः सुखं दुःखञ्च
यत्सातमसातञ्च संवेदनमिति नानैकान्तिकता हेतोः । बाह्यार्थवादिनां सर्वेषां शब्दादिषु संवि-
द्रूपरहितताया: सिद्धत्वान्न व्यापकानुपलब्धेरसिद्धता । सपक्षे हेतोस्सद्भावादेव न विरु-

१ अत्र हि प्रतिषेध्यं सुखाद्यात्मकत्वं तद्व्यापकं संविद्रूपत्वं तस्य शब्दादावनुपलब्धेः सुखाद्यात्मकत्वं निषिध्यत इति भावः ॥

द्भूता। न च यथा बाह्यदेशावस्थितस्य नीलादेः सन्निधानात् ज्ञानमनीलमपि नीलाकारं संवेद्यते तथा बाह्यसुखाद्युपधानसामर्थ्यादसातादिरूपमपि सातादिरूपं लक्ष्यते तेन संवेदनस्य सातादिरूपत्वेऽपि न सुखादीनां संविद्रूपत्वं सिद्ध्यतीत्यनैकान्तिको हेतुरिति वाच्यम्, एकत्रैव शब्दादौ भावनादिविशेषात् प्रीत्याद्याकारप्रतिनियतगुणोपलब्धिदर्शनात्,
5 भावनावशेन हि मद्याङ्गनादिषु कामुकादीनां जातिविशेषाच्च करभादीनां केषाञ्चित् प्रतिनियताः प्रीत्यादयः सम्भवन्ति न सर्वेषाम्, एतच्च शब्दादीनां सुखादिरूपत्वाच्च युक्तम्, सर्वेषामभिन्नवस्तुविषयत्वान्नीलादिविषयसंवित्तिवत् प्रत्येकं चित्रा संवित् प्रसज्येत। न च यद्यपि सुखदुःखमोहात्मकं वस्तु तथाप्यदृष्टादिलक्षणसहकारिवशात् किञ्चिदेव रूपं कस्यचिदाभाति न सर्वं सर्वस्येति वाच्यम्, अनालम्बनप्रतीतिप्रसङ्गात्, तद्वस्तु त्र्याकारं
10 संविदश्चैकाकाराः संवेद्यन्त इति कथमनालम्बनास्ता न भवन्ति। न च प्रमादतापदैन्याद्युपलम्भाच्छब्दादीनां सुखाद्यन्वितत्वं सिद्धमिति वाच्यम्, पुरुषेणानैकान्तिकत्वात्। प्रकृतिव्यतिरिक्तं पुरुषं हि भावयतां योगिनां तमालम्ब्य प्रकर्षप्राप्तयोगानां प्रसादः प्रीतिश्च प्रादुर्भवति, अप्राप्तयोगानाञ्च दुततरमपश्यतामुद्वेग आविर्भवति जडमतीनाञ्च प्रकृत्यावरणं प्रादुर्भवति न च पुरुषस्त्रिगुणात्मकस्तवाभीष्ट इति। समन्वयादिति हेतुश्चानैकान्तिकः
15 प्रधानाख्येन कारणेन हेतोः क्वचिदप्यन्वयासिद्धेः, सिषाधयिषितं हि व्यापि नित्यमेकं त्रिगुणात्मकं कारणम्, न चैवम्भूतेन कारणेन हेतोः प्रतिबन्धः प्रसिद्धः। चेतनत्वादिधर्मसमन्वयिनः पुरुषा अभीष्टाः, न च ते तथाविधैककारणपूर्वका इष्यन्त इति तैरनैकान्तिकश्च। साध्यविपर्यये बाधकप्रमाणाभावाच्च परिमाणात्, शक्तितः प्रवृत्तेः, कार्यकारणभावात्, वैश्वरूप्यस्याविभागादिति हेतूनां न प्रधानास्तित्वसाधकत्वम्, न हि प्रधाना-
20 ख्यस्य हेतोरभावेन परिणामादीनां विरोधः सिद्धः। किञ्च बुद्धिव्यतिरिक्तं चैतन्यमात्मनो रूपम्, पुरुषश्च शुभाशुभकर्मफलस्य प्रधानोपनीतस्य भोक्ता, न तु कर्त्ता, सकलजगत्परिणतिरूपायाः प्रकृतेरेव कर्तृत्वात्, प्रमाणञ्चात्र यत्संघातरूपं वस्तु तत्परार्थं दृष्टम्, यथा शयनासनादि, संघातरूपाश्च चक्षुरादय इति स्वभावहेतुः, यश्चासौ परः स आत्मेति तव मतं तदपि न युक्तम्, तथा हि चैतन्यं पुरुषस्य स्वरूपमिति वदता चैतन्यं नित्यै-
25 करूपमिति प्रतिज्ञातं तस्य नित्यैकरूपात् पुरुषादव्यतिरिक्तत्वात्, अध्यक्षविरुद्धञ्चेदम्, रूपादिसंविदां स्फुटं स्वसंवित्त्या भिन्नस्वरूपावगमात्, एकरूपत्वे त्वात्मनोऽनेकविधार्थस्य

१ भावना-अभ्यासः, आदिना जातिपरिग्रहः, जाति स्वकीया प्रकृतिः प्रीत्यादीत्यादिना द्वेषोद्वेगादयः दैन्यावरणादयश्चेति त्रैगुण्यकार्यगणाना ग्रहणम् ॥ २ तदाकारासंवेदनस्य तद्विषयकाभावव्याप्यत्वात् शब्दाकारासंवेदनस्य चाक्षुषस्य शब्दविषयकत्वाभाववदिति भावः ॥

भोक्तृत्वाभ्युपगमो विरुद्ध आसज्येत, अभोक्त्रवस्थाव्यतिरिक्तत्वाद्भोक्त्रवस्थायाः । कर्तृत्वाभावाच्च न युक्तं भोक्तृत्वमपि, न ह्यकृतस्य कर्मणः फलोपभोगः कस्यचित्, अकृताभ्यागमप्रसङ्गात् । न च प्रकृतिः पुरुषस्य कर्माकर्तुरप्यभिलषितमर्थमुपनयत्यतोऽसौ भोक्तेति वाच्यम्, अस्या अप्यचेतनत्वाच्छुभाशुभकर्मैककर्तृत्वासम्भवात् । न च पङ्ग्वन्धयोः परस्परसम्बन्धात् प्रवृत्तिरिव चेतनसम्बन्धान्महदादिकं चेतनावदिव कार्येष्वध्यवसायं करोतीति 5
वाच्यम्, यद्यकृतस्यापि कर्मणः फलमभिलषितं प्रकृतिरुपनयति तदा सर्वदा सर्वस्य पुंसोऽभिलषितार्थसिद्धिः स्यात्, प्रकृत्योपनीतमर्थं प्रति तस्य भोक्तृत्वासम्भवाच्चाविकारित्वात् अन्यथा नित्यत्वहानिप्रसङ्गः, अतादवस्थ्यस्यानित्यत्वलक्षणत्वात् । प्रधानं यदि पुरुषविवक्षामधिगच्छति तर्हि भोक्तृत्वमपि तस्य स्यात्, करणस्य भुजिक्रियावेदकत्वाविरोधात्, यदि नाधिगच्छति तदा जडत्वात् पुरुषार्थं प्रति प्रवृत्तिर्न स्यात्, अतो न पङ्ग्वन्धदृष्टा- 10
न्तात्प्रवृत्तिः, तयोश्चेतनत्वात्, परस्परविवक्षावेत्तृत्वात् । परार्थाश्चक्षुरादय इति साधनमप्ययुक्तम्, किमत्र आधेयातिशयः परः साध्यत्वेनाभिप्रेतः, अविकार्येनाधेयातिशयो वा सामान्यतश्चक्षुरादीनां पारार्थ्यमात्रं वा, नाद्यः, सिद्धसाध्यताप्रसङ्गात्, अस्माभिरपि विज्ञानोपकारित्वेन चक्षुरादीनामभ्युपगमात । न द्वितीयो हेतोर्विरुद्धताप्रसङ्गात् विकार्युपकारित्वेन चक्षुरादीनां दृष्टान्ते हेतोर्व्याप्तत्वप्रतीतेः, अविकारिणि ह्यतिशयस्याधातुमशक्य- 15
त्वाच्छयनासनादयोऽनित्यस्यैवोपकारिणो युक्ता न नित्यस्येति कथं न हेतोर्विरुद्धता । न तृतीयः, चक्षुरादीनां विज्ञानोपकारितयेष्टत्वेन सिद्धसाधनात, तस्मान्नाशुद्धद्रव्यास्तिकमतावलम्बिसांख्यदर्शनपरिकल्पितपदार्थसिद्धिरिति पर्यायास्तिकमतम् ॥

अथ संक्षेपतो नयस्वरूपम्, नैगमसङ्ग्रहव्यवहारास्त्रयो नयाः शुद्ध्यशुद्धिभ्यां द्रव्यास्तिकान्तर्गताः, शेषाश्च ऋजुसूत्रादयः शुद्धितारतम्येन पर्यायमाश्रिताः, तत्र सङ्ग्रह- 20
मतमुक्तमेव, येषान्तु मतेन नैगमनयस्य सद्भावस्तैस्तस्य स्वरूपमेवं वर्णितम्, राश्यन्तरोपलब्धं नित्यत्वमनित्यत्वञ्च नयतीति निगमव्यवस्थाभ्युपगमपरो नैगमनयः निगमो हि नित्यानित्यसदसत्कृतकाकृतकस्वरूपेषु भावेष्वपास्तमाकूर्यस्वभावः सर्वथैव धर्मधर्मिभेदेन सम्पद्यत इति । स पुनर्नैगमोऽनेकधा व्यवस्थितः, प्रतिपत्त्रभिप्रायवशान्नयव्यवस्थानात्, प्रतिपत्तारश्च नानाभिप्रायाः, यतः केचिदाहुः पुरुष एवेदं सर्वमित्यादि, पुरुषोऽप्येक- 25
त्वनानात्वभेदाद्द्विधा कैश्चिदभ्युपगतः, नानात्वेऽपि तस्य कर्तृत्वाकर्तृत्वभेदः परैः, कर्तृत्वेऽपि सर्वगतेतरभेदः, असर्वगतत्वेऽपि शरीरव्याप्त्यव्याप्तिभ्यां भेदः, अव्यापित्वेऽपि मूर्तेतरभेदः, अपरैस्तु प्रधानकारणिकं जगदभ्युपगतम्, तत्रापि सेश्वरनिरीश्वरभेदाद्भेदाभ्युपगमः, अन्यैस्तु परमाणुप्रभवत्वं जगतोऽभ्युपगतम्, तत्रापि सेश्वरनिरीश्वरभेदाद्भेदः,

सेश्वरपक्षेऽपि कर्मसापेक्षत्वानपेक्षत्वाभ्यां भेदाभ्युपगमः, कैश्चित्स्वभावकालयदृच्छादिवादाः
समाश्रिताः, तेष्वपि सापेक्षत्वानपेक्षत्वाभ्युपगमाद्भेदव्यवस्था, तथा कारणं नित्यं कार्य-
मनित्यमिति भेदः, तत्रापि कार्यं नियमेन स्वरूपं त्यजति न वेति भेदाभ्युपगमः, एवं
मूर्तैरेव मूर्तमारभ्यते, मूर्तैर्मूर्तम्, मूर्तैरमूर्तमित्याद्यनेकधा प्रतिपत्त्रभिप्रायतोऽनेकधा नि-
5 गमनान्नैगमोऽनेकभेद इति । व्यवहारनयस्तु, अपास्तसमस्तभेदमेकमभ्युपगच्छतोऽध्यक्षी-
कृतभेदनिर्बन्धनव्यवहारविरोधप्रसक्तेः कारकज्ञापकभेदपरिकल्पनानुरोधेन व्यवहारमारचयन्
कारणस्यापि न सर्वदा नित्यत्वं कार्यस्यापि न सर्वदा नित्यत्वं कार्यस्यापि नैकान्ततः प्रक्षय
इति नवक्ष न कदाचिदनीदृशं जगदिति प्रवृत्तोऽयं व्यवहारो न केनापि प्रवर्त्यते, अन्यथा
प्रवर्त्तकानवस्थाप्रसक्तिरतो न व्यवहारशून्यं जगत् । न च प्रमाणाविषयीकृतः पक्षोऽभ्युप-
10 गन्तुं युक्तः, अदृष्टपरिकल्पनाप्रसक्तेः, दृष्टानुरोधेन ह्यदृष्टं वस्तु कल्पयितुं युक्तमन्यथा कल्प-
नाऽसम्भवात् । सङ्ग्रहनैगमाभ्युपगतवस्तुविवेकाल्लोकप्रतीतपथानुसारेण प्रतिपत्तिगौरवपरि-
हारेण प्रमाणप्रमेयप्रमितिप्रतिपादनं व्यवहारप्रसिद्ध्यर्थं परीक्षकैः समाश्रितमिति व्यवहार-
नयाभिप्रायः, ततस्स्थितं नैगमसङ्ग्रहव्यवहाराणां द्रव्यास्तिकनयप्रभेदत्वम् । पर्यायनयभेदा
ऋजुसूत्रादयः, देशकालान्तरसम्बद्धस्वभावरहितं वस्तुतत्त्वं साम्प्रतिकमेकस्वभावमकुटिलं
15 ऋजु सूत्रयतीति ऋजुसूत्रः, न ह्येकस्वभावस्य नानादिक्कालसम्बन्धित्वस्वभावमनेकत्वं
युक्तमेकस्यानेकत्वविरोधात्, न हि स्वभावभेदादन्यो वस्तुभेदः स्वरूपस्यैव वस्तुत्वोपपत्तेः
तथाहि विद्यमानेऽपि स्वरूपे किमपरमभिन्नं वस्तु यद्रूपनानात्वेऽप्येकं स्यात् । यद्वस्तुरूपं
येन स्वभावेनोपलभ्यते तत्तेन सर्वात्मना विनश्यति न पुनः क्षणान्तरसंस्पर्शीति क्षणि-
कम्, क्षणान्तरसम्बन्धे तत्क्षणाकारस्य क्षणान्तराकाराविशेषप्रसङ्गात्, अतो जातस्य
20 यदि द्वितीयक्षणसम्बन्धः प्रथमक्षणस्वभावं नापनयति तदा कल्पान्तरावस्थानसम्बन्धोऽपि
तन्नापनयेत् स्वभावभेदे वा कथं न वस्तुभेदः, अन्यथा सर्वत्र सर्वदा भेदाभावप्रस-
क्तिः, अक्षणिकस्य क्रमयौगपद्याभ्यामर्थक्रियानुत्पत्तेरसत्त्वम्, सहकारिकृतातिशयमनङ्गीकुर्व-
तस्तदपेक्षायोगादक्षेपेण कार्यकारिणः सर्वकार्यमेकदैव विदध्यादिति न क्रमकर्तृत्वम्, न
वा कदापि स्वकार्यमुत्पादयेन्निरपेक्षस्य निरतिशयत्वात्, न हि निरपेक्षस्य कदाचित्करणम-
25 करणं वा विरोधात्, तत्कृतमुपकारं स्वभावभूतमङ्गीकुर्वतः क्षणिकत्वमेव, व्यतिरिक्त-
त्वे वा सम्बन्धासिद्धिः, अपरापरोपकारकल्पनेऽनवस्थाप्रसक्तिः । युगपदपि न नित्य-
स्य कार्यकारित्वम्, द्वितीयेऽपि क्षणे तत्स्वभावात्ततस्तदुत्पत्तितस्तत्क्रमप्रसक्तेः । क्रमाक्रमव्य-
तिरिक्तप्रकारान्तराभावाच्च न नित्यस्य सत्त्वमर्थक्रियाकारित्वलक्षणत्वात्तस्य, प्रध्वंसस्य च
निर्हेतुकत्वेन स्वभावतो भावात्स्वरसभङ्गुरा एव सर्वे भावा इति पर्यायाश्रितर्जुसूत्राभिप्रायः ।

यद्यपि प्रमाणप्रमेयनिबन्धनं सामान्येन शब्दार्थौ भवतस्तथापि प्रमाणस्य कारणमेव स्वाकारा-
र्पकविषयः, ' नाननुकृतान्वयव्यतिरेकं कारणं नाकारणं विषयः ' ' अर्थेन घटयत्येनां न
हि मुक्त्वार्थरूपताम् । तस्मात्प्रमेयाधिगतेः प्रमाणं मेयरूपते 'त्यादिवचनात् । तदाकारानु-
विधायिनी तदध्यवसायेन च तत्राविसंवादात् संवित् प्रमाणत्वेन गीयते । अध्यक्षधीश्चाशब्द-
मर्थमात्मन्याधत्ते, अन्यथाऽर्थदर्शनप्रच्युतिप्रसङ्गात्, न ह्यक्षगोचरेऽर्थे शब्दास्सन्ति तदा-
त्मानो वा, येन तस्मिन् प्रतिभासमानेऽपि नियमेन ते प्रतिभासेरन्निति कथं तत्संसृष्टाऽध्यक्ष-
धीर्भवेत् । किञ्च वस्तुसन्निधानेऽपि तन्नामानुस्मृतिं विना तदर्थस्यानुपलब्धाविष्यमाणायाम-
र्थसन्निधिरक्षदृग्जननं प्रत्यसमर्थ इति अभिधानस्मृत्युपक्षीणशक्तित्वान्न कदाचनापीन्द्रियबुद्धिं
जनयेत्, सन्निधानाविशेषात् । यदि चायं भवतां निर्बन्धः स्वाभिधानविशेषापेक्षमेव चक्षु-
रादिप्रतिपत्तिः स्वार्थमवगमयति तदाऽस्तङ्गतेयमिन्द्रियप्रभवार्थाधिगतिः, तन्नामस्मृत्यादेरस-
म्भवात्, तथाहि यत्रार्थे प्राक् शब्दप्रतिपत्तिरभूत् पुनस्तदर्थवीक्षणे तत्सङ्केतितशब्दस्मृतिर्भ-
वेदिति युक्तियुक्तमन्यथातिप्रसङ्गात्, न चेदनभिलापमर्थं प्रतिपत्ता पश्यति तदा तत्र दृष्टम-
भिलापमपि न स्मरेत्, अस्मरंश्च शब्दविशेषं न तत्र योजयेत्, अयोजयंश्च न तेन विशिष्ट-
मर्थं प्रत्येतीत्यायातमान्ध्यमशेषस्य जगतः । ततः स्वाभिधानरहितस्य विषयस्य विषयिणं
चक्षुरादिप्रत्ययं प्रति स्वत एवोपयोगित्वं सिद्धं न तु तदभिधानानाम्, तदर्थसम्बन्धरहि-
तानां पारम्पर्येणापि सामर्थ्यासम्भवात्, इत्यर्थनया व्यवस्थिताः । शब्दनयास्तु मन्यन्ते
कारणस्यापि विषयस्य प्रतिपत्तिं प्रति नैव प्रमेयत्वं युक्तं यावदध्यवसायो न भवेत्, सोऽप्य-
ध्यवसायविकल्पस्तदभिधानस्मृतिं विना नोत्पत्तुं युक्त इति सर्वव्यवहारेषु शब्दसम्बन्धः
प्रधानं निबन्धनम्, प्रत्यक्षस्यापि तत्कृताध्यवसायलक्षणविकलस्य बहिरन्तर्वा प्रतिक्षणपरि-
णामप्रतिपत्ताविव प्रमाणतानुपपत्तेः, अविसंवादलक्षणत्वात् प्रमाणानाम्, प्रतिक्षणपरिणा-
मग्रहणेऽपि तस्य प्रामाण्याभ्युपगमे प्रमाणान्तरप्रवृत्तौ यत्नान्तरं क्रियमाणमपार्थकं स्यात् ।
ततः प्रमाणव्यवस्थानिबन्धनं तन्नामस्मृतिव्यवसाययोजनमर्थप्राधान्यमपहस्तयतीति शब्द
एव सर्वत्र प्रमाणादिव्यवहारे प्रधानं कारणमिति स्थितम् ॥ शब्दनयश्च ऋजुसूत्राभिमतप-
र्यायाच्छुद्धतरं पर्यायं स्वविषयत्वेन व्यवस्थापयति, तथाहि तटस्तटी तटमिति विरुद्धलिङ्गल-
क्षणधर्माक्रान्तं भिन्नमेव वस्तु, न हि तत्कृतं धर्मभेदमननुभवतस्तत्सम्बन्धो युक्तः, तद्धर्मभेदे
वा स्वयं धर्मी कथं न भिद्यते, यथा हि क्षणिकं वस्तु अतीतानागताभ्यां क्षणाभ्यां न सम्ब-
न्धमनुभवत्येवं परस्परविरुद्धशीतवाद्यन्यतमधर्मसम्बन्धं नान्यधर्मसम्बद्धो धर्म्यनुभवति, विरु-

द्धधर्मोध्यासस्य भेदलक्षणत्वात्, तथाप्यभेदे न किञ्चिद्भिन्नं जगदस्तीति भेदव्यवहार एवोत्सीदेत्। तथैकस्मिन्नुदकपरमाणावाप इति बहुत्वसंख्याया निर्देशोऽनुपपन्नः, न ह्येकत्व-संख्यासमाध्यासितं तदेव तद्विरुद्धबहुत्वसंख्योपेतं भवतीत्येकसंख्ययैव तन्निर्देष्टव्यम्। काल-भेदाद्वस्तुभेद ऋजुसूत्रेणाभ्युपगत एवेति अग्निष्टोमयाजी पुत्रोऽस्य जनितेत्ययुक्तमेव, वच-
5 सोऽतीतानागतयोः सम्बन्धाभावात्। तथाऽन्यकारकयुक्तं यत्तदेवापरकारकसम्बन्धं नानुभ-वतीत्यधिकरणभूतो ग्रामोऽधिकरणकारकवाचिविभक्तिवाच्य एव न कर्माभिधानविभक्त्यभिधेयो युक्त इति ग्राममधिशेते इति प्रयोगोऽनुपपन्नः। तथा पुरुषभेदेऽपि नैकं तद्वस्त्विति एहि मन्ये रथेन यास्यसि यातस्ते पितेति च प्रयोगो न युक्तः, अपि तु एहि मन्यसे यथाहं रथे-न यास्यामि इत्यनेनैव परभावेनैतन्निर्देष्टव्यम्। एवमुपसर्गभेदेऽपि विरमतीति प्रयोगो न
10 युक्तः, आत्मार्थतायां हि विरमते इत्यस्यैव प्रयोगस्य सङ्गतेः। न चैवं लोकशास्त्रव्यवहारविलोप इति वक्तव्यम्, सर्वत्रैव नयमते तद्विलोपस्य समानत्वादिति यथार्थशब्दनाच्छब्दनयो व्यव-स्थितः॥ एकसंज्ञासमभिरोहणात्समभिरूढस्त्वाह यथाहि विरुद्धलिङ्गादियोगाद्भिद्यते वस्तु तथा संज्ञाभेदादपि, तथाहि संज्ञाभेदः प्रयोजनवशात्सङ्केतकर्तृभिर्विधीयते न व्यसनितया, अन्यथानवस्थाप्रसक्तेः, ततो यावन्तो वस्तुनः स्वाभिधायकाः शब्दास्तावन्तोऽर्थभेदाः, प्रत्यर्थं
15 भिन्नशब्दनिवेशान्नैकस्यार्थस्यानेकेनाभिधानं युक्तमिति घटः कुटः कुम्भ इति वचनभेदाद्भिन्न एवार्थः, क्रियाशब्दत्वाद्वा सर्वशब्दानां सर्वेऽप्यन्वर्था एव वाचकाः, ततो घटते कुटति कौ भा-तीति च क्रियालक्षणनिमित्तभेदान्नैमित्तिकेनाप्यर्थेन भिन्नेन भाव्यमिति घट इत्युक्ते कुतः कुट इति प्रतिपत्तिः, तेन तदर्थस्यानभिहितत्वात्। यथा वा पावकशब्दोक्तेरन्यैव घटादिभ्यः पावकशक्तिरन्वयव्यतिरेकाभ्यां लोकतः प्रसिद्धा तथा घटनकुटनादिशक्तीनामपि भेदः
20 प्रतीयत एवेति नानार्थवाचिन एव पर्यायध्वनयः नैकमर्थमभिनिविशन्त इति समभिरूढः॥ शब्दाभिधेयक्रियापरिणतिवेलायामेव तद्वस्तु इति भूत एवम्भूतः प्राह यथा संज्ञाभेदाद्भेदव-द्वस्तु तथा क्रियाभेदादपि, सा च क्रिया तद्धेत्री यदैव तामाविशति तदैव तन्निमित्तं तद्व्यपदेश-मासादयति, नान्यदाऽतिप्रसङ्गात्, तथाहि यदा घटते तदैवासौ घटः न पुनर्घटितवान् घ-टिष्यते वा घट इति व्यपदेष्टुं युक्तः सर्ववस्तूनां घटतापत्तिप्रसङ्गात्। अपि च चेष्टासमय एव
25 चक्षुरादिव्यापारसमुद्भूतशब्दानुविद्धप्रत्ययमास्कन्दन्ति चेष्टावन्तः पदार्थाः, यथावस्थितार्थ-प्रतिभास एव च वस्तूनां व्यवस्थापको नान्यथाभूतः, अचेष्टावन्तोऽपि चेष्टावत्तया शब्दा-नुविद्धेऽध्यक्षप्रत्यये प्रतिभास्यन्त इत्यभ्युपगमे तत्प्रत्ययस्य निर्विषयतया भ्रान्तस्यापि वस्तु-व्यवस्थापकत्वे सर्वः प्रत्ययः सर्वस्यार्थस्य व्यवस्थापकः स्यादित्यतिप्रसङ्गः, तन्न घटन-

समयात् प्राक् पश्चाद्वा घटस्तद्व्यपदेशमासादयतीत्येवम्भूतनयमतम् । तत स्थितमेतदृजुसूत्रादयः पर्यायास्तिकस्य विकल्पा इति ॥ ३ ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य नयद्वयघटकपर्यायार्थिकस्वरूपनिरूपणं नाम त्रयोदशं सोपानम् ॥ 5

## शुद्धाशुद्धनयद्वयवर्णनम्

' दव्वट्ठिओ य पज्जवणओ य ' इति पूर्वगाथापश्चार्धैकदेशस्य विवरणार्थमाह—

**दव्वट्ठियनयपयडी सुद्धा संगहपरूवणाविसओ ।** 10
**पडिरूवं पुण वयणत्थनिच्छओ तस्स ववहारो ॥ ४ ॥**

द्रव्यास्तिकनयप्रकृतिः शुद्धा सङ्ग्रहप्ररूपणाविषयः ।
प्रतिरूपं पुनर्वचनार्थनिश्चयस्तस्य व्यवहारः ॥ छाया ॥

द्रव्यास्तिकेति, व्यावर्णितस्वरूपस्य द्रव्यास्तिकनयस्य प्रकृतिः स्वभावः शुद्धा—असङ्कीर्णा—विशेषासंस्पर्शवती सङ्ग्रहस्याभेदग्राहिनयस्य प्ररूप्यतेऽनयेति प्ररूपणा—पदसंहतिस्तस्या विषयोऽभिधेयः । ननु ज्ञानस्वरूपे शुद्धद्रव्यास्तिकेऽभिधातुं प्रक्रान्ते सङ्ग्रहप्ररूपणाविषयाभिधानस्य कः प्रस्तावः, मैवम्, उपचारतो विषयेण विषयिणोऽभिधानात्, विषयाकारेण हि वृत्तस्य विषयिणो विषयव्यवस्थापकत्वमिति । सङ्ग्रहनयप्रत्ययः शुद्धो द्रव्यास्तिक इति भावः । सङ्ग्रहाभिप्रायेण हि प्ररूपणास्वभावस्य पदस्य वाक्यस्य वा भाव एव विषयः, स्वार्थद्रव्यलिङ्गकर्मादिप्रकारेण सुबन्तार्थस्य भावाद्भिन्नत्वेऽभाववन्निरुपाख्यतया न द्रव्यादिरूपतेति सुबन्तपदवाच्यत्वासम्भवः स्यात्, अभिन्नत्वे वा सुबन्तार्थो भावमात्रमेव, एवं तिङन्तार्थोऽपि क्रियाकालकारकादिरूपेणाभिधीयमानः सत्तारूप एव, असद्रूपाणां तेषां खपुष्पादिवत् कारकासाध्यत्वात्, इति सर्वत्र सङ्ग्रहाभिप्रायेण प्ररूपणाविषयो भाव एव, तमेव सङ्गृह्णन् सङ्ग्रहः शुद्धा द्रव्यास्तिकप्रकृतिरिति तात्पर्यार्थः । प्रतिरूपं प्रतिबिम्बं, विशेषेण घटादिना द्रव्येण सङ्कीर्णा सत्तेति यावत्, पुनरिति प्रकृतिं स्मारयति, सा प्रकृतिः स्वभावः । वचनार्थनिश्चय इति, हेयोपादेयोपेक्षणीयवस्तुविषये निवृत्तिप्रवृत्त्युपेक्षालक्षणव्यवहारसम्पादनार्थं उच्यत इति वचनं तस्य घट इति विभक्तरूपतया अस्तीत्यविभक्तात्मतया च प्रतीयमानो व्यवहारक्षमोऽर्थः, तस्य निश्चयः परिच्छेदः, तस्य द्रव्यास्तिकस्य व्य- 15 20 25

वहारः लोकप्रसिद्धव्यवहारप्रवर्तनपरो नयः । हेयोपादेयोपेक्षणीयस्वरूपाः परस्परं पृथक्स्वभावा भावाः शाब्दे संवेदने सद्रूपतया प्रतिभान्ति ततश्च निवृत्तिप्रवृत्त्युपेक्षालक्षणो व्यवहारस्तद्विषयः प्रवृत्तिमासादयति नान्यथा, सङ्ग्रहाभिमतेष्वेकान्ततः सद्रूपाविशिष्टेषु भावेषु पृथक् स्वरूपतया व्यवहारनिमित्तोऽबाधितरूपः परिच्छेदो न सम्भवतीति व्यवहारनय-
5 स्याभिप्राय इति ॥ ४ ॥

विशेषप्रस्तारस्य मूलव्याख्याता पर्यायनयः, शब्दादयश्च नयाः तस्यैव भेदा इति समर्थनायाह—

**मूलणिमेणं पज्जवणयस्स उज्जुसुयवयणविच्छेदो ।**
**तस्स उ सद्दाईआ साहपसाहा सुहुमभेया ॥ ५ ॥**

10 मूलनिमेनं पर्यवनयस्य ऋजुसूत्रवचनविच्छेदः ।
तस्य तु शब्दादयः शाखाप्रशाखाः सूक्ष्मभेदाः ॥ छाया ॥

मूलेति, पर्यवनयस्य—विशेषविषयपरिच्छेदस्य मूलनिमेनं प्रथमाधारः ऋजुसूत्रवचनविच्छेदः, ऋजु वर्त्तमानसमयं वस्तु स्वरूपावस्थितत्वात्तदेव सूत्रयति परिच्छिनत्ति नातीतमनागतं वा तस्यासत्त्वेन कुटिलत्वात् तस्य वचनं पदं वाक्यं वा तस्य विच्छेदः अन्तः—सीमे-
15 ति यावत् । ऋजुसूत्रवचनस्येति कर्मणि षष्ठी, तेन ऋजुसूत्रस्यैवमयमर्थो नान्यथेति प्ररूपयतो वचनं विच्छिद्यमानं यत्तन्मूलनिमेनमत्र गृह्यते । अत्रापि वचनविच्छेदस्य शब्दरूपत्वेऽपि विषयेण विषयिणोऽभिधानात् ज्ञानस्व भावस्य नयस्याधारता बोध्या । वचनार्थयोश्चाभेदाच्छब्दस्यापि विषयत्वम् । विषयशब्दानभिधानन्तु शब्दनयानां शब्दाभिहितस्यैव प्रमाणत्वमिति सूचयितुम् । पूर्वापरपर्यायविविक्तैकपर्याय एव प्ररूपयतस्तस्य च वचनं विच्छिद्यते, एक-
20 पर्यायस्य परपर्यायासंस्पर्शात् । तस्यर्जुसूत्रनयस्य तुरवधारणे, ऋजुसूत्रनयस्यैव शब्दादयः शब्दादर्थं बोधयन्तः शब्दनयत्वेन प्रतीताः शब्दसमभिरूढैवम्भूताख्यो नयाः शाखाप्रशाखाः सूक्ष्मभेदाः न तु द्रव्यास्तिकस्य । यथाहि तरोः स्थूलाः शाखाः सूक्ष्मास्तत्प्रशाखाः प्रतिशाखाश्चातिसूक्ष्मतराः तथैव ऋजुसूत्रतरोः शब्दादयः स्थूलसूक्ष्मसूक्ष्मतरा द्रष्टव्या इति ॥

**इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितस्य**
25 **सम्मतितत्त्वसोपानस्य शुद्धाशुद्धनयद्वयवर्णनं नाम**
**चतुर्दशं सोपानम् ॥**



# शुद्धर्जुसूत्रस्वरूपम् ।

ननु क्षणक्षयपरिणामसिद्धावेवं वक्तुं युक्तम्, तत्रैव न प्रमाणव्यापारः परैर्हि प्रत्यक्षेण
क्षणिकतानिश्चयोऽन्त्यक्षणदर्शिनामेव प्रकल्प्यते, न प्राक् भ्रान्तिकारणसद्भावात्, भ्रान्तिश्च
सदृशापरापरवस्तूत्पादविप्रलम्भः । तत्रानुमानमपि न प्रवर्त्तते, सामान्यलक्षणस्य विशेषलक्ष-
णस्य च हेतोरनिश्चयात् । त्रैरूप्यं हि सामान्यलक्षणम्, तत्र सर्वार्थानां सिषाधयिषितत्वेन 5
सपक्षस्याभावात्सत्त्वादिहेतोर्न सपक्षसत्त्वनिश्चयसम्भवः, साध्यस्य तन्मात्रानुबन्धः स्वभा-
वहेतोर्विशेषलक्षणम्, क्षणक्षयस्यानध्यक्षत्वान्न सोऽपि तत्र निश्चेतुं शक्यः, अनुमानात्तन्नि-
श्चये त्वनवस्था । तत्कार्यत्वावगमः कार्यहेतोरपि विशेषलक्षणम्, न च किञ्चिद्वस्तु क्षणिक-
कार्यतया प्रसिद्धम्, प्रत्यक्षानुपलम्भसाध्यत्वात् कार्यकारणभावस्य । न च क्षणिकस्य कि-
ञ्चित् कार्यं सम्भवति, असतोऽजनकत्वेन विनष्टकारणात् कार्योत्पादानुपपत्तेः, अविनष्टादपि 10
निर्व्यापारात् तदसम्भवात् । प्रत्यभिज्ञाप्रत्यक्षेण तु भावानां स्थैर्यतावगमान्न क्षणिकत्वा-
भ्युपगमो युक्तः, प्रत्यक्षं च प्रत्यभिज्ञा, अक्षान्वयव्यतिरेकानुविधानादितरप्रत्यक्षवत्, न च
स्मृतिपूर्वकत्वान्न प्रत्यक्षता, तथात्वेऽप्यक्षसहकृतायास्तस्याः प्रत्यक्षत्वाविरोधात् । विनाशस्य
हेतुसापेक्षतया तत्सन्निधेः प्राक् तदभावात् क्षयिणामपि भावानां कियत्कालं स्थैर्यमनुमाना-
दप्यवसीयते । न च नाशहेतवोऽसिद्धाः, दण्डेन घटो भग्नः, अग्निना काष्ठं दग्धमिति नाश- 15
हेतूनां दण्डादीनामन्वयव्यतिरेकाभ्यां प्रसिद्धेः । न च विनाशोऽवस्तु कथं कार्यमिति वाच्यम्,
घटेन्धनपयसां समासादितविकाराणामवस्थान्तरस्यैव ध्वंसत्वात्, भावान्तरव्यतिरेकेणा-
भावस्यासंवेद्यत्वात्, वैशेषिकादिभिरप्यनपेक्षितभावाऽन्तरसंसर्गत्वेऽपि प्रच्युतिमात्रस्वरूपस्य
प्रध्वंसाभावस्य हेतुमत्त्वेनानुभवनात्, तस्मान्न भावानां क्षणिकतासिद्धिरिति चेन्न, अध्यक्षतः
क्षणिकत्वावगमस्य सङ्ग्रहनयनिराकरणप्रस्तावे प्रतिपादितत्वात् । न वा लिङ्गस्य सामान्य- 20
विशेषलक्षणायोगादनुमानमसम्भवि क्षणिकतायाम्, सपक्षसत्त्वादिनिश्चयायोगादिति वक्त-
व्यम् । हेतोर्निश्चितस्य स्वसाध्यप्रतिबन्धस्य स्वपक्षसत्त्वादिनाऽभिधानात्, न तु दर्शन-
मात्रस्य, सर्वत्र सपक्षविपक्षयोर्हेतुभावाभावयोर्निश्चयायोगात् । किन्तु यत्र साधनधर्म-
स्तत्र सर्वत्र साध्यधर्मः यत्र च साध्याभावस्तत्र सर्वत्र साधनधर्मस्याप्यभाव इत्यशेषप-
दार्थाक्षेपेण सपक्षविपक्षयोः सदसत्त्वे ख्यापनीये स्तः । तथा तादात्म्यतदुत्पत्तिलक्षणस्य 25
प्रतिबन्धस्यैकस्मिन्नपि प्रमाणतोऽधिगमेऽन्वयव्यतिरेकतो व्याप्त्या निश्चयः सम्पद्यते नान्यथा,
तदात्मनस्तादात्म्याभावे नैरात्म्यप्रसङ्गात्, कार्यस्य च स्वकारणत्वेनाभिमतस्य भावस्याभावे
भवतो निर्हेतुकत्वप्रसक्तेश्च । दृष्टान्तश्च प्रमाणेनावगतप्रतिबन्धस्य सम्प्रति विस्मृतस्य स्मरणा-

यैवोपन्यस्यते । सत्त्वमपि अर्थक्रियासामर्थ्यमेव, तच्चाक्षणिकात् क्रमयौगपद्यविरोधाद्व्यावर्त्त-
मानं क्षणिक एवावतिष्ठत इति सदात्मकमेव तत्, ततश्च यत् सत् तत् क्षणिकमिति स्वभाव-
हेतुः । सच्छब्दस्य प्रवृत्तिनिमित्तभेदादर्थभेदेन परमार्थतो धर्मिभेदाभावेऽपि न धर्मिण एव
हेतुता, पारमार्थिकं हि रूपमवाच्यम्, ध्वनिभिर्विकल्पावभासिनामर्थानामेव प्रतिपादनात्,
5 क्षणिकशब्दस्यापि अक्षणिकसमारोपव्यवच्छेदविषयतया सच्छब्दार्थभिन्नार्थतेति तद्वारे-
णापि न प्रतिज्ञार्थैकदेशता हेतोः, अन्वयादिनिश्चयस्तु प्रतिबन्धनिश्चायकप्रमाणात् । स्व-
भावहेतोस्तादात्म्यलक्षणप्रतिबन्धश्च प्रत्यक्षादिप्रमाणान्निश्चेयः । ननु क्षणिकत्वं न प्रत्यक्ष-
ग्राह्यमतो न तत्तादात्म्यं स्वभावहेतोः सिद्धम्, न च भावा विनाशनियताः तद्भावं प्रत्यन-
पेक्षत्वादित्यनुमानात्तत्सिद्धिरिति वाच्यम्, विनाशस्य निर्हेतुकत्वेऽपि घटादीनां नाशानुभव-
10 समय एव तस्य निर्हेतुकत्वसम्भवेन क्षणविशरारुताया असिद्धेः, स्वहेतुभ्य एकक्षण-
स्थायिभावोत्पत्तिवदनेकक्षणस्थायिभावोत्पत्तेरविरोधात् । न च क्वचित्कदाचिद्विनाशोद्भवे
तत्कालद्रव्याद्यपेक्षत्वादनपेक्षत्वहानिरिति वाच्यम्, विनाशहेत्वनपेक्षत्वेनानपेक्षत्वात्, अ-
न्यथा द्वितीयेऽपि क्षणे विनाशो न स्यात् तत्कालाद्यनपेक्षत्वात् । न च क्रमाक्रमाभ्यां सा-
मर्थ्यलक्षणसत्त्वस्य व्याप्ततया क्रमाक्रमनिवृत्तौ नित्यात्सत्त्वं निवर्त्तमानं क्षणिकेष्वेवावतिष्ठत
15 इति सत्त्वं क्षणिकत्वस्य गमकमिति वाच्यम्, क्षणिकत्वे सति क्रमाक्रमप्रतिपत्तेरसम्भवात्,
कालस्यैव बौद्धमतेऽभावादिति मैवम्, क्रमयौगपद्ययोः प्रत्यक्षसिद्धत्वात्, सहभावो हि
भावानां यौगपद्यं पूर्वापरभावश्च क्रमः स च क्रमिणामभिन्नः, एकस्य प्रतिभास एव क्रमप्रति-
भासः, परस्यापि तदा प्रतिभासे यौगपद्यप्रतिभासप्रसक्तेः । क्रमिणोः पूर्वापरज्ञानाभ्यां ग्रहणे
तदात्मकः क्रमोऽपि गृहीत एव, क्रमो गृहीत इति व्यवस्था च पूर्वानुभूतपदार्थाहितसंस्का-
20 रप्रबोधादिदमस्मादनन्तरमुत्पन्नमित्येवंविधविकल्पज्ञानोदयात् । तस्मादर्थक्रियाकारी घटादिः
पदार्थः क्रमाक्रमाभ्यां प्रत्यक्षसिद्धः । तस्यैककार्यकरणं प्रति यत्सामर्थ्यं तत्तत्रैव न पूर्वं नापि
पश्चात्, तत्कार्याभावात्, सामर्थ्यमपि ततोऽव्यतिरिक्तमेव, एवमुत्तरकार्योत्पत्तावपीति साम-
र्थ्यभेदेन पदार्थभेदात् कथं न क्षणिके क्रमाक्रमयोर्नियमः, अतो यत्र सत्त्वं तत्र क्रमाक्रमप्रती-
तावपि क्षणिकत्वप्रतीतिरेव । यदि अयमेव क्रमाक्रमनियमो नित्येऽपि, तदा घटादौ प्रतीति-
25 विषयत्वेनाध्यवसितं नित्यत्वं सत्त्वविरुद्धमिति क्रमयौगपद्याभ्यामर्थक्रियाविरोधो नित्यस्य
सिद्धः । यथा च दृष्टेषु घटादिषु क्षणिकत्वव्याप्तं सत्त्वं तथाऽदृष्टेष्वप्यविशेषादिति सर्वोप-
संहारेण व्याप्तिमवगत्य यथा यथा यत्र सत्त्वं निश्चीयते तथा तथा क्षणिकत्वानुमानम् । तस्मात्
क्षणिकत्वेन सह सत्त्वस्य तादात्म्यं प्रमाणनिश्चितमिति अन्वयव्यतिरेकनिश्चयो भवत्येव ।

न चाक्षणिकेषु कथं क्रमयौगपद्यायोग इति वाच्यम्, यतो न ते क्रमेणार्थक्रियाकारिणो भवन्ति, कारकावस्थाया अविशेषाद्द्वितीयादिक्षणभाविकार्याणां प्रागेव करणप्रसङ्गात्, तत्कारकस्वभावस्य प्रागेव सन्निधानात्। सहकारिक्रमात् कार्यक्रम इति चेन्न, तेषां किं विशेषाधायकत्वेन सहकारित्वं किं वा चक्षुरादीनामिव स्वविज्ञाने एककार्यप्रतिनियमात्। तत्र न प्रथमः, तन्निष्पन्नस्य विशेषस्य ततोऽर्थान्तरत्वप्रसङ्गात्, अक्षणिकस्योत्पत्तिसमयेऽ 5 नुत्पन्नस्य पश्चादुत्पन्नस्य तत्स्वभावताऽसम्भवात् भिन्नहेतुकत्वात्, विरुद्धधर्माध्यासस्य कारणभेदस्य च वस्तुभेदकत्वात्। एवञ्च विशेषस्य भेदे भावः पूर्ववत्तदवस्थ एवेति पश्चादप्यकारकः स्यात्। न द्वितीयः सहैव कुर्वन्तीति सहकारिणां नियमो न स्यात्, अपरिणामितया सहकारिणां प्राक् पश्चात् पृथग्भावावस्थायामपि कार्यकारित्वप्रसङ्गात्, सहकारिसन्निधानेऽपि नाक्षणिकस्य कार्यकारित्वं पररूपेणैव, स्वयमकारकस्यापरयोगेऽपि तत्कारित्वासम्भ- 10 वात्, सम्भवे तु पर एव वस्तुतः कार्यकारकः स्यात्, एवञ्च स्वात्मनि कारकत्वव्यपदेशो विकल्पनिर्मित एव भवेत्, तथा चानुपकारिणोऽस्य सद्भावं कार्यं नापेक्षेतेति तद्विकलेभ्य एव सहकारिभ्यस्तदुत्पद्येत। अथवा तेभ्योऽपि न भवेत्, स्वयं तेषामप्यकारकत्वात् पररूपेणैव कर्तृत्वाभ्युपगमात्। अतः सर्वेषां स्वतः परतो वाऽकर्तृत्वान्न कुतश्चित् किञ्चिदु- त्पद्येत, तस्मात्स्वरूपेणैव कर्तार इति न कदाचित् क्रियाविरतिर्भवेत्। क्रमभाविकार्याणाञ्चो- 15 त्पादने एकस्यैव सामर्थ्यान्न तेषां क्रमभाविसामग्रीजन्यस्वभावता। सामर्थ्ये विभ्रणोऽपि यदि तानि न जनयति तदा केवलस्य तस्य न तज्जननस्वभावता सिद्ध्येत्, तस्याः कार्यप्रादुर्भावेणानुमीयमानत्वात्, ततः कारणान्तरापेक्षाण्यपि कार्याणि कारणान्तरानादरेण हठादेव जनयेत्। यो हि यन्न जनयति नासौ तज्जननस्वभावः, न चायं केवलः कदाचिदपि उत्तरोत्तरकालभावीनि कारणान्तरापेक्षाणि कार्याणि जनयतीति न तत्स्वभावो भवेत्, 20 अतत्स्वभावश्च कारणान्तरसन्निधानेऽप्यपरित्यक्तस्वरूपो नैव जनयेत्, तत्कथमेकत्र जनकाजनकस्वभावते विरुद्धे स्याताम्। न च स्वहेतुभिर्हेत्वन्तरापेक्षकार्यजननस्वभावोऽ यमुत्पन्न इति न केवलस्य जनकता, न वा सहकारिसन्निधानासन्निधानावस्थयोरस्य स्वभावभेदः, कारणान्तरापेक्षस्वकार्यजननस्वभावतायाः सर्वदा भावादिति वाच्यम्, सह- कारिसन्निधानावस्थायामपि स्वरूपेणैवास्य कार्यकारित्वात्, तस्य च प्रागपि सद्भावात्, 25

१ न हि कार्यस्य स्वेच्छया भवनमभवनं वा, किन्तु कारणसदसत्तानुविधायिनी तस्य सदसत्त्वे, तत्र यद्यसौ स्थिरैकरूपो भावः सर्वदा सर्वकार्याणां हेतुभावेनावस्थितस्तदा किमिति तत्सत्तामात्राकाङ्क्षीणि कार्याणि सर्वाणि सकृदेव नोत्पद्यन्ते, येन क्रमेण भवेयुः, विलम्बासम्भवात्, तेन पाश्चात्यमपि तदीयं कार्यं प्रागेव भवेत्, अप्रतिरुद्धसामर्थ्यकारणत्वात्, अभिमतकार्यवदिति भावः ॥

सहकार्यन्तरापेक्षायाः ततो लभ्यमानस्यात्मातिशयस्याभावेनायोगात्, उपकारलक्षणत्वादपेक्षायाः, अन्यथाऽतिप्रसक्तेः, तत्सन्निधानस्यासन्निधानतुल्यत्वाच्च केवल एव कार्यं कुर्यात् अकुर्वंश्च सन्निधानावस्थायां च कुर्वन् कथं न भिन्नस्वभावो भवेत् । सहकार्यपेक्षकार्यजननस्वभावतारूपत्वे तस्य सर्वदा सद्भावात् सर्वदा कार्योत्पत्तिप्रसङ्गः । सहकारि
5 सन्निधान एव तत्स्वभावत्वे तु स्वभावभेदापत्त्या वस्तुभेदो भवेत, स्वभावस्यैव वस्तुत्वात्। तस्मान्नाक्षणिकस्य क्रमेण कार्यकरणसम्भव इति न क्रमयोगः । यौगपद्यमपि तस्यासङ्गतं द्वितीयादिक्षणेषु तावत एव कार्यकलापस्योदयप्रसङ्गात, हेतोस्तज्जननस्वभावस्याप्रच्युतेः द्वितीयादिक्षणेषु वा सकलकारणसन्निधानेऽपि कार्यस्य प्रथमक्षण इवोदयो न स्यात्, उदये वा प्रथमक्षणेऽपि तद्भावापत्तेः, अतः क्रमयौगपद्यायोगादक्षणिकानामर्थक्रियासामर्थ्य-
10 विरहलक्षणमसत्त्वमायातमिति सत्त्वलक्षणः स्वभावहेतुः क्षणिकतायां बाधकप्रमाणबलाभिन्नसिततादात्म्यः कथं न विशेषलक्षणभाक् प्रतीतः । नन्वक्षणिकानामिव क्षणक्षयिणामपि अर्थक्रियासामर्थ्यलक्षणं सत्त्वमनुपपन्नमेव, क्रमायोगस्य तत्रापि तादवस्थ्यात् । अथ परैराधीयमानस्वरूपभेदा क्षणिका अपि नोत्पादयितुं शक्याः, न हि ते प्रतिक्षणमुत्पद्यमानाः परस्परतो विशेषभाजः, भावभेदप्रसङ्गात, विशेषो हि न तेषामुत्पत्तेः प्राग्भवति, तेषामेव
15 तदाऽसत्त्वात्, न वा पश्चात्, तदा तत्स्वरूपस्यासत्त्वेनाकार्यकारित्वात्तदुपहितानुपहितक्षणानामविवेकादिति न सहकारिभिरुपकारः, तस्मान्निर्विशेषाणां न क्रमयौगपद्याभ्यामर्थक्रियाकारित्वलक्षणं सत्त्वमिति चेन्न, क्षणिकानामेवंविधोपकारानभ्युगमात, उपकारो हि सकलकारणाधीनविशेषान्तरविशिष्टक्षणान्तरजननम्, तच्च कथमभिन्नकालेषु परस्परं क्षणिकेषु भावेषु भवेत, कार्यकारणयोः परस्परकालपरिहारेणावस्थानात् । तस्मात्सामग्र्या
20 एव जनकत्वादेकस्य जनकत्वाविरोधादव्यवधानदेशाः सकला एव प्रत्येकमितरेतरसहकारिणः स्वं स्वं विशिष्टं क्षणान्तरमारभन्ते तदपि चोत्तरोत्तरं विशिष्टं क्षणान्तरं कारणभेदात्तद्भेदसिद्धेः । न च परस्परसहकारित्वेऽपि अव्यवधानतः क्षणिकानां विशिष्टक्षणान्तरारम्भकत्वमयुक्तम्, प्रथमक्षणोपनिपातिनां क्षित्यादीनां परस्परतः तथाभूतक्षणान्तरजननस्वभावातिशयलाभाभावात्, निर्विशेषाणां विशिष्टक्षणान्तरजननायोगादिति वाच्यम्, यतः
25 किं कार्योत्पादानुगुणविशेषविरहान्निर्विशेषास्ते, आहोस्वित् तदुत्पत्तिनिबन्धनविशेषजननसामर्थ्यवैकल्यात्, उत विशेषमात्राभावात्, न प्रथमः न ह्यस्मन्मते कारणस्यैव कार्यमभि-

१ एक एव पदार्थः क्वचिद्देशे काले वा किञ्चित्कार्यं कृत्वा पुनरन्यस्मिन्सहकारिसन्निधि कथञ्चिदुपात्तस्वभावान्तरो देशान्तरे कालान्तरे च कार्यं कुर्वाणः क्रमेण करोतीत्युच्यते क्षणमात्रस्थायित्वे त्वर्थस्यैवंविधक्रमकारित्वं कथं सम्भवेदिति भावः ॥ २ नापि यौगपद्येनाप्यर्थक्रियाऽस्यास्ति, निरंशत्वेन युगपदनेकशक्त्यात्मकत्वाभावादिति बोध्यम् ॥

व्यक्तिमात्रमनुभवति यतस्तदभावे न स्यात्, अपि तु कारणं कार्यरूपविकलमेव कार्यमारभते, सतः क्रियाविरोधात्, कारणात्कार्यस्य भिन्नस्वभावत्वाच्च । न द्वितीयः, यतोऽव्यवहितः क्षित्यादिकारणकलापः कार्योत्पादानुगुणविशेषजननसमर्थः प्रत्यक्षानुपलम्भतः सिद्धः, केवलमत्र विवादः, किं क्षित्यादयः क्षणिकास्तथाभूतविशेषारम्भकाः, किं वाऽक्षणिका इति, तत्र च साहित्येऽपि न ते पररूपेण कर्त्तारः, स्वरूपञ्च तेषां प्रागपि तदेवेति कथं कदाचित् क्रियाविराम इति 5 क्षणिकतैव तेषामभ्युपगमनीया । नापि तृतीयः, अपरापरकारणयोगतः प्रतिक्षणं भिन्नशक्तीनामेव भावानामुत्पादात्, कुतश्चित्साम्यादेकताप्रतिपत्तावपि भिन्नस्वरूपतैव भावानाम्, न हि कारणानां भेदेऽप्येकरूपतैव, भावस्य वैश्वरूप्यस्यानिमित्तताप्रसङ्गात् । तस्मात् सामग्रीभेदे कार्यभेदस्येष्टत्वात् कार्यस्याप्यनेकसामग्रीजनितस्यानेकत्वात्तद्वैलक्षण्ये च तस्यापि विलक्षणतैवेति सिद्धं यत्सत्तत्क्षणिकमिति । यदुक्तं क्षणिकस्य किञ्चित्कार्यं न सम्भवति, असतोऽज- 10 नकत्वेन विनष्टात् कारणात् कार्योत्पादानुपपत्तेः, अविनष्टादपि निर्व्यापारात्तदसम्भवादिति तदयुक्तम्, यदि हि व्यापारसमावेशाद्भावाः कार्यनिर्वर्त्तकाः स्युस्तदा स्याद्द्वितीयक्षणप्रतीक्षा, यदा तु द्वितीयसमयप्रतीक्षाव्यतिरेकेणापि स्वमहिम्नैव कार्यकरणे प्रवर्त्तन्ते तदा को दोषः, अन्यथा तद्व्यापारजननेऽप्यपरव्यापारसमावेशस्यावश्यकतयाऽनवस्था स्यात्, व्यापारजनने तेषां व्यापारान्तरानपेक्षत्वे तु कार्यमपि व्यापारनिरपेक्षा एव कुतो न 15 कुर्युः, तस्मात् स्वभावत एव स्वकार्यकारिणो भावाः, न व्यापारसमावेशात्, ते च स्वहेतुभ्य एव तथाविधा उत्पन्नाः स्वसन्निधिमात्रेणैव कार्यं निर्वर्त्तयन्तीति कुतः क्षणभङ्गभङ्गप्रसङ्गः । यदुक्तं क्षणध्वंसो न कार्यहेतुप्रतिपाद्यः, कार्यकारणभावस्य प्रत्यक्षानुपलम्भसाधनत्वादिति तन्न युक्तम्, सर्वत्र कार्यकारणभावस्य प्रत्यक्षानुपलम्भसाधनत्वासम्भवात्, अन्यथा चक्षुरादीनां स्वविज्ञानं प्रति कारणताप्रतिपत्तिर्न स्यात् । न च तद्विज्ञानस्यान्यहेतु- 20 सद्भावेऽपि कादाचित्कतया तद्व्यतिरिक्तकारणान्तरसापेक्षत्वाच्चक्षुरादीनां तत्र हेतुत्वमनुमीयत इति वाच्यम्, प्रकृतेऽपि तुल्यत्वात्, विषयेन्द्रियादिवशात् प्रतिक्षणविशरारूणि क्रमवन्त्युपजायमानानि ज्ञानानि तथाविधकारणप्रभवत्वमात्मनः सूचयन्तीति कथं न कार्यहेतुश्चक्षुरादीनां क्षणध्वंसितां प्रतिपादयेत्, कार्यक्रमाद्धि कारणक्रमः प्रतीयते । प्रत्यभिज्ञाप्रत्यक्षेण भावानामक्षणिकत्वावगम इति यदुक्तं तदपि न सम्यक्, तस्याः प्रामाण्यासिद्धेः । भवन्मते 25 हि 'तत्रापूर्वार्थविज्ञानं निश्चितं बाधवर्जितम । अदुष्टकारणारब्धं प्रमाणं लोकसम्मत'मिति प्रमाणलक्षणम्, तत्र नास्या बाधकवर्जितत्वं सम्भवति, पुरोदीरितानुमानबाध्यत्वात् । न चानुमानमनया बाधितम्, अनिश्चितप्रामाण्याया अस्या बाधकत्वानुपपत्तेः । प्रमाणसिद्धेषु

प्रतिक्षणविशरारुषु सदृशापरापरोत्पत्त्यादिविप्रलम्भहेतोरुपजायमानाया अस्या दुष्टकारणारब्धत्वेनाप्रामाण्याच्च । अर्थक्रियार्थी हि सर्वः प्रमाणमन्वेषते न व्यसनितयेत्यर्थक्रियासाधनविषयं प्रमाणमित्यभ्युपगन्तव्यम्, न च प्रत्यभिज्ञानविषयेण स्थैर्यं भजताऽर्थक्रिया काचित्साध्यत इति तैमिरिकज्ञानवदपूर्वमर्थक्रियायामक्षमं सामान्याद्यधिगच्छदपि प्रत्य-
5 भिज्ञानं न प्रमाणम्, न वा तत् प्रत्यक्षम्, तज्जनकाभिमतेनार्थेनेन्द्रियाणां सम्प्रयोगासिद्धेः, अर्थस्य नित्यत्वात्, सिद्धौ वा तत एव तत्सिद्धेर्व्यर्था प्रत्यभिज्ञा भवेत् । न चानेकदेशकालावस्थासमन्वितं सामान्यं द्रव्यादिकञ्चास्याः प्रमेयमित्यनधिगतार्थगन्तृत्वात्प्रमाणमिति वाच्यम्, सामान्यादेरभिन्नस्य तद्विषयस्याभावात्, भावेऽप्यनेकप्रमाणगोचरत्वेन तत्र प्रवर्त्तमानस्य प्रत्यभिज्ञानस्यानधिगतार्थगन्तृत्वायोगात, भिन्नभिन्नालम्बनत्वेऽपि च प्रत्यभि-
10 ज्ञानस्य न प्रामाण्यमपूर्वप्रमेयाभावात्, न हि देशादयस्तत्र प्रत्यभिज्ञायन्ते, प्रागदर्शनात् । न च पूर्वप्रसिद्धमेव वह्निसामान्यं देशादिविशिष्टतयाऽधिगच्छदनुमानं प्रमेयातिरेकाद्यथा प्रमाणव्यपदेशभाक् तथा सामान्यादिकं प्रागुपलब्धमेव देशादिविशिष्टतया प्रतिपद्यमानस्याप्यपूर्वप्रमेयसङ्गतेर्न प्रामाण्यक्षतिरिति वाच्यम्, द्वितीयप्रत्यक्षादेव तत्सिद्ध्या तस्यापूर्वप्रमेयायोगात् । न च पश्चादुपलब्धस्य पूर्वदृष्टार्थता प्रत्यक्षानवगताऽधिका प्रत्यभिज्ञानेन
15 प्रतीयत इति वाच्यम्, पूर्वदृष्टार्थतायाः प्रत्यक्षद्वयगोचरादनतिरिक्तत्वात्, अतिरिक्तत्वे वा स एवायमित्यभेदोल्लेखवतस्तस्य मिथ्याप्रत्ययत्वापत्तेः, तस्मात्प्रत्यभिज्ञानस्य प्रामाण्यासिद्ध्या न क्षणभङ्गवादिनः प्रत्यक्षविरोधमनुभवन्ति । यदप्युक्तं विनाशस्य कारणाधीनत्वात्तत्सन्निधेः प्राग्घटादिषु तदनुदय इति तदपि प्रतिविहितमेव, प्रतिक्षणध्वंसित्वाभावे सर्वसामर्थ्याभावलक्षणस्यासत्त्वस्य भावात् । तथापि किञ्चिदुच्यते, इन्धनादीनामग्निसंयोगावस्थायां
20 त्रयमुपलभ्यते, तदेवेन्धनादि, कश्चिद्विकारः, कल्पनाज्ञानप्रतिभासी तुच्छस्वभावः, तत्राग्न्यादीनां क व्यापारः, न तावदिन्धनाद्युत्पादे, तस्य स्वहेतुत एव भावात्, नाप्यङ्गारादिदिविकारे, अग्न्यादिभ्यस्तद्विकारोत्पत्तावपीन्धनादेरनिवृत्ततया तथैवोपलब्ध्यादिप्रसङ्गात् । न च तेभ्यः काष्ठादेर्ध्वंसाख्यं दोष इति वाच्यम्, ततो वस्त्वन्तरस्वरूपध्वंसोपगमे काष्ठादेस्तादवस्थ्यापातात् । न च भावान्तरमेव काष्ठादेः प्रध्वंसाभावोऽतः कथं काष्ठादेरुपलब्ध्यादि-
25 प्रसङ्ग इति वाच्यम्, काष्ठादेरङ्गारादिरेव ध्वंस इत्यत्र नियामकस्य वाच्यत्वात्, अङ्गारे सति काष्ठनिवृत्तिर्नियामक इति चेन्न, तुच्छस्वभावनिवृत्त्यनङ्गीकरणेऽङ्गारादिकमेवार्थान्तरं निवृ-

१ यदि भावः स्वतो नश्वरश्चेत्तदा न किञ्चिद्विनाशहेतुभिः कार्यमस्ति, न हि स्वयमेव पततः पातप्रयासः सफलः । स्वतोऽनश्वरश्चेत्तर्हि नाशहेतुर्व्यर्थ एव, तत्स्वभावस्य केनाप्यन्यथाकर्तुमशक्यत्वात्, तथा च नित्यस्य सतः सर्वसामर्थ्यविधुरता दुर्वारा, तस्मात्स्वभावत एव विनश्वरो भावोऽभ्युपेय इति तात्पर्यम् ॥

त्तिशब्देनोक्तं स्यात् तेनाङ्कारे सति अङ्कार इत्युक्तं भवेत्, न तु नियामकं तावताप्युक्तम् । तथा बुद्धिप्रदीपादीनामनुपजातविकाराणां कथं ध्वंसः, आत्माऽव्यक्तरूपविकारान्तरमेव ध्वंस इति चेन्न, बुद्ध्यादीनामात्मरूपविकारापत्तौ प्रमाणाभावात्, आत्मनश्चासत्त्वात् । प्रदीपादेरपि अव्यक्तरूपता हि कार्यदर्शनानुमेया, तस्या अतीन्द्रियत्वात्, न च ध्वस्तस्य प्रदीपादेः किञ्चित्कार्यमुपलभ्यते येन तस्या अनुमितिः स्यात्, तस्मान्न भावान्तरं प्रध्वंसाभावः, भावान्तरस्य 5 प्रध्वंसरूपत्वे च तद्विनाशाद्घटाद्युन्मज्जनप्रसक्तिः । न च कपालादेर्भावरूपतैव ध्वस्ता नाभावात्मकतेति नायं दोष इति वाच्यम्, भावान्तररूपस्याभावस्य तदभावे प्रच्युतत्वात्, अन्यथाऽभावस्य कृतकस्याविनाशित्वेऽनित्यत्वेन कृतकत्वस्य व्याप्तिर्न सिद्ध्येत्, अकृतकत्वे त्वभ्युपगम्यमाने भावान्तरकार्यात्मको ध्वंसो न भवेत् । प्रध्वंसाभावाविनाशेऽकृतकत्वे च सर्वदा तत्सद्भावाद्घटादीनां सत्ता न भवेत्, ततो यथा कारणस्वरूपः प्रागभावः कार्योदये कारण- 10 निवृत्तौ निवर्त्तते, अन्यथा तदात्मकत्वायोगात्, तथा कार्यात्मा ध्वंसोऽपीति नष्टैर्घटादिभिः पुनर्भाव्यमेव, तस्मान्न कपालादिरूपं भावान्तरं घटादेर्ध्वंसः, तत्र कारकव्यापारासम्भवेन क्रियाप्रतिषेधमात्रप्राप्तेः, अभावस्य च हेतुमत्त्वे कार्यत्वादभावरूपताप्रच्युतिप्रसङ्गः भावस्य कार्यलक्षणत्वात्, स्वकारणसद्भावे हि यद्भवति तदभावे च न भवति तत्कार्यमुच्यते, भवनधर्मो च कथं न भावः, भवतीति हि भाव उच्यते, अङ्कुरादेरपि नातोऽपरं भावशब्दप्रवृत्ति- 15 निमित्तमुपलभ्यते, तच्चदभावेऽप्यस्ति कथमसौ न भावः । न चार्थक्रियासामर्थ्यमेव भावशब्दप्रवृत्तिनिमित्तं, तच्चाभावे नास्तीति नासौ भाव इति वाच्यम्, सर्वसामर्थ्यविकलत्वे तस्य प्रतीतिविषयत्वासम्भवात्, प्रतीतिजनकत्वे च कथं न सामर्थ्यम् । न च यथा घटपटयोः कार्यत्वाविशेषेऽपि प्रतिनियतप्रतीतिविषयतया भेदः तथा भावाभावयोः कार्यत्वेऽपि सत्प्रत्ययविषयस्य भावत्वमसत्प्रत्ययविषयस्याभावत्वमिति वाच्यम्, तस्यासत्प्रत्ययविषयत्वे कार्य- 20 त्वस्यासम्भवात्, स्वहेतुमत्त्वेऽस्य भावात्कार्यत्वे सत्प्रत्ययविषयताया दुर्वारत्वात्, भवतीति प्रतीतिविषयस्यैवास्तीति प्रत्ययविषयत्वात्, अस्ति भवतीत्यादिशब्दानां पर्यायत्वात् । किञ्चाग्न्यादिभ्यो यद्यभावो भवेत् तदा तद्भावे काष्ठादयः किमिति नोपलभ्यन्ते, न हि तेभ्यो ध्वंससद्भावेऽपि काष्ठादयो निवृत्ताः, ध्वंसोत्पादन एव तेषां चरितार्थत्वात् । अथ काष्ठोपमर्दन ध्वंसस्योत्पत्तेर्न तेषामुपलब्धिरिति चेत्कुतस्तदुपमर्दः, न प्रध्वंसाभावात्, काष्ठादिसत्ताकाले 25 तस्याभावात्, नाग्न्यादिभ्यः, तेषां ध्वंसोत्पादन एव व्यापारात् । न चोत्पन्नः प्रध्वंसाभावो काष्ठादीनुपमर्दयति, तद्यौगपद्यप्रसङ्गात्, तथा च सत्यविरोधप्राप्तिः । न वा ध्वंसेनावृतत्वात्

---

१ न भवतीत्यभावो ध्वंस उच्यतेऽतः कथं स भवनधर्मा भवेत्, विरोधात्, यदि स्वविषयविज्ञाने प्रतिनियतरूपेणानवभासनादभाव उच्यते तर्हि अत्यन्तपरोक्षचक्षुरादीनामप्यभावरूपताप्रसङ्ग इति ॥

काष्ठादेरनुपक्रमः, तदवस्थे काष्ठादावावरणायोगात् । अपि च विनाशस्य हेतुमत्त्वे तद्भेदा-
त्तस्य भेदमनुभवेत्, कार्यात्मानो हि घटादयः कारणभेदाद्भेदमनुभवन्तोऽध्यक्षत एवावसीयन्ते
नैवमनासादितभावान्तरसम्बन्धः प्रच्युतिमात्रस्वभावो ध्वंसः, अग्न्यादिहेतुभेदेऽपि तुच्छ-
स्वरूपतयैव सर्वत्र विकल्पज्ञानेऽवभासनात् । तस्माद्विनाशोऽयमहेतुर्निःस्वभावोऽभ्युपगन्त-
5 व्य इति निर्हेतुको विनाश उच्यते, एवञ्च भावानां निरुक्तानुमानतोऽपि क्षणक्षयि-
त्वं सिद्धमिति प्रत्यक्षतोऽनुमानतश्च क्षणिकत्वव्यवस्थितेः सिद्धः पर्यायनयस्य मूलाधारः
ऋजुसूत्रवचनविच्छेद इति ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजय-
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
10 लब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य शुद्धर्जुसूत्र-
स्वरूपनिरूपणं नाम पञ्चदशं सोपानम् ॥



## शुद्धतरर्जुसूत्रनिरूपणम् ।

अथवा ऋजु बाह्यापेक्षया ग्राहकसंवित्तिभेदशून्यमविभागं बुद्धिस्वरूपमकुटिलं सूत्रय-
15 तीति ऋजुसूत्रः शुद्धतरः पर्यायास्तिकः । ननु कथं विज्ञप्तिमात्रमभ्युपगम्यते, किमविभागबुद्धि-
स्वरूपग्राहकप्रमाणसद्भावात्, किं वाऽर्थस्य सद्भावे बाधकप्रमाणात् । तत्र न प्रत्यक्षेण विज्ञ-
प्तिमात्रनिश्चयः, अर्थाभावनिश्चयं विनाऽर्थस्पर्शशून्यं विज्ञप्तिमात्रमेव तत्त्वमित्यवधारणरू-
पतो निश्चयासम्भवात्, अर्थाभावस्तु नाध्यक्षगम्योऽर्थप्रतिभासकतयैव प्रत्यक्षस्योत्पत्तेः ।
न चेदमिन्दुद्वयदर्शनमिव भ्रान्तम्, तद्विषयत्वाच्च घटादेरसत्यत्वमिति वाच्यम्, शुद्ध-
20 दृगवसेयस्य बाध्यत्वायोगात्, यद्वा तैमिरिकावभासिनोऽपीन्दुद्वयादेरवैतथ्यमस्तु, न च
तस्य बाध्यत्वं वाच्यम्, तस्यैवाऽयोगात्, न हि दर्शनं बाध्यते, तस्योत्पन्नत्वात्, ना-
प्यर्थः, प्रतिभासमानरूपेण सत्त्वात्, अन्यथा प्रतीयमानत्वायोगात्, न च प्रतिभासेऽपि
तन्निर्भासिरूपमसत्यमिति निर्वाच्यम्, प्रतिभासमानरूपवतोऽप्यसत्यत्वे संविदोऽपि तथा-
त्वप्रसक्तेः, न चैवं वक्तव्यं भ्रान्तज्ञानावभासिनोऽर्थक्रियाविरहाद्वैतथ्यमिति, तदनुदयेऽपि
25 पूर्वज्ञानावभासिनो वैतथ्यासम्भवात्, न ह्यन्यस्याभावेऽपरस्याभावोऽतिप्रसङ्गात्, तस्माच्च
प्रत्यक्षं बहिरर्थावभासि तदभावं गमयति । प्रत्यक्षाभावे नानुमानमपि तदभावावेद-
कम्, प्रत्यक्षविरोधेऽनुमानस्याप्रामाण्याच्च । अत एव न द्वितीयः, भावबाधकप्रमाणविर-
हात् । ननु नार्थाभावद्वारेण विज्ञानमात्रं साध्यते किन्त्वर्थसंविदोः सहोपलम्भनियमा-

दभेदः विधिमुखेनैव साध्यत इति चेन्न, अभेदस्य प्रत्यक्षेण बाधनात्, पुरस्थं नीलादि स्फुटवपुः प्रतिभाति, हृदि च रूपग्राहकाकारं बिभ्राणा संविदवभासत इति कुतोऽर्थसंविदोरभेदः साधयितुं शक्यः, पक्षस्य प्रत्यक्षबाधितत्वादश्रावणः शब्द इति पक्षस्येव । न चाभेदेऽपि प्रत्यक्षं भेदाधिगन्तृ उपलब्धमिन्दुद्वयादिवदिति न तेन बाधेति वाच्यम्, द्विचन्द्रादौ बाधा-दर्शनतस्तत्प्रत्यक्षस्य भ्रान्तत्वेऽपि स्तम्भादावर्थक्रियाकारिरूपोपलब्धेर्बाधाभावेन तत्प्रत्यक्षस्य 5 सत्यत्वात्, ततो नीलशुक्लयोर्भेद एवेति न कुतश्चिद्विज्ञानमात्रसिद्धिः अत्रोच्यते, प्रत्यक्षेणार्थ-परिच्छेदासम्भव इति, तद्धि प्रत्यक्षमर्थं तुल्यकालं न प्रकाशयति, प्रत्यक्षतया यदैव ज्ञानमव-भासते तदैव नीलादिस्वरूपमपीति स्वस्वरूपनिष्ठत्वेनोभयोरपि प्रतिभासनाद्ग्राह्यग्राहकभावा-नुपपत्तेः, नीलाकारविविक्तस्य स्वरूपनिमग्नस्य ज्ञानस्य हृदि सन्धानादर्थस्य च तद्रूपपरिहा-रेण बहिः स्फुटतया प्रतिभासनात् । दर्शनस्य बाह्यार्थज्ञानं प्रति ग्रहणक्रियाकर्तृत्वाद्ग्राहकता, 10 तत्प्रतिबद्धप्रकाशतया चार्थस्य ग्राह्यतेति चेन्न, नीलाद्यर्थदर्शनाभ्यां भिन्नस्य ग्रहणक्रियाया अभावात्, तथाऽप्रतिभासनात्, न च तामन्तरेण नीलबोधयोः कर्तृकर्मते युक्ते, अति-प्रसङ्गात्, क्रियायाः सत्त्वेऽपि परोक्षतयाऽतिप्रसङ्गादर्थस्य कर्मता बोधस्य च कर्तृतेति न स्यात्, अतः प्रतिभासमाना साऽभ्युपगमनीया, तथाऽभ्युपगमे च सा किं स्वरूपतो भाति, उत तद्ग्राह्यतया, आद्ये नीलबोधग्रहणक्रियाणां स्वतन्त्रतया प्रतिभासनात् कर्तृकर्मक्रियाव्य- 15 वहारो न स्यात्, तस्याः स्वरूपनिमग्नतया प्रतिभातत्वात् । स्वतंत्रप्रतिभासादेव च तथा-व्यवहाराभ्युपगमे स्तम्भादेरपि तथापरस्परव्यवहारप्रसक्तिः । न द्वितीयः, अपरग्रहण-क्रियायाः प्रतिभासमानायाः कर्मतया तस्याः प्रतिभासेऽपरापरक्रियाप्रसक्तितोऽनवस्था स्यात्, अपरक्रियामन्तरेणैव ग्रहणक्रियायाः कर्मत्वे नीलादेरपि ग्रहणक्रियाव्यतिरेकेण प्रकाश-मानस्य ग्राह्यता भवेत्, तथा च नीलादीनां स्वरूपमेव प्रकाशात्मकमिति विज्ञप्तिमात्रमेव 20 सर्वं भवेत् । किञ्च ज्ञानकाले संवेदनक्रियायाः सत्त्वे समानकालतया प्रतिभासनेन सव्येतरगोविषाणयोरिव ज्ञानस्य संवित्क्रियां प्रति कर्तृत्वं न स्यात् । तस्याश्च ज्ञानो-त्तरकालत्वेऽपि न कार्यकारणभावः, ज्ञानकाले संवित्क्रियायाः तत्काले च ज्ञानस्या-भावात् । न च पूर्वं स्वरूपेण बोधस्य प्रतिभासस्ततो नयनादिसामग्रीवशेन संवेदन-क्रियायुक्ततया प्रतिभासनाद्बोधस्य कर्तृत्वमिति वाच्यम्, संवित्क्रियायुक्तबोधप्रतीतिकाले 25

---

१ ययोः सहोपलम्भनियमः तयोरभेदः, यथा तैमिरिकोपलभ्यमानचन्द्रद्वयस्य, सहोपलम्भनियमश्च ज्ञानार्थयोरिति व्यापकविरुद्धोपलब्धिः, भेदे हि नियमेन सहोपलम्भो न दृष्टः यथा घटपटयोः, तथा च भेदः सहोपलम्भानियमेन व्याप्तः तद्विरुद्धश्च सहोपलम्भनियमः दृश्यमानः सहोपलम्भानियमं निवर्त्तयति, सोऽपि निवर्तमानः स्वव्याप्यं भेदं निवर्तयतीति भावः ॥

तत्पूर्वदशानवगमात् तदवगमकाले च संवित्क्रियायुक्तावस्थावगमाभावात्, तयोस्तदनवगमे तु न बोधस्य ग्रहणं प्रति कर्तृताप्रतीतिः। न च नीलानुभवसमये पूर्वदशां स्मरन् बोधस्यानुभवं प्रति कर्तृतां प्रतिपद्यत इति देश्यम्, बोधग्रहणयोर्नीलपरिच्छेदवेलायां परस्परासंसक्तयोः समानकालयोः प्रतिभासेन कर्तृतावगमासम्भवात्, न हि स्मरणं बोधस्य 5 पूर्वावस्थामध्यवस्यत् ग्रहणावस्थां प्रतिपद्यत इति कथं तत्कर्तृतामवगमयेत्। न च बोधात्मैवात्मानमुपलभत इति कर्तृत्वावगतिरिति गीस्साधीयसी, यदा बोधः स्वं नीलग्राहकतया प्रतिपद्यते तदा नानुभवकर्त्री पूर्वसत्तां प्रतिपद्यत इति न ग्रहणं प्रति जनकतामात्मनोऽसावधिगच्छति। न च प्राक्तनीमग्रहणावस्थां नीलावभासकालेऽसावध्यवस्यति युगपद्विरुद्धयोः प्रतिभासयोरापत्तेः, तस्मान्न तुल्यकालो बोधो ग्रहणक्रियां जनयितुं समर्थ इत्यग्राहक एव। 10 किञ्च बोधो यदि व्यतिरिक्तक्रियाजनकस्तदा नीलविज्ञानयोः कथं ग्राह्यग्राहकत्वम्, न च बोधोदयेऽपरोक्षतया नीलादेर्भानाद्ग्राह्यत्वमिति युक्तं वक्तुम्, अप्रकाशात्मकस्य तस्य तदुत्पादेऽपि प्रतिभासायोगात्, नीलादिरर्थो हि जडस्वरूपो न स्वयं प्रतीतिगोचरतामवतरतीति दर्शनमस्य प्रकाशकमभ्युपगतम्, यदि तु नीलं स्वप्रकाशात्मकं स्यात्तदा विज्ञप्तिरूपतया परवादाभ्युपगमप्रसङ्गो भवेत्, यच्चाप्रकाशात्मकं वस्तु तत्प्रकाशसद्भावेऽपि नैव प्रकाशते, 15 प्रकाशस्वरूपञ्च नीलं न सङ्क्रामति, भेदप्रतिहतिप्रसङ्गात्। न चार्थस्य प्रत्यक्षता अर्थाकारकार्यत्वात्प्रकाशस्येति वक्तव्यम्, अपरोक्षाकाररूपत्व एव तस्य प्रत्यक्षत्वसम्भवात्, न तु प्रकाशात्मनः कार्यस्योद्भवात्, प्रकाशस्य हि अर्थकार्यतया तत्सम्बन्धित्वं युक्तं न तु तत्स्वरूपं प्रकाशः, अतो न वेद्यवेदकभावस्तयोः। न च नीलसंवेदनयोः स्वरूपनिमग्नयोः स्वतंत्रतयावभासने तदुत्तरकालभावी कर्मकर्त्रभिनिवेशी नीलमहं वेद्मीत्यवसायो न स्यात्, न हि 20 पीतदर्शने नीलोल्लेख उपजायमानः स संलक्ष्यते, भवति च तथाध्यवसायी विकल्प इति तयोर्ग्राह्यग्राहकतेति वाच्यम्, मिथ्यारूपकल्पनया ग्राह्यग्राहकरूपतायाः परिच्छेदासम्भवात्, नीलमिति हि प्रतीतिः पुरोवर्त्तिनीलमुल्लिखन्ती वर्त्तमानदर्शनानुसारिणी भिन्ना संलक्ष्यते, अहमित्यात्मानं व्यवस्यन्ती स्वानुभवायत्ता परा प्रतीयते, वेद्मीति प्रतीतिरप्यपरैव क्रियाव्यवसितिरूपा, अतः परस्पराव्यतिमिश्रसंवित्तित्रितयमेतत्। भवतु वेयमेका तथावसा- 25 यिनी कल्पनाप्रतीतिः तथापि नातो ग्राह्यग्राहकता सत्या, मृगतृष्णिकासु जलाध्यवसाया-

१ यथा हि नयनकार्यं प्रकाशः, अतः स नयनसम्बन्धी भवेत्, न तु स्वरूपं प्रकाशः, तथा नीलादिकार्यं प्रकाशः स्यात्, न तावता नीलादिः प्रकाशरूपो भवितुमर्हति तथा च यदि नीलादिरप्रकाशात्मा तदा स प्रकाशसद्भावेऽपि नैव प्रकाशेत, तस्माच्च न वेद्यवेदकभावः, यदि च प्रकाशात्मा तदा विज्ञानरूपो नीलादिः स्यादिति भावः ॥

ज्ञलसत्यताप्रसक्तेः । न चात्र बाधसद्भावादसत्यता, प्रकृतेऽपि नीलसंविदोः स्वतंत्रतया निर्भा-
सरूपबाधकस्य सत्त्वात्, तस्मान्न ग्राह्यग्राहकभावः सत्यः । अयञ्च ग्राह्यग्राहकभावस्य प्रतिक्षे-
पस्तुल्यकालं प्रकाशमानवपुर्नीलमुद्भासयन्ती प्रतीतिमभ्युपेत्य, सैव प्रतीतिर्विचार्यमाणा न
सङ्गच्छते, कुतः साऽर्थग्राहिणी भवेत्, अनुभूयमानं ह्यर्थाकारं विहाय नान्या काचिदाभा-
ति, बहिः प्रकाशमानं नीलादिकं अन्तः स्वसंविदितं सुखादिकञ्च मुक्त्वा नान्या संवित्सती 5
कदाचित् प्रतिभातीत्यसती सा कथमर्थग्राहिणी भवेत् । अहङ्कारास्पदं सुखादिकमेव हृदि
परिवर्तमानं नीलादेर्ग्राहकमिति चेन्न, सुखादेः प्रतिभासमानवपुषो ग्राहकत्वानुपपत्तेः, सुखा-
दयो हि स्वसंविदिता हृदि प्रकाशन्ते नीलादयस्तु बहिस्तथाभूता एवाभान्ति, न च
परस्परासंसृष्टयोः समानकालयोर्वेद्यवेदकता, तुल्यकालतया प्रकाशमाननीलपीतयोरपि पर-
स्परं तद्भावापत्तेः । सुखादिराकारः स्वपरप्रकाशतया प्रतिभासमानो नीलादेर्वेदकः, सवि- 10
तृप्रकाश इव घटादीनामिति चेत्किं दर्शनात्मनः प्रकाश एव बहिरर्थावभासः, उत दर्शन-
काले तेषां प्रत्यक्षात्मता, आद्ये ज्ञानात्मनो हि प्रकाशः स्वसंविद्रूपोऽनुभवः, तज्ज्ञानस्य
रूपं न बाह्यार्थात्मनाम्, अन्यथा प्रत्यक्षात्मतया तयोरभेदप्रसङ्गः, द्वितीये च दर्श-
नोदयसमये यदि पदार्थप्रत्यक्षता तथा सति सामग्रीवशात् प्रत्यक्षाकारं नीलमुत्पादि-
तमिति दर्शनवत्तत् स्वसंविदितं प्रसक्तम्, अत एव दृष्टान्तोऽप्यसङ्गतः, सवितृप्रकाशो हि 15
स्वरूपनिमग्न एवाभाति घटादिरपि स्वात्मनिष्ठ एव भासत इति नानयोरपि परस्परं
प्रकाश्यप्रकाशकभावः । अपि चालोकाद्घटादिः प्रकाशरूपः प्रादुर्भवतीत्यालोकः प्रकाशकः
स्यात्, उपकाराभावे व्यतिरिक्तोपकारप्रादुर्भावे वा घटादीनां प्रकाशायोगात् । न चात्रा-
हङ्कारास्पदमन्तर्दर्शनं बहिः परोक्षाकारमर्थं जनयति, तुल्यकालतया हेतुफलभावायोगात्,
उपकार्योपकारकभावमन्तरेण बाह्यार्थानामन्तर्दृशाञ्च वेद्यवेदकभावानुपपत्तेः सर्वं वस्तु सं- 20
विन्मात्रकमेवेति स्थितम् । ननु यदि सर्वं विज्ञप्तिमात्रमेव तर्हि मेयमातृमानादिव्यवहार-
विलोपः स्यात्, तस्य भेदनिबन्धत्वात्, प्रमितिक्रियया व्याप्यमानत्वाद्धि प्रमेयमर्थः,
तत्र नीलादयो यदि बोधः स्यात्तदाऽसौ स्वतंत्रो नीलदर्शं प्रति प्रमाता भवेत्, चक्षुरादयश्च
करणतया मानं भवेयुः, अर्थप्रतिभासः फलम्, उपलम्भसाध्यत्वात्, मेयादेरभावे तु न
नीलादयोऽपि संविद्रूपाः सिद्ध्यन्ति, सिद्धेः प्रमाणनिबन्धनत्वात्, न च स्वसंवेदनमेव व्य- 25
वस्थाकारि प्रमाणम्, तत्र दृष्टान्तासिद्धेः । प्रदीपादयोऽपि हि परप्रकाश्या एव, न च स्वेनैवा-
त्मना त एवाधिगन्तुं शक्याः, न ह्यङ्गुल्यग्रेण तेनैव तदेवाङ्गुल्यग्रं स्पृशति इति, मैवम्, यथा
हि बाह्यार्थवादे सुखादीनामात्मस्वरूपं स्वविषये प्रमाणं तेषामेव वेदनं फलं सुखादयश्च
मेयम्, यथा वा परेषामात्माऽपरोक्षो मेयः, तस्य च प्रकाशरूपता मानम् तत्प्रतिभासः फलं

सत्त्वमियमेव मैत्र्यादीनां व्यवस्था सर्वत्र नीलादौ योजनीया विज्ञानवादेऽपि। न च तत्रान्यग्राहकाभावादसौ मिथ्योल्लेख इति वाच्यम्, नीलादावपि व्यतिरिक्तप्रकाशाभावान्मिथ्यात्वात्, अपरोक्षस्य नीलादेरेव कर्तृकर्मादितया मिथ्याप्रकाशनात्। न च निर्बीजस्यायोगादस्याः कर्मकर्तृक्रियाध्यवसितेर्बीजं वक्तव्यमिति वाच्यम्, क्वचिदपि वास्तवस्य कर्त्रादिभेदस्यानुपलब्धेरनादिवासनाप्रभवप्रधानादिविकल्पवदस्याः परम्परामात्रत्वात्। तस्मान्नीलादयोऽपरोक्षस्वभावाः प्रकाशन्त इति विज्ञप्तिमात्रमेव बहिरर्थसंस्पर्शरहितम्, तदपि विज्ञप्तिमात्रं पूर्वापरस्वभावविविक्तं क्षणरूपम्, स्वसंवेदनाध्यक्षतस्तथैव प्रतिपत्तेः पौर्वापर्ये प्रमाणाप्रवृत्तेः अतः क्षणिकविज्ञप्तिमात्रावलम्बी शुद्धपर्यायास्तिकभेदः ऋजुसूत्रः ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजय-
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
लब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य शुद्धतर-
र्जुसूत्रनिरूपणं नाम षोडशं सोपानम् ॥



## शुद्धतमर्जुसूत्रनिरूपणम्।

यद्वा एकत्वानेकत्वसमस्तधर्मकलापविकलतया तदपि विज्ञानं शून्यरूपं ऋजु सूत्रयतीति ऋजुसूत्रः, स हि माध्यमिकदर्शनावलम्बी सर्वभावनैरात्म्यप्रतिपादनाय प्रमाणयति-यद्विशददर्शनावभासि तन्न परमार्थसद्व्यवहारपथमवतरति, यथा तिमिरपरिकरितदृगवभासीन्दुद्वयम्, विशददर्शनावभासिनश्च स्तम्भकुम्भादयः प्रतिभासाविशेषात्। अथेन्दुद्वयादयो न परमार्थसन्तः, तत्र कारणदोषात्, बाधोदयाद्वा, परिशुद्धदृगवसेयास्त्वेकेन्दुमण्डलादयो न वितथाः, तत्र कारणदोषविरहाद्बाधाभावाद्वेति प्रतिभासाविशेषत्वमसिद्धमिति चेन्न, बाध्यत्वायोगात् न हि तत्कालभाविविज्ञानस्वरूपं बाध्यते, तस्य तदानीं स्वरूपेण प्रतिभासनात्। नाप्युत्तरकालम्, तदा तस्य क्षणिकत्वेन स्वयमेवाभावात्। न वा प्रतिभासमानरूपेण प्रमेयं बाध्यते, तस्य विशदप्रतिभासादेवाभावासिद्धेः। न चाप्रतिभासमानरूपेण, प्रतिभासरूपात्तस्यान्यत्वात्। नाप्युत्पन्ना प्रवृत्तिर्बाध्यते, उत्पन्नत्वादेवासत्त्वायोगात्। न वाऽनुत्पन्ना, स्वत एवासत्त्वात्। अर्थक्रियाऽपि न बाध्यते, उत्पत्त्यनुत्पत्त्योर्बाध्यत्वायोगात्। न वाऽर्थक्रियाऽभावेऽर्थस्यासत्त्वम्, तस्यास्ततोऽन्यत्वात्। न ह्यर्थक्रियासद्भावादर्थस्य सत्त्वम्, अर्थक्रियाया अपि सत्त्वासिद्धेः, अपरार्थक्रियातः तस्याः सत्त्वाङ्गीकारेऽनवस्थाप्रसङ्गात्। नाप्यर्थजन्यत्वादर्थक्रियायास्सत्त्वम्, अन्योऽन्याश्रयात्।

न च सत्तासम्बन्धाद्भावानां सत्त्वम्, सत्तातत्सम्बन्धयोरेवासम्भवात्। नापि दुष्टकारणप्रभवत्वेनेन्दुद्वयावभासज्ञानस्यासत्यार्थत्वम्, तत्प्रभवत्वस्य ज्ञातुमशक्तेः, इन्द्रियादेरतीन्द्रियत्वेन तद्गतदोषस्याप्यध्यक्षेणाप्रतिपत्तेः। न चाऽनुमानात्तद्दोषावगतिः, अध्यक्षाभावेऽनुमानस्याप्रवृत्तेः। पुरुषान्तरस्य चन्द्रद्वयादेरप्रतिभासनात्तस्य दुष्टकारणजन्यविज्ञानविषयत्वमिति चेन्न, स्वग्राहिज्ञाने परिस्फुटतया प्रतिभासनात्, यावत्तिमिरादिसमानसामग्री 5 पुरुषान्तरस्य वर्तते तावत्तस्यापि तत्प्रतिभासनात्। तथा स्तम्भादेरवैतथ्यं न निश्चेतुं शक्यम्, तदवभासिज्ञानबाधाभावादवैतथ्यनिश्चयो भवतीति चेन्न, बाधाभावस्य तदवैतथ्याप्रसाधकत्वात्[1], न हि तत्कालबाधाभावस्तत्साधकः, चन्द्रद्वयविज्ञानेऽपि तत्कालबाधाभावसत्त्वात्तद्विषयस्यावैतथ्यप्रसङ्गात्। न चोत्तरकालभावी तदभावः पूर्वज्ञानविषयस्य सत्यतासाधकः, तत्कालपरिहारेण तत्प्रवृत्तेः, बाधाभावस्य प्रसज्यरूपस्य तुच्छतयाऽर्थसत्यताव्यवस्थापकत्वासम्भवाच्च, अन्यथा तुच्छत्वायोगात्, पर्युदासरूपोऽपि बाधकाभावो न 10 तद्व्यवस्थापकः, तस्य विषयोपलम्भस्वभावत्वात्, यथा स प्राक्कालभावी नार्थतथाभावव्यवस्थापकस्तथोत्तरकालभाव्यपि, प्रतिभासाविशेषात्। न वा संवादित्वादपि स्तम्भादेः सत्यत्वम्, समानजातीयोत्तरकालभाविज्ञानलक्षणस्य संवादस्य यावत्तिमिरं तावदिन्दुद्वयादावपि भावात्, भिन्नजातीयज्ञानसंवादस्य च तथात्वे भ्रान्तज्ञानावभासिनो रजतादेः शुक्तिकाज्ञानसंवादात्सत्यताप्रसक्तिः। न चैकार्थाद्भिन्नजातीयज्ञानसंवादात्, एकार्थत्वे पूर्वापर- 15 ज्ञानयोरविशेषात् पूर्वज्ञानवदुत्तरज्ञानस्यापि व्यवस्थापकत्वं न स्यात्, विजातीयत्वे एकार्थविषयत्वासम्भवाच्च। एवं स्तंभादिर्नैकानेकरूपतया व्यवस्थापयितुं शक्यते, कालभेदाद्धि भेदो नाध्यक्षेण विज्ञेयः, तस्य सन्निहित एव प्रवृत्तेः, न हि मृत्पिण्डस्वरूपग्राह्यध्यक्षं तदा घटमसन्निहितमुपलभते, अतो न तदपेक्षया तस्य भेदोऽधिगन्तुं शक्यः, नापि घटस्वरूपग्राहिणा 20 मृत्पिण्डाद्भेदोऽधिगम्यते, तत्स्वरूपाग्रहणे तद्भेदग्रहणाप्रवृत्तेः। नापि स्मरणं तद्ग्राहकम्, अनुभूतस्यैव स्मरणात्, तस्य स्वरूपमात्रपर्यवसितत्वेनार्थग्रहणेऽसामर्थ्याच्च। अत एव स्मरणसहकृतमध्यक्षमपि न भेदग्राहि। न च पूर्वरूपाग्रहणमेव भेदवेदनम्, तद्ग्रहणस्य भेदं व्यवस्थापयितुमशक्तेः। स्वरूपमेव भेदः, तद्ग्रहणे सोऽपि गृहीत इति चेन्न, अपेक्षया भेदव्यवस्थानात्, अन्यथा स्वरूपापेक्षयापि भेदप्रसक्तेः। देशभेदादपि न भावभेदः देशस्याप्यपरदेश- 25 भेदाद्भेदप्रसङ्गेनानवस्थाप्रसक्तेः। न चान्यभेदोऽन्यमनुविशतीति न देशभेदादपि तद्भेदः। एव

१ उत्तरदर्शने स्मृतौ वा यदि पूर्वरूपं न प्रतिभासेत तर्हि तदप्रतिभासनमायातं तदेव च भेदवेदनम्, न पूर्वरूपविविक्ततायाः प्रत्यक्षेण स्मृत्या वाऽनवगतत्वात्, तयोः स्वस्वरूपे निमग्नत्वात्, तथा च पूर्वरूपानधिगमे न तद्विविक्तताया अधिगतिः, तस्माच्च तदप्रतिभासनमपि सिद्धमिति भावः ॥

स्वरूपभेदादपि न भावभेदः, न हि समानकालमुद्भासमानयोर्घटपटयोर्भिन्नं संवेदनं भेद-मवस्थापयति, प्रकाशमाननीलसुखादिव्यतिरेकेण तस्यानुपलम्भतोऽसत्त्वात्, सत्त्वेऽपि समानकालस्य भिन्नकालस्य वाऽध्यक्षस्य परोक्षस्य वा ग्रहणक्रियासहितस्य तद्विकलस्य वा तस्यार्थग्राहकत्वानुपपत्तेर्विज्ञानवादोक्तरीत्या सिद्धत्वेन न भेदग्राहकत्वम्। न च तस्य स्वयम-
5 र्थोद्वेदेनाप्रतीतस्य भेदग्राहकत्वम्, खरविषाणादेरपि तत्प्रसक्तेः। न च तस्य भेदोऽन्यज्ञाना-दवसीयते, तस्याप्यप्रतिपन्नभेदस्य तद्भेदाव्यवस्थापकत्वात्, तत्रापि भेदस्यान्यज्ञानान्निर्णये चानवस्था। न वा स्वसंवेदनत एव तद्भेदः सिद्ध्यति, तथा सति स्वस्वरूपमात्रपर्यवसितत्वा-त्तस्य नीलादिभेदव्यवस्थापकत्वानुपपत्तेः। अत एव स्तम्भादयो भिन्नरूपाः प्रथन्त इति चेत्तर्हि तेषां स्वसंवेदनरूपतया स्वरूपनिमग्नत्वादन्यत्राप्रवृत्त्या परस्परासंवेदनान्न स्वरूपतोऽपि
10 भेदसंवित्तिर्भवेत्, द्वयरूपासंवेदने तन्निष्ठभेदस्याप्यप्रतिपत्तेः। न ह्यपरोक्षे नीलस्वरूपाद-परं पीतमाभाति, न चापराप्रतिभासनमेव भेदवेदनम्, नीलस्वरूपसंवेदनेऽप्रतिभासमानस्य पीतस्यास्तित्वेन नास्तित्वेन वाऽधिगन्तुमशक्यत्वात्, नास्तित्वावेदने च कुतः स्वरूपमात्रप्रति-भासनाद्भेदसिद्धिरिति। नन्वनेन न्यायेन यद्यध्यक्षावभासिनो नीलादेर्न भेदस्तर्ह्यभेदो न्याय-प्राप्त इत्यद्वैतापत्तेर्न शून्यता, अन्तर्बहिश्च प्रतिभासमानयोः सुखनीलाद्योरपह्नोतुमशक्यत्वा-
15 दिति, नैवम्, अस्माभिरवभासमानस्य नीलादेरवभासशून्यत्वानभिधानात्, प्रतिभासविरति-लक्षणशून्यत्वस्य कथञ्चिदप्रतीतेः, किन्तु प्रतिभासोपमत्वं सर्वधर्माणां शून्यत्वम्, प्रतिभासश्च सर्वो भेदाभेदशून्यः, न हि नीलस्वरूपं सुखाद्यात्मकतयाऽभेदरूपमुपलभते, तद्रूपतानुपलम्भे च कथमेकं भवेत्। न च तावदयमस्तीति प्रतिभासादद्वैतमस्तु इति वक्तव्यम्, विचित्रस्य नीलादेः प्रतिभासाज्जगतो विचित्रताप्राप्तेः। न च बहिर्नीलादेरेकानेकरूपतया युक्त्याऽनुप-
20 पत्तेः प्रकृतिपरिशुद्ध ज्योतिर्मात्रं परमार्थसदस्त्विति वाच्यम्, तथाभूतज्योतिर्मात्रस्य कदा-चनाप्यप्रतिपत्तेरसत्त्वात्सर्वधर्मशून्यताया एव सिद्धेः, ततः केवलमनादिवासनासमुत्थ-व्यवहारमात्रमेवेदं मिथ्यार्थं ज्ञानम्। न च व्यवहारमात्रादेव बहिरेकं वस्तु सिद्ध्यति, नीलादीनां स्वभाव इति व्यवहारादपि स्वभावस्यैकताप्राप्तेः। न चार्थाभावे नियतदेशका-लाकारः प्रतिभासः कथमित्याशङ्क्यम्, वासनाबलेन तथाभूतप्रतिभासस्य स्वप्नदशायामुप-
25 लब्धेर्जाग्रद्दशायामपि तद्बलेनैव तदुदयसम्भवात्, अर्थस्य कस्यचित्स्वरूपतोऽसिद्धेः प्रति-भासनियामकत्वासम्भवाच्चेति नार्थवादो युक्तिसङ्गतः। नापि वासनाबलान्नियताकारं ज्ञानं सद्वस्तु, नीलादिरूपज्ञानस्यापि एकानेकरूपत्वायोगात्, दिग्भेदादिलक्षणविरुद्धधर्मसंसर्गतो

१ किं स स्वरूपभेदः भिन्नप्रतिभासाधिगम्यः किं वा स्वत एव, तत्र प्रथमपक्षे दोषमाह न हीति, द्वितीयपक्षे दोषमाह–स्वत एव स्तम्भादय इति ॥

भेदात् । नापि नीलादिज्ञानं परमाणुरूपम्, दिक्षट्कयोगात्सांशतापत्तेः, अनेकप्रतिपत्तेरयोगाच्च । न वा बाह्यनीलादेर्वितथत्वं परिशुद्धस्य बोधस्य चावितथत्वमिति वक्तव्यम्, तस्यानुपलब्धेरेवाभावनिश्चयात् । न च वासनाप्रतिबद्धत्वमनुभवस्य निश्चेतुं शक्यम्, पौर्वापर्ये हि प्रत्यक्षस्याप्रवृत्तेर्नान्वयव्यतिरेकनिश्चायकत्वं तदनिश्चये च न हेतुफलभावावगतिरध्यक्षात्, प्रत्यक्षाभावे च नानुमानमपि तदवगमकम् । किञ्च वासनाप्रबोधप्रभवं नीलसुखा- 5
दिव्यतिरिक्तं प्रतिपुरुषनियतं संवेदनं यद्यनुभूयेत तदा विज्ञानवादो युक्तिसङ्गतः स्यात् । न च तत् कदाचनाप्युपलब्धिगोचरः, नीलसुखादेस्त्वेकानेकस्वभावायोगात्, वासनाजन्यस्यापि परमार्थतोऽसम्भवात् सर्वधर्मशून्यतैव वस्तुबलायाता । नीलाद्यवभासस्य वासनाप्रतिबद्धत्वं संवृत्या शून्यत्वमुच्यते, न सर्वसंवेदनाभावः, तस्य कदाचिदप्यननुभवात् । न च प्रतिभासे सति कथं शून्यत्वमिति वक्तव्यम्, तस्यैकानेकस्वभावायोगतः शून्यतेति प्रतिपाद- 10
नात् । तदवस्थितमेतद्यत् प्रतिभाति तद् द्विचन्द्रादिवत् सकलमप्यसत्यमिति शुद्धतमपर्यायास्तिकमतावलम्बी ऋजुसूत्र एवं व्यवस्थितः ॥

अथवा सौत्रान्तिकवैभाषिकौ बाह्यार्थमाश्रितौ ऋजुसूत्रशब्दौ यथाक्रमं वैभाषिकेण नित्यानित्यशब्दवाच्यस्य पुद्गलस्याभ्युपगमात् शब्दनयेऽनुप्रवेशस्तस्य बाह्यार्थप्रतिक्षेपेण विज्ञान मात्रं समभिरूढो योगाचारः । एकानेकधर्मविकलतया विज्ञानमात्रस्याप्यभाव इत्येवंभूतो 15
व्यवस्थित एवम्भूतो माध्यमिक इति व्यवस्थितमेतत् तस्य तु शब्दादयः शाखाप्रशाखाः सूक्ष्मभेदा इति ॥ ५ ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य शुद्धतमर्जु- 20
सूत्रनिरूपणं नाम सप्तदशं सोपानम् ॥

## निक्षेपचतुष्टयवर्णनम्

नयानुयोगद्वारवत् शेषद्वारेष्वपि द्रव्यार्थिकपर्यायार्थिकौ मूलव्याकरणिनाविति दर्शयन्ननयोर्व्यापकतामाह, अथवा वस्तुनिबन्धनाध्यवसायनिमित्तव्यवहारमूलकारणतामनयोः प्रतिपाद्याधुनाऽध्यारोपितानध्यारोपितनामस्थापनाद्रव्यभावनिबन्धनव्यवहारनिबन्धनतामनयो- 25
रेव प्रतिपादयन्नाह—

**नामं ठवणा दविएत्ति एस दव्वट्ठियस्स निक्खेवो ।**
**भावो उ पज्जवट्ठिअस्स परूवणा एस परमत्थो ॥ ६ ॥ ६ ॥**

नाम स्थापना द्रव्यमित्येष द्रव्यार्थिकस्य निक्षेपः ।
भावस्तु पर्यायार्थिकस्य प्ररूपणा एष परमार्थः ॥ छाया ॥

**नामेति,** चतुर्विधेषु निक्षेपेषु नामस्थापनाद्रव्याणि द्रव्यार्थिकनिरूपणाया निक्षेपाः, भावस्तु पर्यायार्थिकनिरूपणाया इत्ययं परमार्थ इति समुदायार्थः ।

5 तत्र नामनिक्षेपस्तावत् यत्किञ्चिद्वस्तुनो व्यवहाराय निमित्तापेक्षयाऽनपेक्षया वाऽभिधानं यत्सङ्केत्यते तन्नाम । सङ्केतविधानं च कचिदभेदेन, यथाऽयं घट इति, कचिद्भेदेन अस्यायं घटशब्दो वाचक इति । एतच्च समानासमानाकारपरिणामात्मकेऽपि वस्तुनि समानाकारप्रतिपादनायैव नियोज्यते, तस्यानुगतत्वेन तत्र सङ्केतकरणसौकर्यात् । असमानपरिणतेष्वननुगमादानन्त्याच्च न तत्र सङ्केतः कर्तुं शक्यः, शब्दव्यापाराच्च वस्तुगतसदृशपरिणते-10 रेव प्रतिभासनात् । स एव शब्दार्थः यः शाब्द्यां प्रतीतौ प्रतिभातीति नामसदृशपरिणामोऽत्यन्तविलक्षणस्तस्यार्थ इति वस्तुस्थितिः ॥

अत्र च द्रव्यार्थिकमतावलम्बी शब्दब्रह्मवादी भर्तृहरिः प्राह–' अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् । विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ [ वाक्य० श्लो. ।। १ प्रथमका० ] इति, अत्रोत्पत्तिविनाशाभावादनादिनिधनम्, अकारादक्षरस्य निमित्तत्वादक्षरम्, अनेन च 15 विवर्तोऽभिधानरूपतया निर्दिष्टः, अर्थभावेनेत्यादिना त्वभिधेयो विवर्तः, प्रक्रियेति भेदानामेव सङ्कीर्तनम्, ब्रह्मेति पूर्वापरदिग्विभागरहितम्, अनुत्पन्नमविनाशि यच्छब्दमयं ब्रह्म तस्यायं रूपादिभावग्रामपरिणाम इति श्लोकार्थः । एतच्च शब्दस्वभावात्मकं ब्रह्म प्रणवस्वरूपं तच्च सर्वेषां शब्दानां समस्तार्थानाञ्च प्रकृतिः । वर्णक्रमरूपो वेदस्तदधिगमोपायः प्रतिच्छन्दकन्यायेन तस्यावस्थितत्वात् । तच्च परमं ब्रह्म अभ्युदयनिःश्रेयसफलधर्मानुगृ-20 हीतान्तःकरणैरवगम्यते । अत्र च प्रयोगः ये यदाकारानुस्यूतास्ते तन्मयाः, यथा घटशरावोदञ्चनादयो मृद्विकारानुगता मृण्मयत्वेन प्रसिद्धाः, शब्दाकारानुस्यूताश्च सर्वे भावा इति स्वभावहेतुः । प्रत्यक्षत एव सर्वभावानां शब्दाकारानुगमोऽनुभूयते, तथाहि अर्थेष्वनुभूयमानेषु शब्दोल्लेखानुगता एव सर्वे प्रत्यया विभाव्यन्ते । उक्तञ्च ' न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ ' [ वाक्य० 25 श्लो० १२४ प्रथमका० ] इति । न च वाग्रूपतानानुवेधे बोधस्य प्रकाशरूपतापि भवेत्, तस्याः परामर्शरूपत्वात्, तदभावे तु तस्याभावाद्बोधस्याप्यभावः, परामर्शाभावे च प्रवृत्त्यादिव्यवहारोऽपि विशीर्येतेति । आह च ' वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती । न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥ ' [ वाक्य० श्लो० १२५ प्रथमका० ] इति । ज्ञानाकारनिबन्धना च वस्तूनां सत्प्रसिद्धिरिति नैषां शब्दाकारानुस्यूतत्वमसिद्धम्, तत्सिद्धेश्च

तन्मात्रभावित्वात् तन्मयत्वस्य तन्मयत्वमपि सिद्धमेव । अत एवायं घट इत्यभेदेन शब्दार्थसम्बन्धो वैयाकरणैः ' सोऽयमित्यभिसम्बन्धाद्रूपमेकीकृत 'मित्यादिनाऽभिजल्पस्वरूपं दर्शयद्भिः प्रतिपादितः। अत्र च पर्यायास्तिकमतेन प्रतिज्ञादिदोष उद्भाव्यते, किमत्र जगतः साध्यत्वेनाभिलषितम्, शब्दपरिणामरूपत्वाच्छब्दमयत्वं शब्दादुत्पत्तेः शब्दमयत्वं वा, न प्रथमः, परिणामानुपपत्तेः, नीलादिरूपत्वं हि प्रतिपद्यमानं शब्दात्मकं ब्रह्म यदि स्वरूपपरित्यागेन प्रतिपद्यते तर्हि न तदनादिनिधनं भवेत्, पूर्वस्वभावविनाशात्, यदि त्वपरित्यागेन तदा नीलादिसंवेदनकालेऽपि बधिरस्य शब्दसंवेदनं प्राप्नोति, शब्दस्य नीलाद्यव्यतिरेकात्, यदभिन्नं हि यत्तत् तत्संवेदने संवेद्यते यथा नीलादिसंवेदनकाले तस्यैव नीलादेरात्मा, नीलाद्यभिन्नश्च शब्द इति स्वभावहेतुः, अन्यथा भिन्नयोगक्षेमत्वात्तत्स्वभावत्वमेव न प्रसिद्ध्येदिति विपर्यये बाधकं प्रमाणम् । यदि तु तदा नास्य वेदनमिष्यते तदा नीलादेरपि शब्दस्वरूपवदसंवेदनं स्यात्, तेन सह नीलादीनामैकात्म्यात्, भिन्नस्वभावत्वे च शब्दनीलादेरत्यन्तभेदो भवेत्, न ह्येकमेकदैकप्रतिपत्रपेक्षया गृहीतमगृहीतञ्च, एकताभङ्गप्रसङ्गात्, विरुद्धधर्माध्यासेऽप्येकत्वे घटपटादीनां कल्पितो व्यक्तिभेदो न भवेत्, परेणाभ्युपगतश्च घटादिव्यक्तीनां भेदः, यतः स्वात्मनि व्यवस्थितस्य ब्रह्मणो नास्ति भेदोऽविकारविषयत्वादस्येति परसिद्धान्तः, तथा हि घटाद्यात्मना न तस्यानादिनिधनत्वमिष्यते किन्तु परमात्मापेक्षया, घटादयो हि दृश्यमानोदयव्ययाः परिच्छिन्नदेशाश्चोपलभ्यन्ते, एवञ्च बधिरस्य यः शब्दसंवेदनप्रसङ्ग उक्तः स यदि ब्रह्मणो रूपमुपलब्धिलक्षणप्राप्तमिष्यते तदा । यदि चातिसूक्ष्मतयातीन्द्रियत्वं तस्य तर्हि तादात्म्यान्नीलादीनामपि ग्रहणं न स्यात् । ननु भवता यथा क्षणिकत्व नीलाद्यव्यतिरिक्तं नीलादिसंवेदनेऽपि न संवेद्यते तद्वच्छब्दरूपमपीति चेन्न, नीलादिसंवेदने क्षणिकत्वं न संवेद्यत इत्यनभ्युपगमात्, किन्तु निर्विकल्पेन गृहीतमपि न निश्चीयते भ्रान्तिकारणवशात्, तस्मादनुभवापेक्षया गृहीतमपि निश्चयज्ञानापेक्षयाऽगृहीतमिति ज्ञानभेदेनैकस्य गृहीतत्वमगृहीतत्वञ्चाविरुद्धमेव, न तु भवन्मते शब्दस्य ग्रहणाग्रहणे युक्ते, सर्वज्ञानानां सविकल्पकत्वाभ्युपगमात्, एकेनैव ज्ञानेन सर्वात्मना तस्य निश्चितत्वेनागृहीतस्वभावान्तरानुपपत्तेः । अथ किञ्चिदविकल्पकमपि ज्ञानमभ्युपगम्यते तर्हि ' न सोऽस्ति प्रत्ययो लोके ' इति न वक्तव्यम् । शब्दाकारानुस्यूतत्वादिति हेतोरसिद्धिप्रसक्तिश्च । यथा च प्रमाणान्तरतः क्षणिकत्वप्रसिद्धेरनुभूतमपि निश्चयापेक्षयाऽगृहीतमिति व्यपदिश्यते तथा न शब्दात्मता तथाव्यपदेशमासादयति शब्दात्मताप्रसाधकप्रमाणान्तराभावात् । अपि च शब्दात्मा परिणामं गच्छन् प्रतिपदार्थं भिद्यते न वा, आद्ये शब्दब्रह्मणोऽनेकत्वप्रसङ्गः, विभिन्नानेकपदार्थस्वभावत्वात्, तत्स्वरूपवत्, एकञ्च ब्रह्मेष्यते परैरित्यभ्युपगमबाधा प्रतिज्ञायाः । द्वितीये तु

सर्वेषां नीलादीनामेकदेशकालपरिणामादिरूपत्वं एकाकारश्च प्रतिभासः प्राप्नोति, सर्वेषां
नीलादीनामेकशब्दब्रह्मरूपाव्यतिरेकात् । जगतो नित्यशब्दस्वरूपत्वे च सर्वदा भावानां
शब्देन सह यौगपद्यान्नित्यत्वप्राप्त्या परिणामात्मता न स्यात्, तस्माद्भावानां न परिणामकृतं
शब्दमयत्वम् । नापि शब्दात्तस्योत्पत्तेः शब्दमयत्वमिति द्वितीयः पक्षो युक्तः, तस्मा-
5 त्कार्योदयासम्भवात्, शब्दो हि नित्योऽविकारी च ततः कथं क्रमेण कार्योदयः स्यात्, युग-
पच्च कथं न भवेत्, कारणवैकल्ये हि कार्याणि उदयं प्रति विलम्बन्ते तच्चेत्कारणमवि-
कलं तदा परापेक्षाभावाद्युगपदेव कार्याणि भवेयुः । किञ्च तद्ब्रह्म विवृत्तमर्थरूपेणेत्येतन्न
सिद्ध्यत्, शब्दब्रह्मण एकस्वभावतया ततो भिन्नभिन्नभावोत्पादाङ्गीकारात्, न ह्यर्था-
न्तरस्योत्पादे तत्स्वभावमनासादयतोऽन्यस्य ताद्रूप्येण विवर्त्तो युक्तः तस्मान्न प्रतिज्ञार्थो
10 घटते । एवं शब्दाकारानुस्यूतत्वादिति हेतुरसिद्धः[1], परमार्थतो भावानामेकरूपानुगमत्वासम्भ-
वात्, सर्वे हि भावाः स्वस्वभावेषु व्यवस्थिताः समानजातीयव्यावृत्तस्वभावाः, विजा-
तीयव्यावृत्तिकृतमेकाकारानुस्यूतत्वञ्चैषां कल्पनया व्यवस्थाप्यते, यथा वस्तुतो भिन्नेषु
घटशरावादिषु अमृद्व्यावृत्तिकृतो मृदात्मा कल्प्यते, नीलादीनामेषाञ्च तदपि काल्पनिकं
शब्दाकारानुस्यूतत्वं न सम्भवति, नीलपीतादिषु शब्दरूपानुपलम्भेनाशब्दव्यवच्छेदकृत-
15 शब्दाकारानुस्यूतत्वस्य कल्पनाऽसम्भवादिति । ननु ब्रह्मात्मकं तत्त्वं सदाऽविभक्तमेव, न
तस्य परमार्थतः परिणामो येनैकदेशत्वादिदोषो भवेत्, तथाविद्योपहतबुद्धयो नीलादिभेदेन
विचित्रमिव मन्यन्ते, तथा च न नीलादीनामवस्तुस्वरूपत्वादेकदेशत्वप्रसङ्गो नापि संवेदन-
स्याभेदप्रसङ्गोऽविद्याविरचितत्वात्तद्भेदस्येति चेन्मैवम्, एवंरूपब्रह्मणः सिद्धौ प्रमाणा-
भावात्, प्रमाणाद्धि प्रमेयसत्ताव्यवस्था, तत्र न प्रत्यक्षतस्तस्य सिद्धिः, नीलादिभिन्नस्या-
20 न्यस्य ब्रह्मणस्तत्राप्रतिभासनात् । अथ ज्ञानस्वरूपत्वात्स्वसंवेदनाध्यक्षत एव शब्द ब्रह्म
सिद्धम्, तदेव ज्योतिः, शब्दात्मकत्वाच्चैतन्यरूपत्वाच्चेति प्रतिपाद्यते तत्स्वसंवेदनविरुद्धम्,
अन्यत्र हि गतचित्तोऽपि रूपं चक्षुषा वीक्षमाणोऽभिलापासंसृष्टमेव नीलादिप्रत्ययमनुभवति ।
एतेन 'वाग्रूपता चेदुत्क्रामेत्' इति 'न सोऽस्ति प्रत्ययो लोके' इति च प्रत्युक्तम् । तस्माद-
विभागं शब्दमयं ब्रह्म न प्रत्यक्षतः सिद्धम् । नाप्यनुमानतः, नित्यस्य क्रमयौगपद्याभ्यां अर्थक्रिया-
25 विरोधेन तत्कार्यस्यानुपपत्तेः कार्यलिङ्गाभावात्, ब्रह्माख्यधर्मिणोऽसिद्धत्वेन तत्स्वभावभूत-

१ न हि शब्दब्रह्मण सद्भावे प्रमाणं किञ्चिदस्ति, प्रत्यक्षन्तु तत्र न क्रमते सकलदेशकालार्थाकारसमूह-
व्याप्तस्वरूपस्य ब्रह्मणः कस्यापीन्द्रियजन्यप्रत्यक्षस्याऽगोचरत्वात् श्रोत्रेन्द्रियं हि शब्दस्वरूपमात्रविषयज्ञानज-
नक कथं तादृशब्रह्मविषयप्रत्यक्षं जनयेत्, न वाऽनुमानम् तत्साधनाय कस्यचिद्धेतोरसत्त्वात् शब्दाका-
रानुस्यूतत्वं हेतुस्तु दुष्ट इत्यादर्शित एवेति भावः ॥

धर्मोप्रसिद्धा स्वभावहेतोरप्यभावात्, स्वभावकार्यव्यतिरेकेणान्यस्य साध्यप्रतिबन्धाभावेन लिङ्गस्यासम्भवाच्च शब्दाकारानुगतत्वन्तु असिद्धत्वान्न पारमार्थिकब्रह्मस्वरूपसाधनायालम्। अभेदेन सङ्केतकरणं शब्दार्थयोस्तादूप्यं ख्यापयतीत्यपि न युक्तम्, अयं घट इत्यनेन घट-शब्दस्य घटार्थतायाः घटार्थस्य वा घटशब्दताया अप्रकाशनात्, किन्त्वयं घटशब्दवाच्यः, इत्ययमत्रार्थः प्रकाशयितुमभिप्रेतः, अन्यथा प्रत्यक्षप्रतीतिबाधितार्थप्रकाशकत्वेनेदमुन्मत्त- 5 वचनवदनादरणीयमेव स्यात्। शब्दार्थयोश्च तादात्म्ये क्षुराग्निमोदकादिशब्दोच्चारणे आस्य-पाटनदहनपूरणादिप्रसक्तिः, अनवगतसमयस्याभिधानोपलब्धौ तदर्थस्यार्थोपलब्धौ च तद्वा-चकस्यावगतिप्रसक्तिश्च, अन्यथा तादात्म्यायोगात् । न च यो यस्य प्रतिपादकः स तदात्मक इति नियमः, धूमाग्न्यादिभिर्व्यभिचारात । न च शब्दस्यार्थविशेषणत्वेन प्रतीते-स्तदात्मकत्वम्, देशभेदेन शब्दार्थयोरुपलब्धेः । न च भेदे तस्य तद्व्यवच्छेदकत्वमनुपपन्नम्, 10 काकादेर्भिन्नस्यापि गृहादिकं प्रति व्यवच्छेदकत्वप्रतीतेः । तन्न शुद्धद्रव्यास्तिकाभिमतना-मनिक्षेपो युक्तियुक्त इति भावनिक्षेपप्रतिपादकपर्यायनयाभिप्रायः ॥

अशुद्धद्रव्यास्तिकप्रकृतिव्यवहारनयमतावलम्बिनस्तु मीमांसकाः भिन्नानेव शब्दार्थ-सम्बन्धानाहुः 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' [मीमां० १-१-५] इति वचनात्, औत्पत्तिक इति विरुद्धलक्षणया नित्यस्तैर्व्याख्यातः। सम्बन्धस्य नित्यत्वे च कृतकसम्बन्ध- 15 वादिनो याऽनवस्था प्रसज्यते न साऽस्माकमिति वदन्ति, कृतकसम्बन्धपक्षेऽनवस्था च येनावगतसम्बन्धेन अयमित्यादिना शब्देनाप्रसिद्धसम्बन्धस्य घटादेः सम्बन्धः क्रियते तस्यापि यद्यन्येन प्रसिद्धसम्बन्धेन सम्बन्धस्तदा तस्याप्यन्येनेति । भावनिक्षेपवादी पर्यायास्तिक आह एतेऽपि अयुक्तवादिनः, नित्यस्य वस्तुनः शब्दादेः कस्यचिदसम्भवात्, अनवस्थादूषणमपि न युक्तम्, अयमित्यादेः शब्दस्यानादिव्यवहारपरम्परातः सिद्धसम्ब- 20 न्धत्वात् तेनानवगतसम्बन्धस्य घटादिशब्दस्य सङ्केतकरणात् । अकृतकवादिनोऽप्यनवस्था तुल्यैव, तथाहि अनभिव्यक्तसम्बन्धस्याभिव्यक्तसम्बन्धेन शब्देन यदि सम्बन्धाभिव्यक्तिः क्रियते तदा तस्यापि सम्बन्धाभिव्यक्तिरन्यतोऽभिव्यक्तसम्बन्धादिति । यदि तु कस्यचित स्वत एव सम्बन्धाभिव्यक्तिरपरस्यापि तथैवास्त्विति संकेतक्रिया व्यर्था । शब्दविभागाभ्यु-पगमे चास्मन्मतानुप्रवेशः प्रदर्शितन्यायेनेति । कृतकत्वेऽपि शब्दस्य यत्र यत्र संकेतद्वारेण 25 शब्दो नियुज्यते तत्र तत्र प्रतिपादकत्वेन प्रवर्त्तेत इति द्रव्यसाधर्म्याद्द्रव्यार्थिकनिक्षेपः शब्दः, तथा द्रव्यार्थताया अपि सर्वत्राभ्युपगमाद्वाच्यवाचकयोर्नित्यत्वात्तत्सम्बन्धस्यापि नित्यता समस्त्येव, सङ्केतश्च तदभिव्यक्तिरिति द्रव्यार्थिकनिक्षेपः शब्दः ॥

सङ्केताभिधेयस्यार्थस्य प्रतिकृतिप्रकल्पना स्थापनेति, यद्वस्तु सदसद्भूताकारेण स्थाप्यते

सा स्थापना । सापि द्रव्यार्थिकस्य निक्षेपः, मुख्यप्रतिनिधिविभागाभावात् सदविशेषात् सर्वस्य मुख्यार्थक्रियाकरणात्, अन्यथोपयाचितादेस्ततोऽसिद्धिप्रसक्तेः, तन्निमित्तद्रव्यादिविनियोगव्यवहाराभावप्रसक्तेश्च, मुख्यपदार्थरूपत्वात् स्थापनाया द्रव्यार्थत्वम् । अथ वाऽध्यवसायोपरचितमेव स्थापनायास्तदेकत्वम्, न तु वास्तवम्, अन्यथा मुख्यप्रतिनिधि-
5 विभागाभावप्रसक्तेस्तद्रूपोपलक्षकत्वाभावप्रसक्तेश्च । न ह्यभेदे उपलक्ष्योपलक्षकभाव उपपन्नः। नापि भिन्नदेशकालचेतनाचेतनादिविभागो न्यायानुगतो भवेदिति सद्भावासद्भावरूपतया प्रवर्त्तमानत्वात् द्रव्यधर्मसद्भावादेकत्वाध्यवसायकृतमेव तस्या द्रव्यार्थत्वमिति द्रव्यार्थिकनिक्षेपः स्थापना ॥

द्रवत्यतीतानागतपर्यायानधिकरणत्वेनाविचलितरूपं सद्गच्छतीति द्रव्यम्, तच्च भूत-
10 भाविपर्यायकारणत्वाच्चेतनमचेतनं वाऽनुपचरितमेव द्रव्यार्थिकनिक्षेपः । ननु भावानां निरन्वयं प्रतिक्षणविशरारुतया नित्यत्वासम्भवेन द्रव्यार्थिकनिक्षेपो न सत्य इति चेन्न, निरन्वयविनाशित्वे प्रमाणानवतारात् । क्षणिकवादिभिर्हि विनाशग्राहितयाऽध्यक्षं वाऽनुमानं वा प्रमाणं उपन्यसनीयमपरप्रमाणानभ्युपगमात्, तत्र न तावद्भावानां क्षणक्षयित्वस्य ग्राहकं प्रत्यक्षं भवितुमर्हति, प्रतिक्षणमुदयापवर्गितया भावानां तत्राप्रतिभासनात्, स्थिरस्थू-
15 लरूपतयैव भावानां तत्र प्रतिभासनात्, न ह्यन्यादृग्भूतप्रतिभासोऽन्यादृग्भूतार्थव्यवस्थापकोऽतिप्रसङ्गात् । न च सदृशापरापरोत्पत्तिविप्रलम्भाद्यथानुभवं व्यवसायानुत्पत्तेः क्षणिकत्वानुभवेऽपि स्थिरस्थूलरूपाध्यवसाय इति वाच्यम्, प्रमाणाभावात्, न ह्यन्यादृशार्थानुभवेऽन्यादृशार्थनिश्चयोत्पत्तिकल्पना ज्यायसी, नीलानुभवेऽपि पीतनिश्चयकल्पनया सर्वत्र प्रतिनियतार्थव्यवस्थितेरभावप्रसङ्गात् । न वा सदृशापरापरोत्पत्तिविप्रलम्भसम्भवः, भाव-
20 भिन्नस्य सादृश्यस्य सामान्यपक्षोक्तदोषप्रसङ्गेनासम्भवात् । नाप्यसदृशा अपि समानविकल्पजनका दर्शनद्वारेण सदृशव्यवहारहेतव इति वक्तव्यम्, नीलादिविशेषाणामप्यभावप्रसक्तेः, यथा हि परमार्थतोऽसदृशा अपि तथाभूतविकल्पोत्पादकदर्शनहेतवः सदृशव्यवहारभाजो भावास्तथा स्वयमनीलादिस्वभावा अपि नीलादिविकल्पोत्पादकदर्शननिमित्ततया नीलादिव्यवहारभाजो भवेयुरिति तेषामपि निःस्वभावताप्रसक्तिः । विकल्पवशेन हि अध्य-
25 क्षस्य प्रामाण्यव्यवस्था भवति, अन्यथा दानहिंसाविरतचेतसामपि स्वर्गप्रापणशक्तेरधिगम्याध्यक्षत एव व्यवस्थितेर्न तत्र विप्रतिपत्तिरिति तद्व्युदासार्थमनुमानप्रवर्त्तनं शास्त्रविरचनं वा व्यर्थं भवेत् । विकल्पस्तु स्थिरस्थूलार्थाध्यवसायलक्षणः, न स क्षणिकताव्यवस्थापकः, विकल्पस्य चावस्तुविषयत्वं वाधितम्, तथात्वे तु अन्यथाभूतसंवेदनस्यानुपलक्षणाद्वस्तुव्यवस्थाऽभावप्रसक्तेः । संहृतसकलविकल्पावस्थायामश्वविकल्पनसमय एव चक्षुःप्रति-

धानानन्तरं पुरो व्यवस्थितस्य गवादेर्विशदतया स्थिरस्थूलरूपस्यैवानुभवात् , अन्यथाभूतार्थप्रतिभासस्य कदाचिदप्यनुपलब्धेः । न च वस्तुनः प्रतिक्षणध्वंसित्वात्तत्सामर्थ्यबलोद्भूतेनाध्यक्षेण तद्रूपमेव ग्रहणीयम्, अन्यरूपग्रहणेऽसदर्थग्राहकत्वेन भ्रान्ततापसक्तेः, तस्मात् क्षणपरिणामग्राहकमध्यक्षमिति वक्तव्यम्, अन्योन्याश्रयात्, भावानां हि क्षणक्षयित्वे सिद्धे तत्सामर्थ्यभाविनोऽध्यक्षस्य तद्रूपानुकरणं सिद्ध्यति, तत्सिद्धौ च क्षणक्षयित्वमिति, ततो न क्षणिकत्वं भावानामध्यक्षगम्यम् । नाप्यनुमानाभिश्रेयम्, अध्यक्षाप्रवृत्तावनुमानस्याप्यनवतारात् । अध्यक्षाधिगतमविनाभावमाश्रित्य हि पक्षधर्मतावगमबलादनुमानमुदयमासादयति, अध्यक्षानवगते स्वर्गादाविवानुमानस्याप्रवृत्तिरेव । यच्च निर्हेतुको ध्वंसः पदार्थोदयानन्तरभावी न देशकालपदार्थान्तरमपेक्षत इत्यभिप्रेतं तन्न युक्तम्, तस्य निर्हेतुकत्वेऽपि यदैव मुद्गरव्यापारानन्तरमुपलब्धिगोचरस्तदैव तत्सद्भावाभ्युपगमात्, भावोदयानन्तरं च न कस्यचिदुपलम्भगोचरो ध्वंस इति कथं तदैवास्य सद्भावः । न हि मुद्गरादिव्यापारानन्तरमस्य दर्शनात्ततः प्रागपि सद्भावः कल्पनीयः, प्रथमं तस्यादर्शनात् मुद्गरव्यापारानन्तरमप्यभावप्रसङ्गात्, विशेषाभावात्, सन्तानेन व्यभिचारादन्ते क्षयदर्शनेऽप्यादौ तदभ्युपगमासम्भवाच्च । न च ध्वंसो मुद्गरादिसंयोगादिकं नापेक्षते किन्तु पदार्थसत्तामात्रानुबन्धी, अतस्तदुदयानन्तरमेव सत्त्वमासादयतीति वाच्यम्, भावसत्तामात्रानुबन्धित्वेऽपि नाशस्य प्रतिक्षणध्वंसित्वासिद्धेः, तथात्वेन सत्ताया एवानिश्चयात्, न हि सत्ता एकक्षणस्थितिका सिद्धा येन तदनुबन्धिनः प्रध्वंसस्य प्रतिक्षणभावितानिश्चयः स्यात्, विशेषणाप्रतिपत्तौ तद्विशेष्यस्य प्रतिपत्तुमशक्तेः । अनेकक्षणस्थापि सत्तामात्रानुबन्धित्वे च ध्वंसस्याक्षणिकत्वमेव स्यात्, सत्ताया क्षणान्तरावस्थानात् । किञ्चोदयानन्तरमेव भावानां ध्वंसः कुतः प्रतीयते, किं भिन्नाभिन्नविकल्पाभ्यां ध्वंसस्यासम्भवात्, किं वाऽपरप्रमाणात्, नाद्यः, भिन्नाभिन्नविकल्पाभ्यां तस्य मुद्गरादिनिरपेक्षताया एव सिद्धेः, न तु भावोदयानन्तरभावितायाः, न हि निर्हेतुकस्य शशविषाणादेः पदार्थोदयानन्तरभावितोपलब्धा । न च ध्वंसस्य निर्हेतुकत्वे सर्वदाभावस्यौचित्यात् कालाद्यपेक्षाऽसम्भवेन पदार्थोदयानन्तरमेव स भवतीति वाच्यम्, प्रथमक्षणेऽपि सद्भावप्रसक्तेः, तस्य निर्हेतुकत्वेन सर्वदा भावात्, सापेक्षत्वे च निर्हेतुकत्वविरोधात्, सापेक्षतायाः सहेतुकत्वव्याप्तत्वात्, न च प्रथमक्षण एव ध्वंसे पदार्थसत्तैवासम्भविनीति तत्प्रच्युतिलक्षणध्वंसोऽपि न भवेदिति स्वहेतुतोऽर्था ध्वंसस्वभावा भवन्तीति वाच्यम्, विकल्पानुपपत्तेः, तथाहि किमेकक्षणस्थायिभावहेतोस्तत्प्रच्युतिहेतुत्वं किं वाऽनेकक्षणस्थायिभावहेतोः, नाद्यः, असिद्धेः, न हि क्षणस्थायिभावहेतुत्वमद्यापि सिद्धम्, येन तत्कृतत्वं तत्प्रच्युतेः सिद्ध्येत् । न द्वितीयः, क्षणिकत्वाभावप्रसङ्गात्, अपि च भावहेतोरेव तत्प्रच्युतिहेतुत्वे तदा स किं भावजननात्पूर्वं

तां जनयति, उतोत्तरकालं किं वा समानकालम्, नाद्यः प्रागभावस्यैव प्रच्युतित्वप्रसङ्गात्, न प्रध्वंसाभावस्य। न द्वितीयः, भावोदयसमये तत्प्रच्युतेरनुत्पन्नतया भावहेतोस्तद्धेतुत्वासम्भवात्। नापि तृतीयः, भावोदयसमये प्रच्युतिसद्भावे तयोरविरोधात् द्वितीयादिक्षणेऽपि भावेन न नंष्टव्यमिति कदाचिदपि भावस्याभावो न स्यात्। अपि च प्रच्युतेर्भावोदयानन्तरभावि-
5 त्वेऽपि न तदैव तस्याः प्रतीतिर्मुद्गरादिव्यापारानन्तरमिव, किन्तु मुद्गरादिव्यापारानन्तरमेव, तथा च पूर्वमनुपलब्धा मुद्गरव्यापारानन्तरमुपलभ्यमाना पुनस्तदभावेऽनुपलभ्यमाना सा तज्जन्यैव भवेत्, अन्यत्रापि कार्यकारणभावस्यान्वयव्यतिरेकानुविधानलक्षणत्वात्। न च मुद्गरव्यापारः कपालसन्ततेरुदय एव, तदा तस्या एवोपलब्धेः प्रच्युत्युपलम्भस्तु विषयाभावादुपजायमानो वितथ एवेति शङ्क्यम्, तदा घटादेरविकारितया स्वरूपतोऽवस्थाने प्रागिवोप-
10 लब्ध्यादिप्रसङ्गात्। न हि स्वयमेव तस्याभावादनुपलम्भ इति वक्तुं शक्यम्, तस्याऽपि मुद्गरव्यापारानन्तरमेवोपलम्भेन तत्कार्यत्वप्रसङ्गात्। ननु भावस्याभावो न भावस्वरूपादन्यः, किन्तु असन्नपि स केवलं कल्पनाविषयत्वाद्व्यवहारपथमवतार्यत इति तन्न, एवं सति हि भावानामपि काल्पनिकत्वं दुष्परिहरं भवेत्, नीलपीतयोर्हि विरोधः परैर्लाक्षणिकोऽभ्युपगतः, तत्र लक्षणं वस्तुस्वरूपव्यवस्थापकम्, तन्निमित्तो विरोधः लाक्षणिक उच्यते, भावप्रच्युतिश्च लक्षणम्,
15 नीलप्रच्युत्या सह नीलस्य विरोधः, तद्विरोधे च तत्प्रच्युतिव्याप्तानां पीतादीनामपि नीलेन विरोधः, तथा च नीलपरिच्छेदकत्वेन प्रवृत्तं प्रमाणं नीलप्रच्युतिं तद्व्याप्तांश्च पीतादीन् व्यवच्छिन्ददेव स्वपरिच्छेद्यं नीलं परिच्छिनत्तीति पराभ्युपगमः, स च भावाभावस्य काल्पनिकत्वेऽसङ्गतः स्यात्, न हि शशविषाणप्रख्यस्य भावाभावस्य भावविरुद्धत्वं पीतादिव्यापकत्वं वा प्रमाणाविषयत्वाद्व्यवस्थापयितुं शक्यम्, येन तस्य प्रतिनियतपदार्थव्यवस्थाहेतुत्वं भवेत्। अथ वि-
20 नाशस्य मुद्गरादिजन्यत्वमसिद्धम्, किन्तु घट एव विनाशकारणतया लोकप्रसिद्धं मुद्गरादिकमपेक्ष्य समानक्षणान्तरोत्पादनेऽसमर्थः क्षणान्तरमसमर्थमुत्पादयति, तदप्यपरमसमर्थतरं तदपेक्ष्य, तदप्यपरमसमर्थतममिति यावद्घटसन्ततेर्निवृत्तिरित्युच्यते तदपि न युक्तम्, तथापि मुद्गरादेरसमर्थक्षणान्तरजनकत्वेनाभ्युपगतस्य घटक्षणस्य कश्चित्सामर्थ्यविघातः स्वीकार्य एव, अन्यथाऽसमर्थक्षणान्तरजनकत्वमेव न भवेत्, अभ्युपगते च सामर्थ्यविघाते कथमहेतुकोऽभावः।
25 न च तदपेक्षस्यापि घटक्षणस्य सामर्थ्यव्यावृत्तिः स्वत एव, न तु मुद्गरादिना तस्य सामर्थ्यविघात इति वक्तव्यम्, तथा सति प्रथमक्षण एव सन्तत्युच्छेदप्रसङ्गात्, मुद्गरादिसन्निधानवैयर्थ्याच्च। एवञ्च विलक्षणसन्तत्युत्पादे सन्तानोच्छेदे वा मुद्गरादेरन्वयव्यतिरेकाननुविधानप्रसक्तितो वह्न्यादीनां दहनादिकार्ये लोकस्योपादानं न भवेत्। अथ किं घट एव प्रच्युतिः, उत कपाललक्षणं

१ काष्ठादिसन्ततेः कदाप्यनुच्छेदात्, वह्न्यादिना काष्ठादेः किमप्यकरणात्, काष्ठादेश्च हेतुपरम्परायातसमर्थक्षणान्तरजननस्वभावाव्याहतेश्चेति भावः ॥

भावान्तरम्, आद्ये घटस्याभिधानान्तरमेव विहितं घटस्वरूपन्त्वविचलितं प्रतीयत इति कथं न नित्यम्, न चैकक्षणस्थायिघटस्वरूपं प्रच्युतिरित्यतो न तस्य नित्यता, एकक्षणस्थायितया घटस्य प्रतीत्यगोचरत्वात्प्रच्युत्यसम्भवात्। द्वितीये कपालप्रादुर्भावात् प्राक् घटस्यावस्थानात् कालान्तरस्थायितैव भवेन्न क्षणिकता। न च कपालरूपप्रच्युत्यभ्युपगमे मुद्गरादिव्यापारानन्तरमपि पूर्ववद्घटाद्युपलब्धिप्रसङ्ग इति वाच्यम्, न हि घटस्वरूपं मुद्गरादिना 5 क्रियते तस्य स्वहेतोरेव निष्पत्तेः। न वाऽसती स्वरूपप्रच्युतिरुत्पद्यते, तत्र परैर्हेतुव्यापारानभ्युपगमात्, तस्मान्मुद्गरादिना कपालरूपप्रच्युतिविधानान्न विनाशो निर्हेतुको न वोपलब्ध्यादिप्रसङ्गः। न च कथं कपाललक्षणवस्त्वन्तरप्रादुर्भावे घटो विनष्ट इति व्यपदेशः, मुद्गरादेर्घटस्यैव कपालभावात्तदुपपत्तेः। कथं स एवान्यथा भवतीतिचेन्न, कथमसद्भवतीत्यपि तुल्यत्वात्, यथाहि प्रागसद्घटादि सद्भवत्युत्पत्तिसमयेऽविरोधात् तथाऽन्यदा सन् घटः कपालीभवतीत्य- 10 विरुद्धमेव। तथा च कारणस्य निवृत्तिः कार्यात्मना परिणतिरेवाभिधीयतेऽतः कुतः क्षणिकत्वम्। न च वक्तव्यमेकत्वाध्यवसायिदर्शनस्य क्षणिकताव्यवस्थापकमनुमानं बाधकमिति, अध्यक्षमूलकस्यास्य तद्बाधकतयाऽप्रवृत्तेः। न च स्थायितादर्शनमनुमानबाधितमिति नाध्यक्षतामनुभवतीति वाच्यम्, क्षणक्षयानुमानस्याप्यध्यक्षेण बाधितत्वादनुमानत्वाननुभवनात्। न हि प्रतिक्षणविशरारुतावभास्यध्यक्षमनुभूयते येन स्थायिताध्यक्षं बाधितं भवेत्। न च लून- 15 पुनर्जातकेशादिष्वपि प्रत्यभिज्ञानोदयात्ततः स्थायिताप्रतीतिः सर्वत्र अलीकेति वाच्यम्, दृष्टान्तमात्रादर्थसिद्धेरभावात्, अन्यथा हेतूपन्यासवैयर्थ्यात्। ननु कथं प्रमाणं प्रत्यभिज्ञेति चेत्, कारणदोषाभावात्, बाधारहितापूर्वार्थग्राहित्वाच्च, प्रथमदर्शनेन ह्यनधिगतां स्थायितां प्रत्यभिज्ञानमध्यवस्यति विश्वासादिव्यवहारप्रवर्त्तिका चेति कथं न प्रमाणम्। न च स्थायिताध्यवसायादुत्तरकालभाविनो नित्यताग्राहितयाऽऽद्यदर्शनमेव व्यवस्थाप्यत इति आद्यदर्शन- 20 गृहीतां नित्यतामध्यवस्यत् प्रत्यभिज्ञा नमपूर्वार्थाधिगन्तृत्वाभावान्न प्रमाणमिति वाच्यम्, तथापि नित्यत्वस्याद्यदर्शनावसेयतया भावानां क्षणक्षयित्वासिद्धेः, अध्यक्षस्याप्रवृत्तौ चानुमानस्याप्यप्रवृत्तेः। किञ्च स्वभावहेतुकमनुमानं क्षणिकत्वमवगमयतीति परस्याभ्युपगमः, न च तदध्यक्षेण गृहीतम्, येन स्वभावहेतुस्तत्र व्यवहारमुपरचयेत, यथा विशददर्शनावभासिनि तरौ शिंशपा वृक्षत्वव्यवहृतिमुपरचयति, प्रत्यक्षप्रतीत एवार्थे स्वभावहेतोर्व्यवहृतिप्र- 25 दर्शनफलत्वात्। न च विद्युदादौ सत्त्वक्षणिकत्वयोरध्यक्षत एव प्रतिबन्धग्रहणादन्यत्रापि शब्दादौ सत्तोपलभ्यमाना क्षणिकत्वमवगमयतीति वक्तव्यम्, स्वर्णादौ सत्त्वाच्छुक्लताऽनुमितिप्रसङ्गात्। न च कनकाकारनिर्भासिदर्शनं बाधकं वाच्यम्, स्तम्भादावपि स एवायमित्यभेदप्रतिभासस्य क्षणिकतानुमानबाधकत्वात्। भिन्नेष्वभेदोल्लेखितया लूनपुनरुदितशिर-

सिञ्जादिषु प्रत्यभिज्ञाया उपलम्भादेकत्वे सा न प्रमाणमिति चेत्तर्हि शंखादौ कामलोपहतदृशां कनकाकारनिर्भासिदर्शनस्योदयेन तस्य स्वर्णादावपि प्रमाणत्वाभावप्रसङ्गः। ननु शुक्लतासाधकमनुमानमन्यथासिद्धत्वात्प्रत्यक्षबाध्यम्, प्रत्यक्षस्यानन्यथासिद्धत्वात्, न ह्यनुपहतेन्द्रियस्य पीतावभासिदर्शनं पीतार्थव्यतिरेकेण सम्भवति कनकादौ तु शुक्लतासाधकमनुमानमन्यथा-
5 सिद्धम्, स्तम्भादौ च नित्यतावेदकाध्यक्षस्य कुतश्चिद्भ्रान्तिकारणादन्यथासिद्धत्वेनानन्यथासिद्धानुमानबाधकत्वमयुक्तम्। सति हि प्रतिबन्धग्रहणेऽनुमितिः, प्रतिबन्धग्रहणञ्च साध्यव्यतिरेकेण साधनस्याभवनज्ञानम्, तदेव तस्यानन्यथासिद्धत्वं उच्यते, अत एवानुमानस्य प्रामाण्यमपाकुर्वता तत्प्रतिबन्धप्रसाधकप्रमाणस्याप्रामाण्यमुपदर्शनीयम्, येन प्रतिबन्धासिद्ध्याऽनुमानं प्रामाण्यादपाक्रियेत, नित्यताप्रसाधकस्य त्वध्यक्षस्य आस्तामन्यथासिद्धानुमानेन तुल्यकक्ष-
10 त्वम्, तत्प्रतिबन्धप्रसाधकेन तु न तुल्यकक्षता, क्षणिकताविपरीतनित्यतालक्षणार्थमन्तरेणाप्युपजायमानमध्यक्षं तथाभूतमर्थं व्यवस्थापयन् क्षणिकत्वानुमानबाधकमुच्यते, न चाध्यक्षावसेयं नित्यत्वं वस्तुनो व्यवस्थापयितुं शक्यम्, पूर्वापरकालताविष्टं हि वस्तु अध्यक्षावसेयम्, तच्च नित्यत्वं न वस्तुधर्मः, वर्त्तमानकालं हि वस्तु, पूर्वापरकालभावित्वञ्च वर्त्तमानवस्तुविरुद्धत्वान्न तद्धर्मत्वेनावस्थापयितुं युक्तमिति प्रत्यभिज्ञाप्रमेयस्य यथाप्रतीत्यसम्भवाद्बाधकप्र-
15 माणेनाप्यतुल्यकक्षत्वात्तद्ग्राहिणोऽध्यक्षस्य कुतः क्षणक्षयानुमानबाधकता। न च प्रत्यक्षस्याभासत्वेऽनुमानं बाधकम्, अनुमानस्य प्रामाण्ये च प्रत्यक्षस्याभासतेत्यन्योऽन्याश्रय इति वक्तव्यम्, प्रतिबन्धसाधकप्रमाणनिबन्धनत्वादनुमानप्रामाण्यस्य, न तु प्रत्यक्षस्याभासनिबन्धनत्वादिति, मैवम्, परिच्छिद्यमानवस्तुनः पूर्वकालतानिश्चयेऽपि प्रत्यक्षस्य वस्तुधर्मग्राहकतया यथाप्रतीति तद्विषयस्य सम्भवात्, तथाहि तस्य पूर्वकालसम्बन्धिना स्वरूपेण गृह्यते, न त्वि-
20 दानीन्तनसम्बन्धितानुप्रवेशेन, तेनेदानीं यद्यपि कुतश्चिन्निमित्तात्तस्य पूर्वकालादित्वमवसीयते तथापि तद्ग्राहकमध्यक्षं कथं न वस्तुग्राहकमिति कुतस्तस्याप्रामाण्यम्। यदि ह्यविद्यमानं पूर्वकालादित्वं विद्यमानं वर्त्तमानारोपेणाध्यवस्येत् तदा भवेदस्यायथार्थग्राहित्वादप्रामाण्यम्, एतच्च नास्तीति कुतोऽस्याप्रामाण्यप्रसक्तिः। न च सन्निहितवस्तुभूतेनाध्यक्षेण पूर्वकालसम्बन्धित्वं न परामृश्यतेऽविचारकत्वादिति वाच्यम्, असन्निहितस्यापि तस्य वर्त्तमानव-
25 स्तुनि सन्निहितविषयबलोद्भूतेनाध्यक्षेण निश्चयात्, यथाऽन्त्यसंख्येयग्रहणकाले शतमितिप्रतीतिः क्रमप्रतीतानपि संख्येयान्निश्चिनोति। न चैषाऽनिन्द्रियजा, इन्द्रियान्वयव्यतिरेकानुविधानात्, नाप्यनर्थजा, अन्त्यसंख्येयजन्यत्वात्। न चैकावभासिनी, आद्यावेकप्रतिपत्तिसमये शतमित्यप्रतिपत्तेः, न चाप्रमाणमेषा, बाधकाभावात्। न च विशिष्टप्रतिपत्तिकाले संख्येयाः सर्वे वर्त्तन्ते पूर्वकालत्वन्तु नास्तीति न तत्रोपयोग इति वक्तव्यम्, गृह्यमा-

भानां तत्कालविद्यमानताया अनुपयोगित्वात्, यत्र चान्त्यसंख्येयग्रहणसमये पूर्वावगतसं-
ख्येयानामभावस्तत्र यथा तेषामुपयोगस्तथा पूर्वकालादिताया अपि तद्विशिष्टाया उप-
योगो भविष्यतीत्यनवद्यम् । अथापि वर्त्तमानतापरिच्छेदसमये तदभावनियतभावत्वान्न पूर्व-
ताद्यवगतिर्भावानाम्, नीलपरिच्छेदे पीतादीनामिव । पीतादयो हि नीलप्रच्युत्यविनाभूताः,
नीलपरिच्छेदकञ्च प्रमाणं नीलप्रच्युतेरिव तद्व्याप्तपीतादिव्यवच्छेदं कुर्वदेव नीलं परिच्छि- 5
नत्ति, तद्वदिदानीन्तनपदार्थपरिच्छेदाय प्रवृत्तं प्रमाणं तत्प्रच्युत्यविनाभूतान् व्यवच्छिनत्ति,
वर्त्तमानश्च समयस्तत्प्रच्युत्या विरुद्ध इति तद्व्याप्तावप्यतीतानागतौ तेन विरुद्धाविति तदव-
च्छिन्नस्यापि भावस्य वर्त्तमानावच्छिन्नेन सह न समावेशः, तयोः परस्परपरिहारत्वेन विरो-
धात्, तेन वर्त्तमानसम्बन्धिताग्राहकेण प्रमाणेन तत्प्रच्युत्यविनाभूतस्य व्यवच्छेद्यस्य व्यव-
च्छेदमकुर्वाणेन वर्त्तमानसम्बन्धित्वमेव न परिच्छिन्नं भवेत्, ततः पूर्वापरसमयसम्बन्धिनो- 10
र्नानात्वे यन्नानाभूतानामेकत्वग्राहि प्रमाणं तस्यातस्मिंस्तद्ग्रहणरूपत्वादप्रामाण्यम्, अत एवै-
कत्वाध्यवसायस्य सदृशापरापरेत्यादिभ्रमनिमित्तादुत्पादः परिगीयत इति चेन्नैवम्, एकत्वेन
निश्चीयमानस्य परस्परविरुद्धकालादिव्यवच्छेदान्नानात्वाभावात्, छत्रकुण्डलाद्यवच्छिन्नस्य
देवदत्तादेरिव । तदभावव्याप्तभावलक्षणस्य विरोधस्य सहसम्भविनामपि भावात्, ततो
विरुद्धावच्छिन्नस्य नानात्वे तु देवदत्तस्यापि नानात्वप्रसङ्गः । न चेष्टापत्तिः, एकप्रतिभा- 15
सबलादेकत्वासिद्धेः, अन्यथा नीलादिपरमाणूनां दिक्षट्कयोगाद्भेदापत्त्या तदवयवानामपि
भेदापत्तितोऽनवस्थाप्रसक्तेः प्रतिभासविरतिलक्षणाऽप्रामाणिकी शून्यता भवेत् । तदेवेद-
मिति ज्ञानस्यानिन्द्रियजत्वेऽप्यलिङ्गस्य प्रामाण्यमभ्युपगन्तव्यम्, बाधाभावादनेन प्रतीय-
मानस्य वस्तुतः पूर्वापरकालभावित्वं पूर्वापरदर्शनविषयत्वं चावसीयत इति चाभ्युपग-
न्तव्यम्, अन्यथाऽनक्षालिङ्गप्रत्ययस्य निश्चयात्मनो बाधारहितस्यैवंजातीयस्य कस्यचित् 20
प्रामाण्यानभ्युपगमेऽक्षस्य सन्निहितार्थमात्रग्राहित्वेन लिङ्गजस्यानवस्थाप्रसक्तितः सकल-
पदार्थाक्षेपेण प्रतिबन्धग्राहकत्वायोगादनुमानप्रवृत्तेरभाव इति कुतः क्षणिकत्वादिधर्म-
सिद्धिः, यथोक्तविकल्पस्य च प्रामाण्ये कथं न क्षणक्षयानुमानबाधेति । किञ्च क्षण-
विनश्वरतां भावानां यद्यध्यक्षमवभासयति तदा कुतो न तदनुसारी निश्चयोदयः, सादृश्य-
दर्शनाद्भ्रान्तेर्न तदुदय इति चेन्न, सादृश्ये प्रमाणाभावात् । विपरीतनिश्चयोत्पादात् क्षणिक- 25
ताप्रतिभासप्रतिहतिर्यद्यभ्युपगम्यते तर्हि पुरोवर्त्तिस्तम्भादौ विजातीयस्मरणसमये तत्र क्षणक्ष-
यनिर्भासो भवेत्, नित्यतोल्लेखाभावात् । अपि च क्षणिकत्वावभासिसंवेदनं स्थापिताध्यव-
सायश्च परस्परासंसक्तरूपं प्रत्यक्षद्वयं यद्युदयमासादयति तदा क्षणक्षयावभासस्य न काचित्प्र-

१ क्षणिकत्वाध्यवभासिनिर्विकल्पकस्य स्थायिताध्यवसायिसविकल्पकस्य च सहोत्पत्तिलक्षणयुगपद्वृत्ति-

तिहतिः, न च नित्याध्यवसायसन्निधानमेव तस्य प्रतिहतिः, वैपरीत्यप्रसङ्गात्, सन्निवेर-
विशेषात्पूर्वोत्तरकालभावित्वात् प्रतिहतिरिति चेन्न पौर्वापर्यस्याकिञ्चित्करत्वात् । किञ्च वि-
जातीयविकल्पोदयेऽपि विशददर्शनस्य प्रतिहतिप्रसक्त्या पीताद्यध्यवसायसमये नीलादिकं न
प्रतिपन्नं स्यात् । न च विजातीयत्वात् पीतविकल्पो नीलादिदर्शनस्य न प्रतिघातक इति
5 वक्तव्यम्, नित्यताध्यवसायस्यापि विजातीयत्वेन क्षणिकदर्शनं प्रति प्रतिघातकत्वाप्रसक्तेः ।
आकारभेदादेव हि अन्यत्रापि विजातीयत्वं तच्च नित्यानित्ययोरपि तुल्यमेव । न च प्रथमो-
त्पन्नक्षणिकदर्शनसमानाधिकरणतया नित्योल्लेखस्योत्पत्तेः प्रतिघातकत्वम्, विरुद्धाकाराव-
भासिनोः प्रत्ययोः सामानाधिकरण्यानुपपत्तेः, अन्यथाऽतिप्रसङ्गात् । तस्मान्न सामानाधि-
करण्यात्तत्प्रतिहतिरिति अध्यक्षस्वरूपनित्यताबाधकप्रमाणनिश्चयो न क्षणक्षयसत्त्वयोरविनाभाव
10 इति न सत्त्वात् क्षणक्षयसिद्धिः । न चानुमानरूपेण बाधकेन क्षणक्षयाविनाभूता सत्ताऽध्य-
वसीयते, तदनुमानेऽप्यविनाभावस्यान्यानुमानबलात् प्रसिद्ध्यभ्युपगमादनवस्थाप्रसक्तेः ।
ननु अर्थक्रियालक्षणं सत्त्वम्, नित्ये क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्ततो व्यावर्त्तमानं
क्षणिक एवावतिष्ठत इति तेन व्याप्तं सत्त्वं सिद्ध्यति, इदमेव क्षणक्षयानुमानस्यान्यथासिद्धत्वे
बाधकं प्रमाणमिति चेन्न, सत्त्वनित्यत्वयोर्विरोधासिद्धेः, तयोर्हि विरोधः किं सहानवस्थान-
15 लक्षणः, परस्परपरिहारस्थितिलक्षणो वा भवेत्, नाद्यः, स हि विरोधः पदार्थस्य पूर्वमुप-
लम्भे पश्चात् पदार्थान्तरसद्भावादभावावगतौ निश्चीयते शीतोष्णयोरिव । न च नित्यतावभा-
सिदर्शनमुदेति, उदये च विशददर्शने नित्यताप्रतिभासेन तस्या विद्यमानतया न सर्वे भावा क्ष-
णिका भवेयुः । न द्वितीयो विरोधस्तयोः, नित्यत्वपरिहारेण सत्तायास्तत्परिहारेण नित्यत्वस्य
वाऽनवस्थानात्, क्षणिकतापरिहारेण ह्यक्षणिकता तत्परिहारेण च क्षणिकता व्यवस्थितेति अन-
20 योरेव परस्परपरिहारस्थितिलक्षणो विरोधः । न चार्थक्रियालक्षणा सत्ता क्षणिकतया व्याप्तेति
नित्यताविरोधिनी सेति वक्तव्यम्, अन्योऽन्याश्रयात्, नित्यत्वविरोधेन हि अर्थक्रियालक्षण-
सत्त्वस्य क्षणिकत्वव्याप्तत्वं सिद्ध्यति, नित्यत्वविरोधश्च सत्त्वस्य क्षणिकत्वव्याप्तिसिद्धाविति ।
न चान्वयनिश्चयद्वारेण सत्त्वक्षणिकत्वयोरविनाभावः सिद्ध्यति, प्रत्यक्षस्यान्वयग्राहितयाऽत्रा-

---

त्वेऽभ्युपगते न सविकल्पकेन निर्विकल्पस्याभिभव, रूपादिषट्कज्ञानस्य गोविकल्पसमयेऽश्वदर्शनस्य भव-
न्मते सहोत्पत्त्या न प्रतिबध्यप्रतिबन्धकभाव, समकालतया च निर्विकल्पकेन सविकल्पकमेव कुतो न प्रति-
हतं भवेत् विनिगमकाभावात्, सविकल्पकस्य बलीयस्त्वादभिभावकत्वमिति चेत् किं बहुविषयत्वात् किंवा
निश्चयात्मकत्वाद्बलीयस्त्वम्, नाद्य. निर्विकल्पकविषय एव विकल्पप्रवृत्तिस्वीकारात्, अन्यथा विकल्पोऽ-
गृहीतार्थग्राहकत्वात् प्रमाणं भवेत । न द्वितीय', स्वस्वरूपे निश्चयात्मकत्वे तस्य प्रत्यक्षत्वासम्भवात्, इष्टञ्च
तस्य प्रत्यक्षत्वम, सर्वचित्तचैत्तानामात्मसंवेदनं प्रत्यक्षमित्यभ्युपगमात् । अर्थरूपे निश्चयात्मकत्वे विकल्पस्य
निश्चयानिश्चयस्वभावद्वयप्रसङ्गादिति ॥

प्रवृत्तेः, अनुमानात्तत्प्रतिपत्तौ त्वनवस्था । नन्वर्थक्रियास्वरूपं सत्त्वं नित्येऽसम्भवि, अन्यथा भूतन्तु सत्त्वं न सम्भवतीति सर्वे भावाः क्षणक्षयिणः, अर्थक्रियायोगश्च क्रमयौगपद्याभ्यां व्याप्तः, ते च नित्ये न सम्भवतः, नित्यस्य सकलकार्यकरणसामर्थ्यं स्वरूपतो यदि तर्हि एकदैव सकलकार्योदयः स्यान्न क्रमेण, कालविलम्बायोगात्, सहकार्यपेक्षा च नित्याविचलितरूपस्य न सम्भवति, सहकारिकृतातिशयस्याव्यतिरिक्तस्य तत्रासम्भवात्, स्थायित्वात् । 5 अतिरिक्तातिशयजननेऽपि सहकारिभिस्तस्य न किमपि कृतमिति न नित्यं क्रमेण करोति, युगपदपि न करोति प्रतिक्षणं तस्मान्निखिलकार्योदयप्रसङ्गात्, पूर्वोत्तरकालयोरपि तत्स्वभावाप्रच्युतेरिति चेन्न, क्रमेणोत्पत्तिमत्या अर्थक्रियाया भिन्नत्वे हेतोर्भेदासम्भवात्, न ह्यन्यभेदादन्यद्भिन्नमतिप्रसङ्गात्, न हि हेतोरेकस्वभावत्वेऽर्थक्रियया युगपद्भवितव्यमित्यस्ति नियमः, किन्तु यदि कारणसद्भावेऽर्थक्रिया युगपदुपलभ्येत तदा युगपदुदेतीति व्य- 10 वस्था भवेत्, न हि कारणाभेदेऽपि ततो युगपदुदयमासादयन्ती सा लक्ष्यत इत्यनुभवबाधितमर्थक्रियायौगपद्यम् । न च क्रमवदर्थक्रियोत्पादः प्रतिक्षणक्षयित्वाविनाभूतः क्वचिदुपलब्धः, येन तदुदयक्रमात्तद्धेतोः प्रतिक्षणभेदः सिद्धिमासादयेत्, न चार्थक्रियापि प्रतिक्षणं भेदवती सिद्धा, तत्कथं स्वयमसिद्धा हेतोः प्रतिक्षणभेदमवगमयति । न च सौगतानां कालाभावादर्थक्रियाक्रमो युक्तिसङ्गतः । यदि ह्यतीतानागतवर्त्तमानकालभेदसङ्गतिमासादयेयुः 15 कार्याणि तदा क्रमवन्ति भवेयुः, न च कार्यपरम्पराव्यतिरिक्तः कालः सौगतैरभ्युपगत इति भिन्नफलमेव तिष्ठति, न च फलभेदमात्राद्धेतुभेदव्यवस्था कर्त्तुं शक्या, एकस्यापि प्रदीपादेरेकदाऽनेककार्यकरणात् । भवतु वाऽर्थक्रियालक्षणं सत्त्वम् तथापि नातः क्षणक्षयानुमानम्, तेन भावानां क्षणस्थायिताया: साधने सिद्धसाधनम्, नित्यस्यापि भावस्य क्षणावस्थानात्, अन्यथा सदाऽवस्थानमेव न भवेत्, तस्य क्षणावस्थाननियतत्वात् क्षणान्तरादिस्थितेः । क्ष- 20 णादूर्ध्वमभावस्य साधनन्तु न सम्भवति, अभावेन सह तस्य प्रतिबन्धाभावात्, न चाप्रतिबन्धविषयः शशविषाणादिवदनुमेयः । किञ्च अर्थक्रिया समानकालं साध्यं किं साधयेत्, किं वा भिन्नकालम्, यदि समानकालं क्षणसद्रूपं साध्यं साधयति तदा तत्समानकालभाविनः क्षणसत्तामात्रस्य सिद्धत्वात्सिद्धसाध्यता, अभावेन च प्रतिबन्धाभावान्न ततस्तत्सिद्धिः । अथ भिन्नकालं साधयति तत्रापि प्रतिबन्धाभावान्न ततस्तत्सिद्धिः, न हि भिन्नकालेन विद्यमाने- 25 नाविद्यमानेन वा सत्तायाः कश्चिदविनाभाव इति यत्राविनाभावः तत्र विप्रतिपत्तिर्नास्ति यत्र च विप्रतिपत्तिर्न तत्राविनाभाव इति न सत्तातः क्षणक्षयानुमानम् । न च सत्त्वं वर्त्तमानकालभावित्वम्, तच्च पूर्वापरकालसम्बन्धविकलतया क्षणिकत्वं तदात्मकतया भावानां प्रकटयति, यतो वर्त्तमानं क्षणिकमिति कुतो ज्ञायते, पूर्वापरयोस्तत्रादर्शनादिति चेन्न दृश्याद-

र्शनस्यैवाभावव्यवहारसाधकत्वात्, अदर्शनमात्रस्य तु सत्यपि वस्तुनि सम्भवात् तत्र न प्रमाणता। न हि सर्वं वस्तु सर्वदा दर्शनयोग्यम्, चक्षुर्व्यापाराभावे वस्तुनोऽप्रतिभासनात्, तदैव च चक्षुर्व्यापारात् परेणोपलम्भात्। तस्मान्न पूर्वापरयोरनुपलम्भमात्रादभावनिश्चय इति न प्रत्यक्षानुमानाभ्यां क्षणिकतावगमः, न चैतद्व्यतिरिक्तं प्रमाणान्तरं परैरभ्युपगम्यत इति कुतः क्षणिकत्वसिद्धिः। अतो न पर्यायास्तिकाभिमतपूर्वापरक्षणविविक्तमध्यक्षमात्रं वस्तु किन्तु अतीतानागतपर्यायाधारमेकं द्रव्यवस्त्विति द्रव्यार्थिकनिक्षेपः सिद्धः॥

द्रव्यं चानुभूतपर्यायमनुभविष्यत्पर्यायश्चैकमेव, तेनानुभूतपर्यायशब्देन तत्कदाचिदभिधीयते कदाचिच्चानुभविष्यत्पर्यायशब्देन, यथाऽऽनीतघृतसम्बन्धो भविष्यद्घृतसम्बन्धो वा घटो घृतघट इत्यभिधीयते। शुद्धतरपर्यायास्तिकेन च निराकारस्य ज्ञानस्यार्थग्राहकत्वासम्भवात्साकारं ज्ञानमभ्युपगतम्, तत्संवेदनमेव चार्थसंवेदनम्, ज्ञानानुभवव्यतिरेकेणापरस्यार्थानुभवस्याभावात्, घटोपयोग एव घटस्तन्मतेन। तत्पर्यायेणातीतेन परिणतं परिणंस्यद्वा द्रव्यं तच्छब्दवाच्यं द्रव्यार्थिकमतेन व्यवस्थितम्। अत एव घटाद्यर्थाभिज्ञः तत्र चानुपयुक्तो द्रव्यमिति प्रतिपादितः द्रव्यार्थिकनिक्षेपश्च। द्रव्यमागमेऽनेकधा प्रतिपादितम्, इह तु युक्तिसंस्पर्शमात्रमेव प्रदर्श्यते तदर्थत्वात् प्रयासस्य॥

भवति विवक्षितवर्त्तमानसमयपर्यायमात्रेणोत्पद्यत इति भावः। अथवा भूतिर्भावः, वज्रकिरीटादिधारणवर्त्तमानपर्यायेणेन्द्रादिरूपतया वस्तुनो भवनम्, तद्ग्रहणपर्यायेण वा ज्ञानस्य भवनम्। यथा चायं पर्यायार्थिकप्ररूपणा तथा प्रदर्शित एव प्राक् न पुनरुच्यते। एष एव नयनिक्षेपानुयोगप्रतिपादित उभयनयप्रविभागः परमार्थः परमं हृदयमागमस्य, एतद्व्यतिरिक्तविषयत्वात्सर्वनयवादानाम्, नहि शास्त्रपरमहृदयनयद्वयव्यतिरिक्तः कश्चिन्नयो विद्यते, सामान्यविशेषद्वयव्यतिरिक्तविषयान्तराभावात्, विषयिणोऽप्यपरस्य नयान्तरस्याभाव इति प्राक् प्रतिपादितमिति॥ ६॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य निक्षेपचतुष्टयवर्णनं नाम अष्टादशं सोपानम्॥



## नयद्वयस्य सदसदर्थतानिरूपणम् ।

एतदपि नयद्वयं शास्त्रस्य परमहृदयम्, द्रव्यं पर्यायाशून्यं पर्यायाश्च द्रव्याविरहिण इत्येवम्भूतार्थप्रतिपादनपरं नान्यथेत्यस्यार्थस्य प्रदर्शनार्थमाह—

**पज्जवणिस्सामण्णं वयणं दव्वट्ठियस्स अत्थित्ति ।**
**अवसेसो वयणविही पज्जवभयणा सपडिवक्खो ॥ ७ ॥** 5

**पर्यायनिस्सामान्यं वचनं द्रव्यार्थिकस्य अस्तीति ।**
**अवशेषो वचनविधिः पर्यवभजनात् सप्रतिपक्षः ॥ छाया ॥**

**पर्यायेति**, पर्यायनयेन सह निस्सामान्यं—असाधारणं द्रव्यास्तिकस्य वचनं अस्तीत्येवंरूपं भवति, भेदवादिसम्मतविशेषस्य सत्तारूपतानुप्रवेशात्. वचनमिदं निर्विषयं विशेषशून्यत्वाद्गगनकुसुमवचनवत्, तदेवमेकान्तभावनाप्रवृत्तस्य द्रव्यास्तिकनयस्य वचनं न 10
परमार्थम् । एवंप्रवृत्तपर्यायास्तिकस्यापि वचो न परमार्थमित्याह अवशेष इति, अवशेषो वचनविधिः—सत्ताशून्यविशेषप्रतिपादक उपर्युक्तादन्यो वचनविशेषः पर्यायेषु सत्ताऽव्यतिरिक्तेषु असद्रूपेषु भजनात्—सत्ताया आरोपणात् सप्रतिपक्षः, सतो विरोधी, असन् भवतीत्यर्थः । पर्यायप्रतिपादको वचनविधिरवस्तुविषयः निःसामान्यत्वात् खपुष्पवत् । यद्वा वस्तुज्ञानयोः स्वरूपमुक्त्वाऽभिधानस्य द्रव्यास्तिकपर्यायास्तिकस्वरूपस्य तदभिधायकस्य वा प्रति- 15
पादनायाह पर्यायेत्यादि, पर्यायान्निष्क्रान्तं तद्विकलं सामान्यं सङ्ग्रहस्वरूपं यस्मिन् वचने तत्पर्यवनिःसामान्यं वचनम्, तद्वचनञ्च अस्तीत्येवंरूपम्, तच्च द्रव्यार्थिकस्य स्वरूपं प्रतिपादकं वा । अथवा पर्यायः ऋजुसूत्रनयविषयादन्यो द्रव्यत्वादिविशेषः स एव निश्चितं सामान्यं यस्मिंस्तत् पर्यायनिःसामान्यं वचनम्, द्रव्यादिसामान्यविशेषाभिधायीति यावत् । तच्चाशुद्धद्रव्यार्थिकसम्बन्धि, तत्प्रतिपादकत्वेन तत्स्वरूपत्वेन वा । अवशेषो वचनविधिः वर्णपद्धतिः 20
सप्रतिपक्षः, अस्य वचनस्य पर्यायार्थिकनयरूपः तत्प्रतिपादको वा पर्यायसेवनात्, अन्यथा कथमवशेषवचनविधिः स्याद्यदि विशेषं नाश्रयेदिति । समुदायार्थस्तु द्रव्यास्तिकस्याननुषक्तविशेषं वचनमस्तीत्येतावन्मात्रम्, पर्यायास्तिकस्य तु अपरामृष्टसत्तास्वभावं द्रव्यं पृथिवी घटः शुक्लः इत्याद्याश्रितपर्यायम् । अन्योन्यापेक्षारहितञ्चोभयनयवचोऽसदेव, वचनार्थस्यासत्त्वात्, वचनस्यासदर्थत्वे तदर्थस्याप्यसत्त्वादिति ॥ ७ ॥ 25

अनेकान्तभावनयैवैषां नयानां सत्यता नान्यथेत्यादर्शयितुं ज्ञानानेकान्तं तावदाह—

पज्जवणयवोक्कंतं वत्थुं दव्वट्ठियस्स वयणिज्जं ।
जाव दविओवओगो अपच्छिमवियप्पनिव्वयणो ॥ ८ ॥

पर्यवनयव्युत्क्रान्तं वस्तु द्रव्यार्थिकस्य वचनीयम् ।
यावद्द्रव्योपयोगोऽपश्चिमविकल्पनिर्वचनः ॥ छाया ॥

5 पर्यव इति, यावद्द्रव्योपयोगः अपश्चिमविकल्पनिर्वचनरूपः प्रवर्त्तते तावद्द्रव्यार्थिकस्य वचनीयं वस्तु, तच्च पर्यायाक्रान्तमेव। अन्यथा ज्ञानार्थयोरप्रतिपत्तेरसत्त्वप्रसक्तिः, पर्यायानाक्रान्तसत्तामात्रसद्भावग्राहकस्य प्रत्यक्षस्य अनुमानस्य प्रमाणस्याभावात्, द्रव्यादिपर्यायविशिष्टस्यैव सर्वदा सत्तारूपस्य ताभ्यामवगतेरिति, वचनीयं परिच्छेद्यो विषयः। निश्चयकर्तृ वचनं निर्वचनम, विकल्पश्च निर्वचनञ्च विकल्पनिर्वचनं, न विद्यते पश्चिमं यस्मिन्

10 विकल्पनिर्वचने तत्तथा, तथाविधं तद् यस्य द्रव्योपयोगस्यासौ अपश्चिमविकल्पनिर्वचनः सङ्ग्रहावसान इति यावत, ततः परं विकल्पवचनाप्रवृत्तेः।

यद्वा यद्वस्तु सूक्ष्मतरतमादिबुद्धिना पर्यायनयेन स्थूलरूपत्यागेनोत्तरतरसूक्ष्मरूपाश्रयणात् व्युत्क्रान्तं गृहीत्वा त्यक्तम्, यथा किमिदं मृत्सामान्यं घटादिभिर्विना प्रतिपत्तिविषयः, एवं यावच्छुक्लतमरूपस्वरूपोऽन्त्यो विशेषः, एतद्द्रव्यार्थिकस्य वस्तु विषयः, यतो यावदपश्चि-

15 मविकल्पनिर्वचनोऽन्त्यो विशेषः, तावद्द्रव्योपयोगः द्रव्यज्ञानं प्रवर्त्तते, न हि द्रव्यादयो विशेषान्ताः सदादिप्रत्ययाविशिष्टैकान्तव्यावृतबुद्धिग्राह्यतया प्रतीयन्ते, न च तथाऽप्रतीयमानास्तथाभ्युपगमार्हाः अतिप्रसङ्गादिति ॥ ८ ॥

विशेषरहिता सत्ता सत्ताशून्यश्च विशेषो नास्तीत्येतदेवोपसंहरति—

दव्वट्ठिओ त्ति तम्हा नत्थि णओ नियमसुद्धजाईओ ।
20 ण य पज्जवट्ठिओ णाम कोइ भयणाय उ विसेसो ॥ ९ ॥

द्रव्यार्थिक इति तस्मान्नास्ति नयो नियमेन शुद्धजातीयः ।
न च पर्यायार्थिको नाम कोऽपि भजनायास्तु विशेषः ॥ छाया ॥

द्रव्येति, यस्मात् परस्परानाक्रान्तयोर्द्रव्यपर्याययोरप्रतीयमानत्वं तस्मान्नियमेन शुद्धजातीयः विशेषविनिर्मुक्तो द्रव्यार्थिक इत्यभिधानो नयो नास्ति, विषयाभावेन तद्विषयज्ञान-

25 स्याप्यभावात्। एवं सामान्यविनिर्मुक्तः पर्यायार्थिक इति नाम न च कोऽपि नयो विद्यते यदि विषयाभावादिमौ नयौ न स्तस्तर्हि तीर्थकरवचनसङ्ग्रहेत्याद्युक्तं वचनं विरुद्धं भवेदित्यत्राह भजनायास्त्विति, विवक्षाया एव विशेषः, इदं द्रव्यमयं पर्याय इत्ययं भेदः, तद्भेदाच्च विषयिणोऽपि तथैव भेद इत्यभिप्रायः, भजना च सामान्यविशेषात्मके वस्तुतत्त्वे

उपसर्जनीकृतविशेषं यदन्वयिरूपं तद्यदा द्रव्यमिति विवक्ष्यते तदा द्रव्यार्थिकविषयः, यदा तूपसर्जनीकृतान्वयिरूपं तस्यैव वस्तुनो यदसाधारणं रूपं तद्विवक्ष्यते तदा पर्यायनयविषयस्तद्भवतीति ॥ ९ ॥

एवंरूपभजनाकृतमेव भेदं दर्शयितुमाह—

**दव्वट्ठियवत्तव्वं अवत्थु णियमेण पज्जवणयस्स ।**
**तह पज्जववत्थु अवत्थुमेव दव्वट्ठियनयस्स ॥ १० ॥** 5

द्रव्यार्थिकवक्तव्यमवस्तु नियमेन पर्यवनयस्य ।
तथा पर्यववस्तु अवस्त्वेव द्रव्यास्तिकनयस्य ॥ छाया ॥

द्रव्यार्थिकेति, पर्यायास्तिकस्य द्रव्यास्तिकाभिधेयमस्तित्वमवस्त्वेव, भेदरूपापन्नत्वात्, पर्यायास्तिकाभ्युपगता भेदा अवस्तुरूपा एव द्रव्यास्तिकस्य भवन्ति, सत्तारूपापन्नत्वात् । अतो भजनामन्तरेणैकत्र सत्ताया अपरत्र च भेदानां नष्टत्वादिदं द्रव्यमेते च पर्याया इति नास्ति भेदः । न च भासमानयोर्द्रव्यपर्याययोः कथं नयाभ्यामाभ्यां प्रतिक्षेप इति वक्तव्यम्, अप्रतिभासं प्रति प्रतिभासस्य बाधकत्वात्, न तु मिथ्यात्वं प्रति, मिथ्यारूपस्यापि प्रतिभासनात् । तथाहि पर्यायास्तिकः प्राह, न मया द्रव्यप्रतिभासो निषिध्यते तस्यानुभूयमानत्वात् किन्तु विशेषव्यतिरेकेण द्रव्यस्याप्रतिभासनात्, अव्यतिरेके तु व्यक्तिस्वरूपवत्तस्यानन्वयादुभयरूपतायाश्चैकत्र विरोधाद्गत्यन्तराभावाद् द्रव्यप्रतिभासस्तत्र मिथ्यैव, विशेषप्रतिभासस्त्वन्यथा, बाधकाभावात्, यतः प्रतिक्षणं वस्तुनो निवृत्तेर्नाशोत्पादौ पर्यायलक्षणं न स्थितिः । द्रव्यार्थिकस्तु भजनोत्थापितस्वरूपः प्राह—अस्माकमप्येवमेवाभ्युपगमः, न विशेषप्रतिभासप्रतिक्षेपः, किन्तु तस्य भेदाभेदोभयविकल्पैर्बाध्यमानत्वान्मिथ्यारूपतैव । अभेदप्रतिभासस्तु अनुत्पादव्ययलक्षणस्य द्रव्यस्य तद्विषयस्य सर्वदाऽवस्थितेरबाध्यमानत्वात् सत्य इति ॥ १० ॥ 10 15 20

एवंलक्षणयोः कल्पनाव्यवस्थापितद्रव्यपर्यायास्तिकयोः मिथ्याप्रतिपत्तिः सुकरेत्याह—

**उप्पज्जंति वियंति य भावा नियमेण पज्जवणयस्स ।**
**दव्वट्ठियस्स सव्वं सया अणुप्पन्नमविणट्ठं ॥ ११ ॥**

उत्पद्यन्ते वियन्ति च भावा नियमेन पर्यवनयस्य । 25
द्रव्यास्तिकस्य सर्वं सदा अनुत्पन्नमविनष्टम् ॥ छाया ॥

उत्पद्यन्त इति, उत्पद्यन्ते प्रागभूत्वा भवन्ति वियन्ति निरन्वयरूपतया नाशमुपयान्ति नियमेन ये भावास्ते पर्यवनयस्याभिमताः, तन्मतेन हि प्रतिक्षणं भावा उत्पादविनाशस्व-

भावाः। द्रव्यार्थिकस्य सर्वं वस्तु अनुत्पन्नमविनष्टं आकालं स्थिरस्वभावमेव मतम्, एतच्च नयद्वयाभिमतं वस्तु प्राक् प्रतिपादितमेव ॥ ११ ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजय-
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
5 लब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य सापेक्षनय-
निरूपणं नाम एकोनविंशं सोपानम् ॥



## अथ द्रव्यस्वरूपनिरूपणम् ।

इतरापेक्षावियुतं नयद्वयप्रदर्शितं वस्तु प्रमाणाभावतो न सम्भवतीत्याह—

10 दव्वं पज्जवविउयं दव्वविउत्ता य पज्जवा णत्थि ।
उप्पायट्ठिइभंगा हंदि दवियलक्खणं एयं ॥ १२ ॥

द्रव्य पर्यववियुक्तं द्रव्यवियुक्ताश्च पर्यवा नास्ति ।
उत्पादस्थितिभङ्गा हंदि द्रव्यलक्षणमेतत् ॥ छाया ॥

द्रव्यमिति, पर्यायवियुक्तं द्रव्यं नास्ति, मृत्पिण्डस्थासकोशकुशूलाद्यनुगतमृत्सामा-
15 न्यप्रतीतेः, द्रव्यविरहिताश्च पर्याया न सन्ति, अनुगतैकाकारमृत्सामान्यानुविद्धतया मृत्पिण्ड-स्थासादीनां विशेषाणां प्रतिपत्तेः । अतो नयद्वयाभिमतं वस्तु परस्परानुषक्तमेव, नेतरविकलम्, परस्परविविक्तयोः कदाचनाप्यप्रतिभासनात्, तर्हि किम्भूतं द्रव्यमस्तीत्यत्राह—उत्पादेत्यादि, यथाऽऽख्यावर्णितस्वरूपाः परस्पराविनिर्भागवर्त्तिनः, हन्दीत्युपप्रदर्शने, एतत्—उत्पादस्थितिभङ्गस्वरूपो धर्मो द्रव्यलक्षणं द्रव्यास्तित्वव्यवस्थापकः, यतः पूर्वोत्तरपर्याय-
20 हानोपादानात्मकैकान्वयप्रतिपत्तिः तथाभूतद्रव्यसत्त्वं प्रतिपादयतीत्युत्पादव्ययध्रौव्यलक्षणं वस्त्वभ्युपगतम् । एतच्च त्रितयं परस्परानुविद्धम् अन्यतमाभावे तदितरयोरप्यभावात् । तथा हि उत्पत्तिव्ययौ न ध्रौव्यव्यतिरेकेण सङ्गतौ, विज्ञानपृथिव्यादिपदार्थमात्रस्य सर्वस्य सर्वदाऽनुस्यूताकारव्यतिरेकेणाप्रतिभासनात् । न चायमवभासोऽसत्यः, तद्बाधकत्वानुपपत्तेः, विशेषप्रतिभास एव हि बाधकोऽस्य वाच्यः, स चानुपपन्नः, अनुगतरूपे प्रतिपन्ने यदि स
25 विशेषप्रतिभासोऽभ्युपगम्यते तर्हि स प्रतिभासः किमनुगतप्रतिभासात्मकः किं वा तद्व्यतिरिक्तः, आद्ये त्वनुगतप्रतिभासस्यासत्यतायां सोऽपि तथा स्यात् ततश्च कथं बाधकः, न द्वितीयः ध्रौव्यप्रतिभासमन्तरेण स्थासकोशादिप्रतिभासस्य तद्भिन्नस्यासंवेदनाद्बाधकत्वानुपपत्तेः । न चेन्द्रियव्यापारानन्तरं विशेषस्यैव प्रतिभासो नान्वयस्येति वाच्यम्, प्रथमाक्षव्यापारे प्रतिनियतदेशवस्तुमात्रस्यैव प्रतीतेः, अन्यथा तत्र विशेषप्रतिभासे संशयाद्यनुत्पत्तिप्रसङ्गः,

विशेषावगतेः संशयविरोधित्वात् । न च तदुत्तरकालभाविसादृश्यनिमित्तैकत्वाध्यवसायनि-
बन्धनेयं संशयाद्यनुभूतिः, पूर्वं विशेषे ज्ञाते एकत्वाध्यवसायस्यैवासम्भवात्, अनुभूयते च
दूरदेशादौ वस्तुनि सर्वजनसाक्षिकी प्राक् सामान्यप्रतिपत्तिः तदुत्तरकालभाविनी च विशेषा-
वगतिः, अत एवावग्रहादिज्ञानानां कालभेदानुपलक्षणेऽपि क्रमोऽभ्युपगन्तव्यः, उत्पलपत्रश-
तव्यतिभेद इव । यदि तु अप्रतिपन्नेऽनुगतरूपे विशेषावभासो बाधकोऽभ्युपगम्यते सोऽभ्यु- 5
पगमोऽसिद्ध एव, अनुगताकाराप्रतिपत्तौ तद्विशेषावभासस्यासम्भवात् । न हि मूलमध्याग्रा-
नुस्यूतस्थूलैकाकारप्रतिभासनिह्नवे विविक्ततत्परमाणुप्रतिभासानपह्नव इति कुतस्तस्य स्व-
विषयव्यवस्थापनद्वारेणान्यबाधकत्वम् । न चैकत्वप्रतिभासो मिथ्या, विकल्प्यमानस्य
तद्विकल्पस्याघटमानत्वादिति वाच्यम्; विकल्पमात्रात् प्रमाणस्यान्यथात्वायोगात् । न
चानुगतावभासोऽप्रमाणम्, तन्निमित्ताभावात् । न च क्षणिकानेकानिरंशपरमाण्वव- 10
भासस्तन्निमित्तम्, तस्याभावात्, न ह्यसंवेद्यमानस्तथाभूतावभासः प्रमाणमप्रमाणं वा,
तयोः प्रतीतिधर्मत्वात् । सञ्चितपरमाणुष्वपि प्रत्येकं समुदितेषु वा स्थूलरूपतायाः
परेणानभ्युपगमात्, सञ्चयस्य च वस्तुस्वरूपस्यैकस्य द्रव्यपक्षोदितदोषप्रसङ्गादनिष्टेः
सञ्चितपरमाणूनामपि तत्र निमित्तत्वासम्भवाच्च, न ह्यन्यथावभासोऽन्यथाभूतार्थव्यवस्था-
पकः अतिप्रसङ्गात्, तस्मान्न आलम्बनप्रत्ययतया परमाणवः स्थूलावभासजनकाः, तत्र 15
स्वरूपानर्पकत्वेनाप्रतिभासनात्, स्थूलाकारस्य वा तेष्वनुस्यूतज्ञानावभासिनो भावेऽनुगत-
व्यावृत्तहेतुफलरूपभावाभ्युपगमात् परवादाभ्युपगमप्रसक्तिः । यदि च स्तम्भादिप्रत्ययो
मिथ्या तद्धितथाभूते तथाभूतारोपणं मिथ्येति अन्यथाभूतवस्तुसद्भावावेदकं प्रमाणं वक्त-
व्यम्, तच्च न प्रत्यक्षम्, उक्तोत्तरत्वात् । नाप्यनुमानम्, क्षणिकपरस्परविविक्तपरमाणुस्वभाव-
भावकार्यादर्शनात् स्थूलैकस्वभावस्य चोपलभ्यमानस्य न तत्कार्यत्वम्, तस्यावस्तुसत्त्वेन 20
परैरभ्युपगमात्, न चावस्तुसत् कस्यचिद्व्यवस्थापकम्, अतिप्रसङ्गात्, वस्तुसत्त्वेऽपि
न तस्य क्षणिकविविक्तपरमाणुव्यवस्थापकत्वम्, तस्य तत्र विरुद्धत्वात् । न च वनादिप्रत्य-
यात्छिंशपादिविशेषावगतिरिवात्रापि भविष्यतीति वक्तव्यम्, शिंशपादेः प्राक् प्रतिपत्ते-
र्वनादेश्च तद्धर्मतया वस्तुत्वात् परमाणूनां न कदाचनापि प्रतिपत्तिः । नापि तद्धर्मतया
वस्तुत्वाभ्युपगमः स्थूलस्य पराभ्युपगमविषयः, वस्तुत्वाभ्युपगमे तु तस्य स्यात्सूक्ष्मव्यवस्था- 25
पकता, सूक्ष्मापेक्षित्वात् स्थूलस्य, अन्यथा तदयोगात्, सूक्ष्मपर्यन्तश्च परमाणुस्तस्याभेद्यत्वात्,
भेद्यत्वे वा वस्तुत्वापत्तेः तदवयवानां परमाणुत्वापत्तिः, भेदपर्यन्तलक्षणत्वात् परमाणुस्व-
रूपस्य । न चाणूनामपि ध्रौव्योदयव्यतिरेकेण प्रतिक्षणविशरारुता सम्भवति, तयोरभावे
एकक्षणस्थितीनामपि तेषामभावात् कुतो विनश्वरत्वम् । अथ देशकालनियतस्य पदार्थस्य स्थै-

भावाः। द्रव्यार्थिकस्य सर्वं वस्तु अनुत्पन्नमविनष्टं आकालं स्थिरस्वभावमेव मतम्, एतच्च नयद्वयाभिमतं वस्तु प्राक् प्रतिपादितमेव ॥ ११ ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजय-
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
5 लब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य सापेक्षनय-
निरूपणं नाम एकोनविंशं सोपानम् ॥

## अथ द्रव्यस्वरूपनिरूपणम् ।

इतरापेक्षावियुतं नयद्वयप्रदर्शितं वस्तु प्रमाणाभावतो न सम्भवतीत्याह—

10 दव्वं पज्जवविउयं दव्वविउत्ता य पज्जवा णत्थि ।
उप्पायट्ठिइभंगा हंदि दवियलक्खणं एयं ॥ १२ ॥

द्रव्य पर्यववियुक्तं द्रव्यवियुक्ताश्च पर्यवा नास्ति ।
उत्पादस्थितिभङ्गा हंदि द्रव्यलक्षणमेतत् ॥ छाया ॥

द्रव्यमिति, पर्यायवियुक्तं द्रव्यं नास्ति, मृत्पिण्डस्थासकोशकुशूलाद्यनुगतमृत्सामा-
15 न्यप्रतीतेः, द्रव्यविरहिताश्च पर्याया न सन्ति, अनुगतैकाकारमृत्सामान्यानुविद्धतया मृत्पिण्ड-
स्थासादीनां विशेषाणां प्रतिपत्तेः । अतो नयद्वयाभिमतं वस्तु परस्परानुषक्तमेव, नेतरवि-
कलम्, परस्परविविक्तयोः कदाचनाप्यप्रतिभासनात्, तर्हि किम्भूतं द्रव्यमस्तीत्यत्राह—
उत्पादेत्यादि, यथाऽन्यावर्णितस्वरूपाः परस्पराविनिर्भागवर्तिनः, हन्दीत्युपप्रदर्शने, एतत्—
उत्पादस्थितिभङ्गस्वरूपो धर्मो द्रव्यलक्षणं द्रव्यास्तित्वव्यवस्थापकः, यतः पूर्वोत्तरपर्याय-
20 हानोपादानात्मकैकान्वयप्रतिपत्तिः तथाभूतद्रव्यसत्त्वं प्रतिपादयतीत्युत्पादव्ययध्रौव्यल-
क्षणं वस्त्वभ्युपगतम् । एतच्च त्रितयं परस्परानुविद्धम् अन्यतमाभावे तदितरयोरप्यभावात् ।
तथा हि उत्पत्तिव्ययौ न ध्रौव्यव्यतिरेकेण सङ्गतौ, विज्ञानपृथिव्यादिपदार्थमात्रस्य सर्वस्य
सर्वदाऽनुस्यूताकारव्यतिरेकेणाप्रतिभासनात् । न चायमवभासोऽसत्यः, तद्बाधकत्वानुपपत्तेः,
विशेषप्रतिभास एव हि बाधकोऽस्य वाच्यः, स चानुपपन्नः, अनुगतरूपे प्रतिपन्ने यदि स
25 विशेषप्रतिभासोऽभ्युपगम्यते तर्हि स प्रतिभासः किमनुगतप्रतिभासात्मकः किं वा तद्व्यति-
रिक्तः, आद्ये त्वनुगतप्रतिभासस्यासत्यतायां सोऽपि तथा स्यात् ततश्च कथं बाधकः, न द्वितीयः
ध्रौव्यप्रतिभासमन्तरेण स्थासकोशादिप्रतिभासस्य तद्भिन्नस्यासंवेदनाद्बाधकत्वानुपपत्तेः । न
चेन्द्रियव्यापारानन्तरं विशेषस्यैव प्रतिभासो नान्वयस्येति वाच्यम्, प्रथमाक्षव्यापारे प्रति-
नियतदेशवस्तुमात्रस्यैव प्रतीतेः, अन्यथा तत्र विशेषप्रतिभासे संशयाद्यनुत्पत्तिप्रसङ्गः,

विशेषावगतेः संशयविरोधित्वात् । न च तदुत्तरकालभाविसादृश्यनिमित्तैकत्वाध्यवसायनि-
बन्धनेयं संशयाद्यनुभूतिः, पूर्वं विशेषे ज्ञाते एकत्वाध्यवसायस्यैवासम्भवात्, अनुभूयते च
दूरदेशादौ वस्तुनि सर्वजनसाक्षिकी प्राक् सामान्यप्रतिपत्तिः तदुत्तरकालभाविनी च विशेषा-
वगतिः, अत एवावग्रहादिज्ञानानां कालभेदानुपलक्षणेऽपि क्रमोऽभ्युपगन्तव्यः, उत्पलपत्रश-
तव्यतिभेद इव । यदि तु अप्रतिपन्नेऽनुगतरूपे विशेषावभासो बाधकोऽभ्युपगम्यते सोऽभ्यु- 5
पगमोऽसिद्ध एव, अनुगताकाराप्रतिपत्तौ तद्विशेषावभासस्यासम्भवात् । न हि मूलमध्याग्रा-
नुस्यूतस्थूलैकाकारप्रतिभासनिह्नवे विविक्ततत्परमाणुप्रतिभासानपह्नव इति कुतस्तस्य स्व-
विषयव्यवस्थापनद्वारेणान्यबाधकत्वम् । न चैकत्वप्रतिभासो मिथ्या, विकल्प्यमानस्य
तद्विकल्पस्याघटमानत्वादिति वाच्यम्; विकल्पमात्रात् प्रमाणस्यान्यथात्वायोगात् । न
चानुगतावभासोऽप्रमाणम्, तन्निमित्ताभावात् । न च क्षणिकानेकानिरंशपरमाण्वव- 10
भासस्तन्निमित्तम्, तस्याभावात्, न ह्यसंवेद्यमानस्तथाभूतावभासः प्रमाणमप्रमाणं वा,
तयोः प्रतीतिधर्मत्वात् । सञ्चितपरमाणुष्वपि प्रत्येकं समुदितेषु वा स्थूलरूपतायाः
परेणानभ्युपगमात्, सञ्चयस्य च वस्तुस्वरूपस्यैकस्य द्रव्यपक्षोदितदोषप्रसङ्गादनिष्टेः
सञ्चितपरमाणूनामपि तत्र निमित्तत्वासम्भवाच्च, न ह्यन्यथावभासोऽन्यथाभूतार्थव्यवस्था-
पकः अतिप्रसङ्गात्, तस्मान्न आलम्बनप्रत्ययतया परमाणवः स्थूलावभासजनकाः, तत्र 15
स्वरूपानर्पकत्वेनाप्रतिभासनात्, स्थूलाकारस्य वा तेष्वनुस्यूतज्ञानावभासिनो भावेऽनुगत-
व्यावृत्तहेतुफलरूपभावाभ्युपगमात् परवादाभ्युपगमप्रसक्तिः । यदि च स्तम्भादिप्रत्ययो
मिथ्या तदतथाभूते तथाभूतारोपणं मिथ्येति अन्यथाभूतवस्तुसद्भावावेदकं प्रमाणं वक्त-
व्यम्, तच्च न प्रत्यक्षम्, उक्तोत्तरत्वात् । नाप्यनुमानम्, क्षणिकपरस्परविविक्तपरमाणुस्वभाव-
भावकार्यादर्शनात् स्थूलैकस्वभावस्य चोपलभ्यमानस्य न तत्कार्यत्वम्, तस्यावस्तुसत्त्वेन 20
परैरभ्युपगमात्, न चावस्तुसत् कस्यचिद्व्यवस्थापकम्, अतिप्रसङ्गात्, वस्तुसत्त्वेऽपि
न तस्य क्षणिकविविक्तपरमाणुव्यवस्थापकत्वम्, तस्य तव विरुद्धत्वात् । न च वनादिप्रत्य-
याच्छिंशपादिविशेषावगतिरिवात्रापि भविष्यतीति वक्तव्यम्, शिंशपादेः प्राक् प्रतिपत्ते-
र्वनादेश्च तद्धर्मतया वस्तुत्वात् परमाणूनां न कदाचनापि प्रतिपत्तिः । नापि तद्धर्मतया
वस्तुत्वाभ्युपगमः स्थूलस्य पराभ्युपगमविषयः, वस्तुत्वाभ्युपगमे तु तस्य स्यात्सूक्ष्मव्यवस्था- 25
पकता, सूक्ष्मापेक्षित्वात् स्थूलस्य, अन्यथा तदयोगात्, सूक्ष्मपर्यन्तश्च परमाणुस्तस्याभेद्यत्वात्,
भेद्यत्वे वा वस्तुत्वापत्तेः तदवयवानां परमाणुत्वापत्तिः, भेदपर्यन्तलक्षणत्वात् परमाणुस्व-
रूपस्य । न चाणूनामपि ध्रौव्योदयव्यतिरेकेण प्रतिक्षणविशरारुता सम्भवति, तयोरभावे
एकक्षणस्थितीनामपि तेषामभावात् कुतो विनश्वरत्वम् । अथ देशकालनियतस्य पदार्थस्य स्थै-

र्थाभावेऽपि क्वचित्कदाचिद्वृत्तेरन्यदाऽन्यत्र च निवृत्तिः, नैतदेवम्, अन्यदाऽन्यत्र चावृत्तेरे-
वानिश्चयात्, तथाहि कार्यकारणयोः परस्परतो व्यावृत्तिः किमपरित्यक्ततादात्म्यस्वरूपयोः,
कथञ्चिदनुस्यूतमेकाकारं बिभ्रतोर्विज्ञानसम्बन्धिग्राह्यग्राहकाकारयोरिव, किं वा घटपटयोरि-
वात्यन्तभिन्नस्वरूपयोरित्यत्र न निश्चयः। किञ्च प्रत्यक्षेणैव हेतुफलयोः कथञ्चित्तादात्म्यस्य
5 निश्चयान्न घटपटयोरिवाऽत्यन्तव्यावृत्तिस्तयोः परस्परतोऽभ्युपगन्तव्या, न ह्यध्यक्षतः प्रसिद्ध-
स्वरूपं वस्तु तद्भावे प्रमाणान्तरमपेक्षते, अग्निरिवोष्णत्वनिश्चये। न च कालभेदान्यथानु-
पपत्त्या प्रतिक्षणं भेदेऽपि पूर्वोत्तरक्षणयोः कथञ्चित्तादात्म्यं वस्तुनो विरुध्यते, येनाध्य-
क्षविरुद्धो निरन्वयविनाशः कल्पनामनुभवति[1], अध्यक्षविरोधेन प्रमाणान्तरस्याप्रवृत्तेः।
अनुवृत्तिव्यावृत्त्योश्च परस्परं एकान्तेन विरोधे विज्ञानमात्रमपि न सिद्ध्येदिति कुतः
10 क्षणिकत्वं भावानां निरन्वयं विनाशो वा सिद्ध्येत्, अन्तर्बहिश्च भावानामनुगतव्यावृत्ता-
त्मकत्वात् प्रमाणतस्तथैवानुभवात तत्स्वरूपाभावे निःस्वभावतया भावाभावप्रसक्तेः। यदि
च परस्परव्यावृत्तस्वभावानां परमाणूनां कथञ्चिदनुवृत्तस्थूलैकाकारः पारमार्थिको न भवेत्
न किञ्चिद्बहिरध्यक्षेऽवभासेत, परमाणुपारिमाण्डल्यनानात्वपरोक्षत्वस्वभावानां सञ्चितेष्व-
प्यणुषु स्थूलैकाकाराध्यक्षस्वभावेन विरोधात्, अविरोधे वाऽनेकान्तत्वप्रसक्तेः, तथाभूत-
15 स्वभावसद्भावेऽपि तेषु पारिमाण्डल्यनानात्वपरोक्षत्वस्वभावानपायात्, अपाये वा पर-
माणुरूपतात्यागात, स्थूलैकाकारस्य तेषु सांवृतत्वे साकाराध्यक्षाजनकत्वेन न किञ्चिदपि तत्र
प्रतिभासेत, तदनध्यक्षत्वे तत्प्रत्यनीकस्य स्वभावस्य पारिमाण्डल्यादेश्चक्षुरादिबुद्धौ रसादेरि-
वाप्रतिभासनात् बहिरर्थशून्यं जगद्भवेत। स्थूलैकाकारग्राह्यवभासस्य च भ्रान्तत्वे न किञ्चित्
कल्पनापोढं प्रत्यक्षमभ्रान्तं भवेत, तदभावे च प्रमाणान्तरस्याप्यप्रवृत्तेरन्तर्बाह्यरूपस्य प्रमेय-
20 स्याव्यवस्थितेर्न कस्यचिदभ्युपगमः प्रतिक्षेपो वेति निर्व्यापारं जगद्भवेत्। तस्मात्क्षणस्थिति-
धर्मणोऽपि बाह्यान्तरलक्षणस्य वस्तुनः परस्परव्यावृत्तपरमाणुरूपस्य कथञ्चिदनुवृत्तिरभ्युपग-
न्तव्या, अन्यथा प्रतिभासविरतिप्रसक्तेः, तदभ्युपगमे च परस्परव्यावृत्तयोर्हेतुफलयोरपि
प्रत्यक्षगता अनुगतिरभ्युपगमनीयैव, कल्पनाज्ञाने भ्रान्तसंविदि वा स्वसंवेदनापेक्षया विक-
ल्पेतरयोर्भ्रान्तेतरयोश्च परस्परव्यावृत्ताकारयोः कथञ्चिदनुवृत्तिमभ्युपगच्छन् कथमध्यक्षां हेतु-
25 फलयोरनुवृत्तिं प्रतिक्षिपेत्, संशयज्ञानं वा परस्परव्यावृत्तोल्लेखद्वयं बिभ्रदप्येकमभ्युपगम्यते

---

१ बौद्धानां मते कल्पनापोढमभ्रान्तं ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणम्, तत्र कल्पना साभिलापा प्रतीतिः, या च वृक्ष इत्यादिरूपेण शब्दार्थघटनायोग्या वाचामप्रयोगेऽपि साभिलापैव जायते, तयाऽपोढं रहितम्, न तु जात्यादियोजनायोग्या कल्पना, जात्यादेरभावात्। कल्पनापोढं प्रत्यक्षञ्चान्यत्रासक्तमनसा पुरुषेणाक्षैर्नीलादिवेदनादतिपरिस्फुटं वेद्यत एव, तच्चाविसंवादित्वादभ्रान्तमिति ॥

कथं न पूर्वापरक्षणप्रवृत्तमेकं हेतुफलरूपं वस्तु । शब्दविद्युत्प्रदीपादीनामपि उत्तरपरिणामाप्रत्यक्षत्वेऽपि तस्य सद्भावोऽभ्युपगन्तव्यः, पारिमाण्डल्यादिवत्, संविद्ग्राह्यग्राहकाकारविवेकवद्वा । अध्यक्षस्यापि केनचिद्रूपेण परोक्षता, अविरोधात् । न च पारिमाण्डल्यादेः प्रत्यक्षतेति वाच्यम्, शब्दाद्युत्तरपरिणामेऽप्यस्य वक्तुं शक्यत्वात्, विशेषाभावात् । अत एवान्ते क्षयदर्शनात् प्रागपि तत्प्रसक्तिरिति न वक्तव्यम्, मध्ये स्थितिदर्शनस्य पूर्वापरकोटिस्थितिसाधकत्वेन प्रसिद्धेः, न हि शब्दादेरनुपादाना उत्पत्तिर्युक्तिमती, नापि निरन्वया सन्ततिविच्छित्तिः, चरमक्षणस्याकिञ्चित्करत्वेऽवस्तुत्वापत्तितः पूर्वपूर्वक्षणानामपि तदापत्तितः सकलसन्तत्यभावप्रसक्तेः । न च शब्दादेर्निरुपादानोत्पत्त्यभ्युपगमेऽन्येषामपि सा सोपादानाऽभ्युपगन्तुं युक्ता, तथा च सुप्तप्रबुद्धबुद्धेरपि निरुपादानोत्पत्तिप्रसक्तिः, तत्रापि शब्दादेरिव प्रागुपादानादर्शनात् । न चानुमीयमानमत्रोपादानम्, शब्दादावपि तथाप्रसङ्गात् । न च दृष्टार्थस्याखिलो गुणो दृष्ट एव इति परिणामसाधनं निरवकाशम्, दृष्टेऽप्यर्थे पारिमाण्डल्यादेः ग्राह्याकारविवेकादेर्वा अंशस्यादृष्टत्वेनानुमीयमानत्वात्, एवञ्च परिणामसाधनं निरवद्यमेव । यदि हि दृष्टस्यादृष्टोंऽशः सम्भवति कथमुत्पन्नस्वभावस्यानुत्पन्नः कश्चन आत्मा न सम्भवी, स्वभावभेदस्य भावभेदसाधनं प्रत्यनेकान्तिकत्वात् । तस्माद्वस्तु यन्नष्टं तदेव नश्यति नंक्ष्यति च, यदुत्पन्नं तदेवोत्पद्यते उत्पत्स्यते च कथञ्चित्, यदेव स्थितं तदेव तिष्ठति स्थास्यति च कथञ्चिदित्यादि सर्वं उपपन्नमिति भावस्योत्पादः स्थितिविनाशरूपः, विनाशोऽपि स्थित्युत्पत्तिरूपः, स्थितिरपि विगमोत्पादात्मिका कथञ्चिदभ्युपगन्तव्या, सर्वात्मना चोत्पादादेः परस्परं तद्वतश्च यद्यभेदैकान्तो भवेन्नोत्पादादित्रयं स्यादिति न कस्यचित् कुतश्चित्तद्वत्ता नाम । न च वस्तुशून्यविकल्पोपरचितत्रयसद्भावात्तद्वत्ता युक्ता, अतिप्रसङ्गात्, खपुष्पादेरपि तद्वत्ताप्रसक्तेः । न चोत्पादादेः परस्परतः तद्वतश्च भेदैकान्तः, सम्बन्धासिद्धितो निःस्वभावताप्रसक्तेः । एतेन उत्पादव्ययध्रौव्ययोगाद्यदि असतां सत्त्वं शशशृंगादेरपि स्यात्, सतश्चेत् स्वरूपसत्त्वमायातम्, तथोत्पादव्ययध्रौव्याणामपि यद्यन्यतः सत्त्वं तदाऽनवस्थाप्रसक्तिः, स्वतश्चेद्भावस्यापि स्वत एव भविष्यतीति व्यर्थमुत्पादिकल्पनम्, एवं तद्योगेऽपि वाच्यमित्यादि निरस्तम्, एकान्तभेदाभेदपक्षोदितदोषस्य कथञ्चिद्भेदाभेदात्मके वस्तुन्यसम्भवात्, न हि भिन्न उत्पादव्ययध्रौव्ययोगाद्भावस्य सत्त्वमस्माभिरभ्युपगम्यते किन्तु उत्पादव्ययध्रौव्ययोगात्मकमेव सदित्यभ्युपगमः, विरोधादिकञ्चात्र दूषणं निरवकाशम्, अन्तर्बहिश्च सर्ववस्तुनस्त्रयात्मकस्याबाधिताध्यक्षप्रतिपत्तिविषयत्वात्, स्वरूपे विरोधासिद्धेः अन्यथातिप्रसक्तेः, एकान्तनित्यस्य प्रमाणबाधितत्वाद्ननुभूयरूपस्य चासम्भवात् शून्यतया निर्वेत्स्यमानत्वात् पारिशेष्यात् कथञ्चिन्नित्यानित्यं वस्तु अबाधितप्रमाणगो-

चरमभ्युपगन्तव्यम् । उत्पादव्ययध्रौव्ययुक्तं सदित्येव सल्लक्षणमन्यस्य लक्षणस्यासम्भवात्, न हि सत्तायोगः सत्त्वम्, सत्ताया एवासम्भवात् सामान्यादावव्याप्तेश्च । नाप्यर्थक्रियालक्षणं सत्त्वम्, एकान्ततो भावस्य नश्वरत्वे तदसम्भवात्, तस्य क्वचिदप्यभावात् । उत्पादस्थितिस्वभावरहितस्य नश्वरत्वे खपुष्पादेरेव तत्स्यान्न घटसुखादेः, क्षणस्थितिरेव जन्म विनाशश्च
5 यद्यभ्युपगम्येत कथमनेकान्तसिद्धिर्न भवेत्, न वा क्षणात्पूर्वं भावानामस्थितौ किञ्चित् प्रमाणमस्ति । न चावस्थितावपि न प्रमाणमिति वक्तव्यं प्रत्यक्षस्य तत्र प्रमाणत्वात्, प्रतिक्षणं निरन्वयविनाशसाधकप्रमाणाभावात् । न चाक्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् ततो निवर्तमानं सत्त्वं निरन्वयविनाशस्वभावमिति सत् क्षणिकमेवेति वाच्यम्, क्षणिकेऽपि तथैव विरोधात्, कार्यकारणयोर्यौगपद्येन कार्यकारणभावव्यवस्थाऽसम्भवात्, क्रमोत्पादे हेतोरसतः
10 कुतः फलजनकत्वम्, निरन्वयविनाशे चानन्तरं विनष्टस्य चिरविनष्टस्य च विनष्टत्वाविशेषाच्चिरतरविनष्टादपि कार्योत्पत्तिप्रसङ्गः । भावस्य हि विद्यमानत्वादनन्तरकार्योत्पादनसामर्थ्यम्, न तु व्यवहिततदुत्पादनसामर्थ्यमिति विशेषो युक्तः न पुनरभावस्य, निःस्वभावत्वाविशेषात् । अनेकान्तवादिना हि कथञ्चिद्भेदाभेदौ हेतुफलयोर्व्यवस्थापयितुं शक्यौ, संवेदनस्य ग्राह्यग्राहकाकारयोरिव भेदाभेदैकान्तौ तु परस्परतो न विशेषमासादयत इति न निरन्वय-
15 विनाशव्यवस्था नित्यताव्यवस्था वा कर्तुं शक्या, यतो न क्षणिकपक्षेऽपि सत्ताव्यतिरेकेण अपराऽर्थक्रिया सम्भवति एवमक्षणिकेऽपि सा समाना, यथा हि क्षणिकस्य स्वसत्ताकाले कुर्वतोऽपि कार्यं स्वत एव न भवति, भावे वा कार्यकारणयोर्यौगपद्येन न कार्यकारणव्यवस्था भवेत्, किन्तु कार्यस्य स्वकालनियमात् तत्तद्भावाविशेषेऽपि द्वितीयक्षण एव भावस्तथाऽक्षणिकस्यापि प्रागपि विवक्षितकार्योत्पादनसामर्थ्यं ततो भवत्कार्यं स्वकालनियतमेव
20 भविष्यतीति समानं पश्यामः । न चासति कारणविनाशे कार्योत्पत्तिर्न भवतीत्यत्र निबंधनं किञ्चिदस्ति येनाक्षणिकात् कार्योत्पत्तिर्न भवेत्, यदि चाक्षणिकस्य कार्योत्पत्तिक्षणे स्थितिः कार्योत्पत्तिप्रतिबन्धहेतुः, एवं सति क्षणिकस्यापि तदाऽभावः किं न प्रतिबन्धहेतुर्भवेत् । यदि च कारणविनाशे कार्योत्पत्तिः सोऽनन्तरमिव चिरविनष्टे कारणेऽस्तीति तदापि कार्योत्पत्तिः स्यात् । अथ कार्योत्पत्तिकाले नैव कारणसन्निधेरुपयोगः तर्हि कारणव्यावृत्तेरपि
25 तदुत्पत्तिकाले नैव कश्चिदुपयोगः यतः कारणव्यावृत्तौ कार्यं भवेत्, कारणव्यावृत्तिश्च तदभावः स च प्राक् पश्चादपि कालान्तरेऽस्त्येवेति सर्वदा कार्योत्पत्तिप्रसक्तिः । न च प्राग्भावित्वमात्रं कार्योत्पत्तावुपयोगः, तस्याकरणाभिमतेष्वपि जगत्क्षणेषु भावात्, तद्विशेषकल्पनायास्त्वक्षणिकेष्वप्यविरोधात्, तथाहि यद्यदा यत्र कार्यमुत्पित्सु तत्तदा तत्रोत्पादनसमर्थमक्षणिकं वस्त्विति कल्पनायां न काचित् क्षतिः । न च स्वयमेव प्रतिनियतसमयस्य कार्य-

स्योत्पत्त्यभ्युपगमे न किञ्चित्कारणाभिमतेन भावेन तस्य कृतमिति न तत्कार्यतया तद्व्यप-
देशमासादयेदिति वक्तव्यम्, क्षणिकपक्षेऽप्यस्य समानत्वात्। तस्मात् कथञ्चिद्व्यवस्थितस्यैव
भावस्य जन्मविनाशयोर्दर्शनाद्यथादर्शनं हेतुफलभावव्यवस्थितेः परिणामसिद्धिः समायाता, न
चाभेदबुद्धिर्भ्रान्ता, भेदबुद्धावपि तत्प्रसक्तेः स्वप्नावस्थाहस्त्यादिभेदबुद्धिवत्। न हि मिथ्या-
बुद्धीनामपि विसंवादो भावमात्रे, भेदेष्वेव तद्दर्शितेषु विप्रतिपत्त्युपलब्धेः, तस्मादक्षणिकत्वे 5
क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् क्षणिकत्वमभ्युपगच्छता क्षणिकानामर्थक्रिया दर्शनीया,
अन्यथा सत्त्वादेर्हेतोर्विपक्षव्यावृत्तिप्रसाधिकाया अनुपलब्धेर्व्यतिरेकासिद्धेरक्षणिकत्वेऽर्थ-
क्रियाविरोधः क्षणिकत्वेऽर्थक्रियोपलम्भमन्तरेण कथं सिद्धिमासादयेत्, न चाक्षणिकेऽर्थक्रिया-
विरोधादेव क्षणिकेऽर्थक्रियोपलब्धिः, इतरेतराश्रयात्। क्षणिकत्वेऽपि भावानां यथातत्त्वमु-
पलम्भनियमाभावात् ग्राह्यग्राहकाकारसंवेदनवदयथातत्त्वोपलम्भसम्भवान्न क्षणिकत्वमध्यक्ष- 10
गोचर इत्यतोऽप्यनेकान्तः सिद्धिमासादयति। न च सदृशापरापरोत्पत्तिरनिश्चयहेतुः, भेदैकान्ते
तस्या अप्ययोगात्, न हि तत्र सादृश्यं भावानां व्यतिरिक्तमव्यतिरिक्तं वा सम्भवति।
न चाविद्यमानमनुपलभ्यमानं वा तद्विभ्रमहेतुरतिप्रसङ्गात्। न च विशेषाणां स्थितिभ्रान्ति-
जननशक्तिरेव सादृश्यम, क्षणिकाऽऽवेदकप्रमाणान्तराभावतः स्थितिप्रत्तिपत्तेर्भ्रान्त्यसिद्धेः।
न चान्यादृग्भूतं वस्त्वबाधितस्थिरप्रतिपत्तिजन्मनो हेतुरभ्युपगन्तव्यम्, अभ्रान्तप्रतिपत्तेर्व- 15
स्तुव्यवस्थापकत्वेन प्रतिनियतव्यवहारोच्छेदप्रसक्तेः, अत एवोपलब्धमपि क्षणिकत्वं विषमज्ञ
इव न निश्चिनोतीत्युदाहरणमप्यसिद्धम, यथावस्तूपलम्भनियमाभावात। ये यद्भावं प्रत्यन-
पेक्षास्ते तद्भावनियताः यथाऽन्त्या कारणसामग्री स्वकार्योत्पादने, विनाशं प्रत्यनपेक्षश्च भाव
इत्यभिधानमपि परिणामप्रसाधकम्, भावस्योत्तरपरिणामं प्रत्यनपेक्षतया तद्भावनियतत्वो-
पपत्तेः पूर्वक्षणस्य स्वयमेवोत्तरीभवतोऽपरापेक्षाभावतः क्षेपायोगात्, उत्पन्नस्य चोत्पत्ति- 20
स्थितिविनाशेषु कारणान्तरानपेक्षस्य पुनः पुनरुत्पत्तिस्थितिविनाशत्रयमवश्यम्भावि, तदेवं
कस्यचिदंशस्य पदार्थाध्यक्षतायामप्यनिर्णये सांशतामभ्युपगच्छन् कथमंशेनोत्पन्नस्यांशा-
न्तरेण पुनः पुनरुत्पत्तिं नाभ्युपगच्छेत्, येनैकं वस्त्वनन्तपर्यायं नाङ्गीकुर्वीत। न चैकान्त-

---

१ ननु विनाशस्वभावनियता भावा इत्यस्य कोऽर्थ, किं विनाशे कर्त्तव्ये स्वभावेन स्वसत्तया नियता इति, किं वा विनाशस्वभावे विनाशरूपतायां नियता इति, आद्ये विनाशस्य सहेतुकत्वप्रसक्तिः, पदार्थसत्ताया एव तद्धेतुत्वात्, इष्टापत्तौ वस्तुसत्ताक्षणसमनन्तरं भावात् क्षणिकता न स्यात्, न च नाशो नीरूपः, वस्तुनिर्वर्त्तनीयतयाऽकिञ्चिद्रूपताविरोधात्, नाशस्य च सदाऽवस्थाने कृतकत्वादिकं तत्रैव व्यभिचारि, क्षणिकत्वे नाशविनाशाद्भावोन्मज्जनप्रसङ्गः, द्वितीये च प्रतिषेध्यप्रतिषेधकयोरेकत्वमनुपपन्नम्, उपपत्तौ वा विश्वस्य वैश्वरूप्यानुपपत्तिरित्यपि बोध्यम् ॥

साधने उदाहरणमपि किञ्चिदस्ति, अध्यक्षाधिगतमनेकान्तमन्तरेणान्तर्बहिश्च वस्तुसत्तानु-
पपत्तेः । न च निरन्वयविनाशमन्तरेण किञ्चिद्वस्तु अनुपपद्यमानं संवेद्यते, यतो बहिः रूप-
संस्थानाद्यात्मनाऽध्यक्षप्रतीतमनेकान्तमन्तर्विकल्पाविकल्पस्वरूपं संशयविपर्याससंवेदनात्मकं
वा स्वसंवेदनसिद्धमपहाय निरन्वयक्षणक्षयलक्षणं वस्तु प्रकल्प्येत । न चानुस्यूतिव्यतिरेकेण
5 ज्ञानानां कार्यकारणभावोऽपि युक्तिमङ्गतः, आस्तां स्मृतिप्रत्यभिज्ञावासनासन्तानादिव्यव-
हारः, न हि भेदाविशेषेऽपि कथञ्चित्तादात्म्यमन्तरेण भेदानामयं नियमः सिद्धिमासाद-
यति केषाञ्चिदेव, अन्यथा ग्राह्यग्राहकाकारयोरपि तादात्म्याभावप्रसक्तिर्भवेत्, यतः शक्य-
मत्राप्येवं वक्तुं ग्राह्यग्राहकानुभवयोः स्वकारणवशाद्भिन्नस्वभावयोरेव प्रतिक्षणं विशिष्टयो-
रुत्पत्तिस्तेन तेन रूपेणेति । एवञ्च 'अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः । ग्राह्यग्राह-
10 कसंवित्तिभेदवानिव लक्ष्यते ' इत्ययुक्तमेवाभिधानं स्यात् । परेणापि चैवं वक्तुं शक्यत एव
'परमात्माऽविभागोऽप्यविद्याविप्लुतमानसैः । सुखदुःखादिभिर्भागैर्भेदवानिव लक्ष्यते '॥ इति,
न हि भेदाभेदैकान्तयोरागमोपलम्भं परमार्थादर्शनञ्च प्रति कश्चिद्विशेषः संलक्ष्यते, कथञ्चित
परमार्थदर्शनाभ्युपगमे च उत्पन्नं कथञ्चित् पुनरुत्पादयेदित्यनेकान्तः स्यात । स्वलक्षणस्य
परमात्मनो वा परमार्थसतः सर्वथाऽनुपलम्भैकान्ताभ्युपगमे परीक्षाक्षमस्य संवृतिरूपस्या-
15 विद्यास्वभावस्य वा दर्शनासम्भवादनेकान्तात्मकस्य सतः सर्वथा एकान्तव्युदासेन प्रमाणतो
दर्शनमायातमिति कथं तत्प्रतिक्षेपः । न च संवृतेरेवोत्पादविनाशाभ्युपगमः, क्षणस्थिति-
व्यतिरेकेणापरस्य परमार्थसल्लक्षणलक्ष्यस्याभावात् क्षणस्थायिन एव स्वलक्षणताभ्युपगमात,
क्षणव्यवस्थितयश्च ग्राह्यग्राहकसंवित्त्यादयोऽध्यक्षत्वेनेष्यन्ते तदस्वलक्षणत्वे कोऽपरः स्वलक्ष-
णार्थो भवेत्, तदाकारविविक्तस्यापरस्यात्यन्तानुपलम्भतः प्रत्यक्षत्वानुपपत्तेः । न चानंशमसा-
20 धारणं स्वलक्षणं सांशमिव विपर्यासात् प्रतिभातीति वक्तव्यम्, अकार्यकारणरूपं कार्यकारणरू-
पमिव सर्वविकल्पातीतं सविकल्पकमिव पुरुषतत्त्वं प्रतिभातीत्येवं पराभिधानस्यापि सम्भ-
वादित्युक्तत्वात, ततश्च न कश्चिदुत्पादः क्षयो वा भवेत्। न चोत्पादविनाशयोर्भ्रान्तिकल्पनायां
किञ्चिदप्यभ्रान्तं सिद्ध्येत, निरंशक्षणक्षयाद्यवभासाभावात, स्वसंवित्तिसद्भावमात्रसिद्धे रप्य-
भावप्रसङ्गात् । क्षणक्षयाद्यवभासस्याभ्युपगमे सैवानेकान्तसिद्धिः समापतति। अथ नेयमसती
25 संवित्तिः कुतश्चिन्निमित्तात् सतीव प्रतिभाति किन्तु सत्येव प्रतिभातीत्यस्याः स्वभावसिद्धिः,
एवं सति न सर्वथापि भ्रमः सिद्ध्येत् किन्तु भ्रान्ताभ्रान्तैकविज्ञानाभ्युपगमादनेकान्तवाद एव
पुनरपि सिद्धिमायातः । यदपि कार्यकारणयोरभेदाभावः सिध्यति, भेदादकार्यकारणवदिति,
तदपि ग्राह्यग्राहकसंवित्त्यादिभिरनैकान्तिकमित्युपेक्षामर्हति । न हि स्वभावभेदादभेदे ग्रा-

१ सर्वेषा कथं न स्यात् ? ॥

ह्यग्राहकसंविस्यादेः कालभेदाद्धेतुफलयोरभेदाभावो युक्तः,कालभेदादपि स्वरूपभेद एव भावानामवसेयः, स्वभावतोऽभिन्नस्य कालभेदादपि भेदायोगात्, स्वभावभेदश्चेन्न भेदकः कालभेदः कोपयोगीति न तद्भेदात् कार्यकारणयोरात्यन्तिकभेदसिद्धिः, एवञ्चांशेन वृत्तिः कार्ये कारणस्योपपन्ना । न च प्रतिक्षणमंशवृत्तौ दृष्टान्ताभावः, संवित्तेर्ग्राह्यग्राहकाकारादेर्दृष्टान्तत्वेन सिद्धत्वात्,अनंशवृत्तिस्तु न कश्चिदर्थस्य प्रमाणसिद्धा या दृष्टान्तत्वेन प्रदर्श्येत,सर्वस्य सांशवृत्तितयोपलब्धेः,ततो नाध्यक्षसिद्धमनुगमस्वरूपं भावानां लक्षणं प्रतिक्षेप्तुं युक्तम्, तत्प्रतिक्षेपे प्रमाणान्तराभावात् । न हि सुखादिनीलादीनां निरन्वयानां क्वचित् संवेदनमध्यक्षमनुमानं वाऽनुभूयते, नापि तेषां भेदविकलानां कदाचिदप्यनुभूतिरिति यथा संविदाकारमन्तरेण ग्राह्यग्राहकाकारयोरसंवित्तेरनुपपत्तिस्तथा तावन्तरेण तस्या अप्यसंवित्तेरनुपपत्तिरिति भेदाभेदरूपं सर्वं प्रमाणप्रमेयलक्षणमभ्युपगन्तव्यम्, न च पूर्वापराधोमध्योर्ध्वादिभेदाभावेऽनुगताकारलक्षणं सामान्यं तेष्वेकाकारप्रतिभासग्राह्यं सम्भवति, अनुगतिविषयाभावे तदनुगतैकाकारस्याप्यभावात्, तदभावे च तद्वृत्तेः सामान्यस्याभाव एव, न च तेष्ववर्त्तमानमपि तत् सामान्यम्, व्यक्त्यन्तरस्वरूपवत् । किञ्च तदनुगतं रूपं व्यावृत्तरूपाभावे किं कार्यरूपं, उत कारणरूपम्, आहोस्विदुभयात्मकम्, उतानुभयस्वभावमिति विकल्पाः, आद्यविकल्पे तस्यानित्यत्वप्रसक्तिः द्वितीयेऽपि सैवेति न तत्सामान्यस्वभावम् । तृतीयपक्षे उभयदोषप्रसक्तिः, तुर्यविकल्पेऽप्यभावप्रसङ्ग इति विशेषाभावे नानुगतिरूपसामान्यसम्भवः सम्भवेऽपि तत्प्रतिपादकं प्रमाणमभिधानीयम्, तच्चाक्षणिकत्वविरोधिकथञ्चित्क्षणिकत्वावभासितयाऽनुभूयत इति विपर्ययसाधकं भवेत्, कथञ्चित् क्षणिकत्वावभासस्य भ्रान्तत्वे विपरीतावभासस्यापि भ्रान्तत्वप्रसक्तिः । तदवभासस्याभ्रान्तत्वे वा भ्रान्ताभ्रान्तरूपमेकं विज्ञानमेकान्तप्रतिक्षेप्यनेकान्तं साधयतीत्यलमतिप्रसङ्गेनेति स्थितमेतद् ध्रौव्यमुत्पादव्ययव्यतिरेकेण न सम्भवति तौ च तदन्तरेणेति उत्पादस्थितिभङ्गा अपरित्यक्तात्मस्वरूपाः तदितरस्वरूपत्वेन त्रैलक्षण्यं प्रत्येकमनुभवन्तो द्रव्यलक्षणतामुपयान्ति, अन्यथा पृथक्पक्षोक्तदोषप्रसक्तिर्दुर्निवारेति व्यवस्थितमुत्पादस्थितिभङ्गा द्रव्यलक्षणमिति ॥ १२ ॥

परस्परापेक्षा एते चोत्पादादयो द्रव्यलक्षणं न स्वतंत्रा इत्याह—

**एए पुण संगहओ पाडिक्कमलक्खणं दुवेण्ह पि ।**
**तम्हा मिच्छद्दिट्ठी पत्तेयं दो वि मूलणया ॥ १३ ॥**

**एते पुनः सङ्ग्रहतः प्रत्येकमलक्षणं द्वयोरपि ।**
**तस्मान्मिथ्यादृष्टी प्रत्येकं द्वावपि मूलनयौ ॥ छाया ॥**

**एत इति,** एते उत्पादादय: मञ्चहत: शिबिकोद्वाहिपुरुषा इव परस्परस्वरूपोपादानेनैव लक्षणम्, प्रत्येकं—एकका उत्पादादयो द्वयोरपि द्रव्यास्तिकपर्यायास्तिकयोरलक्षणम्, तथाभूतविषयाभावे तद्ग्राहकयोरपि तथाभूतयोरभावात्, उत्पादादीनाञ्च परस्परविविक्तरूपाणामसम्भवात्। तस्मान्मिथ्यादृष्टी एव प्रत्येकं परस्परविविक्तौ द्वावपि एतौ द्रव्यार्थिकपर्यायार्थिकस्वरूपौ मूलनयौ समस्तनयराशिकारणभूतौ ॥ १३ ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानंदसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य द्रव्यस्वरूपनिरूपणं नाम विंशतितमं सोपानम् ॥

## नयसम्यक्त्वनिरूपणम् ।

ननु स्यान्मिथ्यात्वं परस्परनिरपेक्षयोरेनयो:, उभयनयारब्धस्त्वेक: सम्यग्दृष्टिर्भविष्यतीत्यत्राह—

**ण य तइओ अत्थि णओ ण य सम्मत्तं ण तेसु पडिपुण्णं ।**
**जेण दुवे एगन्ता विभज्जमाणा अणेगन्तो ॥ १४ ॥**

[१]न च तृतीयोऽस्ति नयो न च सम्यक्त्वं न तेषु परिपूर्णम् ।
येन द्वौ एकान्तौ विभज्यमानौ अनेकान्त: ॥ छाया ॥

**न चेति,** परस्परसापेक्षोभयग्राही न च तृतीयो नय: कश्चिदस्ति, तथाभूतस्यानेकान्तात्मकत्वात्तद्ग्राहिण: प्रत्ययस्य नयात्मकत्वानुपपत्ते:, सम्यक्त्वं तयो: परिपूर्णं न चेति न, किन्तु परिपूर्णमेव, नयद्वयस्य प्रकृतार्थगमकत्वात्। अशेषं हि प्रामाण्यम्, सापेक्षं गृह्यमाणयोरनयोरेवंविषययोर्व्यवस्थितं येन द्वावपि एकान्तरूपतया व्यवस्थितौ मिथ्यात्वनिबन्धनम्, तत्परित्यागेनान्वयव्यतिरेकौ विशेषेण—परस्परात्यागरूपेण भज्यमानौ—गृह्यमाणावनेकान्तो भवतीति सम्यक्त्वहेतुत्वमेतयोरिति ॥ १४ ॥

सापेक्षद्वयग्राहिणो नयत्वानुपपत्ते: तृतीयनयाभावं प्रदर्श्य निरपेक्षग्राहिणां मिथ्यात्वं दर्शयति—

१ अन्योऽन्यापेक्षसामान्यविशेषोभयग्राही नास्ति कश्चिन्नय, सामान्यस्य द्रव्यार्थिकेन विशेषस्य च पर्यायार्थिकेन ग्रहणात्, उभयग्राहिणश्चैकस्य न नयत्वमपि तु प्रमाणत्वमेव तयोरेव सम्यक्त्वस्य परिपूर्णत्वात्, नयौ हि यदि प्रत्येकं निरपेक्षौ तदा तु मिथ्यारूपौ भवत एकान्तग्राहित्वात्, परस्परसापेक्षतया प्रवृत्तावुभावपि अनेकान्ततां भजत एवेति भाव: ।

**जह एए तह अण्णे पत्तेयं दुण्णया णया सव्वे ।**
**हंदि हु मूलणयाणं पण्णवणे वावडा ते वि ॥ १५ ॥**

[1]यथा एतौ तथा अन्ये प्रत्येकं दुर्नया नयाः सर्वे ।
हन्दि हु मूलनयानां प्रज्ञापने व्यापृतास्तेऽपि ॥ छाया ॥

**यथेति,** यथैतौ निरपेक्षद्वयग्राहिणौ मूलनयौ मिथ्यादृष्टी तथा प्रत्येकं–इतरानपेक्षा 5
अन्येऽपि दुर्नयाः, उभयवादरूपेण व्यवस्थितानामपि परस्परनिरपेक्षत्वस्य मिथ्यात्वनिब-
न्धनस्य तुल्यत्वात् । न च प्रकृतनयद्वयव्यतिरिक्तनयान्तरारब्धत्वादुभयवादस्य नयानामपि
वैचित्र्यादन्यत्रारोपयितुमशक्यत्वात्तद्रूपस्यान्ये सम्यक्प्रत्यया भविष्यन्तीति वक्तव्यम्,
हुरिति हेतौ यतो मूलनयानां प्रज्ञापने,–मूलनयद्वयपरिच्छिन्नवस्तुन्येव तेऽपि नया व्या-
पृता हंदि इत्येवं गृह्यताम्, तद्विषयव्यतिरिक्तविषयान्तराभावात् । सर्वनयवादानाञ्च सामा- 10
न्यविशेषोभयैकान्तविषयत्वात् । तस्मान्न नयान्तरसद्भावः, यतस्तदारब्धोभयवादे नया-
न्तरं भवेत् ॥ १५ ॥

ननु तद्व्यतिरिक्ताः सङ्ग्रहादयो नयाः सन्त्येवेति न शङ्क्यम्, मूलनयद्वयविषयव्यति-
रिक्तविषयान्तराभावात् । तेऽपि तद्विषया एवातस्तद्दूषणेनैव दूषिताः, न हि मूलच्छेदे
तच्छाखास्तदवस्था एव सम्भवन्तीत्याह– 15

**सव्वणयसमूहम्मि वि णत्थि णओ उभयवायपण्णवओ ।**
**मूलणयाण उ आणं पत्तेयं विसेसियं बिंति ॥ १६ ॥**

सर्वनयसमूहेऽपि नास्ति नय उभयवादप्रज्ञापकः ।
मूलनयानान्त्वाज्ञां प्रत्येकं विशेषितं ब्रवीति ॥ छाया ॥

**सर्वनयेति,** सङ्ग्रहादिसकलनयसमूहेऽपि उभयवादप्ररूपकः कश्चिन्नयो नास्ति, यतो 20
मूलनयाभ्यामेव यत्प्रतिज्ञातं वस्तु तदेवाऽऽश्रित्य प्रत्येकरूपाः सङ्ग्रहादयः । पूर्वपूर्वनयाधि-
गतांशविशिष्टमंशान्तरमधिगच्छन्तीति न विषयान्तरगोचराः, अतो व्यवस्थितं परस्परात्याग
प्रवृत्तसामान्यविशेषविषयसङ्ग्रहाद्यात्मकनयद्वयाधिगम्यात्मकत्वाद्वस्त्वप्युभयात्मकम् ॥ १६ ॥

बाह्यघटादिवस्त्वेव तथाविधप्रमाणग्राह्यत्वादुभयात्मकमिति न मन्तव्यम्, किन्तु आ-
न्तरमपि हर्षशोकभयकरुणौदासीन्याद्यनेकाकारविवर्त्तात्मकैकचेतनास्वरूपं तदात्मकहर्षाद्य- 25

---

१ भवन्तु वा केचिन्नयाः मूलद्वयभिन्ना उभयवादप्रवर्त्तकास्तथापि ते नयद्वयवन्मिथ्यारूपा एव । न च वक्तव्यं ते नयाः प्रकृतनयद्वयव्यतिरिक्ताः प्रकृतनयद्वयस्य मिथ्यात्वेऽपि कथं तथा भवेयुः तेषां वैचित्र्या-दिति, मूलनयद्वयविषयव्यतिरिक्तविषयान्तराभावेन सर्वेषामेव नयानां सामान्यविशेषोभयैकान्तविषयत्वादिति ॥

नेकविकाररूपानेकात्मकञ्च स्वसंवेदनाध्यक्षप्रतीतम् । तस्य भेदाभेदैकान्तैकरूपताभ्युपगमे दृष्टादृष्टविषयसुखदुःखसाधनस्वीकारत्यागार्थप्रवृत्तिनिवृत्तिस्वरूपसकलव्यवहारोच्छेदप्रसक्तिरिति प्रतिपादयितुमाह—

**ण य दव्वट्ठियपक्खे संसारो णेव पज्जवणयस्स ।**
5 **सासयवियत्तिवायी जम्हा उच्छेअवाई आ ॥ १७ ॥**

न च द्रव्यार्थिकपक्षे संसारो नैव पर्यवनयस्य ।
शाश्वतव्यक्तिवादी यस्मादुच्छेदवादी च ॥ छाया ॥

**न चेति**, द्रव्यार्थिकपर्यायास्तिकनयद्वयाभिमते वस्तुनि न संसारः सम्भवति, शाश्वतव्यक्तिप्रतिक्षणान्यत्वैकान्तात्मकचैतन्यग्राहकविषयीकृतत्वात् पावकज्ञानविषयीकृते उदक-
10 वत् । तथाहि संसारः संसृतिस्वभावः, स चैकान्तनित्यस्य पूर्वावस्थापरित्यागविरहे न सम्भवति, तत्परित्यागेनैव भवभावान्तरप्राप्तेः सम्भवात् । नापि निरन्वयविनाशे, भवभावान्तरापत्तेः कथञ्चिदन्वयिरूपमन्तरेणायोगात् । पूर्वापरशरीराभ्यां वियोगसंयोगलक्षणसंसारोऽपि नाविकारिणि सम्भवति, नित्यस्य शरीरवियोगसंयोगानुपपत्तेः । निरन्वयोच्छेदेऽप्येकाधिकरणत्वासम्भवान्न तल्लक्षणः संसारः । न वाऽमूर्त्तस्यात्मनोऽसर्वगतैकमनोभिव्यक्त-
15 शरीरेण विशिष्टवियोगसंयोगौ संसारः, मनसोऽकर्तृत्वेन शरीरसम्बन्धस्यानुपपत्तेः, योऽदृष्टस्य विधाता स तन्निर्वर्त्तितशरीरेण सह सम्बद्ध्यते न चैवं मनः, न च मनसः शरीरसम्बन्धेऽपि तत्कृतसुखदुःखोपभोक्तृत्वम्, आत्मनि तस्याभ्युपगमात्, तदर्थञ्च शरीरसम्बन्धोऽभ्युपगम्यत इति तत्सम्बन्धपरिकल्पनं मनसो व्यर्थम्, मनसि च सुखदुःखोपभोक्तृत्वाभ्युपगमे वाऽऽत्मकल्पनावैयर्थ्यम्, मनस आत्मत्वसिद्धेः ॥ १७ ॥

20 पुनरपि सुखदुःखादेरनुपपत्तिमाह—

**सुहदुक्खसम्पओगो ण जुज्जए णिच्चवायपक्खम्मि ।**
**एगंतुच्छेयम्मि य सुहदुक्खवियप्पणमजुत्तं ॥ १८ ॥**

सुखदुःखसम्प्रयोगो न युज्यते नित्यवादपक्षे ।
एकान्तोच्छेदे च सुखदुःखविकल्पनमयुक्तम् ॥ छाया ॥

25 **सुखेति**, नित्यात्मवादपक्षे अबाधालक्षणसुखेन बाधनास्वरूपदुःखेन च सम्प्रयोगः सम्बन्धो न युज्यते—न घटते, द्रव्यास्तिकाभ्युपगमे सुखस्वभावैकान्ते तत्स्वभावस्याविचलितरूपतया सदा तत्स्वभावापत्त्या न भवेद्दुःखसम्प्रयोगः, दुःखस्वभावत्वे वा तथा सदावस्थानात्सुखयोगो न स्यात् । एकान्तोच्छेदपक्षे च पर्यायास्तिकनये सुखदुःखसम्प्रयोगः क्षणिक-

तथा न स्यादेकात्मनि । तथा च पक्षद्वयेऽपि सुखार्थं दुःखवियोगार्थञ्च यद्विशिष्टं प्रयतनं तदयुक्तमेव प्रोक्तन्यायादिति ॥ १८ ॥

अथ एकान्तपक्षे सुखदुःखोपभोगाश्रयशरीरसम्बन्धनिदानादृष्टजनकनिमित्तानामप्यसम्भवमाह—

**कम्मं जोगनिमित्तं बज्झइ बन्धट्ठिई कसायवसा ।** 5
**अपरिणउच्छिण्णेसु य बंधट्ठिइकारणं णत्थि ॥ १९ ॥**

कर्म योगनिमित्तं बध्यते बन्धस्थिती कषायवशात् ।
अपरिणतोच्छिन्नेषु च बन्धस्थितिकारणं नास्ति ॥ छाया ॥

**कर्मेति,** कर्म–अदृष्टं मनोवाक्कायव्यापारलक्षणयोगनिमित्तं बध्यते–आदीयते, बन्धस्यादृष्टस्य स्थितिः–कालान्तरफलदातृत्वेनात्मन्यवस्थानं कषायवशात्, क्रोधादिसामर्थ्यात्। 10
एतदुभयमपि एकान्तवाद्यभ्युपगते आत्मचैतन्यलक्षणे भावे अपरिणते निरन्वयविनष्टे च बन्धस्थितिकारणं नास्ति, न ह्यपरिणामिनि अत्यन्तानाधेयातिशये आत्मनि क्रोधादयः सम्भवन्ति, नाप्येकान्तोत्सन्ने अनुसन्धानविकले अहमनेनाकृष्ट इति द्वेषसम्भवः, तथा-चान्य आक्रुष्टः, अन्यो रुष्टः, अन्यो व्यापृतः, अपरो बद्धः, अपरश्च मुक्त इति कुशलाकुशल-कर्मगोचरप्रवृत्त्यारम्भवैफल्यानुपपत्तिरिति ॥ १९ ॥ 15

किञ्चैकान्तवादिनां संसारनिवृत्तितत्सुखमुक्तिप्राप्त्यर्थप्रवृत्तिश्चासङ्गतेत्याह—

**बंधम्मि अपूरन्ते संसारभओघदंसणं मोज्झं ।**
**बंधं व विणा मोक्खसुहपत्थणा णत्थि मोक्खो य ॥ २० ॥**

बन्धे अपूर्यमाणे संसारभयौघदर्शनं मौढ्यम् ।
बन्धं च विना मोक्षसुखप्रार्थना नास्ति मोक्षश्च ॥ छाया ॥ 20

**बन्ध इति,** असति बन्धे जन्ममरणादिप्रबन्धलक्षणे संसारे तत्कारणे वा मिथ्यात्वादौ भयौघो–भीतिप्राचुर्यं तस्य दर्शनं–सर्वं चतुर्गतिपर्यटनं दुःखात्मकमिति पर्यालोचनं मौढ्यं–मूढता, अनुपपद्यमानसंसारदुःखौघविषयत्वान्मिथ्याज्ञानम्, वन्ध्यासुतजनितबाधागोचर-भीतिविषयपर्यालोचनवत्, मिथ्याज्ञानपूर्विका च प्रवृत्तिर्विसंवादिन्येव, बन्धेन विना संसार-निवृत्तिस्तत्सुखप्रार्थना च न भवत्येव, तथा मोक्षश्चानुपपन्नः, निरपराधपुरुषवत्, अबद्धस्य 25
मोक्षासम्भवात्, बन्धाभावश्च योगकषाययोः प्रकृतिस्थित्यनुभागप्रदेशात्मकबन्धहेत्वोरे-कान्तपक्षे विरुद्धत्वादिति ॥ २० ॥

तदेवमेकान्ताभ्युपगमे बन्धहेत्वाद्यनुपपत्तेः सर्वव्यवहारविलोप इत्येकान्तव्यवस्थापका निखिला नया मिथ्यादृष्टयः, यदा च त एव परस्परसापेक्षाः तदा सम्यक्त्वं भजन्त इत्युपसंहरति—

**तम्हा सव्वे वि णया मिच्छादिट्ठी सपक्खपडिबद्धा ।**
**अण्णोण्णणिस्सिआ उण हवंति सम्मत्तसब्भावा ॥ २१ ॥**

तस्मात्सर्वेऽपि नया मिथ्यादृष्टयः स्वपक्षप्रतिबद्धाः ।
अन्योन्यनिश्रिताः पुनर्भवन्ति सम्यक्त्वसद्भावाः ॥ छाया ॥

तस्मादिति, यस्मादेकान्तनित्यानित्यवस्त्वभ्युपगमो बन्धादिबाधितः, बन्धाद्यभ्युपगमश्च एकान्तनित्याद्यभ्युपगमबाधितः तस्मात्सर्वेऽपि नयाः स्वकीयाभ्युपगमप्रतिहतत्वान्मिथ्यादृष्टयः, एषां च ज्ञानानां मिथ्यात्वे तद्विषयस्य तदभिधानस्य च मिथ्यात्वमेव, तस्मात्सर्वनयवादा मिथ्याभूताः स्वपक्षेणैव प्रतिहतत्वात् चौरवाक्यवदिति प्रयोगः, अन्योऽन्यनिश्रिताः परस्परसापेक्षव्यवस्थिताः पुनस्त एव सम्यक्त्वस्य—यथावस्थितवस्तुप्रत्ययस्य सद्भावा भवन्ति इति न बन्धाद्यनुपपत्तिः । ननु नयाः प्रत्येकं किं सन्तः, किं वाऽसन्तः, आद्ये कथं तत्र न सम्यक्त्वम्, नयस्वरूपव्यतिरेकेणापरस्य सम्यक्त्वस्याभावात् तस्य च तेष्वभ्युपगमात्। यदि न सन्तस्तर्ह्यसतां समुदायानुपपत्त्या कथं तत्समुदायः सम्यक्त्वनिमित्तं स्यात्, भवम्, प्रत्येकमपि ह्यपेक्षितेतरांशस्वविषयग्राहकतयैव सन्तो नयाः तद्व्यतिरिक्तरूपतयाऽसन्त इति मतां तत्समुदाये सम्यक्त्वे न कश्चिद्विरोधः । तेषां समुदायोऽपि नैकदाऽनेकज्ञानोत्पादरूपः किन्तु अपरित्यक्तेतररूपविषयाध्यवसाय एव ॥ २१ ॥

अत्र विषये निदर्शनमाह—

**जहऽणेयलक्खणगुणा वेरुलियाईमणी विसंजुत्ता ।**
**रयणावलिववएसं न लहंति महग्घमुल्ला वि ॥ २२ ॥**

**तह णिययवायसुविणिच्छिया वि अण्णोण्णपक्खणिरवेक्खा ।**
**सम्मद्दंसणसद्दं सव्वे वि णया ण पावेंति ॥ २३ ॥**

**जह पुण ते चेव मणी जहा गुणविसेसभागपडिबद्धा ।**
**रयणावलि त्ति भण्णइ जहंति पाडिक्कसण्णाउ ॥ २४ ॥**

**तह सव्वे णयवाया जहाणुरूवविणिउत्तवत्तव्वा ।**
**सम्मद्दंसणसद्दं लहंति ण विसेससण्णाओ ॥ २५ ॥**

यथाऽनेकलक्षणगुणा वैडूर्यादयो मणयो विसंयुक्ताः ।
रत्नावलीव्यपदेशं न लभन्ते महार्घमूल्या अपि ॥

तथा निजकवादसुविनिश्चिता अप्यन्योन्यपक्षनिरपेक्षाः ।
सम्यग्दर्शनशब्दं सर्वेऽपि नया न प्राप्नुवन्ति ॥

यथा पुनस्ते चैव मणयो यथा गुणविशेषभागप्रतिबद्धाः । 5
रत्नावलीति भण्यंते त्यजन्ति प्रत्येकसंज्ञास्तु ॥

तथा सर्वे नयवादा यथानुरूपविनियुक्तवक्तव्याः ।
सम्यग्दर्शनशब्दं लभन्ते न विशेषसंज्ञाः ॥ छाया ॥

**यथेति,** यथाऽनेके नानाविधा लक्षणगुणा येषान्ते वैडूर्यादयो मणयः पृथग्भूता महार्घमूल्या अपि रत्नावलीव्यपदेशं न लभन्ते, अत्र लक्षणानि विषविघातहेतुत्वादीनि, गुणा 10 नीलत्वादयो बोध्याः, तथा नया अपि सर्वे इतरनिरपेक्षसामान्यादिवादे स्वकीये स्वविषयपरिच्छेदकत्वेन सुनिश्चिता अपि अन्योऽन्यपक्षनिरपेक्षत्वात् सुनया इत्येवंरूपं सम्यग्दर्शनशब्दं न प्राप्नुवन्ति, इतरांशसव्यपेक्षा अपि ते प्रत्येकं वस्त्वंशग्राहितया न वा प्रमाणमित्याख्यां प्राप्नुवन्ति । यदा तु त एव मणयो यथायोग्यं गुणविशेषपरिपाट्या प्रतिबद्धाः सन्तो रत्नावलीति व्यपदेशमासादयन्ति रत्नानुविद्धतया रत्नावल्यास्तदनुविद्धतया च रत्नानां 15 प्रतीतेः प्रत्येकाभिधानानि त्यजन्ति तथा सर्वे नयवादा यथानुरूपद्रव्यध्रौव्यादिषु प्रमाणात्मकत्वेन व्यवस्थिताः सम्यग्दर्शनशब्दं प्रमाणमित्याख्यां लभन्ते न विशेषसंज्ञाः पृथग्भूताभिधानानि न लभन्ते, एकानेकात्मकत्वेन चैतन्यप्रतिपत्तेः, अन्यथाऽप्रतिपत्तेश्चेति ॥२२-२५॥

किम्प्रयोजनं दृष्टान्तोपन्यासस्येत्याशङ्कायामाह—

**लोइयपरिच्छयसुहो निच्छयवयणपडिवत्तिमग्गो य ।** 20
**अह पण्णवणाविसउ त्ति तेण वीसत्थमुवणीओ ॥ २६ ॥**

लौकिकपरीक्षकसुखो निश्चयवचनप्रतिपत्तिमार्गश्च ।
अथ प्रज्ञापनाविषय इति तेन विश्वासार्थमुपनीतः ॥ छाया ॥

**लौकिकेति,** दृष्टान्ते हि लौकिकानां परीक्षकाणाञ्च बुद्धेः साम्यं वर्त्ततेऽतो निश्चीयमानोऽर्थः सुखग्राह्यः, तत एव स निश्चितविषयप्रतीतिजनकः, अनन्तधर्मात्मकवस्तुप्रज्ञापनाविषयो 25 दृष्टान्त इति तेन शङ्काव्यवच्छेदार्थमयमुपदर्शितः । न चावल्यवस्थायाः प्राक् पश्चाच्च रत्नानामस्ति पृथगुपलम्भः, इह च सर्वदा तथोपलम्भाभावात् विषममुदाहरणमिति वाच्यम्,

आवल्यवस्थाया एव दृष्टान्ततयोपन्यासात्, न हि दृष्टान्तदार्ष्टान्तिकयोः सर्वथा साम्यमावश्यकम्, अन्यथा दृष्टान्तत्वस्यैवानुपपत्तेः सर्वथा साम्यस्य कुत्रचिदप्यभावात् ॥ २६ ॥

दृष्टान्तस्य साध्यसमतां वदतां सांख्यादीनां मतानि निरसितुमाह—

**इहरा समूहसिद्धो परिणामकओ व्व जो जहिं अत्थो ।**
5 **ते तं च ण तं तं चेव व त्ति नियमेण मिच्छत्तं ॥ २७ ॥**

**इतरथा समूहसिद्धः परिणामकृतो वा यो यत्रार्थः ।**
**ते तच्च न तत् तदेव वेति नियमेन मिथ्यात्वम् ॥ छाया ॥**

**इतरथेति,** उक्तप्रकारादन्यथा रत्नानां समूहे सिद्धो-निष्पन्नः परिणामकृतो वा मण्यादिष्वावल्यादिः क्षीरादिषु दध्यादिर्वा इति मतम्, यो यत्रार्थस्त एव मण्यादयः क्षीरं वा
10 तत् कार्यं आवल्यादिरूपं दध्यादिरूपं वा, तत्र तत्सद्भावात्, तस्य तत्परिणामरूपत्वादित्यपरं मतम्, उभयमपि सांख्यविशेषाणाम् । किञ्चित् कार्यं समूहकृतं किञ्चिच्च परिणामकृतमिति लौकिकव्यवहारापेक्षया पृथगुपादानम्, वस्तुतस्तु सर्वेषामेव परमाणुसमूहपरिणामात्मकत्वादयं समूहकृतोऽयं परिणामकृत इति भेदो नास्ति । न तदित्यपरः पक्षः कारणेषु कार्यमसत्, ततो भिन्नमिति बौद्धवैशेषिकादयः । तदेव वा, न च कार्यं कारणं
15 वाऽस्ति द्रव्यमात्रमेव तत्त्वमिति वेदान्तिनः, एते मतवादा नियमेन मिथ्याभूताः, कथञ्चिदित्यभ्युपगमे तु सम्यग्वादाः, उत्पादव्ययध्रौव्यात्मना वस्तुनः स्थितेः, तत्तदपेक्षया च कार्यमकार्यञ्च, कारणमकारणञ्च, कारणे कार्यं सच्चासच्च, कारणं कार्यकाले विनाशवदविनाशवच्च, तथैव प्रतीतेः अन्यथा चाप्रतीतेः ॥

तत्र सत्कार्यवादाभ्युपगमो मिथ्या, कारणे हि यद्येकान्तेन कार्यं भवेत् तदा कारणस्व-
20 रूपवत् कार्यस्वरूपमपि नोत्पद्येत, अन्यथा सत एवोत्पादे उत्पत्त्यविरतिप्रसक्तिः । न वा कारणव्यापारसार्थकता, तद्व्यापारसम्पाद्यस्य कस्यचिद्रूपस्याभावात्, कार्यस्य पूर्वमेव भावात्, अन्यथाऽसत्कार्यवादप्रसङ्गात् । अभिव्यक्तिस्वीकारेऽपि तदेव दूषणम्, आवरणविनाशेऽपि न कारणव्यापारो विद्यमानस्य विनाशासम्भवात्, असतो भावस्योत्पादवत् । यथाऽन्धकारपिहितघटानुपलम्भेऽन्धकारोपलम्भः तथा न कस्यचित् कार्यावारकस्योपलम्भः न हि
25 कारणमेव कार्यावारकम्, तस्य तदुपकारकतया प्रसिद्धेः, न चालोकादि रूपज्ञानोपकारकं तदाऽऽवारकत्वेन वक्तुं शक्यम् । यदि चाऽऽवारकं मूर्त्तं न तदा कारणरूपस्य कार्यस्य तदन्तः प्रवेशः मूर्त्तस्य मूर्त्तेन प्रतिघातात्, अप्रतिघाते कार्यं यथा कारणेनावृतं तथा कारणमपि कार्येणावृतमिति नोपलभ्येत, अप्रतिघातेन तदनुप्रविष्टत्वाविशेषात् । तद्दर्शनप्रतिबन्ध-

कत्वेनान्धकारस्येव तस्यावारकत्वे चाक्षुषोपलम्भाभावेऽपि स्पार्शनः स्यात्, तस्याप्यभावे तु आवारकं तत्स्वरूपविनाशकमेव भवेत् । नापि घटादिकं प्रति पटादेरिव कारणं कार्याऽऽवारकम्, पटध्वंस इव मृत्पिण्डध्वंस एव तदावृतकार्योपलब्धिप्रसङ्गात्, एकाभिव्यञ्जकव्यापारादेव एकप्रदीपव्यापारात्सन्निहितनिखिलवस्तूपलम्भ इव सर्वव्यङ्ग्योपलम्भो भवेत् । तथा कारणसमये यदि कार्यं सत्तर्हि कारणेन तत्कथं स्वकाले इव कार्यकालेनाव्रियते कथं 5 तत्कार्यं मृत्पिण्डादिकारणकार्येनया व्यपदिश्येत, यदि कार्यं न सत्तह्यसत्त्वादेव नावृत्तिः ॥ कारणात्मकपरिणामवादोऽपि प्रतिक्षिप्त एव, न ह्यर्थान्तपरिणामाभावे परिणाम्येव कारणलक्षणोऽर्थः, पूर्वापरयोरेकत्वविरोधात् । न च परिणामाभावे परिणामिनोऽपि भावो युक्तः, परिणामित्वस्य परिणामनिबन्धनत्वात् । अभिन्नस्य हि पूर्वापरावस्थाहानोपादानात्मकतया एकस्य वृत्तिलक्षणः परिणामो न युक्तियुक्तः । तन्नैकान्ताभेदे कारणमेवानर्थान्तरकार्यरूपतया 10 परिणमत इति स्थितम् ॥ मृत्पिण्डावस्थायां घटाद्यर्थक्रियाव्यपदेशाभावादसदुत्पद्यते कार्यमित्ययमप्येकान्तो मिथ्यावाद एव, कार्योत्पत्तिकाले कारणस्याविचलितरूपस्य कार्यादव्यतिरिक्तस्य सत्त्वे पूर्वोक्तदोषप्रसङ्गात् तद्व्यतिरिक्तस्य च तस्य सद्भावे कारणस्य प्राक्तनस्वरूपेणैवावस्थानात् कार्योत्पत्तिरकारणा भवेत्, कारणस्य प्राक्तनस्वरूपापरित्यागात् परित्यागे वा कार्यकरणस्वरूपस्वीकारेण तस्यैवावस्थितत्वादनेकान्तसिद्धिः । व्यतिरेके च कारणात 15 कार्यस्य पृथगुपलम्भप्रसङ्गः । न च तदाश्रितत्वेन तस्योत्पत्तेर्न तत्प्रसङ्ग इति वक्तव्यम्, अवयविनः समवायस्य च निषेत्स्यमानत्वात् निषिद्धत्वाच्च ॥ कारणनिवृत्त्या ततो भिन्नं तत्रासदेव कार्यमित्यपि पक्षो मिथ्यैव, कारणनिवृत्तिर्हि यदि सद्रूपा तदा सा न कारणस्वरूपा वक्तुं शक्या, नित्यत्वप्रसङ्गात्, निवृत्तिकालेऽपि कारणसद्भावात्, अविचलितरूपेण मृत्पिण्डसद्भावे घटोत्पत्तेरदर्शनेन कार्यानुत्पत्तिप्रसङ्गश्च । तन्निवृत्तेः कार्यरूपत्वे 20 कारणानिवृत्तौ कार्यस्यैवानुत्पत्तेः, एवञ्च कार्यानुत्पादकत्वेन कारणस्यासत्त्वमेव । न च कार्योत्पत्तिरेव कारणनिवृत्तिः, कार्यगतोत्पत्तेः कारणगतनिवृत्तिस्वरूपत्वासम्भवात्, भिन्नाधिकरणत्वात्, कार्यरूपत्वे च परिणामवादः स्यात् कारणस्य कार्यरूपेण परिणतत्वात् ततश्च घटस्य मृत्स्वरूपवत् कपालेष्वप्युपलब्धिप्रसङ्गः । नाप्युभयरूपा तन्निवृत्तिः तन्निवृत्तिकाले युगपत् कारणकार्ययोरुपलम्भप्रसङ्गात् । न वानुभयस्वरूपा, मृत्पिण्डविनाशकाले विवक्षित- 25 मृत्पिण्डघटव्यतिरिक्ताशेषजगदुत्पत्तिप्रसक्तेः । अथ कारणनिवृत्तिरसद्रूपा तर्हि सा यदि कारणाभावस्वरूपा तदाऽकारणा कार्योत्पत्तिर्भवेत्, कारणाभावादुत्पन्नत्वात, तथा च कार्यस्य प्रतिनियतदेशकालादिनियमो न स्यात् । यदि कार्याभावरूपा न तदा कार्योत्पत्तिः स्यात् । नाप्युभयाभावस्वभावा उभयोरप्यनुपलब्धिप्रसङ्गात्, न वाऽनुभयाभावरूपा, विव-

भिन्नकारणकार्यव्यतिरेकेण सर्वस्यानुपलब्धिप्रसक्तेः, नापि च कारणभावाभावरूपा, कारणस्यानुगतव्यावृत्ततAprसक्तेः, अत एव च सदसद्रूपं स्वपररूपापेक्षया वस्त्वनेकान्तवादिभिरभ्युपगम्यते, पररूपेणेव स्वरूपेणाप्यसत्त्वे वस्तुनो निःस्वभावताप्रसक्तेः, स्वरूपवत्पररूपेणापि सत्त्वे पररूपताप्रसक्तेः, एकरूपापेक्षयैव सदसत्त्वविरोधात्, अन्यथा वस्त्वेव
5 न भवेत् । एवं कार्यभावाभावरूपापि न निवृत्तिः, कार्यस्योत्पत्त्यनुत्पत्त्युभयप्रसङ्गेनानेकान्तवादप्रसक्तेः । नापि कारणकार्यभावाभावरूपा प्रत्येकपक्षोदितसकलदोषप्रसङ्गात् । नाप्यनुभयभावाभावरूपा, अनुभयरूपस्य वस्तुनोऽभावात् । किञ्च कारणनिवृत्तिर्यदि कारणस्वरूपादभिन्ना तर्हि निवृत्तिकालेऽपि कारणस्योपलम्भप्रसङ्गः । भिन्ना चेत्सम्बन्धाभावात् कारणस्य निवृत्तिरिति न स्यात् । सङ्केतवशादभिधानप्रवृत्तावपि आधेयनिवृत्तिकालेऽधि-
10 करणस्य किं सत्त्वमसत्त्वं वा, सत्त्वे कारणविनाशानुपपत्तिः, आधेयनिवृत्त्या कारणस्वरूपाधारस्याविरोधात्, विरोधे वा कारणतन्निवृत्त्योर्यौगपद्यासम्भवात्, असत्त्वेऽप्यधिकरणत्वविरोधः असतोऽधिकरणत्वायोगात्, तस्य वस्तुधर्मत्वात्, न च कारणं निवृत्तेर्नाधिकरणं किन्तु तद्धेतुरिति वाच्यम्, निवृत्तेरुत्तरकार्यवत्तत्कार्यत्वप्रसङ्गात् तत्कार्यत्वानभ्युपगमे तु कथं तस्य निवृत्तिहेतुत्वम् । न वा कारणाहेतुका कारणनिवृत्तिः तस्या
15 नियमेन तदुत्तरकालभावित्वविरोधात् । नापि कारणहेतुका, कारणसमानकाले तदुत्पत्तिप्रसङ्गात् प्रथमक्षण एव कारणस्यानुपलब्धिप्रसक्तेः, उपलम्भे वा न कदाचित् कारणस्यानुपलब्धिर्भवेत् तन्निवृत्त्याऽविरुद्धत्वात् । न च कारणनिवृत्तिः स्वहेतुका, स्वात्मनि क्रियाविरोधात् । न च निर्हेतुकैव, कारणानन्तरमेव तस्या भावविरोधात्, अहेतोः कालादिनियमाभावात् । ननु निवृत्तिं प्रति कारणं न हेतुर्न वाऽधिकरणं किन्तु कारणं स्वयमेव न
20 भवतीति चेत्किं स्वयमभवनं स्वसत्तासमये पश्चाद्वा, आद्ये प्रथमक्षण एव निवृत्त्याऽऽक्रान्तत्वात् कारणं नोत्पद्येत तथा सति कस्य विनाशः । न द्वितीयः, तदा निवृत्तिभवने उत्पन्नानुत्पन्नतया कारणरूपाभवनयोस्तादात्म्यविरोधात्, यदि हि स्वसत्ताकाले एव न भवेत् तदा भवनाभवनयोरविरोधात् स्वयमेव भावो न भवतीति वचो घटेत नान्यथा । न च जन्मानन्तरं भावाभावस्य भावात्मकत्वात्तदव्यतिरिक्त एवाभाव इति वाच्यम्, जन्मान
25 न्तरं स एव न भवतीत्यनेनाभावस्य भावरूपतैवोक्तेत्युत्तरकालमपि कारणानिवृत्तेस्तथैवोपलब्ध्यादिप्रसङ्गात् । भावस्याभावात्मकत्वान्नायं दोष इति चेदत्रापि भावस्य पर्युदासाभावात्मकत्वं प्रसज्यरूपाभावात्मकत्वं वा, प्रथमपक्षेऽपि स्वरूपपरिहारेण तदात्मकतां प्रतिपद्यते अपरिहारेण वा, नाद्यः, स्वभवनप्रतिषेधपर्यवसानाच्च भावस्य पर्युदासाभावात्मकता स्यात्, न चासौ तथा, तद्ग्राहकप्रमाणाभावात्, तथाभूतभावग्राहकप्रमाणाभ्युपगमे च

१ पर्युदासात्मकोऽभावः स्वरूपपरिहाररूपतया न सिद्ध इत्यर्थः ।

प्रसज्यपर्युदासात्मको भावो भवेदित्यनेकान्तप्रसिद्धिः । द्वितीयपक्षेऽपि न पर्युदासः, अनिषिद्धतत्स्वरूपत्वात् पूर्वभावस्वरूपवत् । प्रसज्यरूपाभावात्मकत्वेऽपि भावस्य प्रतिषिध्यमानस्याश्रयो वक्तव्यः, न हि मृत्पिण्डरूपं कारणमाश्रयः, तस्य प्रतिषिध्यमानत्वात्, निषिध्यमानस्य चाश्रयत्वानुपपत्तेः । नापि घटलक्षणं कार्यमाश्रयः, कारणनिवृत्तेर्हि प्राग् घटस्यासत्त्वेन अयमिति प्रत्ययाविषयत्वात्, अयम्प्रत्ययविषयत्वे च अयं ब्राह्मणो न भवति 5 ब्राह्मणादन्योऽयमिति च प्रसज्यपर्युदासव्यवहारो दृष्टो नान्यथेति प्रतिषेधप्रधानविध्युपसर्जनविधिप्रधानप्रतिषेधोपसर्जनयोः शब्दयोः प्रवृत्तिनिमित्तधर्मद्वयाधारभूतं द्रव्यं विषयत्वेनाभ्युपगन्तव्यमन्यथा तदयोगात्, तथा चानेकान्तवादापत्तिरयत्नसिद्धेति तथाभूतस्य तस्य वस्तुनः प्रमाणबलायातस्य निषेद्धुमशक्यत्वात् । एकान्तेन घटस्योत्पत्तेः प्रागस्तित्वे क्रियायाः प्रवृत्त्यभावः फलसद्भावात्, तत्सद्भावेऽपि प्रवृत्तावनवस्थाप्रसक्तेः । 10 कारणेऽप्येतदविशेषतस्तद्वत्प्रसङ्गे द्वयोरप्यभावप्रसङ्गः, न चैतदस्ति तथाऽप्रतीतेः, तन्न मृत्पिण्डे घटस्य सत्त्वम् । नाप्येकान्ततोऽसत्त्वम्, मृत्पिण्डस्यैव कथञ्चिद्धटरूपतया परिणतेः, सर्वात्मना पिण्डनिवृत्तौ पूर्वोक्तदोषानतिवृत्तेः घटसदसत्त्वयोराधारभूतमेकं द्रव्यं मृल्लक्षणमेकाकारतया मृत्पिण्डघटयोः प्रतीयमानमभ्युपगन्तव्यम् । न च कारणप्रवृत्तिकाले कारणगता मृद्रूपता तन्निवृत्तिकाले च कार्यगता सा परैव, नोभयत्र मृद्रूपताया 15 एकत्वमिति वक्तव्यम्, भेदप्रतिपत्तावपि मृत्पिण्डघटरूपतया कथंचिदेकत्वस्याबाधितप्रत्ययगोचरत्वात्, उपलभ्यत एव हि कुम्भकारव्यापारसव्यपेक्षं मृद्द्रव्यं पिण्डाकारपरित्यागेन शिबकाद्याकारतया परिणममानम्, न हि तत्रेदं कार्यमाधेयभूतं भिन्नमुपजातं पङ्के पङ्कजवदिति प्रतिपत्तिः नापि तत्करणनिर्वर्त्यतया, दण्डोत्पादितघटादिवत् । नापि तत्कर्तृतया, कुलालजन्यघटवत्, नापि तदुपादानतया, वृक्षजन्यफलवत्, तस्मात्पूर्वपर्यायविनाश 20 उत्तरपर्यायोत्पादात्मकः, तद्देशकालत्वात्, उत्पादात्मवत्, अभावरूपत्वाद्वा प्रदेशस्वरूपघटाद्यभाववत्, प्रागभावाभावरूपत्वाद्वा घटस्वात्मवत्, एवमनभ्युपगमे पूर्वपर्यायध्वंसादुत्तरस्य चानुत्पत्तेः शून्यताप्रसक्तिरिति । उत्तरपर्यायोत्पादाभ्युपगमे वा तदुत्पादः पूर्वपर्यायप्रध्वंसात्मकः, प्रागभावाभावरूपत्वात् प्रध्वंसाभाववत् । न च प्राक्तनपर्यायविनाशात्मकत्वे उत्तरपर्यायभवनस्य, तद्विनाशे पूर्वपर्यायोन्मज्जनप्रसक्तिः, वस्तुनोऽभावाभावमात्रत्वानभ्युपगमा- 25 त्तस्य प्रतिनियतपरिणतिरूपत्वात्, भावाभावोभयरूपतया प्रतिनियतस्य वस्तुनः प्रादुर्भावे मुद्गरादिव्यापारानन्तरमुपलभ्यमानस्य कपालादेरभावस्य नाहेतुकता । न चोभयस्यैकव्यापारा-

---

१ कारणेऽपि सत्त्वाविशेषात् कार्यवत्क्रियाया. प्रसंगे कारणकार्ययोरप्यभावप्रसंगः, जलाहरणादि क्रियाया अदर्शनतस्तथा तत्र कार्यस्याभावो वाच्यः तदभावे च कारणस्याप्यभावः कार्यवत एव कारणस्यांगीकारात् ॥

दुत्पत्तिविरोधः, तथाप्रतीयमाने विरोधासिद्धेः, ततस्तद्विपरीत एव विरोधसिद्धेरुभयैकान्ते प्रमाणानवतारात् । तथात्मकैकत्वेन प्रतीयमानं प्रति हेतोर्जनकविरोधे घटक्षणसत्तायाः स्व-परविनाशोत्पादकत्वं विरुद्ध्येत, एवञ्चाकारणा घटक्षणान्तरोत्पत्तिर्भवेत् । न च विनाशस्य प्रसज्यपर्युदासपक्षद्वयेऽपि व्यतिरिक्ताव्यतिरिक्तादिविकल्पतो हेत्वयोगान्निर्हेतुकता युक्ता,
5 सत्ताहेतुत्वेऽपि तथा विकल्पनस्य समानत्वेन प्राक् प्रदर्शितत्वात्, तस्मान्नैकान्ततः कार-णेषु कार्यमसदिति युक्तम् । तदेव वेति पक्षोऽप्ययुक्तः, स ह्यद्वैतवादिनाम्, तन्मते कार्यका-रणभावस्य काल्पनिकत्वात्, मतमिदमपि मिथ्यैव, स्वकार्यकारणोभयशून्यत्वात्, खर-विषाणवत्, अद्वैतमात्रस्य गगनकुसुमसदृशत्वात्, अद्वैते प्रमाणाङ्गीकारे हि द्वैतापत्तिः, अनङ्गीकारे तदसिद्धिश्च । अद्वैतस्य प्रसज्यप्रतिषेधरूपतायां प्रतिषेधमात्रे पर्यवसितत्वेना-
10 द्वैतासिद्धिः, पर्युदासपक्षेऽपि द्वैतप्रसङ्गः, द्वैताद्वैतस्य व्यतिरेकात्, न हि द्वैताद्विना अद्वैतं सम्भवति हेतुना विनाऽहेतुरिव । न चाऽविद्यमानाद् द्वैताद्व्यावृत्ततासम्भवः, अविद्यमानस्यापि विद्यमानाद्व्यावृत्तिप्रसक्तेः, अन्यथा सद्रूपताया अविशेषप्रसक्तिः । तस्मादेते वादाः कारणे परिणामिनि वा कार्यं परिणामो वा सदेव, तत्र कारणेऽसदेव, न कारणमेव कार्यं परिणामी वा, परिणामस्तत्रैव किन्तु तौ पृथग्भूतावेव, न कार्यं नापि कारणं परन्तु द्रव्यमात्रं तत्त्व-
15 मिति तदेव वेति नियमेनैकान्ताभ्युपगमे मिथ्याभूता एव ।। २७ ।।

तस्मादेकान्तरूपस्य वस्तुनोऽभावेनान्यनयविषयपरिहारेण निजविषये प्रवर्त्तमाना अपि नयाः स्वविषयपरिच्छेदनसमर्था अपि मिथ्यारूपा एवेत्युपसंहरति—

**णिययवयणिज्जसच्चा सव्वनया परवियालणे मोहा ।**
**ते उण ण दिट्ठसमओ विभयइ सच्चे व अलिए वा ।। २८ ।।**

20 निजकवचनीयसत्याः सर्वनयाः परविचालने मोहाः ।
तान् पुनर्न दृष्टसमयो विभजते सत्यान् वाऽलीकान् वा ।। छाया ।।

**निजकेति**, सर्वे सङ्ग्रहादयो नया निजपरिच्छेद्यविषये सम्यग्ज्ञानरूपा अपि परनय-परिच्छेद्यविषयोन्मूलने प्रवृत्ता मिथ्याप्रत्यया भवन्ति, स्वविषयस्येव परनयविषयस्यापि सत्य-त्वेनोन्मूलयितुमशक्यत्वात्, अन्यथा स्वविषयोऽपि न स्यात्, तथा च सति निर्विषयत्वेन
25 प्रत्ययो मिथ्याभूतो भवेत्, तद्भिन्नस्य तद्ग्राहकप्रमाणस्याभावात्, अतस्तानेव नयान् दृष्ट-समयः विज्ञातानेकान्तात्मकवस्तुतत्त्वः सत्येतरतया स्वेतरविषयमवधार्यमाणोऽपि स्वेतर-विषयतया तान्न विभजते, अपि तु इतरनयसव्यपेक्षमेव स्वनयाभिप्रेतं विषयं सत्यमेवा-वधारयति, ग्राह्यसत्यासत्याभ्यां ग्राहकसत्यासत्ये इत्येवमभिधानम्, तच्च दृष्टानेकान्ततत्त्व-स्य विभजनं स्यादस्त्येव द्रव्यार्थत इत्येवंरूपम् ।। २८ ।।

अतो नयप्रमाणात्मकैकरूपताव्यवस्थितमात्मस्वरूपमनुगतव्यावृत्तात्मकम्, उत्सर्गापवा-दरूपग्राह्यग्राहकात्मकत्वाद्व्यवतिष्ठत इत्यर्थप्रदर्शनायाह—

**दव्वट्ठियवत्तव्वं सव्वं सव्वेण णिच्चमवियप्पं ।**
**आरद्धो य विभागो पज्जववत्तव्वमग्गो य ॥ २९ ॥**

द्रव्यार्थिकवक्तव्यं सर्वं सर्वेण नित्यमविकल्पम् । 5
आरब्धश्च विभागः पर्यववक्तव्यमार्गश्च ॥ छाया ॥

द्रव्यार्थिकेति, सङ्ग्रहादेर्द्रव्यार्थिकस्य यत्किञ्चित्सदादिरूपेण व्यवस्थितं वस्तु परिच्छेद्यं तत्सर्वं सर्वेण प्रकारेण सर्वकालमविकल्पं निर्भेदम्, प्रमाणविषयस्य च सर्वस्य सदसद्विशेषा-त्मकत्वात्, द्रव्यार्थिकपरिच्छेद्यं वस्तु च भेदेन सम्पृक्तम्, तथा हि च स एवाविभागः, यो द्रव्यादिनाऽऽकारेण सत्तारूपः, पर्यायवक्तव्यमार्गश्च पर्यायास्तिकस्य यद्वक्तव्यं विशेषस्तस्य 10 मार्गो जातः, पर्यायार्थिकपरिच्छेद्यस्वभावो विशेषः सम्पन्न इति यावत् ॥ २९ ॥

एवं भेदाभेदरूपं वस्तूपदर्श्य पर्यायार्थिकविषयस्य भेदस्य द्वैविध्यमाह—

**सो उण समासओ च्चिय वंजणणिअओ य अत्थणिअओ य ।**
**अत्थगओ य अभिण्णो भइयव्वो वंजणवियप्पो ॥ ३० ॥**

स पुनः समासत एव व्यंजननियतश्चार्थनियतश्च । 15
अर्थगतश्चाभिन्नो भाज्यो व्यञ्जनविकल्पः ॥ छाया ॥

स इति, स विभागस्तु व्यञ्जननयनिबन्धनोऽर्थनयनिबन्धनश्चेति द्विविधः, अर्थगत-स्तु विभागोऽभिन्नः, सङ्ग्रहव्यवहारर्जुसूत्रार्थप्रधाननयविषयोऽर्थपर्यायोऽभिन्नः, असद्द्रव्या-तीतानागतव्यवच्छिन्नाभिन्नार्थपर्यायरूपत्वात्तद्विषया नया अपि अर्थगतो विभागोऽभिन्न इत्युच्यन्ते । भाज्यो व्यञ्जनविकल्प इति, विकल्पितः शब्दपर्यायो भिन्नोऽभिन्नश्च, अनेकाभि- 20 धान एकः, एकाभिधानश्चैक इति कृत्वा, समानलिङ्गसंख्याकालादिरनेकशब्दो घटः कुटः कुम्भ इत्यादिक एकार्थ इति शब्दनयः, समभिरूढस्तु भिन्नाभिधेयौ घटकुटशब्दौ भिन्नप्रवृ-त्तिनिमित्तत्वात् रूपरसादिशब्दवदित्येकार्थे एकशब्द इति मन्यते, एवम्भूतस्तु चेष्टासमय एव घटो घटशब्दवाच्योऽन्यथाऽतिप्रसङ्गात् । तदेवमभिन्नोऽर्थो वाच्योऽस्येत्यभिन्नार्थो घट-शब्द इति मन्यते ॥ ३० ॥ 25

तदन्यतो विभक्तेन स्वरूपेणैकमनेकञ्च यद्वस्तूक्तं तदनन्तप्रमाणमित्याख्यातुमाह—

**एगदवियम्मि जे अत्थपज्जवा वयणपज्जवा वावि ।**
**तीयाणागयभूया तावइयं तं हवइ दव्वं ॥ ३१ ॥**

एकद्रव्ये येऽर्थपर्यवा वचनपर्यवा वापि ।
अतीतानागतभूता तावत्कं तद्भवति द्रव्यम् ॥ छाया ॥

एकेति, एकस्मिन् जीवादिद्रव्येऽर्थपर्यायाः, अर्थग्राहकाः सङ्ग्रहव्यवहारर्जुसूत्राख्याः तद्ग्राह्या वा अर्थास्तथा वचनपर्यायाः शब्दनयाः शब्दसमभिरूढैवम्भूतास्तत्परिच्छेद्या वा
5 वस्त्वंशास्ते अतीतानागतवर्त्तमानरूपतया सर्वदा विवर्त्तन्ते विवृत्ता विवर्त्तिष्यन्त इति तेषामानन्त्याद्वस्त्वपि तावत्प्रमाणं भवति, तथाहि अनन्तकालेन सर्वेण वस्तुना सर्वावस्थानां परस्परानुगमेनाऽऽसादितत्वादवस्थातुश्चावस्थानां कथञ्चिदनन्यत्वाद्घटादिवस्तु पटपुरुषादिरूपेणापि कथञ्चिद्विवृत्तमिति सर्वं सर्वात्मकं कथञ्चिदिति स्थितम्, दृश्यते चैकं पुद्गलद्रव्यमतीतानागतवर्त्तमानद्रव्यगुणकर्मसामान्यविशेषपरिणामात्मकं युगपत् क्रमेणापि तत्तथाभूतमेव,
10 एकान्तासत उत्पादायोगात् सतश्च निरन्वयविनाशासम्भवादिति ॥ ३१ ॥

वस्तूनां यथानेकान्तात्मकत्वं तथा तत्प्रतिपादकवाक्यनयानामपि तथाविधमेव स्वरूपमिति, अर्थव्यञ्जनपर्यायैः शक्तिव्यक्तिरूपैरनन्तैरनुगतोऽर्थः सविकल्पो निर्विकल्पश्च प्रत्यक्षतोऽवगतः, सम्प्रति पुरुषदृष्टान्तद्वारेण व्यञ्जनपर्यायं तदविकल्पकत्वनिबन्धनमर्थपर्यायञ्च तत्सविकल्पकत्वनिमित्तमिति च दर्शयितुमाह—

15 पुरिसम्मि पुरिससद्दो जम्माई मरणकालपज्जंतो ।
तस्स उ बालाईआ पज्जवजोया बहुवियप्पा ॥ ३२ ॥

पुरुषे पुरुषशब्दो जन्मादिर्मरणकालपर्यन्तः ।
तस्य तु बालादयः पर्यययोगा बहुविकल्पाः ॥ छाया ॥

पुरुष इति, अतीतानागतवर्त्तमानानन्तार्थव्यञ्जनपर्यायात्मके पुरुषवस्तुनि पुरुष इति
20 शब्दस्य वाच्योऽर्थः जन्मादिर्मरणपर्यन्तः अभिन्न इत्यर्थः पुरुष इत्यभिन्नाभिधानप्रत्ययव्यवहारप्रवृत्तेः, तस्यैव पुरुषवस्तुनो बालादयः पर्याययोगाः परिणतिसम्बन्धा बहुविकल्पाः अनेकभेदाः प्रतिक्षणसूक्ष्मपरिणामान्तर्भूता भवन्ति, तत्रैव तथाव्यतिरेकज्ञानोत्पत्तेः, एवञ्च स्यादेकः इत्यविकल्पः, स्यादनेक इति सविकल्पः सिद्धः, अन्यथाभ्युपगमे तदभाव एवेति विपक्षे बाधामग्रिमगाथया दर्शयिष्यति, इति प्रथमावतरणिकानुसार्यर्थः । अपरावतरणि-
25 कापक्षे पुरुषवस्तुनि पुरुषध्वनिर्व्यञ्जनपर्यायः, शेषो बालादिधर्मकलापोऽर्थपर्याय इति समुदायार्थः ॥

अत्र कोऽयं पुरुषशब्दः, कथं वा शब्दोऽर्थस्य पर्यायः, ततोऽत्यन्तभिन्नत्वात्, घटस्येव पट इति, तत्र वैयाकरणाः वर्णेभ्यो भिन्नः अर्थबोधहेतुः स्फोटाख्यः शब्दो ज्ञायते, श्रावण-

विज्ञाने वर्णातिरिक्तस्य स्फोटस्य निरवयवस्याक्रमस्य स्फुटं प्रतिभासनात् । श्रवणव्यापारानन्तरं हि अभिन्नार्थावभासा संविदनुभूयते, न चासौ वर्णविषया, वर्णानां परस्परं व्यावृत्तरूपत्वादेकावभासजनकत्वविरोधात्, तदजनकस्य चातिप्रसङ्गेन तद्विषयकत्वानुपपत्तेः । न चेयं सामान्यविषया, वर्णत्वान्यापरसामान्यस्य गकारौकारविसर्जनीयेष्वसम्भवात्, वर्णत्वस्य च प्रतिनियतार्थबोधकत्वायोगात्, गकारौकारविसर्गास्तु न ककुदादिमदर्थप्रत्यायकतया शब्दव्यपदेशभाजः, न हि ते व्यस्ता अर्थप्रत्यायकाः, वर्णेनैकेनैव गवाद्यर्थप्रतीत्युत्पादेऽपरवर्णोच्चारणवैयर्थ्यप्रसङ्गात्, समुदायश्च तेषां न सम्भवति, क्रमोत्पादात् क्षणिकत्वाच्च, भिन्नपुरुषापेक्षया युगपदुत्पन्नानां समुदायादर्थप्रतिपत्तेरदर्शनात्, प्रतिनियतक्रमवर्णप्रतिपत्त्युत्तरकाले हि शाब्दी प्रतिपत्तिः संवेद्यते । अथ पूर्ववर्णानुगृहीतोऽन्त्यो वर्णः क्रमोत्पन्नः स्वार्थं बोधयतीति चेन्न, पूर्ववर्णानामन्त्यवर्णं प्रत्यनुग्राहकत्वायोगात्, न हि पूर्वः पूर्वो वर्ण उत्तरोत्तरवर्णं प्रति जनको येनान्त्यवर्णं प्रति पूर्वेषामुपकारित्वं भवेत्, वर्णाद्वर्णान्तरोत्पत्तेरभावात्, प्रतिनियतस्थानकरणादित एव तदुत्पत्तेः, वर्णाभावेऽपि वर्णोत्पत्तेर्दर्शनाच्च । न चार्थज्ञानोत्पत्तौ पूर्ववर्णानां सहकारित्वमेवान्त्यवर्णं प्रत्युपकारित्वमिति वाच्यम्, अन्त्यवर्णकाले तेषामभावेन सहकारित्वायोगात् । अत एव न प्राक्तनवर्णज्ञानानामपि सहकारित्वम् । नापि पूर्ववर्णज्ञानजसंस्काराः सहकारिणः, संस्काराणां स्वजनकविज्ञानविषयकस्मृतावेव हेतुत्वात् । न वा तत्स्मृतयः सहकारिण्यः, तासां युगपदनुत्पत्तेः क्रमोत्पन्नानाञ्चावस्थानासम्भवात्, ततोऽवश्यं वर्णव्यतिरिक्तोऽर्थप्रत्यायकः स्फोटाख्यः शब्दोऽभ्युपेयः, स च नित्यो व्यापकश्च सर्वत्रैकरूपतया प्रतिपत्तेरिति वदन्ति । वैशेषिकास्तु पूर्वपूर्ववर्णध्वंसविशिष्टोऽन्त्यो वर्णोऽर्थबोधकः, न चाभावस्य सहकारित्वं विरुद्धम्, वृन्तफलसंयोगाभावस्याप्रतिबद्ध गुरुत्वफलप्रपातक्रियाजनने, परमाणौ पूर्वरूपप्रध्वंससहकृतोऽग्निसंयोगस्य च रक्तोत्पादे सहकारदर्शनात् । अथवा पूर्ववर्णविज्ञानसम्भूतसंस्कारापेक्षोऽन्त्यो वर्णः पदार्थप्रतिपत्तिं जनयति, न च संस्कारो विषयान्तरविज्ञानजनकः कथमिति शङ्क्यम्, तद्भावभावितयाऽर्थबोधोपलब्धेः, पूर्ववर्णविज्ञानजन्यसंस्कारश्चान्त्यवर्णसहायतामित्थं प्रतिपद्यते, आदौ हि वर्णे श्रुते तत्संस्कारस्ततो द्वितीयवर्णश्रुतिः ततः पूर्वसंस्कारसहितो विशिष्टः संस्कारः, ततस्तृतीयवर्णविज्ञानं ततः पूर्वसंस्कारविशिष्टो विशिष्टतरः संस्कारः, इत्येवं यावदन्तिमो वर्णो विशिष्टसंस्कारसहायः, अथवा तथाविधसंस्कारप्रभवस्मृत्यपेक्षोऽन्त्यो वर्णः पदरूपोऽर्थबोधहेतुरिति । तदेवं यथोक्तसहकारिकारणापेक्षादन्त्याद्वर्णादर्थप्रतिपत्तिरन्वयव्यतिरेकाभ्यामुपजायमानतया निश्चीयमाना स्फोटकल्पनां दूरीकरोति, स्फोटव्यतिरेकेणाप्यर्थप्रतिपत्तेरुक्तरूपेण सम्भवेनान्यथानुपपत्तेरभावात्, दृष्ट-

कारणादेव कार्योत्पत्तौ न ह्यदृष्टकारणपरिकल्पना ज्यायसी, अतिप्रसङ्गात् । किञ्च स्फोटाभिव्यक्तावपि न वर्णानां सामर्थ्यमस्ति, समस्ता हि ते न स्फोटमभिव्यञ्जयन्ति सामस्त्यासम्भवात्, नाप्येकैकशः, अन्यवर्णवैयर्थ्यप्रसङ्गात् एकेनैव तदभिव्यक्तिजननात् । न च पूर्ववर्णैः स्फोटस्य संस्कारेऽन्त्यो वर्णस्तस्याभिव्यञ्जक इति न वर्णानां वैयर्थ्यमिति वाच्यम्,
5 अभिव्यक्त्यतिरिक्तसंस्कारस्वरूपानवधारणात्, वेगस्थितिस्थापकलक्षणौ हि संस्कारौ मूर्तभाविनौ नामूर्ते स्फोटे सम्भवतः, वासनालक्षणोऽपि नाचेतने स्फोटे, तस्य चैतन्यस्वीकारे तु स्वसिद्धान्तव्याघातः, न वा संस्कारः स्फोटस्वरूपः, वर्णैस्तस्य जन्यत्वापत्तेः, नापि ततो भिन्नस्तद्धर्मरूपः, सम्बन्धानुपपत्तेः तत्कृतोपकाराभावात्, अव्यतिरिक्तोपकाराभ्युपगमे स्फोटस्य तज्जन्यताप्रसक्तिः, व्यतिरिक्तोपकारस्वीकारे तु तस्यानभिव्यक्तस्वरूपस्य सद्भावेन
10 न पूर्ववदर्थप्रतिपत्तिहेतुत्वम्, तत्स्वरूपत्यागे चानित्यताप्रसङ्गः । न च संस्कारसहायोऽसावविचलितस्वरूप एवार्थप्रतिपत्तिं जनयति, एककार्यकारित्वस्यैव सहकारित्वरूपत्वात्, न त्वतिशयोत्पादकस्य सहकारित्वमिति वाच्यम्, तथा सत्यन्यकृतोपकारनिरपेक्षाणां वर्णानामेककार्यनिर्वर्त्तनलक्षणसहकारित्ववत् सहकारिसहितानामर्थप्रतिपत्तिसम्भवेन स्फोटकल्पनानर्थक्यात् । किञ्च स्फोटस्य संस्कारः, किं स्फोटविज्ञानजननं किं वा तदावरणदूरीकरणम्, न
15 प्रथमः वर्णानामर्थप्रतिपत्तिजनन इव स्फोटप्रतिपत्तिजननेऽपि सामर्थ्याभावात्, न्यायस्य समानत्वात् । न द्वितीयः, एकत्रैकदा तदावरणापाये सर्वदेशस्थैः सर्वदा व्यापिनित्यरूपतया स उपलभ्येत, अपगतावरणस्य तस्य नित्यत्वव्यापित्वाभ्यां सर्वत्र सर्वदोपलभ्यस्वभावत्वात्, अनुपलभ्यस्वभावत्वे वा न केनचित् कदाचित् कुत्रचिदुपलभ्येत । यदि त्वेकदेशेनावरणापगमः स्वीक्रियते तर्ह्यावृतानावृतत्वेन सावयवताप्रसङ्गः । अपि च एकदेशास्ते
20 यदि स्फोटादर्थान्तरभूताः शब्दस्वरूपाश्च तदा तेषां गोशब्दस्वभावत्वे गोशब्दानेकत्वप्रसङ्गः, अगोशब्दस्वभावत्वे तु गवार्थप्रत्यायकत्वं न स्यात् । यदि ते स्फोटात्मकास्तर्हि स्फोट एव संस्कृत इति सर्वदेशावस्थितानां व्यापिनस्तस्य प्रतिपत्तिप्रसक्तिः । एवं वायूनामपि स्फोटव्यञ्जकत्वं निरस्तम्, वायूनां व्यञ्जकत्वे वर्णवैयर्थ्यप्रसङ्गः, स्फोटाभिव्यक्तौ अर्थप्रतिपादने वा तेषामनुपयोगात् । तथा स्फोटस्य वर्णोच्चारणात् प्राक् सद्भावे वर्णानां
25 वायूनां वा व्यञ्जकत्वं स्यात्, न च तत्सद्भावः कुतश्चित् प्रमाणादवगत इति न तत्परि-

१ एकपदघटकैकवर्णाभिव्यक्तस्फोटप्रतिपन्नार्थादन्यपदाभिव्यक्तस्फोटप्रतिपन्नार्थव्यवच्छेदार्थं वर्णान्तरोच्चारणमिति चेन्न, तदुच्चारणेऽपि तत्प्रतिपत्तेरेवानुषङ्गात्, गौरिति पदस्यार्थो हि गकारोच्चारणाद्यथा प्रतीयते तथौकारोच्चारणादौशनस इति पदार्थोऽपि तथा च गौरिति पदादेव गौः औशनस इति पदद्वयं प्रतीयेत, तथा किमेकपदस्फोटाभिव्यक्तये गाद्यनेकवर्णोच्चारणमपरपदस्फोटव्यवच्छेदेन, किंवाऽनेकपदस्फोटाभिव्यक्तय इति संशयो वा स्यादित्यपि बोध्यम् ॥

कल्पना युक्ता । न च प्रत्यभिज्ञाज्ञानं स्फोटस्य नित्यत्वप्रसाधकं वर्णोच्चारणात् प्रागप्य-
स्तित्वमवबोधयतीति वाच्यम्, तस्य सादृश्यनिबन्धनत्वेनात्र विषयेऽप्रवृत्तेः, एकगो-
व्यक्तौ सङ्केतिताद्गोशब्दाद्गोव्यक्त्यन्तरेऽन्यत्रान्यदा च नित्यत्वमन्तरेणापि प्रतिपत्तिस-
म्भवात् । न वाऽध्यक्षं स्फोटमवभासयति, घटादिशब्देषु परस्परव्यावृत्तानेकवर्णव्यति-
रिक्तस्य स्फोटात्मनोऽर्थप्रत्यायकस्यैकस्याध्यक्षप्रतिपत्तिविषयत्वेनाप्रतिभासनादिति वदन्ति । 5
अथ गकाराद्यानुपूर्वीविशिष्टोऽन्त्यो वर्णो विशिष्टानुपूर्वीका वा गकारौकारविसर्जनीयाः
शब्दः, तथा चोक्तम् 'यावन्तो यादृशा ये च यदर्थप्रतिपादकाः । वर्णाः प्रज्ञातसामर्थ्या-
स्ते तथैवावबोधकाः ॥ [ श्लो० वा० स्फोटवा० श्लो० ६९ ] इति मीमांसकाः, तन्न युक्तम्,
आनुपूर्व्या वर्णाव्यतिरेके व्यस्तानां वा समस्तानां वर्णानामर्थबोधाजनकत्वस्योक्तत्वात्,
व्यतिरेके न साऽनित्या, स्वसिद्धान्तविरोधात्, वैदिकानुपूर्व्या नित्यत्वेनाभ्युपगमात्, नापि 10
नित्या, स्फोटपक्षोदितनिखिलदोषानुषङ्गात् । न वा वैदिकी वर्णानुपूर्वी नित्या, लौकिकवदा-
नुपूर्व्यविशेषात् । न वा तदानुपूर्व्या वैलक्षण्यम्, अपौरुषेयत्वलक्षणवैलक्षण्यस्य प्रागेव
निरस्तत्वात्, वैचित्र्यलक्षणवैलक्षण्यस्य चानित्यत्वेनाविरोधान्नित्यत्वाप्रसाधकत्वात्, लौ-
किकवाक्येष्वपि वैचित्र्यस्योपलब्धेश्च । नापि वर्णानां नित्यत्वाद् व्यापित्वाच्चानुपूर्वी
सम्भवति, देशकालकृतक्रमानुपपत्तेः । न चाभिव्यक्त्यानुपूर्वी तेषां सम्भवति, अभिव्यक्तेः 15
पूर्वं निरस्तत्वात् । पूर्वपूर्ववर्णज्ञानजन्यसंस्कारसहितस्तत्स्मृतिसहायो वाऽन्त्यो वर्णः पद-
मिति वैशेषिकाभ्युपगमोऽपि न युक्तः संस्कारस्मरणादेरनुपलभ्यमानस्य तत्सहकारित्वकल्प-
नायां प्रमाणाभावात् तदन्यथानुपपत्तेरप्यभावात् । आनुपूर्वीसम्भवेऽपि न परपक्षे अर्थ-
प्रतिपत्तिहेतवो वर्णा भवितुमर्हन्ति, अर्थप्रतिपत्तिजनकस्वभावत्वे अजनकस्वभावत्वे वा नित्यं
प्रतिपत्तेरप्रतिपत्तेर्वा प्रसङ्गात् । किञ्च नित्यसम्बन्धवादिनां तदपेक्षया वर्णानां नार्थप्रत्यायक- 20
त्वं सम्भवति, नित्यस्यानुपकारकतयाऽपेक्षणीयत्वायोगात् । न वा शब्दार्थयोर्नित्यः सम्बन्धः
प्रमाणसिद्धः, प्रत्यक्षेण तदननुभवात्, तदभावे च नानुमानेन तत्सिद्धिः, तस्य तत्पूर्वकत्वाभ्यु-
पगमात् । ननु शब्दार्थयोर्यदि स्वाभाविकः सम्बन्धो न भवेत्तदा न भवेद्गवादिशब्दश्रवणेन
ककुदादिमतोऽर्थस्य प्रतिपत्तिर्न चैवम्, तस्मादस्ति काचन शक्तिरर्थवाचिकेति चेन्न, अविज्ञात-
सम्बन्धस्यापि ततोऽर्थबोधप्रसङ्गात् । न च संकेताभिव्यक्तस्यैव स्वाभाविकसम्बन्धस्यार्थ- 25
प्रत्यायकत्वम्, सङ्केतादेवार्थप्रतिपत्त्या स्वाभाविकसम्बन्धकल्पनावैयर्थ्यप्रसङ्गात् । सङ्केताद्धि

---

१ वाच्यवाचकसामर्थ्यस्य श्रोत्रादीन्द्रियेऽसाधारणरूपेणाप्रतिभासनात्, तत्सामर्थ्यस्यातीन्द्रियत्वात् । न ह्य-
तीन्द्रियं प्रतिपत्त्यङ्गम्, ज्ञापकस्य निश्चयापेक्षकत्वात्, सन्निधिमात्रेण ज्ञापनेऽतिप्रसङ्गात् । न वाऽनुमानगम्य,
ज्ञानस्य वाऽर्थस्य वा शब्दस्य वा तल्लिङ्गस्य तेन सम्बन्धासिद्धेः, न हि तत्तादात्म्यं तदुत्पत्तिर्वा लिङ्गस्य, तस्या-
नित्यत्वप्रसङ्गादिति बोध्यम् ॥

शब्देनानेनेत्थम्भूतमर्थं व्यवहारिणः प्रतिपादयन्तीत्यवगत्य व्यवहारकाले पुनस्तथाभूतशब्दश्रवणात्सङ्केतस्मरणे तत्सदृशं तं वाऽर्थं प्रतिपद्यन्ते, न पुनः स्वाभाविकं सम्बन्धमवगत्य पुनस्तत्स्मरणेऽर्थमवगच्छन्ति । न च स्वाभाविकसम्बन्धव्यतिरेकेण वाच्यवाचकयोः सङ्केतकरणेऽनवस्थेति वाच्यम्, वृद्धव्यवहारात् प्रभूतशब्दानां वाच्यवाचकस्वरूपावधारणात्, प्रयो-
5 ज्यप्रयोजकयोर्व्युत्पन्नयोर्घटमानयेति शब्दप्रयोगतथानुष्ठाने पश्यन्नव्युत्पन्नसंकेतो बालोऽनेन घटशब्दात् घटार्थः प्रतिपन्नः, आनयशब्दाच्चानयनक्रिया, अन्यथाऽपरनिमित्ताभावेऽपीदृशानुष्ठानमेतद्वाक्यश्रवणानन्तरं कथं विदध्यादित्यव्युत्पन्नानां सङ्केतावधारणादिति कथमनवस्था भवेत् । न च प्रथमसंकेतविधायिनो विना स्वाभाविकसम्बन्धेन वाच्यवाचकयोः कुतो वाच्यवाचकरूपावगतिरिति वाच्यम, अनादित्वादस्य व्यवहारस्यापरा-
10 परसङ्केतविधायिपूर्वकत्वेन निर्दोषत्वात् । न च वाच्यवाचकसम्बन्धस्य पुरुषकृतत्वे शब्दवदर्थोऽपि वाचकः स्यादिति वाच्यम्, योग्यताऽनतिक्रमेण सङ्केतकरणात् । न च स्वाभाविकसम्बन्धव्यतिरेकेण प्रतिनियतयोग्यताया अप्यभाव इतिवाच्यम्, कृतकत्वेऽपि प्रतिनियतयोग्यतावतां भावानामुपलब्धेः, तथाहि यत्र लोहत्वं छेदिकाशक्तिस्तत्रैव क्रियमाणा दृष्टा न जलादौ, यत्रैव तन्तुत्वमस्ति तत्रैव निष्पाद्यते पटोत्पादनशक्तिर्न तु वीरणादौ,
15 तत्र तन्तुत्वाभावात्, एवञ्च यद्यथोपलभ्यते तत्तथैवाभ्युपगन्तव्यम्, दृष्टानुमितानां नियोगप्रतिषेधानुपपत्तेः, तेन यत्रैव वर्णत्वादिकं निमित्तं तत्रैव वाचिका शक्तिः सङ्केतेनोत्पाद्यते, यत्र तन्नियतं निमित्तं नास्ति न तत्र वाचिका शक्तिरिति न नित्यवाच्यवाचकसम्बन्धपरिकल्पनया प्रयोजनम् । एकान्तनित्यस्य तु ज्ञानजनकत्वे सर्वदा ज्ञानोत्पत्तिः, तदजनकस्वभावत्वे न कदाचिदपि ज्ञानोत्पत्तिरिति प्रतिपादितम् । समयबलेन तु शब्दा-
20 दर्थप्रतिपत्तौ यथा सङ्केतं विशिष्टसामग्रीतः कार्योत्पत्तौ न कश्चिद्दोषः । अत एवानुमानात् प्रमाणान्तरं शाब्दम्, अनुमानं हि पक्षधर्मत्वान्वयव्यतिरेकवल्लिङ्गबलादुदयमासादयति, शाब्दन्तु सङ्केतसव्यपेक्षशब्दोपलम्भात् प्रत्यक्षानुमानागोचरेऽर्थे प्रवर्त्तते, स्वसाध्याव्यभिचारित्वमप्यनुमानस्य त्रिरूपलिङ्गोद्भूतत्वेनैव निश्चीयते शाब्दस्य त्वाप्तोक्तत्वनिश्चये सति शब्दस्योत्तरकालमिति । किञ्च यत्र यत्रार्थे पुरुषेण प्रतिपादकतया शब्दः प्रयुज्यते तं तमर्थं
25 यथासंकेतं प्रतिपादयति, न त्वेवं धूमादिकं लिङ्गं पुरुषेच्छावशेन जलादिकं प्रतिपादयतीत्यनुमानाच्छब्दः प्रमाणान्तरं सिद्धः । कथं वर्णाः शब्दरूपतामुपयान्ति, उच्यते परिमितसंख्याकाः पुद्गलद्रव्योपादानापरित्यागेनैव परिणता अश्रावणस्वभावपरित्यागेन प्राप्तश्रावणस्वभावा विशिष्टानुक्रमयुक्ता वर्णाः वाचकत्वाच्छब्दरूपाः, अन्यथोक्तदोषानतिवृत्तिः स्यात् । ननु भवत्पक्षेऽपि क्रमस्य वर्णेभ्यो व्यतिरेके न वर्णविशेषणत्वमव्यतिरेके वर्णा एव केवलाः, ते च

व्यस्ताः समस्ता वा नार्थप्रतिपादका इति न शब्दः कश्चिदर्थप्रत्यायकः, असदेतत्, वर्णव्यतिरिक्ताव्यतिरिक्तस्य क्रमस्य प्रतिपत्तेः, तथाहि न वर्णेभ्योऽर्थान्तरमेव क्रमः, वर्णानुविद्धतया तस्य प्रतीतेः, नापि वर्णा एव क्रमः, तद्विशिष्टतया वर्णानां प्रतिपत्तेः, न च तद्विशेषणत्वेन प्रतीयमानस्य क्रमस्यापह्नवो युक्तः, वर्णेष्वपि तत्प्रसक्तेः, नेयं भ्रान्तिरूपा प्रतिपत्तिः, वर्णानां तद्विशिष्टतयाऽबाधिताध्यक्षगोचरत्वात्, अर्थप्रतिपत्तिकारणतोऽनुमितत्वाच्च । न चाभावः 5 कस्यचिद्भावाध्यवसायितया विशेषणम्, नाप्यर्थप्रतिपत्तिहेतुः, न च क्रमोऽप्यहेतुः, तथात्मकवर्णेभ्योऽर्थप्रतीतेः, ततो भिन्नाभिन्नानुपूर्वी विशिष्टा वर्णा विशिष्टपरिणतिमन्तः शब्दः, स च पदवाक्यादिरूपतया व्यवस्थितः, तेन विशिष्टानुक्रमवन्ति तथाभूतपरिणतिमापन्नानि पदान्येव वाक्यमभ्युपगन्तव्यम्, तद्व्यतिरिक्तस्य तस्य पदवदनुपपद्यमानत्वात् । ननु कथं शब्दो वस्त्वन्तरत्वात् पुरुषादेर्वस्तुनो धर्मो येनासौ तस्य व्यञ्जनपर्यायो भवेत्, न, नामन- 10 याभिप्रायात्, नामनामवतोरभेदात्, पुरुषशब्द एव पुरुषार्थस्य व्यञ्जनपर्यायः, यद्वा पुरुष इति शब्दो वाचको यस्यार्थगततद्वाच्यधर्मस्यासौ पुरुषशब्दः, स चाभिधेयपरिणामो व्यञ्जनपर्यायः कथं नार्थधर्मः, स च व्यञ्जनपर्यायः पुरुषोत्पत्तेरारभ्य आ पुरुषविनाशाद्भवतीति जन्मादिर्मरणपर्यन्त उक्तः, तस्य तु बालादयः पर्याययोगा बहुविकल्पाः, तस्य पुरुषाभिधेयपरिणामवतो बालकुमारादयस्तत्रोपलभ्यमाना अर्थपर्याया भवंत्यनन्तरूपाः, एवञ्च 15 पुरुषो व्यञ्जनपर्यायेणैकः बालादिभिस्त्वर्थपर्यायैरनेक इति सिद्धम् ॥ ३२ ॥

इत्थमेव सर्वं वस्त्वेकमनेकं वा सर्वस्य तथैवोपलम्भादन्यथाऽभ्युपगमे एकान्तरूपमपि तन्न भवेदित्याह—

> **अत्थि त्ति णिव्वियप्पं पुरिसं जो भणइ पुरिसकालम्मि ।**
> **सो बालाइवियप्पं न लहइ तुल्लं व पावेज्जा ॥ ३३ ॥** 20
>
> अस्तीति निर्विकल्पं पुरुषं यो भणति पुरुषकाले ।
> स बालादिविकल्पं न लभते तुल्यं वा प्राप्नुयात् ॥ छाया ॥

**अस्तीति,** योऽस्तीत्येवं निर्गताखिलभेदं एकरूपं पुरुषद्रव्यं पुरुषोत्पत्तिक्षण एव ब्रवीति बालादिभेदरूपतया नासौ स्वयमेव व्यवस्थितिं प्राप्नुयात, नापि तद्रूपतयाऽपरमसौ पश्येत, एवञ्चाभेदरूपमेव तत्पुरुषवस्तु प्रसज्यते तुल्यं वा प्राप्नुयात्, तदप्यभेदरूपं बालादि- 25 तुल्यतामेव अभावरूपतया प्राप्नुयात्. भेदाप्रतीतौ हि अभेदोऽपि न प्रतीयत एवेति अभावरूपतैवेति भावः ॥ ३३ ॥

इदमेवोपसंहरति—

**वंजणपज्जायस्स उ पुरिसो पुरिसो त्ति णिच्चमवियप्पो ।**
**बालाइवियप्पं पुण पासइ से अत्थपज्जाओ ॥ ३४ ॥**

व्यञ्जनपर्यायस्य तु पुरुषः पुरुष इति नित्यमविकल्पः ।
बालादिविकल्पं पुनः पश्यति तस्यार्थपर्यायः ॥ छाया ॥

5 **व्यञ्जनेति,** व्यञ्जनं शब्दः, अर्थव्यञ्जकत्वात्, तस्य पर्यायः आजन्मनो मरणान्तं यावदभिन्नस्वरूपपुरुषद्रव्यप्रतिपादकत्वं, तद्वशेन तत्प्रतिपाद्यं वस्तुस्वरूपं वोपचारात्, तस्य मतेन तु एतद् द्वितयमपि पुरुषः पुरुष इत्यभेदरूपतया न भिद्यते, अत एतन्मतेन पुरुषवस्तु सदाऽविकल्पकम्, भेदं न प्रतिपद्यत इति भावः । बालादिभेदं तु तस्यैव पुरुषस्यार्थपर्यायः ऋजुसूत्रादिः पश्यति । अत्रापि विषयिणा विषयः ऋजुसूत्राद्यर्थनयविषयः अभिन्ने पुरुषरूपे 10 भेदस्वरूपो निर्दिष्टः, उपचारात्, एवञ्चाभिन्नं पुरुषवस्तु भेदं प्रतिपद्यत इति यावत् । शब्दपर्यायेणाविकल्पः पुरुषो बालादिना त्वर्थपर्यायेन सविकल्पः सिद्ध इति गाथातात्पर्यार्थः ॥ ३४ ॥

एवं निर्विकल्पसविकल्पस्वरूपे पुरुषवस्तुनि तद्विपर्ययेण तद्वस्तु प्रतिपादयन् वस्तुस्वरूपानवबोधं स्वात्मनि प्रकाशयतीत्याह—

**सवियप्पणिव्वियप्पं इय पुरिसं जो भणेज्ज अवियप्पं ।**
15 **सवियप्पमेव वा णिच्छएण ण स निच्छिओ समए ॥ ३५ ॥**

सविकल्पनिर्विकल्पमिति पुरुषं यो भण्यादविकल्पम् ।
सविकल्पमेव वा निश्चयेन न स निश्चितः समये ॥ छाया ॥

**सविकल्पेति,** स्यात्कारपदलाञ्छितं सविकल्पं निर्विकल्पं पुरुषद्रव्यं यः प्रतिपादको निश्चयेन–अवधारणेन अविकल्पमेव सविकल्पमेव वा ब्रूयात् स यथावस्थितवस्तुप्रतिपादने 20 प्रस्तुतेऽन्यथाभूतं वस्तु प्रतिपादयन् समये न परमार्थेन वस्तुसत्त्वस्य परिच्छेत्तेति निश्चितः । प्रमाणपरिच्छिन्नं हि तथैवाविसंवादिवस्तु प्रतिपादयन् वस्तुतः प्रतिपादक उच्यते । न चैकान्ताविकल्पादिरूपं वस्तु केनचित् प्रतिपन्नं प्राप्यते वा येन तथाभूतं वचस्तत्र प्रमाणं भवेत्, तथाभूतवचनाभिधाता वा तज्ज्ञानं वा प्रमाणतया लोके व्यपदेशमासादयेदिति ॥ ३५ ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानंदसूरीश्वरपट्टालङ्कारश्रीमद्विजय-
25 कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
लब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य नयलक्ष्य-
कत्वनिरूपणं नाम एकविंशतितमं सोपानम् ॥



# अथ सप्तभङ्गनिरूपणम्।

तदेवं परस्परसापेक्षभेदाभेदात्मनो वस्तुनः कथञ्चित् सदसत्त्वमुक्त्वा तदभिधायकस्य वचसः पुरुषस्यापि तदभिधानद्वारेण सम्यक्त्वमिथ्यात्वमभिधाय सम्प्रति भावाभावविषयं तत्रैवैकान्तानेकान्तात्मकमंशं प्रतिपादयतो विवक्षया सुनयदुर्नयप्रमाणरूपतां तत्प्रतिपादकं वचो यथाऽनुभवति तथा प्रपञ्चतः प्रतिपादयितुम्, यद्वा यथैव यद्वस्तु व्यवस्थितं 5 तथैव तस्य प्रतिपादयतो वक्तुर्निपुणत्वं भवति, अन्यथा सांख्यबौद्धकणादानामिवाभिन्नभिन्नपरस्परनिरपेक्षोभयवस्तुस्वरूपाभिधायिनां अर्हन्मतानुसारिणामपि स्यादस्तीत्यादि सविकल्परूपक्रामनापन्नवचनं वक्तृणां स्यात्कारपदालाञ्छितवस्तुधर्मं प्रतिपादयतामनिपुणता भवेदिति प्रपञ्चतः सप्तविकल्पोत्थाननिमित्तमुपदर्शयितुमाह—

अत्थंतरभूएहि य णियएहि य दोहि समयमाईहिं। 10
वयणविसेसाईयं दव्वमवत्तव्वयं पडइ ॥ ३६ ॥

अर्थान्तरभूतैश्च निजकैश्च द्वाभ्यां समयादिभ्याम्।
वचनविशेषातीतं द्रव्यमवक्तव्यकं पतति ॥ छाया ॥

अर्थान्तरेति। अर्थान्तरभूतः पटादिः, निजो घटादिः, ताभ्यां निजार्थान्तरभूताभ्यां घटवस्तुनः सदसत्त्वं प्रथमद्वितीयभङ्गनिमित्तं प्रधानगुणभावेन भवतीति प्रथमद्वितीयौ 15 भङ्गौ। यदा तु द्वाभ्यामपि युगपत्तद्वस्तु अभिधित्सितं भवति तदाऽवक्तव्यभङ्गनिमित्तं तथाभूतस्य वस्तुनोऽभावात् प्रतिपादकवचनातीतत्वात् तृतीयभङ्गसद्भावः, वचनस्य वा तथाभूतस्याभावात् अवक्तव्यं वस्तु। तत्रासत्त्वमुपसर्जनीकृत्य सत्त्वस्य प्रतिपादने प्रथमो भङ्गः सत्त्वमुपसर्जनी कृत्यासत्त्वस्य प्रतिपादने च द्वितीयो भङ्गः। द्वयोर्धर्मयोश्च मुख्यतो गौणतो वा प्रतिपादने न किञ्चिद्वचनं समर्थम्, समस्तवचनेन वाक्येन वा तत्प्रतिपाद- 20 नासम्भवात्। अन्यपदार्थप्रधानत्वात् बहुव्रीहिरत्र न समर्थः, उभयप्राधान्यस्यात्रापेक्षणात्, अत्रार्थेऽव्ययीभावोऽपि न प्रवर्ततेऽसम्भवात्। उभयपदप्रधानो द्वंद्वसमासो द्रव्यवृत्तिर्न प्रकृतार्थप्रतिपादकः, एकत्र धर्मद्वयस्य मुख्यतया तेनाप्रतिपादनात्। गुणवृत्तिरपि द्रव्याश्रितगुणप्रतिपादकः, द्रव्यमन्तरेण गुणानां तिष्ठतीत्यादिक्रियान्वयित्वासम्भवात्, तस्या द्रव्याश्रितत्वादतो न प्रधानभूतयोर्गुणयोः प्रतिपाद्यत्वम्। उत्तरपदार्थप्रधानत्वात्तत्पु- 25 रुषोऽप्यत्र न प्रवर्त्तते, संख्यावाचिपूर्वपदत्वाद् द्विगुरप्यशक्त एव, कर्मधारयोऽपि न, गुणाधारद्रव्यविषयत्वात्। न चान्यत् समासान्तरमस्ति येनैकया मुख्यतया गुणद्वयं वाच्यं भवेत्, अत एव न वाक्यमपि तादृगर्थप्रतिपादकमस्ति, तस्य समासाभिन्नार्थ-

बोधकत्वात्, न च केवलं पदं वाक्यं वा लोकप्रसिद्धम्, तस्यापि परस्परापेक्षद्रव्यादिविषयतया तथाभूतार्थप्रतिपादकत्वायोगात्। शतृशानचोः 'तौ सदि' ति [पा० ३-२-१२७] सङ्केतितसच्छब्दवच्च तयोः केनचित्सङ्केतितैकशब्देन वाच्यत्वम्, विकल्पप्रभवशब्दवाच्यत्वप्रसक्तेः, विकल्पानाञ्च युगपद्प्रवृत्त्या नैकदा तयोस्तद्वाच्यतासम्भव इत्यवाच्यत्वं तृतीयो
5 भङ्ग इति प्रथमोऽपेक्षाभेदः। यद्वा नामस्थापनाद्रव्यभावभिन्नेषु वस्तुषु विधित्सिताविधित्सितरूपेण प्रथमद्वितीयौ भङ्गौ, तत्प्रकाराभ्यां युगपदवाच्यम्, तथाभिधेयपरिणामरहितत्वात्, यदि ह्यविधित्सितरूपेणापि घटः स्यात् तर्हि प्रतिनियतनामादिभेदव्यवहाराभावप्रसक्तिः, तथा च विधित्सितस्यापि नात्मलाभ इति सर्वाभाव एव भवेत्, यदि विधित्सितप्रकारेणाप्यघटः स्यात्तदा तन्निबन्धनव्यवहारोच्छेदः स्यात्, एकपक्षाभ्युपगमेऽपि तदित-
10 राभावे तस्याप्यभाव इत्यवाच्य इति द्वितीयो भेदः। अथवा स्वीकृतप्रतिनियतप्रकारे नामादिके तद्घटवस्तुनि यः संस्थानादिस्तत्स्वरूपेण घटः, इतरेण चाघट इति प्रथमद्वितीयौ, ताभ्यां युगपदभिधातुम शक्तेरवाच्यः, अपरसंस्थानादिनापि यदि घटस्तदैकस्य सर्वघटात्मकता स्यात्, विवक्षितसंस्थानेनाप्यघटो यदि तर्हि पटादाविव घटार्थिनस्तत्राप्रवृत्तिर्भवेत्, एकान्ताभ्युपगमेऽपि तथाभूतस्य प्रमाणाविषयत्वेनासत्त्वादवाच्य इति तृतीयः प्रकारः।
15 यद्वा स्वीकृतप्रतिनियतसंस्थानादौ मध्यमावस्था निजं रूपम्, कुशूलकपालादिलक्षणे पूर्वोत्तरावस्थे अर्थान्तररूपम्, ताभ्यां सदसत्त्वं प्रथमद्वितीयौ भङ्गौ, युगपत्ताभ्यामभिधातुमसामर्थ्यात् अवाच्यत्वं तृतीयो भङ्गः। यदि घट इतरावस्थाभ्यामपि भवेत् तदानाद्यनन्तत्वप्रसङ्गः। मध्यमावस्थयाप्यघटो यदि स्यात् सर्वदा घटाभावप्रसक्तिः, एकान्तरूपतायामप्ययमेव प्रसङ्ग इत्यसत्त्वादेवावाच्य इति चतुर्थो भेदः। अथवा तस्मिन्नेव मध्यमावस्थारूपे
20 वर्त्तमानावर्त्तमानक्षणाभ्यां सदसत्त्वं प्रथमद्वितीयौ, ताभ्यां युगपदभिधातुमशक्तेरवाच्यत्वं तृतीयः, पूर्वोत्तरक्षणयोरपि घटस्य सत्त्वे वर्त्तमानक्षणमेवासौ जातः पूर्वोत्तरयोर्वर्त्तमानताप्राप्तेः वर्त्तमानक्षणमात्रमपि न स्यात्, पूर्वोत्तरक्षणयोरभावे तदपेक्षस्य तस्याप्यभावात्। वर्त्तमानक्षणेनाप्यघटरूपतायां सर्वदा तस्याभावप्रसक्तिः, एकान्तपक्षेऽप्ययमेव दोष इत्यभावादेवावाच्य इति पञ्चमः। यद्वा क्षणपरिणतिरूपे घटे लोचनेतरेन्द्रियजप्रतिपत्तिविषय-
25 त्वाभ्यां सदसत्त्वं प्रथमद्वितीयौ, ताभ्यां युगपदादिष्टोऽवाच्यः, इन्द्रियान्तरजप्रतिविषयतयापि घटो यदि स्यादिन्द्रियान्तरकल्पनावैयर्थ्यप्रसङ्गः, इन्द्रियसङ्करप्रसक्तिश्च लोचनजप्रतिपत्तिविषयत्वेनापि न घटस्तर्हि तस्यारूपत्वप्रसक्तिः एकान्तवादेऽपि तदितराभावे तस्याप्यभावादवाच्य एवेति षष्ठो भेदः। अथवा लोचनप्रतिपत्तिविषये तत्रैव घटे घटशब्दवाच्यता निजं रूपं कुटशब्दवाच्यता पररूपं, ताभ्यां सदसत्त्वात् प्रथमद्वितीयौ भङ्गौ, यौगपद्येनाभि-

दानापेक्षया त्ववाच्यता, घटो यदि कुटशब्दवाच्यतयापि भवेत्तदा त्रिजगत एकशब्दवाच्यता स्यात्, घटस्य वाऽशेषपटादिशब्दवाच्यताप्रसङ्ग इति घटशब्दवाच्यत्वप्रतिपत्तौ निखिलतद्वाचकशब्दप्रतिपत्तिप्रसङ्गश्च, घटशब्देनाप्यवाच्यश्चेद्घटशब्दोच्चारणवैयर्थ्यप्रसङ्गः, एकान्ताभ्युपगमे तु तथाविधवस्त्वभावात् सङ्केतद्वारेणापि न तद्वाचकः कश्चित् शब्द इत्यवाच्य एवेति सप्तमः प्रकारः। एवं घटशब्दाभिधेये तत्रैव घटे हेयोपादेयान्तरङ्गबहिरङ्गोपयोगानुपयोगादितया 5 सदसत्त्वात्प्रथमद्वितीयौ, ताभ्यां युगपदादिष्टोऽवाच्यः, हेयबहिरङ्गानर्थक्रियाकार्यसन्निहितरूपेणापि यदि घटो भवेत् पटादीनामपि घटत्वप्रसक्तिः, यद्युपादेयसन्निहितादिरूपेणाप्यघटः स्यात्तदाऽन्तरङ्गस्य वक्तृश्रोतृगतहेतुफलभूतघटाकारावबोधकविकल्पोपयोगस्याप्यभावे घटस्याप्यभावप्रसङ्ग इत्यवाच्यः, एकान्ताभ्युपगमेऽप्ययमेव प्रसङ्ग इत्यवाच्य इत्यष्टमो भेदः। अथवा तत्रैवोपयोगेऽभिमतार्थावबोधकत्वानभिमतार्थावबोधकत्वाभ्यां सदसत्त्वात् प्रथमद्वितीयौ, 10 ताभ्यां युगपदादिष्टोऽवाच्यः, इतरप्रकारेणापि यदि घटः स्यात् प्रतिनियतोपयोगाभावः, तथाभ्युपगमे विविक्तरूपोपयोगप्रतिपत्तिर्न भवेत्, स्वरूपेणापि यद्यघटो भवेत्तदा सर्वाभावः, अविशेषप्रसङ्गो वा, न चैवम्, तथाऽप्रतीतेः, एकान्तपक्षेऽप्ययमेव प्रसङ्ग इत्यवाच्य इति नवमः। अथवा सत्त्वमसत्त्वं वा पररूपं घटत्वञ्च निजं रूपं ताभ्यां प्रथमद्वितीयौ भङ्गौ, अभेदेन ताभ्यां निर्दिष्टो घटोऽवक्तव्यो भवति, यदि हि सत्त्वमनूद्य घटत्वं विधीयते तदा सत्त्वस्य घटत्वेन 15 व्याप्तेर्घटस्य सर्वगतत्वप्रसङ्गः, तथाभ्युपगमे प्रतिभासबाधा व्यवहारविलोपश्च, तथा यद्यसत्त्वमनूद्य घटत्वं विधीयते तर्हि प्रागभावादेश्चतुर्विधस्याप्यसत्त्वस्य घटत्वेन व्याप्तेर्घटत्वप्रसङ्गः, यदि च घटत्वमनूद्य सदसत्त्वे विधीयेते तदा घटत्वं यत्तदेव सदसत्त्वे इति घटमात्रं सदसत्त्वे प्रसज्येते तथा च पटादीनां प्रागभावादीनाञ्चाभावप्रसक्तिरिति प्राक्तनन्यायेन विशेषणविशेष्यत्वलोपात् सन् घट इत्येवमवक्तव्यः, असन् घट इत्येवमप्यवक्तव्यः, न चैकान्त- 20 तोऽवाच्यः, अनेकान्तपक्षे तु कथञ्चिदवाच्य इति न कश्चिद्दोष इति दशमः प्रकार इति दिक् ॥ भङ्गा एते त्रयो गुणप्रधानभावेन सकलधर्मात्मकैकवस्तुप्रतिपादकाः स्वयं तथाभूताः सन्तो निरवयवप्रतिपत्तिद्वारेण सकलादेशाः, वक्ष्यमाणाश्चत्वारस्तु सावयवप्रतिपत्तिद्वारेणाशेषधर्माक्रान्तं वस्तु प्रतिपादयन्तोऽपि विकलादेशा इति केचित् प्रतिपन्नाः। वाक्यञ्च सर्वमेकानेकात्मकं सत् स्वाभिधेयमपि तथाभूतमवबोधयति, न हि तावन्निरवयवेन 25 वस्तुस्वरूपाभिधानं सम्भवति, अनन्तधर्माक्रान्तैकात्मकत्वाद्वस्तुनः, निरवयववाक्यस्य तु एकस्वभाववस्तुविषयत्वात् तथाभूतस्य च वस्तुनोऽसम्भवात् न निरवयवस्य तस्य

वाक्यमभिधायकम् । नापि सावयवं वाक्यं वस्त्वभिधायकं सम्भवति, वस्तुन एकात्मकत्वात्, न च वस्तुनस्तदंशा व्यतिरिक्ताः, तद्व्यतिरेकेण तेषामप्रतीतेः, एकस्वरूपव्याप्तानेकांशप्रतिभासात्, न च तदेकात्मकमेव, अनेकांशानुरक्तस्यैवैकात्मनः प्रतिभासात्, अतो वस्तुन एकानेकस्वभावत्वात् तथाभूतवस्त्वभिधायकाः शब्दा अपि तथाभूता एव, नैकान्ततः सावयवा उभयैकान्तरूपा वा । तत्र विवक्षाकृतप्रधानभावसदाद्येकधर्मात्मकस्यापेक्षितापराशेषधर्मक्रोडीकृतस्य वाक्यार्थस्य स्यात्कारपदलाञ्छितवाक्यात् प्रतीतेः स्यादस्ति घटः, स्यान्नास्ति घटः, स्यादवक्तव्यो घट इत्येते त्रयो भङ्गा सकलादेशाः । विवक्षाविरचितद्वित्रिधर्मानुरक्तस्य स्यात्कारपदसंसूचितसकलधर्मस्वभावस्य धर्मिणो वाक्यार्थरूपस्य प्रतिपत्तेश्चत्वारो वक्ष्यमाणा विकलादेशाः स्यादस्ति च नास्ति घट इति प्रथमो विकलादेशः, स्यादस्ति चावक्तव्यश्च घट इति द्वितीयः, स्यान्नास्ति चावक्तव्यश्च घट इति तृतीयः, स्यादस्ति च नास्ति चावक्तव्यश्च घट इति चतुर्थः, एत एव सप्तभङ्गाः स्यात्पदलाञ्छनविरहिणोऽवधारणैकस्वभावा विषयाभावाद्दुर्नया भवन्ति, धर्मान्तरोपादानप्रतिषेधाकरणात् स्वार्थमात्रप्रतिपादनप्रवणा एते एव सुनयरूपतामासादयन्ति, स्यात्पदलाञ्छनविवक्षितैकधर्मावधारणवशाद्वा सुनयाः, सद्द्रव्यादेरेकदेशस्य व्यवहारनिबन्धनत्वेन विवक्षितत्वात, धर्मान्तरस्य चानिषिद्धत्वात । अतः स्यादस्ति इत्यादि प्रमाणम, अस्त्येवेत्यादि दुर्नयः, अस्ति इत्यादि सुनयः, न तु संव्यवहाराङ्गम, स्यादस्त्येव इत्यादिकस्तु नय एव व्यवहारकारणम, स्वपराव्यावृत्तवस्तुविषयप्रवर्त्तकवाक्यस्य व्यवहारकारणत्वात, अन्यथा तदयोगादिति ॥ ३६ ॥

अथ सावयववाक्यरूपं चतुर्थभङ्गमाह—

**अह देसो सब्भावे देसोऽसब्भावपज्जवे णियओ ।**
**तं दवियमत्थि णत्थि य आएसविसेसियं जम्हा ॥ ३७ ॥**

अथ देशः सद्भावे देशोऽसद्भावपर्यये नियतः ।
तद्द्रव्यमस्ति नास्ति च आदेशविशेषितं यस्मात् ॥ छाया ॥

अथेति· यदा वस्तुनोऽवयवलक्षणो देशोऽस्तित्वे नियतः, सन्नेवायमित्येवं निश्चितः, अपरश्च देशो नास्तित्वे नियतः, असन्नेवायमित्यवगतः, कथञ्चिदवयवेभ्योऽवयविनोऽभेदादवयवधर्मैः सोऽपि तथा व्यपदिश्यते यथा कुण्ठो देवदत्त इति, एवञ्चावयवसत्त्वासत्त्वाभ्यामवयव्यपि सदसन् भवति, तस्मात्तद्द्रव्यमस्ति च नास्ति च भवति, उभयप्रधानावयव-

१ येन वाक्यमपि निरवयवं भवेदिति भाव । अत्र वाक्ये सावयवत्वं निरवयवत्वञ्चानेकात्मकत्वमेकात्मकत्वं बोध्यम् ॥

भागेन यस्माद्विशेषितम्, तथाहि अवयवेन विशिष्टधर्मेण यदादिश्यते तदस्ति च नास्ति च भवति, तथा स्वद्रव्यक्षेत्रकालभावैर्विभक्तो घटः स्वद्रव्यादिरूपेणास्ति परद्रव्यादिरूपेण च स एव नास्ति, तथा च पुरुषादिवस्तु विवक्षितपर्यायेण बालादिना परिणतं कुमारादिना चापरिणतमित्यादिष्टमिति योज्यम् ॥ ३७ ॥

अथ पञ्चमं भङ्गं प्रदर्शयति— 5

**सब्भावे आइट्ठो देसो देसो य उभयहा जस्स ।**
**तं अत्थि अवत्तव्वं च होइ दविअं वियप्पवसा ॥ ३८ ॥**

सद्भावे आदिष्टो देशो देशश्च उभयथा[1] यस्य ।
तदस्ति अवक्तव्यञ्च भवति द्रव्यं विकल्पवशात् ॥ छाया ॥

सद्भाव इति, यस्य घटादेर्धर्मिणो देशो धर्मोऽस्तित्वेऽवक्तव्यानुविद्धस्वभावे आदिष्टः, 10 अन्यथा तदयोगात्, न ह्यपरधर्माप्रविभक्ततामन्तरेण विवक्षितधर्मास्तित्वं सम्भवति, खरविषाणादेरिव । तस्यैवापरो देश उभयथा आदिष्टः, अस्तित्वनास्तित्वप्रकाराभ्यामेकदैव विवक्षितः, अस्तित्वानुविद्ध एवावक्तव्यस्वभावः, अन्यथा तदसत्त्वप्रसक्तेः, न ह्यस्तित्वाभावे उभयाविभक्तता शशशृङ्गादेरिव तस्य सम्भविनी, भङ्गोऽयं केवलप्रथमतृतीयभङ्गसंयोगात्मको न, विवक्षाविशेषात्, तत्र हि अस्तित्वं नावक्तव्यताऽनुविद्धं परस्पराविशेषणभूतयोः 15 प्रतिपाद्येनाधिगन्तुमिष्टत्वात्, अत्र तु तथाभूतधर्माक्रान्ततयेति तद्द्रव्यं अस्ति चावक्तव्यञ्च भवति तद्धर्मविकल्पनवशात्, धर्मयोस्तथापरिणतयोस्तथाव्यपदेशे धर्म्यपि तद्द्वारेण तथैव व्यपदिश्यते ॥ ३८ ॥

षष्ठं भङ्गमाह—

**आइट्ठोऽसब्भावे देसो देसो य उभयहा जस्स ।** 20
**तं णत्थि अवत्तव्वं च होइ दवियं वियप्पवसा ॥ ३९ ॥**

आदिष्टोऽसद्भावे देशो देशश्च उभयथा यस्य ।
तन्नास्ति अवक्तव्यञ्च भवति द्रव्यं विकल्पवशात् ॥ छाया ॥

आदिष्ट इति, यस्य वस्तुनो देशोऽसत्त्वे निश्चितः, असन्नेवायमित्यवक्तव्यानुविद्धः, अपरश्चासदनुविद्धः उभयथा सन्नसंश्चेत्येवं युगपन्निश्चितस्तदा तद्द्रव्यं नास्ति चावक्तव्यञ्च 25 भवति विकल्पवशात्, तद्व्यपदेश्यावयववशात्, द्रव्यमपि तद्व्यपदेशमासादयति, केवलद्वितीयतृतीयभङ्गव्युदासेन षष्ठो भङ्गः ॥ ३९ ॥

अथ सप्तमं भङ्गमाह—

**सब्भावासब्भावे देसो देसो य उभयहा जस्स ।**
**तं अत्थि णत्थि अवत्तव्वयं च दवियं वियप्पवसा ॥ ४० ॥**

सद्भावासद्भावयोर्देशो देशश्च उभयथा यस्य ।
5 तदस्ति नास्ति अवक्तव्यकञ्च द्रव्यं विकल्पवशात् ॥ छाया ॥

**सद्भावेति,** यस्य देशिनो देशोऽवयवो धर्मो वा सद्भावे निश्चितः अपरस्त्वसद्भावे, तृतीयस्तु उभयथा, इत्येवं देशानां सदसदवक्तव्यव्यपदेशात्तदपि द्रव्यमस्ति च नास्ति चावक्तव्यञ्च भवति, तथाभूतविशेषणाध्यासितस्य द्रव्यस्यानेन प्रतिपादनादपरभङ्गानां व्युदासः । एते च परस्पररूपापेक्षया सप्तभङ्ग्यात्मकाः प्रत्येकं स्वार्थं प्रतिपादयन्ति नान्यथेति
10 प्रत्येकं तत्समुदायो वा सप्तभङ्गात्मकः प्रतिपाद्यमपि तथाभूतं दर्शयतीति व्यवस्थितम् । अत्र प्रत्येकभङ्गानां भेदविशेषा अन्यग्रन्थेभ्योऽवसेयाः । अनन्तधर्मात्मके वस्तुनि न तत्प्रतिपादकवचनस्य सप्तवचनातिरिक्तस्याष्टमस्य सम्भवः, तत्परिकल्पने विशिष्टनिमित्ताभावात् कल्प्यमानवचनानामत्रैवान्तर्भावादिति ॥ ४० ॥

अन्योन्यापरित्यागेन व्यवस्थितस्वरूपवाक्यनयानां शुद्ध्यशुद्धिविभागेन संग्रहादिव्यप-
15 देशमासादयतां द्रव्यार्थिकपर्यायार्थिकनयावेव मूलाधार इत्यादर्शयति—

**एवं सत्तवियप्पो वयणपहो होइ अत्थपज्जाए ।**
**वंजणपज्जाए उण सवियप्पो णिव्वियप्पो य ॥ ४१ ॥**

एवं सप्तविकल्पो वचनपथो भवति अर्थपर्याये ।
व्यञ्जनपर्याये पुन. सविकल्पो निर्विकल्पश्च ॥ छाया ॥

20 **एवमिति,** उक्तप्रकारेण सप्तविधो वचनमार्गः सङ्ग्रहव्यवहारर्जुसूत्ररूपेऽर्थनये सर्वो भवति, तत्र सामान्यग्राहिणि सङ्ग्रहे प्रथमः, विशेषग्राहिणि व्यवहारे द्वितीयः, ऋजुसूत्रे तृतीयः, चतुर्थः सङ्ग्रहव्यवहारयोः, पञ्चमः सङ्ग्रहर्जुसूत्रयोः, षष्ठो व्यवहारर्जुसूत्रयोः सप्तमश्च सङ्ग्रहव्यवहारर्जुसूत्रेषु । व्यञ्जनपर्याये शब्दनये सविकल्पः, प्रथमे पर्यायशब्दवाच्यताविकल्पसद्भावेऽप्यर्थस्यैकत्वात् , द्वितीयतृतीययोर्निर्विकल्पः, द्रव्यार्थास्सामान्यलक्षणाक्लि-
25 ष्टतपर्यायाभिधायकत्वात् , समभिरूढस्य पर्यायभेदभिन्नत्वात् , एवम्भूतस्यापि विवक्षितक्रियाकालार्थत्वात् , लिङ्गसंख्याक्रियाभेदेन भिन्नस्यैकशब्दावाच्यत्वात् । शब्दादिषु तृतीयः, प्रथमद्वितीयसंयोगे चतुर्थः, तेष्वेव चानभिधेयसंयोगे पञ्चमषष्ठसप्तमवचनमार्गा भवन्ति ।

अथवाऽर्थनय एव सप्तभङ्गाः, शब्दादिषु त्रिषु प्रथमद्वितीयावेव भङ्गौ, यो ह्यर्थमाश्रित्य वक्तरि सङ्ग्रहव्यवहारर्जुसूत्राख्यः प्रत्ययः प्रादुर्भवति सोऽर्थनयः, अर्थवशेन तदुत्पत्तेः, असौ हि प्रधानतयाऽर्थं व्यवस्थापयति, शब्दं स्वप्रभवमुपसर्जनतया व्यवस्थापयति, तत्प्रयोगस्य परार्थत्वात् । यस्तु श्रोतरि तच्छब्दश्रवणादुद्गच्छति शब्दसमभिरूढैवम्भूताख्यः प्रत्ययः तस्य शब्दः प्रधानम्, तद्वशेन तदुत्पत्तेः, अर्थस्तूपसर्जनं तदुत्पत्तौ तस्यानिमित्तत्वात्, स शब्द- 5 नय उच्यते। तत्र च सविकल्पनिर्विकल्पतया वचनमार्गो द्विविधः, सविकल्पं सामान्यं निर्विकल्पः पर्यायः, तदभिधानाद्वचनमपि तथा व्यपदिश्यते, तत्र शब्दसमभिरूढौ संज्ञाक्रियाभेदेऽप्यभिन्नमर्थं प्रतिपादयत इति तदभिप्रायेण सविकल्पो वचनमार्गः प्रथमभङ्गकरूपः । एवम्भूतस्तु क्रियाभेदाद्भिन्नमर्थं तत्क्षणे प्रतिपादयतीति निर्विकल्पो द्वितीयभङ्गरूपस्तद्वचनमार्गः। अवक्तव्यभङ्गकस्तु व्यञ्जननये न सम्भवत्येव, यतः श्रोत्राभिप्रायो व्यञ्जननयः, स च 10 शब्दश्रवणादर्थं प्रतिपाद्यते न शब्दाश्रवणात्, अवक्तव्यं तु शब्दाभावविषय इति नावक्तव्यभङ्गको व्यञ्जनपर्याये सम्भवतीत्यभिप्रायवता व्यञ्जनपर्याये तु सविकल्पनिर्विकल्पौ प्रथमद्वितीयावेव भङ्गावभिहितावाचार्येण, चशब्दस्य गाथायामेवकारार्थत्वादिति ॥ ४१ ॥

इदानीं परस्पररूपापरित्यागेन प्रवृत्तैः सङ्ग्रहादिनयैः प्रादुर्भूतास्तथाविधा एव वाक्यनयास्तथाविधार्थप्रतिपादका इत्युक्त्वाऽन्यथाभ्युपगमे तेषामप्यध्यक्षविरोधतोऽभाव एवेत्येत- 15 दुपदर्शनाय केवलानां तेषां तावन्मतमुपन्यस्यति—

**जह दवियमप्पियं तं तहेव अत्थि त्ति पज्जवणयस्स ।**
**ण य स समयपन्नवणा पज्जवणयमेत्तपडिपुण्णा ॥ ४२ ॥**

**यथा द्रव्यमर्पितं तत्तथैवास्तीति पर्यवनयस्य ।**
**न च स समयप्रज्ञापना पर्यवनयमात्रपरिपूर्णा ॥ छाया ॥** 20

यथेति, यथा वर्त्तमानकालसम्बन्धितया यद्द्रव्यं प्रतिपिपादयिषितं तत्तथैव वर्तते नान्यथा, अनुत्पन्नविनष्टतया भाविभूतयोरविद्यमानत्वेनाप्रतिपत्तेः अप्रतीयमानयोश्च प्रतिपादयितुमशक्तेरतिप्रसङ्गात्, वर्तमानसम्बन्धिन एव तस्य प्रतिपत्तेरिति पर्यायार्थिकनयवाक्यस्याभिप्रायः । तथाविधस्य वाक्यनयः द्रव्यनयनिरपेक्षे सति सम्यगर्थप्ररूपणायां न परिपूर्णोऽतः समयप्रज्ञापना न परिपूर्णा, सावधारणैकान्तप्रतिपादनरूपस्य पर्यायनयस्याध्यक्षबा- 25 धनादिति भावः ॥ ४२ ॥

द्रव्यार्थिकवाक्यनयेऽप्ययमेव न्याय इत्याह—

**पडिपुण्णजोव्वणगुणो जह लज्जइ बालभावचरिएण ।**
**कुणइ य गुणपणिहाणं अणागयसुहोवहाणत्थं ॥ ४३ ॥**

परिपूर्णयौवनगुणो यथा लज्जते बालभावचरितेन ।
करोति च गुणप्रणिधानं अनागतसुखोपधानार्थम् ॥ छाया ॥

5 **परिपूर्णेति,** यथा सम्प्राप्तयौवनगुणः पुरुषो बालभावसंवृत्तनिजानुष्ठानुस्मरणात् पूर्वं मामप्यस्पृश्यसंस्पर्शादिव्यवहारमनुष्ठितवानिति लज्जते मयैतस्मात्सुखसाधनात्सुखमाप्तव्यमिति चानागतसुखप्राप्त्यर्थं उत्साहादिगुणेष्वैकाग्र्यं करोति, अनेनातीतानागतवर्त्तमानानामैक्यमुक्तं भवति ॥ ४३ ॥

अत्रापि मते यथावस्थितवस्तुस्वरूपप्ररूपणं न परिपूर्णमित्याह—

10 **ण य होइ जोव्वणत्थो बालो अण्णो विलज्जइ ण तेण ।**
**ण वि य अणागयवयगुणसाहणं जुज्जइ विभत्ते ॥ ४४ ॥**

न च भवति यौवनस्थो बालोऽन्योऽपि लज्जते न तेन ।
नापि चानागतवयोगुणसाधनं युज्यतेऽविभक्ते ॥ छाया ॥

**न चेति,** यौवनस्थ पुरुषो न च बालो भवति, अपि तु अन्य एव, तेन बालचरिते-
15 नान्योऽपि न लज्जते पुरुषान्तरवत्, नाप्यनागतवृद्धावस्थासुखादिप्रसाधनार्थमत्यन्ताभेदेऽविचलितस्वरूपतया तस्य प्रयत्नः सम्भवति, तस्मान्नाभेदमात्रं तत्त्वं कथञ्चिद्भेदव्यवहारप्रतीतिबाधितत्वात्, नापि भेदमात्रम्, एकत्वव्यवहारप्रत्ययनिराकृतत्वादिति भेदाभेदात्मकं तत्त्वमभ्युपगन्तव्यमन्यथा सकलव्यवहारोच्छेदप्रसङ्गः ॥ ४४ ॥

एवमभेदभेदात्मकस्य पुरुषतत्त्वस्य यथाऽतीतानागतदोषगुणनिन्दाभ्युपगमाभ्यां सम्ब-
20 न्धः तथैव भेदाभेदात्मकस्य तस्य सम्बन्धादिभिर्योग इति दृष्टान्तदार्ष्टान्तिकोपसंहारार्थमाह—

**जाइकुलरूवलक्खणसण्णासंबंधओ अहिगयस्स ।**
**बालाइभावदिट्ठविगयस्स जह तस्स संबंधो ॥ ४५ ॥**

जातिकुलरूपलक्षणसंज्ञासम्बन्धतोऽधिगतस्य ।
बालादिभावदृष्टविगतस्य यथा तस्य सम्बन्धः ॥ छाया ॥

25 **जातीति,** पुरुषत्वादिजात्या प्रतिनियतपुरुषजन्यत्वलक्षणकुलेन चक्षुर्ग्राह्यरूपादिना तिलकादिलक्षणेन प्रतिनियतशब्दाभिधेयत्वलक्षणसंज्ञया च यस्तदात्मपरिणामरूपः सम्बन्धस्तमाश्रित्याधिगतस्य तदात्मकत्वेनाभिन्नावभासविषयस्य, अथवा सम्बन्धो जन्यजनकभावः,

तथा च जातिकुलरूपलक्षणसंज्ञासम्बन्धैरधिगतस्य एकात्मकस्य बालादिभावैर्दृष्टैर्विगतस्य उत्पादविगमात्मकस्य तस्य यथा सम्बन्धः भेदाभेदपरिणतिरूपः, बाह्याध्यक्षेण भेदाभेदात्मकत्वप्रतिपत्तेः तथेति अग्रे सम्बन्धः ॥ ४५ ॥

आध्यात्मिकाध्यक्षतोऽपि तथा प्रतीतेस्तद्वस्तु तथाविधमेवेत्याह—

**तेहिं अतीताणागयदोसगुणदुगंछणब्भुवगमेहिं ।** 5
**तह बंधमोक्खसुहदुक्खपत्थणा होइ जीवस्स ॥ ४६ ॥**

ताभ्यामतीतानागतदोषगुणजुगुप्सनाभ्युपगमाभ्याम् ।
तथा बन्धमोक्षसुखदुःखप्रार्थना भवति जीवस्य ॥ छाया ॥

**ताभ्यामिति,** यथा ताभ्यामतीतानागतदोषगुणजुगुप्साऽभ्युपगमाभ्यां भेदाभेदात्मकस्य पुरुषत्वस्य सिद्धिः तथा दार्ष्टान्तिकेऽपि बन्धमोक्षसुखदुःखप्रार्थना तत्साधनोपादानपरित्यागद्वारेण भेदाभेदात्मकस्यैव जीवद्रव्यस्य भवति बालाद्यात्मकपुरुषद्रव्यवत्, 10
न च जीवस्य पूर्वोत्तरभवानुभवितुरभावाद्बन्धमोक्षभावस्याभावः, उत्पादव्ययध्रौव्यात्मकस्य तस्यानाद्यनन्तस्योक्तत्वात् । तथाहि मरणचित्तं भाव्युत्पादस्थित्यात्मकम्, मरणचित्तत्वात् जीवदवस्थाविनाशचित्तवत्, तथा जन्मादौ चित्तप्रादुर्भावोऽतीतचित्तस्थितिविनाशात्मकः, चित्तप्रादुर्भावत्वात, मध्यमावस्थाचित्तप्रादुर्भाववत्, अन्यथा तस्याप्यभावप्रसक्तिः, न चेष्टापत्तिः, हर्षविषादाद्यनेकविवर्त्तात्मकस्यानन्यवेद्यस्यान्तर्मुखाकारतया स्वसंवेदनाध्यक्षतः शरीरवैलक्षण्येनानुभूतेः, तथापि तस्याभावे बहिर्मुखाकारतया प्रतिभासमानशरीरादेरप्यभावः स्यात । न वैकान्तेनात्मनो नित्यत्वे नूतनबुद्धिशरीरेन्द्रियैर्योगवियोगलक्षणे जन्ममरणे अपि संभवतः कुतो बन्धमोक्षप्रसक्तिः, सर्वात्मनाऽविचलितरूपत्वात् । नाप्येकान्तत उत्पादविनाशात्मके चित्ते इहलोकपरलोकव्यवस्था बन्धादिव्यवस्था वा संभवति, ऐहिकशरीरपरित्यागेन ह्यामुष्मिकशरीरोपादानमेकस्य परलोकः, पूर्वग्रामपरित्यागावाप्तग्रामान्तरैकपुरुषवत् न च दृष्टान्तेऽप्येकत्वमसिद्धमिति वाच्यम्, उभयावस्थयोस्तस्यैकत्वेन प्रतिपत्तेः । न चेयं मिथ्या, बाधकाभावात्, विरुद्धधर्मसंसर्गादेर्बाधकस्याध्यक्षबाधादिना निरस्तत्वात्, न च पूर्वावस्थात्याग एकस्योत्तरावस्थोपादानमन्तरेण दृष्टः, घटाकारविनाशवन्मृद्द्रव्यस्य कपालाकारोपादनमन्तरेण तस्यादर्शनात । न च कपालोपादानमन्तरेण घटविनाश एव न सिद्धः, घटकपालव्यतिरेकेणापरस्य नाशस्याप्रतीतेरिति वक्तव्यम्, कपालोत्पादस्यैव कथञ्चिद्घटविनाशात्मकतया प्रतिपत्तेः, अत एव सहेतुकत्वं विनाशस्य, कपालोत्पादस्य सहेतुकत्वात् । न च कपालानां केवलं भावरूपत्वम्, तथा सति घटस्या- 15 20 25

निवृत्त्या तेषु तद्विविक्तताया अभावप्रसक्तेः । न चैकस्य घटादेर्भावाभावयोर्हेतुत्वं विरुद्धम्, तथैव दर्शनात् । न वा घटनिवृत्तिकपालयोरेकान्तेन भेदः कथञ्चिदेकत्वप्रतीतेः । न च मुद्गरादेर्नाशं प्रत्यहेतुत्वे क्वचिदप्यनुपयोगान्न कपालेषु तदुपयोग इति वाच्यम्, अन्त्यावस्थायामपि घटस्य घटोत्पादनसामर्थ्याविनाशेन घटक्षणान्तरोत्पत्तिप्रसक्तेः। न च तस्य स्वरसतो
5 विनाशात्तद्व्यतिरिक्तं सामर्थ्यमपि विनष्टमिति वाच्यम्, पूर्वं घटविनाशेऽपि तदविनाशात्, अन्यथा द्वितीयादिघटक्षणानुत्पत्तिप्रसङ्गः । विरोधिमुद्गरसन्निधानात्समानजातीयक्षणान्तरं न जनयतीति चेन्न, मुद्गरो घटविरोधी, न च तं विनाशयतीति व्याहतत्वात् । न वा तद्धेत्वभावात् सामर्थ्याभावो वक्तुं शक्यः, सामर्थ्यहेतोर्भावात्, अन्यथा प्रागपि तथाविधफलोत्पत्तिर्न भवेत् । न च स्वहेतुनिर्वर्त्तित एव मुद्गरादिसन्निधौ सामर्थ्याभावः, मुद्गरादिसान्नि-
10 ध्यापेक्षायां तस्य तद्धेतुत्वोपपत्तेः, अन्यत्रापि हेतुत्वस्य तन्मात्रनिबन्धनत्वात् । न च तद्व्यापारानन्तरं तदुपलम्भात्तस्य तत्कार्यत्वे मृद्द्रव्यस्यापि तत्कार्यताप्रसक्तिरिति वाच्यम्, तस्य सर्वदोपलम्भात्, सर्वदा तस्यानभ्युपगमे उत्पादविनाशयोरप्यभावस्य पूर्वमुक्तत्वात्, तस्यैव तद्रूपतया परिणतौ कथञ्चिदुत्पादस्येष्टत्वाच्च । यदा च पूर्वोत्तराकारपरित्यागोपादानतयैकं मृदादिवस्तु अध्यक्षतोऽनुभूयते तदा तत्तदपेक्षया कारणं कार्यं विनष्टमविनष्टमुत्पन्नमनुत्पन्नमे-
15 ककालमनेककालं भिन्नमभिन्नञ्चेति कथं नाभ्युपगमविषयः । न चात्र विरोधः, मृदव्यतिरिक्ततया घटकपालयोरुत्पन्नविनष्टस्थितिस्वभावतया प्रतीतेः, न च प्रतीयमाने वस्तुनि विरोधोऽन्यथा ग्राह्यग्राहकाकाराभ्यामेकत्वेन स्वसंवेदनाध्यक्षत: प्रतीयमानस्य संवेदनस्य विरोधप्रसक्तेः। न च संशयदोषप्रसक्तिः, उत्पत्तिस्थितिनिरोधानां निश्चितरूपतया वस्तुन्यवगाहनात्, न च स्थाणुर्वा पुरुषो वेति प्रतिपत्ताविव प्रकृतनिश्चये निमित्तमस्ति[1] । न च व्यधिकारणतादोषः
20 मृद्द्रव्याधिकरणतया घटकपालविनाशोत्पादयोः प्रतिपत्तेः । न चैकान्तोभयपक्षदोषप्रसङ्गः, त्र्यात्मकस्य वस्तुनो जात्यन्तरत्वात् । नापि सङ्करदोषप्रसङ्गः, अनुगतव्यावृत्त्योस्तदात्मके वस्तुनि स्वस्वरूपेणैव प्रतिभासनात् । अनवस्थादोषोऽपि नास्ति, भिन्नोत्पादव्ययध्रौव्यव्यतिरेकेण तदात्मकस्य वस्तुनोऽध्यक्षे प्रतिभासनात्, स्वयमतदात्मकस्यापरयोगेऽपि तदात्मकताऽनुपपत्तेः अन्यथाऽतिप्रसङ्गात् । तथाप्रतिभासादेवाभावदोषोऽपि न सम्भवी, अबा-
25 धितप्रतिभासस्य तदभावेऽभावात् । भावे वा न ततो वस्तुव्यवस्थितिरिति सर्वव्यवहारोच्छेदप्रसक्तिः । न च त्र्यात्मकत्वमन्तरेण घटस्य कपालदर्शनाद्विनाशानुमानं सम्भवति, तत्र तेषां प्रतिबन्धानवधारणात्, न हि तद्विनाशनिमित्तानि तानि, मुद्गरादिहेतुत्वात्,

---

१ साधकबाधकमानाभावादिनासम्भवे प्रत्येककोटिनिर्णये कथं संशय, अथानुपजायमानोऽपि संशयोऽत्र यदि बलादापाद्यते तर्हि कस्यचिदपि प्रतिनियतरूपव्यवस्था न स्यात् सर्वत्र तदापादयितुं सुशकत्वादिति भावः ॥

अभावस्य कारणत्वाभावाच्च । यद्यपि कपालानि घटहेतुकानि तथापि घटसद्भावमेव गमयेयुर्न तदभावम्, न हि धूमः पावकहेतुस्तदभावगमक उपलब्धः । न चाभिन्न-निमित्तजन्यतया तयोः प्रतिबन्धः, अभावस्याकार्यत्वाभ्युपगमात् । नापि तादात्म्यलक्षणः, तयोस्तदभावात् । न च घटस्वरूपव्यावृत्तत्वात्तेषां तदभावप्रतिपत्तिजनकत्वम्, सकलत्रैलो-क्याभावप्रतिपत्तिजनकत्वप्रसक्तेः, तेषां ततोऽपि व्यावृत्तस्वरूपत्वात् । न च घटविनाशरूप- 5
त्वात्तेषां नायं दोषः, तेषां वस्तुरूपत्वात्, विनाशस्य च निःस्वभावत्वात्, तथा च तादा-त्म्यविरोधः, अन्यथा घटानुपलम्भवत्तेषामपि तदानुपलब्धिर्भवेत्, तस्मात् प्रागभावात्मकः सन् घटो ध्वंसाभावात्मकतां प्रतिपद्यत इत्यभ्युपगन्तव्यम्, अन्यथा पूर्वोक्तदोषानतिवृत्तेः । सत्त्वलक्षणस्यापि हेतोर्गमकत्वमनेनैव प्रकारेण सम्भवति, अन्यथा उत्पत्त्यभावात् स्थि-त्यभावः, तदभावे विनाशस्याप्यभावः, असतो विनाशायोगादिति त्र्यात्मकमेकं वस्त्वभ्यु- 10
पगन्तव्यम्, अन्यथा तदनुपपत्तेरिति । यथा चाऽऽत्मनः परलोकगामित्वं शरीरमात्रव्यापक-त्वञ्च तथा प्रतिपादितमेव । ननु शरीरमात्रव्यापित्वे तस्य गमनाभावाद्देशान्तरे तद्गुणोपल-ब्धिर्न भवेत्, न, तदधिष्ठितशरीरस्य गमनाविरोधात्, पुरुषाधिष्ठितदारुयंत्रवत्। न च मूर्त्तामूर्त्तयोर्घटाकाशयोरिव प्रतिबन्धाभावान्मूर्त्तशरीरगमनेऽपि नामूर्त्तस्यात्मनो गमनमिति वक्तव्यम्, संसारिणस्तस्यैकान्तेनामूर्त्तत्वासिद्धेस्तत्प्रतिबद्धत्वाभावासिद्धेः ॥ ४६ ॥ 15

एतदेवाह—

**अण्णोण्णाणुगयाणं इमं व तं व त्ति विभयणमयुत्तं ।**
**जह दुद्धपाणियाणं जावंत विसेसपज्जाया ॥ ४७ ॥**

अन्योन्यानुगतयोरिदं वा तद्वेति विभजनमयुक्तम् ।
यथा दुग्धपानीययोः यावन्तो विशेषपर्यायाः ॥ छाया ॥ 20

अन्योऽन्येति, परस्परानुप्रविष्टयोरात्मकर्मणोरिदं कर्मायमात्मेति पृथक्करणमघटमान-कम्, प्रमाणाभावेन कर्तुमशक्यत्वात्, यथा परस्परानुप्रविष्टयोर्दुग्धपानीययोः । किं परिमा-णोऽयं जीवकर्मप्रदेशयोरविभाग इत्यत्राह—यावन्त इति, यावन्तो विशेषपर्यायास्तावान्, अतः परमवस्तुत्वप्रसक्तेः, सर्वविशेषाणामन्त्यविशेषपर्यन्तत्वात्, अन्त्य इति विशेषणान्यथा-नुपपत्तेरिति ॥ ४७ ॥ 25

जीवकर्मणोरन्योन्यानुप्रवेशे तदाश्रितानामन्योन्यानुप्रवेश इत्याह—

रूआइपज्जवा जे देहे जीवदवियम्मि सुद्धम्मि ।
ते अण्णोण्णाणुगया पण्णवणिज्जा भवत्थम्मि ॥ ४८ ॥

रूपादिपर्यवा ये देहे जीवद्रव्ये शुद्धे ।
तेऽन्योन्यानुगताः प्रज्ञापनीया भवस्थे ॥ छाया ॥

5 रूपादिति, रूपरसगन्धस्पर्शादयो ये देहाश्रिताः पर्याया ये च विशुद्धस्वरूपे जीवद्रव्याश्रिते ज्ञानादयस्तेऽन्योऽन्यानुगताः, जीवे रूपादयो देहे ज्ञानादय इति प्ररूपणीया भवस्थे संसारिणि, अकारप्रश्लेषाद्वाऽसंसारिणि । न च संसारावस्थायां देहात्मनोरन्योऽन्यानुबन्धाद्रूपादिभिस्तद्व्यपदेशो युक्तः, मुक्त्यवस्थायान्तु तदभावान्नासौ युक्त इति वाच्यम्, तदवस्थायामपि देहाद्याश्रितरूपादिग्रहणपरिणतज्ञानदर्शनपर्यायद्वारेणात्मनस्तथाविधत्वात्तथा-
10 व्यपदेशसम्भवात्, आत्मपुद्गलयोश्च रूपादिज्ञानादीनामन्योन्यानुप्रवेशात्, कथञ्चिदेकत्वमनेकत्वञ्च मूर्त्तत्वममूर्त्तत्वञ्च, अव्यतिरेकात्सिद्धमिति ॥ ४८ ॥

एतदेवाह—

एवं एगे आया एगे दंडे य होइ किरिया य ।
करणविसेसेण य तिविहजोगसिद्धी वि अविरुद्धा ॥ ४९ ॥

15 एवमेक आत्मा एको दण्डश्च भवति क्रिया च ।
करणविशेषेण च त्रिविधयोगसिद्धिरप्यविरुद्धा ॥ छाया ॥

एवमिति, उक्तप्रकारेण मनोवाक्कायद्रव्याणामात्मन्यनुप्रवेशादात्मैव न तद्व्यतिरिक्तास्त इति तृतीयाङ्कस्थाने 'एगे आया' इति प्रथमसूत्रप्रतिपादितः सिद्ध एक आत्मा एको दण्ड एका क्रियेति भवति, मनोवाक्कायेषु दण्डक्रियाशब्दौ प्रत्येकमभिसम्बन्धनीयौ, क-
20 रणविशेषेण च मनोवाक्कायस्वरूपेणात्मन्यनुप्रवेशावाप्तत्रिविधयोगस्वरूपत्वात् त्रिविधयोगसिद्धिरपि आत्मनोऽविरुद्धैवेत्येकस्य सतस्तस्य त्रिविधयोगात्मकत्वादनेकान्तरूपता व्यवस्थितैव । न चान्योन्यानुप्रवेशादेकात्मकत्वे बाह्याभ्यन्तरविभागाभाव इति अन्तर्हर्षविषादाद्यनेकविवर्त्तात्मकमेकं चैतन्यं बहिर्बालकुमारयौवनाद्यनेकावस्थैकात्मकमेकशरीरमध्यक्षतः संवेद्यत इत्यस्य विरोधः, बाह्याभ्यन्तरविभागाभावेऽपि निमित्तान्तरतस्तद्व्यपदेशसम्भवात् ॥४९॥

25 एतदेवाह—

ण य बाहिरओ भावो अब्भंतरओ य अत्थि समयम्मि ।
णोइंदियं पुण पडुच्च होइ अब्भंतरविसेसो ॥ ५० ॥

न च बाह्यो भावः आभ्यन्तरश्चास्ति समये ।
नोइन्द्रियं पुनः प्रतीत्य भवति आभ्यन्तरविशेषः ॥ छाया ॥

न चेति, आत्मपुद्गलयोरन्योन्यानुप्रवेशादुक्तप्रकारेणार्हत्प्रणीतशासने न बाह्योऽभ्यन्तरो वा भावः सम्भवति, मूर्त्तामूर्त्तादिरूपतया सकलवस्तुनः संसारोदरवर्तिनोऽनेकान्तात्मकत्वात् । नोइन्द्रियं मनःप्रतीत्याभ्यन्तर इति व्यपदेशः, तस्यात्मपरिणतिरूपस्य परा- 5
प्रत्यक्षत्वात् शरीरवाचोरिव । न च शरीरात्मावयवयोः परस्परानुप्रवेशाच्छरीराद्भेदे आत्मनोऽपि तद्वत् परप्रत्यक्षताप्रसक्तिः, इन्द्रियज्ञानस्याशेषपदार्थस्वरूपग्राहकत्वायोगादित्यस्य प्रतिपादयिष्यमाणत्वात्। अतः शरीरप्रतिबद्धत्वमात्मनो न भवति, अमूर्त्तत्वादिति प्रयोगे हेतुरसिद्धः । किञ्चात्मपरिणतिरूपमनसः शरीरादात्यन्तभेदे तद्विकाराविकाराभ्यां शरीरस्य तत्त्वं न स्यात्, तदुपकारापकाराभ्यां वाऽऽत्मनः सुखदुःखाद्यनुभवश्च न भवेत्, शरीरविघात- 10
कृतश्च हिंसकत्वमनुपपन्नं भवेत्, शरीरपुष्ट्यादेः रागाद्युपचयहेतुत्वं शरीरस्य कृशोऽहं स्थूलोऽहमिति प्रत्ययविषयत्वञ्च दूरोत्सारितं भवेत् पुरुषान्तरशरीरस्येव घटाकाशयोरपि प्रदेशान्योन्यप्रवेशलक्षणो बन्धोऽस्त्येवेत्ययुक्तो दृष्टान्तः, अन्यथा घटस्यावस्थितिरेव न भवेत्।
न चान्योन्यानुप्रवेशसद्भावेऽप्याकाशवच्छरीरपरतंत्रताऽऽत्मनोऽनुपपन्ना, मिथ्यात्वादेः पारतन्त्र्यनिमित्तस्यात्मनि भावादाकाशे च तदभावात् । न च शरीरायत्तत्वे सति तस्य मिथ्या- 15
त्वादिबन्धहेतुभिर्योगस्तस्माच्च तत्प्रतिबद्धत्वमितीतरेतराश्रयः, अनादित्वाभ्युपगमेन निरासात् । न च शरीरसम्बन्धात् प्रागात्मनोऽमूर्त्तत्वम्, सदा तैजसकार्मणशरीरसम्बन्धित्वात्संसारावस्थायां तस्य, अन्यथा भवान्तरस्थूलशरीरसम्बन्धित्वायोगात्, पुद्गलोपष्टम्भव्यतिरेकेणोर्द्ध्वगतिस्वभावस्यापरदिग्गमनासम्भवात्, स्थूलशरीरेणातिसूक्ष्मस्यात्मनो रज्ज्वादिनेवाकाशस्य सम्बन्धायोगाच्च संसारिशून्यं जगत् स्यादिति संसार्यात्मनः सूक्ष्मशरीरसम्ब- 20
न्धित्वं सर्वदाभ्युपगन्तव्यम् । अथ शरीरात्मनोस्तादात्म्ये शरीरावयवच्छेदे आत्मावयवस्यापि छेदप्रसक्तिः, अच्छेदे तयोर्भेदप्रसङ्गः, न, कथञ्चित्तच्छेदस्याभ्युपगमात्, अन्यथा शरीरात् पृथग्भूतावयवस्य कम्पोपलब्धिर्न भवेत्, तत्रैव पश्चादनुप्रवेशाच्च न पृथगात्मताप्रसक्तिः, छिन्ने हस्तादौ कम्पादितलिङ्गादर्शनादियं कल्पना । न वा च्छिन्नहस्तादावेव विनष्टः,
शेषस्याप्येकत्वेन विनाशप्रसङ्गात्, एवञ्च ततोऽन्यत्रात्मावयवस्य शेषस्यापि गमनप्रसङ्गतोऽ 25
गमनात्तत्राप्यसत्त्वादविनष्टत्वाच्च तदनुप्रवेशोऽवसीयते गत्यन्तराभावात् । न चात्मन एकत्वे विभागाभावाच्छेदाभाव इति वाच्यम्, शरीरद्वारेण तस्यापि सविभागत्वात्, अन्यथा सावयवशरीरव्यापिता तस्य कथं भवेत् । न वा शरीरासर्वगतोऽसौ, तत्र सर्वत्रैव स्पर्शोपलम्भात् । नापि तदव्यापकस्य तच्छेदे छेदः, अतिप्रसङ्गात् । नाप्यवयवच्छेदे न छिन्नः,

तत्र कम्पाद्युपलब्धेः छिन्नाच्छिन्नयोः पश्चात्कथं सङ्घटनमिति चेन्न, एकान्तेन छेदाभावात्, पद्मनालतन्तुवदविच्छेदाभ्युपगमात्, संघटनमपि तथाभूतादृष्टवशादविरुद्धमेव। न वा गति-मतोऽनित्यत्वं दोषः, कथञ्चिदिष्टत्वात्, गृहान्तर्गतप्रदीपप्रभावत्संकोचविकाशात्मकत्वेन तस्य न्यायप्राप्तत्वात्। न च देहात्मनोरन्योन्यानुबद्धत्वे देहभस्मसाद्भावे तस्यापि तथा प्रसक्तिः,
5 क्षीरोदकवत् तयोर्लक्षणभेदतो भेदात्, न हि भिन्नस्वरूपयोरन्योऽन्यानुप्रवेशे सत्यपि एक-क्षयेऽपरक्षयः, यथा काथ्यमाने क्षीरे प्रथममुदकक्षयेऽपि न क्षीरक्षयः, तस्मान्मूर्त्तामूर्त्ताद्यने-कान्तात्मकत्वमात्मनोऽभ्युपगन्तव्यमिति ॥ ५० ॥

एवं सत्येवात्मनो मिथ्यात्वादिपरिणतिवशोपात्तपुद्गलाङ्गाङ्गिभावलक्षणो बन्धः तद्वशो-पनतसुखदुःखाद्यनुभवलक्षणो भोगश्चोपपद्यते नान्यथेति, प्रदर्शितन्यायेन परस्परापेक्षद्रव्या-
10 र्थिकपर्यायार्थिकयोः प्ररूपणा सम्भविनी न निरपेक्षयोरिति वा प्रदर्शनायाह—

दव्वट्ठियस्स आया बंधइ कम्मं फलं च वेएइ।
बीयस्स भावमेत्तं ण कुणइ ण य कोइ वेएइ ॥ ५१ ॥

द्रव्यार्थिकस्याऽऽत्मा बध्नाति कर्मफलञ्च वेदयते।
द्वितीयस्य भावमात्रं न करोति न च कश्चिद्वेदयते ॥ छाया ॥

15 द्रव्यार्थिकेति, एक आत्मा स्थायी ज्ञानादिप्रतिबंधकं कर्म स्वीकरोति तत्कार्यञ्च स एव भुङ्क्ते इति द्रव्यार्थिकप्ररूपणा। नैवात्मा स्थाय्यस्ति किन्तु विज्ञानमात्रं न करोति न च कश्चिद्वेदयते, उत्पत्तिक्षणानन्तरध्वंसिनः कर्तृत्वानुभवितृत्वायोगादिति प्ररूपणा पर्या-यार्थिकस्य ॥ ५१ ॥

तथेयमपि नययोरनयोस्तथाभूतयोः प्ररूपणेत्याह—

20 दव्वट्ठियस्स जो चेव कुणइ सो चेव वेयए णियमा।
अण्णो करेइ अण्णो परिभुंजइ पज्जवणयस्स ॥ ५२ ॥

द्रव्यार्थिकस्य य एव करोति स एव वेदयते नियमात्।
अन्यः करोत्यन्यः परिभुङ्क्ते पर्यवनयस्य ॥ छाया ॥

द्रव्यार्थिकस्येति, स्पष्टम्, पूर्वगाथायामुत्पत्तिसमनन्तरध्वस्तेन करणं भोगो वा न
25 सम्भवतीत्युक्तमत्र तु उत्पत्तिक्षण एव कर्त्ता तदनन्तरक्षणश्च भोक्तेत्युच्यतेऽतो न पुनरुक्तता, 'भूतिर्येषां क्रिया सैव कारकं सैव चोच्यत' इति परैरप्युक्तत्वात् ॥ ५२ ॥

असंयुक्तयोरनयोरियं न स्वसमयप्ररूपणा, या तु स्वसमयप्ररूपणा तामाह—

**जे वयणिज्जवियप्पा संजुज्जंतेसु होंति एएसु ।**
**सा ससमयपण्णवणा तित्थयराऽऽसायणा अण्णा ॥ ५३ ॥**

ये वचनीयविकल्पाः संयुज्यमानयोर्भवन्त्यनयोः ।
सा स्वसमयप्रज्ञापना तीर्थकरासादनाऽन्या ॥ छाया ॥

**य इति,** येऽभिधेयस्य प्रतिपादका अभिधानभेदास्ते संयुज्यमानयोरन्योऽन्यसम्बद्धयो- 5
द्रव्यार्थिकपर्यायार्थिकवाक्यनययोर्भवन्ति, ते च कथञ्चिन्नित्य आत्मा कथञ्चिदमूर्त्त इत्येव-
मादयः । सैषा स्वसमयार्थप्रज्ञापना, अन्या तु निरपेक्षयोरनयोर्नययोर्या प्ररूपणा सा तीर्थ-
करस्यासादनाधिक्षेपः । 'एगमेगेणं जीवस्स पएसे अणंतेहिं णाणावरणिज्जपोग्गलेहि आवे-
ढियपवेढिए' इति तीर्थकृद्वचने प्रमाणोपपन्ने सत्यपि 'नामूर्त्तं मूर्त्ततामेति मूर्त्तं नायात्य-
मूर्त्तताम् । द्रव्यं कालत्रयेऽपीत्थं च्यवते नात्मरूपतः' इति तीर्थकृन्मतमेवैतन्नयवादनिरपे- 10
क्षमिति कैश्चित्प्रतिपादयद्भिस्तस्याधिक्षेपप्रदानात् ॥ ५३ ॥

परस्परनिरपेक्षयोरनयोः प्रज्ञापना तीर्थकरासादना इत्यस्यापवादमाह—

**पुरिसज्जायं तु पडुच्च जाणओ पण्णवेज्ज अण्णयरं ।**
**परिकम्मणाणिमित्तं दाएही सो विसेसं पि ॥ ५४ ॥**

पुरुषजातं प्रतीत्य ज्ञकः प्रज्ञापयेदन्यतरत् । 15
परिकर्मणानिमित्तं दर्शयिष्यत्यसौ विशेषमपि ॥ छाया ॥

**पुरुषेति,** विज्ञातद्रव्यपर्यायान्यतरस्वरूपं श्रोतारं वाऽऽश्रित्य ज्ञकः-स्याद्वादवित् अन्य-
तरत् पर्यायं द्रव्यं वा प्रज्ञापयेत्, अभ्युपेतपर्यायाय द्रव्यमेव, अभ्युपेतद्रव्याय च पर्या-
यमेव कथयेत् बुद्धिसंस्कारार्थम् । असौ स्याद्वादाभिज्ञः परिकर्मितमतये विशेषमपि द्रव्य-
पर्याययोः परस्पराविनिर्भागरूपमेकांश विषयविज्ञानस्य दर्शयिष्यति, अन्यथा विपर्ययरूपता- 20
प्रसक्तिः तदितराभावे तद्विषयस्याप्यभावादिति ॥ ५४ ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजय-
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
लब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य सप्तभङ्ग-
निरूपणं नाम द्वाविंशं सोपानम् ॥ 25



# अथ प्रमाणविचारः ।

एवं सामान्यविशेषरूपतया ज्ञेयस्य द्व्यात्मकत्वं प्रतिपाद्य उपयोगोऽपि परस्परापेक्षसामान्यविशेषग्रहणप्रवृत्तदर्शनज्ञानरूपद्व्यात्मकः प्रमाणं दर्शनज्ञानैकान्तरूपस्त्वप्रमाणमिति दर्शयितुं द्रव्यार्थिकपर्यायार्थिकाभिमतप्रत्येकदर्शनज्ञानस्वरूपप्रतिपादिकां गाथामाह—

5 जं सामण्णग्गहणं दंसणमेयं विसेसियं णाणं ।
दोण्ह वि णयाण एसो पाडेक्कं अत्थपज्जाओ ॥ ५५ ॥

यत् सामान्यग्रहणं दर्शनमेतद्विशेषितं ज्ञानम् ।
द्वयोरपि नययोरेषः प्रत्येकमर्थपर्यायः ॥ छाया ॥

यदिति, द्रव्यार्थिकस्य सामान्यमेव वस्तु, तदेव गृह्यतेऽनेनेति ग्रहणं दर्शनमेतदुच्यते,
10 पर्यायास्तिकस्य तु विशेष एव वस्तु, स एव गृह्यते येन तज्ज्ञानमभिधीयते, ग्रहणं विशेषितमित्यस्य विशेषग्रहणमित्यभिप्रायः । द्वयोरप्यनयोर्नययोः प्रत्येकमर्थपर्यायः—ईदृग्भूतार्थग्राहकत्वमित्यर्थः ॥

तत्र तत्र ह्युपयोगस्यानाकारसाकारते सामान्यविशेषग्राहकते एवाभिधीयेते, अविद्यमानः आकारो ग्राह्यस्य भेदोऽस्येत्यनाकारो दर्शनमुच्यते, सह आकारैर्ग्राह्यभेदैर्वर्तते यद्ग्रा-
15 हकं तत्साकारं ज्ञानमुच्यते, निराकारसाकारोपयोगौ न्यूपसर्जनीकृततदितराकारौ स्वविषयावभासकत्वेन प्रवर्त्तमानौ प्रमाणम्, न तु निरस्तेतराकारौ, तथाभूतवस्तुस्वरूपविषयाभावेन निर्विषयतया प्रमाणत्वानुपपत्तेः,-इतरांशविकलैकांशरूपोपयोगसत्तानुपपत्तेश्च । तत्र वैभाषिका बोधः प्रमाणमिति वदन्ति ते किं बोधमात्रस्य प्रामाण्यं किं वा बोधविशेषस्येति पर्यनुयोज्याः, तत्र न प्रथमः, व्यवच्छेद्याभावेन तल्लक्षणप्रणयनवैयर्थ्यात्, अबोधस्य व्यव-
20 च्छेद्यत्वेऽपि संशयादीनां प्रमाणतापत्तेश्च, न चेष्टापत्तिः, लोकशास्त्रविरोधात्, लोके चेन्द्रियादेः प्रमाणतया व्यपदेशेन तत्राव्याप्तिरपि, व्यपदिशति च लोकोऽबोधरूपस्येन्द्रियादेः प्रमाणताम्, प्रदीपेनोपलब्धं चक्षुषा दृष्टं धूमेनावगतमिति व्यवहारात्, न च तेषां प्रामाण्यमुपचरितम्, प्रमितिक्रियायां साधकतमत्वेन मुख्यप्रामाण्योपपत्तेः । किञ्च प्रमीयतेऽनेनेति प्रमाणशब्दः करणविशेषं प्रतिपादयति, करणविशेषत्वञ्च विशिष्टोपलब्धिलक्षणकार्यकारि-
25 त्वम्, कार्यञ्चाव्यभिचारादिस्वरूपा प्रमितिः, एकस्य च करणक्रियाविरोधात्सजनकोऽन्यः साधकतमः आवश्यक इति बोधाबोधरूपस्य प्रमितिजनकस्य प्रमाणत्वादबोधस्वरूपेऽव्याप्तिः । न द्वितीयः, बोधस्य हि विशेषः अव्यभिचारादिविशिष्टता, तथाविधस्य प्रमितिस्वभावतया तस्य प्रमाणताप्रसंगः, करणविशेषस्यैव प्रमाणतया तत्रेष्टापत्तिर्न च कर्तुं शक्या । तस्माच्च

निराकारो बोधः प्रमाणम् । नापि साकारो बोधः प्रमितिक्रियायां साधकतमत्वात् प्रमाणम्, बोधो हि प्रमाणस्वरूपः, ततो नार्थाकारः, अन्यथा प्रमेयरूपत्वापत्तेः[1], न हि प्रमाणं प्रमेयरूपमेव, प्रमाणस्य प्रमेयग्राहकत्वेन प्रतिभासनात्, तथा सत्यपि न प्रमेयरूपं तत्, प्रमाणस्यान्तर्व्यवस्थिततया प्रमेयस्य च बहिर्व्यवस्थिततया भेदेन प्रतिभासनात्, नायं प्रतिभासो बाधितः, साक्षात्करणरूपस्य तस्य प्रत्यक्षस्यार्थ[2]व्यवस्थापकत्वात्प्रमाणान्तरतो बाधानुपपत्तेः, उक्तञ्च ' प्रमाणस्य प्रमाणेन न बाधा नाप्यनुग्रहः । बाधायामप्रमाणत्वमानर्थक्यमनुग्रहे ॥ ' इति । सर्वदा बहिर्विच्छिन्नार्थावभासिनोऽध्यक्षस्याप्रमाणत्वे प्रमाणान्तराप्रवृत्तिरेव । न च ज्ञानमेव बहिरर्थाकारमध्यक्षेण वेद्यते न बाह्योऽर्थ इति कथं निराकारता तस्येति वाच्यम्, ज्ञानरूपतया बोधस्याध्यक्षे प्रतिभासनादर्थस्य च ज्ञानरूपतयाऽप्रतिपत्तेः, न ह्यनहङ्कारास्पदत्वेनार्थस्य प्रतिभासेऽहङ्कारास्पदबोधरूपस्येव ज्ञानरूपता युक्ता, यदि त्वहङ्कारास्पदत्वेनार्थस्य प्रतिभासः स्यात्तदा ज्ञानरूपादभिन्नत्वात्तदात्मनोऽहं घट इति प्रतिभासः स्यात्, न चान्यथाभूता प्रतिपत्तिरन्यथाभूतमर्थं व्यवस्थापयति, प्रतिपत्तिव्यतिरेकेणाप्यर्थव्यवस्थाप्रसक्तेः, नीलप्रतिपत्तेरपि पीतादिव्यवस्थापनाप्रसङ्गादतिप्रसक्तेश्च । ननु यदि ज्ञानं साकारं न भवेत्तदा तस्य बोधमात्ररूपतया सर्वार्थान् प्रत्यविशेषान्नीलस्येदं संवेदनं न पीतस्येति प्रतिनियतविषयव्यवस्थापकत्वं न भवेत्, साकारत्वे चाकारनियमादाकारप्रतिपत्त्या तज्जनकस्यार्थस्य तदाकारताऽर्थापत्त्या सिद्ध्यतीति विषयव्यवस्था स्यादिति चेन्न, निराकारबोधस्य सर्वार्थान् प्रत्यविशिष्टत्वासिद्धेः, चक्षुरादिवृत्त्या बोधस्य पुरोवर्तिनीलादावेव नियमितत्वात्, तथादर्शनात्, न हि दृष्टेऽनुपपन्नं नाम, न वा चक्षुरादिभिः कथं पुरोवर्त्ति नीलादावेव तन्नियम्यते नान्यत्रेति शक्यम्, तथाविधवस्तुस्वभावे पर्यनुयोगासम्भवात्, न हि कारणानि कार्यजननप्रतिनियमे पर्यनुयोगमर्हन्ति, अन्यथा साकारत्वेऽपि पर्यनुयोगस्य समानत्वात्, साकारमपि हि ज्ञानं किमिति नीलादिकमेव पुरोवर्त्ति तत्सन्निहितमेव व्यवस्थापयति, तेनैव तथा तस्य जननादिति चेत्समानमेतन्निराकारत्वेऽपि । तथा[3] चक्षुरादिजन्यं तद्विज्ञानं किमिति चक्षुराद्याकारं न भवतीति पर्यनुयोगे भवतापि वस्तुस्वभावैरुत्तरं

---

१ अर्थबलप्रसूतं ज्ञानं यथा नीलाकारं तथा जडतामप्यनुकुर्यादेवं च प्रमेयमेव तत्स्यात्, न तु ज्ञानलक्षणं प्रमाणमिति भावः ॥ २ ज्ञानं ह्यमूर्त्तं सर्ववादिसिद्धम्, विषयस्तु मूर्त्तः, अमूर्त्ते च कथं मूर्त्तस्य प्रतिबिम्बसम्भवः येन विषयाकारधारित्वं बुद्धेः स्यात्, विषयाकाररहितमेव ज्ञानमध्यक्षेणाहमहमिकया प्रतिपुरुषं घटादिग्राहकमनुभूयते न पुनर्दर्पणादिवत् प्रतिबिम्बितमिति ॥ ३ तदुत्पत्तिस्तादूप्यञ्च नियामकम्, उभयमप्यर्थ एव घटते, नेन्द्रियादौ तादूप्याभावादिति चेन्न, द्वितीयबोधस्य तत्पूर्वबोधात्तदुत्पत्तितादूप्ययोः सद्भावेऽपि ज्ञानस्य स्वप्रकाशतया ज्ञानान्तरानियामकत्वाभावाद्व्यभिचारः, एवमर्थवदिन्द्रियमपि कुतो नानुकुर्यादसौ, येन तत्तादात्म्यं न भवेदित्याशयेनाह तथेति ॥

वाच्यमिति निराकारवादेऽपि समानमेव, तस्मादस्माभिरभिधीयमानं किमित्यसङ्गतं भवतः प्रतिभाति । अपि च विज्ञानस्य साकारता किं साकारेण प्रतीयते निराकारेण वा, आद्येऽनवस्था, तत्रापि तत्प्रतिपत्तावाकारान्तरस्वीकारप्रसङ्गात्, द्वितीये तु बाह्यार्थस्यापि तथाभूतेनैव प्रतिपत्त्यापत्तिः । बाह्ये प्रत्यासत्तिनियमाभावान्न तथाभूतेन प्रतिपत्तिरिति चेदितरत्रापि
5 तुल्य एव प्रत्यासत्तिनियमाभावः । शुक्ले पीताकारदर्शनादभ्रान्ते न प्रतिनियमाभाव इति चेत्तर्हि निराकारेऽप्यभ्रान्तत्वादेव प्रतिनियमो भविष्यतीति किमाकारपरिकल्पनया । कथमाकारमन्तरेण प्रतिनियम इति चेन्न, आकारेऽप्यस्य समानत्वात्, साकारवादिनोऽपि हि कथं प्रतिनियम इति प्रेरणायां प्रतिनियताकारपरिग्रह एव प्रतिनियम इत्युत्तरं न युक्तम्, प्रतिनियताकारपरिग्रहस्यैव प्रतिनियमरूपतयोपन्यस्तस्याद्यापि विचार्यमाणत्वात् । नाप्यनुमानाद्बाह्योऽर्थः प्रती-
10 यत इति वक्तव्यम्, व्याप्त्यसिद्धेः, न ह्यध्यक्षतो बाह्योऽर्थः कदाचनापि सिद्धो नापि तत्प्रतिबद्धो ज्ञानाकार इति । नाप्यर्थापत्त्या तत्सिद्धिः, ततोऽर्थस्वरूपप्रतिपत्तौ प्रत्यक्षरूपताप्रसङ्गात् । अथ दूरस्थितवृक्षादौ तत्पिण्डाद्याकारस्य यथा बाह्यवृक्षाद्यर्थाभावे न प्रतिभासस्तथास्तम्भादौ तदाकारः सत्येव बाह्ये स्तम्भाद्यर्थे इति सिद्धो बाह्योऽर्थः । न च वृक्षादावपि पिण्डाद्याकार एव वृक्षादिरिति वाच्यम्, स्वपराभ्यां सन्निहितस्य तस्यान्यथाप्रतीतेः, मैवम्, स्वपराभ्यां
15 हि सन्निहितस्यास्य साकारज्ञानेन प्रतीयमानत्वेऽस्यापि ज्ञानाकारताप्राप्त्या बाह्यार्थासिद्धितो दृष्टान्तासम्भवः, निराकारज्ञानेन स्वपराभ्यामर्थः प्रतीयत इति बाह्यार्थेन सह पिण्डाद्याकारस्य यदि प्रतिबन्धसिद्धिरित्युच्यते तर्हि निराकारज्ञानस्य बाह्यार्थग्राहकतासिद्धेः ज्ञानाकारकल्पनं व्यर्थम्, तस्मान्निराकारादेव बाह्यार्थसिद्धिरभ्युपगन्तव्या । ननु निराकारं ज्ञानं नीलादावर्थेऽभिन्नव्यापारं न प्रवर्त्तते, व्यापारव्यापारिणोर्धर्मधर्मिभावेन प्रतीतेः, भिन्नस्तु
20 व्यापारः सम्बन्धासिद्ध्या न सम्भवति, व्यापारस्यापि चार्थग्रहणव्यापृतावपरो व्यापारः कल्पनीय इत्यनवस्था स्यात् । निर्व्यापारस्यापि व्यापारस्यार्थव्यापृतावर्थस्यापि ज्ञानग्रहणे व्यापृतिप्रसक्त्या ज्ञानं प्रत्यर्थोऽपि ग्राहकः स्यात् । निराकारो बोधो निर्व्यापारोऽपि ज्ञानरूपत्वादर्थग्राहक इति न वाच्यम, अर्थस्याप्यर्थरूपतया बोधं प्रति ग्राहकतापत्तेः, ततो ग्राह्यरूपासंस्पर्शनान्न बोधो ग्राहकः । न वार्थस्य ग्राह्यत्वान्यथानुपपत्त्या ज्ञानं ग्राहकम्, अन्यो-
25 न्याश्रयात, ग्राह्यताव्यवस्थाया ग्राहकरूपसंस्पर्शान्, ग्राहकताव्यवस्थायाश्च ग्राह्यरूपसंस्पर्शादिति विज्ञप्तिमात्रं तत्त्वमतो न निराकारो बोधोऽर्थव्यवस्थाकारीति चेन्न बाह्यार्थस्य स प्रतिप-

२ निराकारवादिनोऽर्थेन ज्ञानस्य सघटनाय कापि प्रत्यासत्तिरभ्युपेया, सा च पुरोवर्त्यखिलपदार्थसाधारणा ततः कथं प्रतिनियतार्थग्राहकतानियमः, अस्माकं तु तदाकारधारणादिति नियमः सम्भवतीत्याशङ्कायास्तात्पर्यम्, उत्तरन्तु साकारज्ञानमप्यखिलार्थसाधारणमतो न नियतार्थेन घटते, तस्मादशेषसमानार्थानामेकं ज्ञानं स्यात्, केनचित् प्रत्यासत्तिविप्रकर्षासिद्धेः, तदुत्पत्त्यादीनामनियामकत्वादिति ॥

रूपतयाऽध्यक्षेण सिद्धेस्तस्यापलापासम्भवात्, तथाप्रतीयमानस्यार्थस्यैव विज्ञप्तिरिति नामकरणमात्रासद्भावासिद्धेः, एवञ्च बाह्याभ्यन्तररूपतयाऽर्थविज्ञानयोः प्रतिपत्त्या सिद्धेर्निराकार एव बोधस्तद्ग्राहक इति, असदेतत्, निराकारं ज्ञानमर्थव्यवस्थापकमिति हि किं प्रत्यक्षतोऽनुमानतोऽर्थापत्तितो वाऽभ्युपगम्यते, नाद्यः स्तम्भादिव्यतिरेकेणान्यस्य ज्ञानस्य प्रत्यक्षतोऽनुपलम्भेनासत्त्वात्, न च सुखाद्यान्तररूपेणाहङ्कारास्पदतया स्वसंवेदनाध्यक्षतो ज्ञानं प्रतीयत 5
एवेति वाच्यम्, अन्तःस्प्रष्टव्यशरीरव्यतिरिक्ततया सुखादीनामप्रतिभासनात्, अहमिति प्रत्ययस्यापि तथाभूतशरीरालम्बनतया संवेदनात्, तद्व्यतिरिक्तस्य बोधस्य चाननुभवात्, अत एव नानुमानतः, प्रत्यक्षपूर्वकत्वात्तस्य, न वार्थापत्तितः, तस्याः प्रामाण्यानुपपत्तेः, अनुस्मरणरूपत्वाच्च तस्याः, न हि इदं तदित्युल्लेखवदनुस्मरणमदृष्टेऽर्थे प्रवर्त्तते ज्ञानस्यादृष्टत्वात्। न चार्थस्य ज्ञानमिति निराकारस्य ज्ञानस्याविसंवादिनः प्रतीतेर्न तस्यासद्भाव इति वाच्यम्, आकार- 10
मन्तरेणार्थस्य बुद्धिरिति संयुज्य बुद्धेः प्रतीत्यसम्भवात्, न हि इदं तदित्यनिरूपिताकारमन्तरेण नियोजनामर्हति, न च तथाऽप्रतीयमाना बुद्धिरिति व्यपदेशमासादयति, शशशृङ्गादेरपि बुद्धित्वप्रसक्तेः तस्मात्साकारा बुद्धिरभ्युपगन्तव्या। अथ सुखस्तंभाद्याकारतया यद्यन्तःस्प्रष्टव्यशरीरादिकमेव ज्ञानं प्रतिभाति न पुनस्ततो व्यतिरिक्तमपरं ज्ञानं तदा संवेदनमात्रमेव प्रसक्तम्, एवञ्च चक्षुरादिना मया रूपं प्रतीयत इति कथं प्रतीतिः, सम्बन्धाभा- 15
वात्, अस्ति चेयं प्रतीतिः, तस्मादुपलभ्ये रूपादिकेऽभिमुखीभूतं चक्षुस्तत्प्रकाशत्वं विदधाति सा च बुद्धिरुच्यते। न च तत्राविद्यमानमेव नीलाद्याकारं प्रकाशत्वमुत्पन्नमिति वाच्यम्, विद्यमाननीलादिविषयचक्षुरादिव्यापारात् केवलमविद्यमानप्रकाशत्वस्यैवोत्पत्तेः, नीलादेस्तु पूर्वमेव भावात्, तथा च सत्यर्थस्य बुद्धिरिति व्यपदेशः सिद्ध एवेति चेन्न, प्रकाशव्यतिरेकेण नीलादेरनुपलम्भाच्चक्षुरादिना पूर्वव्यवस्थित एव नीलादौ प्रकाशता समुदितेति वक्तुम- 20
शक्यत्वात्, न हि प्रकाशतारहितं नीलादिकं कदाचिदुपलब्धम्, उपलम्भे वा सर्वस्य सर्वदर्शित्वप्रसक्तिः, न च नीलस्य प्रकाश इति व्यतिरेक उपलभ्यत इति वाच्यम्, शिलापुत्रकस्य शरीरम्, स्तम्भस्य स्वरूपमित्यत्रापि व्यतिरेकोपलब्धेर्व्यतिरेकः स्यात्, तथा प्रकाशस्य प्रकाशतेति दृष्टेः प्रकाशताया अपि भेदः स्यात्। न चात्रैकैव प्रकाशता नापरा भेदोपलम्भस्तु प्रत्यक्षबाधित इति वाच्यम्, तथा सति नीलप्रकाशयोरपि न प्रत्यक्षप्रतीतो भेद इति 25
व्यतिरेकस्यासिद्धेर्नीलाद्याकारैव प्रकाशता सा च बुद्धिरिति सिद्धा साकारता ज्ञानस्येति तत्रोच्यते, निराकारं विज्ञानमर्थग्राहकं न प्रत्यक्षतः प्रतीयते स्तम्भशरीरादिभेदेनानुपलम्भतस्तस्यासत्त्वादिति न युक्तम्, अहङ्कारास्पदस्य सुखादेर्ज्ञानविशेषस्यान्तः स्वसंवेदनप्रत्यक्षेणानुभूयमानस्य सत्त्वात्, न च स्वसंवेदनप्रत्यक्षसिद्धस्याप्यसत्त्वम्, स्तम्भाद्याकारस्यापि ज्ञान-

स्यासत्त्वप्रसक्तेः न हि तथाप्रतिभासादपरमत्रापि सत्त्वनिबन्धनम् । न चाहम्प्रत्ययोऽन्तःस्पष्ट-
व्यशरीरालम्बनः, शरीरस्य सप्रतिघत्वेनापरप्रत्यक्षविषयत्वेन चाज्ञानरूपतया मुख्याहम्प्रत्यय-
विषयत्वानुपपत्तेः, ज्ञानस्यैवाप्रतिघत्वेन परप्रत्यक्षाविषयत्वेन मुख्याहम्प्रत्ययविषयत्वात् । न च
निराकारं ज्ञानं नानुभूयतेऽतो न प्रत्यक्षतो ग्राह्यव्यतिरिक्तं ग्राहकस्वरूपं प्रतिभातीति वाच्यम्,
5 नीलमहं वेद्मीति बाह्यनीलार्थग्राहकस्यान्तर्ग्राह्याद्व्यतिरिक्तस्य स्वसंवेदनाध्यक्षतो ज्ञानस्याहमह-
मिकया प्रतीतेः । न चान्तः सुखादयो बहिश्च नीलादयः परिस्फुटवपुषः स्वसंविदिताः प्रतिभा-
न्ति न पुनस्तद्व्यतिरिक्तनिराकारं ज्ञानस्वरूपमर्थग्राहकमाभाति सुखादेरर्थग्राहकत्वायोगादिति
वक्तव्यम, बाह्यं प्रति सुखादीनां ग्राहकत्वस्यास्माभिरप्यनङ्गीकारात्, न हि सुखादयो भाव-
नोपनेयजन्मानो बहिरर्थसन्निधिमन्तरेणापि प्रादुर्भवन्तः पदार्थव्यक्तीनां नियमेनोद्योतकाः,
10 तेषां स्ववपुःपर्यवसितस्वरूपत्वात । चक्षुरादिप्रभवास्तु संविदो बहिरर्थमुद्भासयन्त्यः स्पष्टाव-
भासा अन्वयव्यतिरेकाभ्यां पृथगवसीयन्त इति पदार्थग्राहिण्यस्ता एवाभ्युपगमनीयाः सु-
खादिवेदनं तु हृदि परिवर्तमानं बाह्यार्थसंविदः पृथगेव, न तद्बाह्यार्थग्राहकतयाऽभ्युपगमवि-
षयः, तदेवं ग्राह्याद्व्यतिरेकेण निराकारज्ञानस्य स्वसंवेदनाध्यक्षसिद्धत्वादनुमानमपि तत्सा-
धकत्वेन प्रवर्त्तत एव विप्रतिपत्तिसद्भावे । न च निराकारबुद्धिग्राहिकाऽपराबुद्धिरावश्यकी,
15 बुद्धेः स्वपरार्थग्राहकस्वरूपत्वात, तथैव स्वसंवेदने तस्याः प्रतिभासमानत्वात् । न च प्रकाश-
तारहितं नीलादिकं नोपलभ्यते तथोपलम्भे सर्वः सर्वदर्शी भवेत, अतो नार्थाकारव्यति-
रिक्ता सेति वाच्यम्, यतो ज्ञानं विना नीलादिकं नोपलभ्यत इत्युच्यते तदा सिद्धसाध्यता,
तदन्तरेण तदुपलम्भस्यानिष्टत्वात । अथ नीलमेव प्रकाशरूपमिति प्रतिपाद्यते तन्न, नीलस्य
जडतया प्रकाशरूपत्वानुपपत्तेः, जडाजडयोः परस्परपरिहारस्थितिलक्षणतयैकत्वायोगात् । य-
20 दपि नीलस्य प्रकाश इति व्यतिरेकः शिलापुत्रकस्य शरीरमित्यादाविवाभेदेऽपि सम्भवतीति
तदपि न समीचीनम, दृष्टान्ते हि प्रत्यक्षावगतोऽभेदो भेदप्रतिभासस्य बाधकः, न तु दार्ष्टान्ति-
के प्रत्यक्षारूढोऽभेदप्रतिभासः समस्ति, तथाहि स्तम्भादि ग्राह्यरूपमनन्यव्यापृतत्वेन ग्राह्यत-
याऽध्यक्षे प्रतिभाति प्रकाशता तु स्तम्भादिकर्मणि व्यापृतत्वेन ग्राहकतया प्रतिभातीति न स्त-
म्भतत्संवेदनयोरभेदावभासोऽध्यक्षारूढोऽवभाति, न केवलं ग्राहकाकारोऽन्यव्यापृतत्वेन प्रति-
25 भाति किन्त्वाह्लादादिस्वभावतया अहङ्कारास्पदश्च प्रतिभासनिश्चयाभ्यामवसीयते, तद्ग्राह्यस्तु

१ ज्ञानार्थयोर्योग्यतास्वभाव एव सम्बन्धो ग्राह्यग्राहकभावाङ्गम्, न तु ज्ञानस्यार्थाकारधारित्वाद्ग्राहकत्वं स्वाकारार्पकत्वाच्चार्थस्य ग्राह्यत्वम्, ज्ञानं हि स्वसामग्रीप्रतिनियमात् प्रतिनियतार्थसंवेदनयोग्यमेवोपजायते, अर्थोऽपि सामग्रीविशेषादेव प्रतिनियतसंवेदनवेद्यतायोग्य एव समुत्पद्यते, ज्ञानञ्च स्वपरप्रकाशमिति न ज्ञानं स्वरूपनिमग्नं कथमर्थं प्रकाशयतीति शङ्काया अवकाशः ॥

तद्विपरीतत्वेन । न चाध्यक्षसिद्धभेदयोर्नीलतत्संवेदनयोः कुतश्चित् प्रमाणादेकताऽवसातुं शक्येति न भेदप्रतिभासस्य बाधा न हि नीलादिरेव ज्ञानरूपः, अहं नीलादिरित्यनवगमात्, तस्मान्नीलाद्याकारैव प्रकाशता सा च बुद्धिरिति निरस्तम् । न च यदि प्रकाशता निराकारा न तर्हि प्रतिकर्म व्यवस्थेति शंक्यम्, प्रकाशता हि किं नीलाद्याकारा, उत ग्राह्याकारा वा, प्रथमे[*] यद्येकदेशेन सा नीलाद्याकारा तर्हि सांशैका प्रकाशता प्रसक्तेत्यनेकान्तसिद्धिः । सर्वात्मना नीलाद्याकारत्वे तस्या जडरूपनीलादिस्वभावत्वाद्विज्ञप्तिरूपत्वाभावप्रसक्तिः, जडस्य प्रकाशरूपत्वायोगात् । द्वितीयेऽन्योन्याश्रयः, ग्राह्यस्य प्रतिनियतरूपसिद्धौ तदाकारा प्रकाशता सिद्ध्यति, तत्सिद्धौ च ग्राह्यस्य प्रतिनियतरूपसिद्धिरिति । न हि देवदत्तस्य तदाकारतासिद्धौ यज्ञदत्तस्य तदाकारतासिद्धिर्दृष्टा, न च प्रकाशतासाकारतासिद्धिमन्तरेणापि ग्राह्यस्य प्रतिनियतरूपसिद्धिः, निराकारज्ञानस्य प्रतिकर्म व्यवस्थाहेतुत्वप्रसक्तेः । न च यद्यदाकारं तत् तस्य ग्राहकमिति व्याप्तिसिद्धिः, अन्यथा उत्तरनीलक्षणः पूर्वनीलक्षणस्य ग्राहकः स्यात् । न च तस्याज्ञानरूपत्वान्नायं दोषः, देवदत्तनीलज्ञानस्य यज्ञदत्तनीलज्ञानग्राहकतापत्तेः । न च तयोः कार्यकारणभावस्याभावान्न दोषः, सदृशसमनन्तरज्ञानक्षण प्रत्युत्तरज्ञानक्षणस्य ग्राहकताप्रसक्तेः । न च तथाविधसारूप्याभावान्नायं दोष इति वक्तव्यम्, कथञ्चित्सारूप्येऽनेकान्तवादप्रसङ्गात्, सर्वात्मना सारूप्ये चोत्तरक्षणस्य पूर्वक्षणत्वप्रसङ्गेनैकक्षणमात्रं सर्वसन्तानं स्यात्, न च पूर्वोत्तरक्षणयोः परपक्षे भिन्नमभिन्नं वैकान्ततः सारूप्यं सम्भवति, भेदपक्षे सामान्यवादप्रसक्तेः, अभेदपक्षे तु तदभावप्रसक्तेः । किञ्च यदि नीलाकारं ज्ञानमनुभूयत इति बाह्योऽप्यर्थो नीलतया व्यवस्थाप्यते तर्हि त्रैलोक्यगतनीलार्थव्यवस्थितिस्ततो भवेत्, सर्वनीलार्थसाधारणत्वात्तस्य । अथ नीलाकारताऽविशेषेऽपि कश्चित्प्रतिनियमहेतुस्तत्र विद्यते यतः पुरोवर्तिन एव नीलादेस्ततो व्यवस्था, तर्हि ज्ञानस्यानाकारत्वेऽपि तत एव नियमहेतोः प्रतिनियतार्थव्यवस्थापकत्वं भविष्यतीति तत्समानाकारतापरिकल्पनं व्यर्थम् । तस्मान्न साकारज्ञानप्रमाणवादोऽभ्युपगमार्होऽनेकदोषदुष्टत्वादिति स्थितम् ॥

जैमिनीयाभिमतस्य ज्ञातृव्यापारस्य प्रमाणत्वं पूर्वमेव निराकृतम्, यत्तु तस्य विशेषणं अनधिगतार्थगन्तृत्वं प्रतिपादितं तदप्यसङ्गतम्, प्रमाणं ह्यधिगतेऽनधिगते वा वस्तुन्यव्यभिचारादिविशिष्टां प्रमां जनयन्नोपालम्भविषयः । न चाधिगते वस्तुनि किं कुर्वत्प्रमाणतामाप्नोतीति वक्तव्यम्, विशिष्टप्रमां विदधतस्तस्य प्रमाणताप्रतिपादनात् । न च पूर्वोत्पन्नैव

---

१ अज्ञाननिवर्तनस्यापि प्रयोजनत्वं विज्ञेयम्, न च कृतस्य करणायोगः, अज्ञाननिवर्तनानन्तरकारणात्, पुनरज्ञाननिवृत्तेः किं फलमिति न वाच्यम्, फलरूपस्य स्वस्य फलान्तरान्वेषणायोगात् अन्यथा तदविरामप्रसङ्गः ॥

प्रमा तेन जन्यते, प्रमित्यन्तरोत्पादकत्वेन प्रमाणत्वात् । तस्योत्पादकत्वेऽप्यधिगतविषयत्वाऽकिञ्चित्करत्वमिति चेन्न, स्वहेतुसन्निधिबलादधिगतमनधिगतं वा वस्तु अधिगच्छतोऽप्रेक्षापूर्वकारित्वेनोपालम्भविषयत्वानुपपत्तेः । न चैकान्ततोऽनधिगतार्थाधिगन्तृत्वे प्रामाण्यं तस्यावसातुं शक्यम्, तद्धि अर्थतथाभावित्वरूपं संवादतस्तदर्थोत्तरज्ञानवृत्तिनोऽवसीयते न चानधिगतार्थाधिगन्तुरेव प्रामाण्ये संवादप्रत्ययस्य प्रामाण्यमुपपन्नम्, न चाप्रमाणेन संवादप्रत्ययेन प्राक्तनस्य प्रामाण्यं व्यवस्थापयितुं शक्यमतिप्रसङ्गात्, अतो यथाऽधिगतार्थाधिगन्तुरर्थक्रियानिर्भासिज्ञानस्य प्रामाण्यं तथा साधननिर्भासिनोऽप्यभ्युपगन्तव्यम् । न च सामान्यविशेषतादात्म्यवादिन एकान्ततोऽनधिगतार्थाधिगन्तृत्वं प्रमाणस्य सम्भवति, इदानीन्तनास्तित्वस्य पूर्वास्तित्वाभेदात्तस्य च पूर्वमप्यधिगतत्वसम्भवात्, कथञ्चिदनधिगतार्थाधिगन्तृत्वाऽभ्युपगमेऽस्मन्मतानुप्रवेशप्रसक्तिः । नन्वप्रेक्षापूर्वकारितया प्रमाणस्यानुपलम्भविषयत्वेऽपि पुरुषस्य प्रेक्षापूर्वकारिणोऽधिगतविषयमपि प्रमाणं पर्येषमाणस्योपालम्भविषयता, स हि पूर्वाधिगते वस्तुनि प्रेक्षापूर्वकारी किमित्यधिगमाय प्रमाणान्तरमन्वेषते, निष्पन्नप्रयोजनापेक्षया हेतुं व्यापारयतः प्रेक्षापूर्वकारिताहानिप्रसक्तेः, मैवम्, प्रीत्यतिशयादेः प्रयोजनस्यानिष्पन्नस्य भावात्, सुखसाधने हि विषये पुनः पुनः प्रमां जनयतः प्रीत्यतिशयजनकत्वेन सप्रयोजनत्वात् प्रमाणान्तरान्वेषणस्य न तदन्वेष्टुः पुरुषस्योपालम्भार्हता । न च निश्चिते विषये न किञ्चिन्निश्चयान्तरेण प्रयोजनम्, भूयो भूय उपलभ्यमाने दृढतरप्रतिपत्तेर्भावात्, सुखसाधनं हि तथैव निश्चित्योपादत्ते दुःखसाधनञ्च तथात्वेन सुनिश्चित्य परित्यजति अन्यथा विपर्ययेणाप्युपादानत्यागौ भवेताम्, अत एवैकविषयाणामपि शाब्दानुमानाध्यक्षाणां प्रामाण्यमुपपन्नम्, प्रतिपत्तिविशेषस्य प्रीत्यतिशयादेश्च सद्भावात् । न च प्रथमप्रत्ययेनैवार्थक्रियासमर्थार्थप्रदर्शने प्रवर्त्तितः पुरुषः प्रापितश्चार्थ इति तत्रापरप्रमाणान्वेषणं वैयर्थ्यमनुभवेत्, पुरुषप्रवृत्तेः प्रमाणाधीनत्वाभावाद्विशिष्टप्रमाया एव प्रमाणाधीनत्वात्ताञ्च जनयत उपेक्षणीयादौ विषये प्रमाणस्याप्रवर्त्तकस्यापि प्रमाणत्वेन लोके प्रसिद्धत्वात्, प्रवृत्तेस्तु पुरुषेच्छानिबन्धनत्वात् तदभावे नोक्तफलजनकस्य प्रमाणत्वव्याघातः । न च पुरुषार्थसाधनप्रदर्शकत्वमेव तस्य प्रवर्त्तकत्वम्, तत्सद्भावेऽपि प्रवर्त्तितोऽहमनेनात्रेति तद्ग्रहणेच्छाभावे प्रवृत्त्यनुपपत्तेः । न च प्रवृत्त्यभावे तस्य प्रदर्शकत्वलक्षणो निजो व्यापार एव नोपपद्यत इति वक्तव्यम्, प्रतीतिबाधोपपत्तेः, न हि चन्द्रार्काद्यर्थविषयमध्यक्षमप्रवर्त्तकत्वान्न तत्प्रदर्शकमिति लोकप्रतीतिः, तन्न अनधिगतार्थगन्तृत्वमपि ज्ञातृव्यापारविशेषणमुपपत्तिमत् । अतोऽनधिगतार्थाधिगन्ता ज्ञातृव्यापारोऽर्थप्रकटताख्यफलानुमेयो जैमिनीयपरिकल्पितो न प्रमाणमिति स्थितम् ॥

**सौगतैश्च** प्रमाणमविसंवादिज्ञानमिति वचनादविसंवादकत्वं प्रमाणलक्षणम्, अविसं-

वादकत्वञ्च प्राप्तिनिमित्तप्रवृत्तिहेतुभूतार्थक्रियाप्रसाधकार्थप्रदर्शकत्वम्, अर्थक्रियार्थी हि पुरुषोऽर्थक्रियानिर्वर्तनसमर्थमर्थमवाप्तुकामः प्रमाणमन्वेषते, यदेव चार्थक्रियानिर्वर्तक-वस्तुप्रदर्शकं तदेव तेनान्विष्यते, प्रत्यक्षानुमाने एव तथाभूतार्थप्रदर्शके न ज्ञानान्तरमिति ते एव लक्षणार्हे तयोश्च द्वयोरप्यविसंवादकत्वमस्ति लक्षणम्, प्रत्यक्षेण अर्थक्रिया-साधनं दृष्टतथावगतं प्रदर्शितं भवति, अनुमानेन तु दृष्टलिङ्गाव्यभिचारितयाऽध्यवसित- 5 मित्यनयोः प्रदर्शकत्वमेव प्रापकत्वम्, न ह्याभ्यां प्रदर्शितेऽर्थे प्रवृत्तौ न प्राप्तिरिति नान्यत् प्रदर्शकत्वव्यतिरेकेण प्रापकत्वम्, तच्च शक्तिरूपम्, [1]प्रत्यक्षस्य क्षणो ग्राह्यः, स च न प्राप्ति-विषयो निवृत्तत्वात्, सन्तानस्त्वध्यवसेयः प्रवृत्तिपूर्विकाया प्राप्तेर्विषय इति तद्विषयं प्रद-र्शितार्थप्रापकत्वमध्यक्षस्य प्रामाण्यम्, अनुमानेन त्वारोपितं वस्तु गृहीतं स्वाकारो वा तयो-र्द्वयोरप्यवस्तुत्वान्न प्रवृत्तिविषयतेति न तद्विषयं तस्य प्रापकत्वमपि तु आरोपितबाह्ययोरभे- 10 दाध्यवसायेन वस्तुन्येव प्रवर्तकत्वप्रापकत्वे द्रष्टव्ये, तेनानुमानस्य ग्राह्योऽनर्थः प्राप्यस्तु बाह्यः स्वाकाराभेदेनाध्यवसित इति तद्विषयमस्यापि प्रदर्शितार्थप्रापकत्वं प्रामाण्यम्, प्रमा-णस्य प्रापणशक्तिश्चार्थाविनाभावनिमित्ता दर्शनपृष्ठभाविना विकल्पेन निश्चीयते, तथाहि दर्शनं यतोऽर्थादुत्पन्नं तद्दर्शकमात्मानं स्वानुरूपावसायोत्पादनान्निश्चिन्वदर्थाविनाभावित्वं प्रापण-शक्तिनिमित्तं प्रामाण्यं स्वतो निश्चिनोतीत्युच्यते न पुनर्ज्ञानान्तरं तन्निश्चायकमपेक्षते, 15 अर्थानुभूताविव, ततोऽविसंवादकत्वमेव प्रमाणलक्षणं युक्तमिति तन्न युक्तम्। अर्थ-प्रदर्शकत्वस्यैव प्रापकत्वाभावात्, पुरुषेच्छाधीनप्रवृत्तिनिमित्तत्वात् सति वस्तुन्यर्थप्राप्तेः। उपेक्षणीये च विषये पुरुषस्य तद्विषयार्थित्वाद्यभावे प्राप्तिपरित्यागयोरभावेऽपि तत्प्र-दर्शकत्वलक्षणस्य प्रामाण्यस्य न कश्चिद्व्याघात उपलभ्यते। न चेष्टानिष्टसाधनार्थ-व्यतिरेकेणोपेक्षणीयार्थान्तरस्याभावात्कथं प्रापकत्वाभावेऽपि प्रदर्शकत्वसम्भवः, सर्वस्य 20

---

१ प्रत्यक्षस्य विषयो द्विविधः, सकलसजातीयविजातीयव्यावृत्तः स्वलक्षणारूपो ग्राह्यरूप एकः, अर्थस्य ग्राह्यत्वं स्वाकारज्ञानजनकत्वमेव। ज्ञानस्य च ग्राहकत्वमर्थाकारतया उत्पादः। अपरश्चाध्यवसेयः, सन्तानरूपः, तस्य चाध्यवसेयत्वमगृहीतस्यापि प्रवृत्तिविषयत्वम्, उपादानोपादेयभावापन्ना बहवः स्वलक्षणक्षणाः सन्तानः, अध्यवसेयार्थसन्तानापेक्षयैव प्रत्यक्षस्य प्रामाण्यव्यवस्था, तस्मात्सन्तानाध्यवसाये सत्यविसंवादकत्वेन प्रत्यक्षस्य प्रामाण्यम्। प्रत्यक्षेण सन्तानाध्यवसायः कथमिति चेत् प्रत्यक्षजन्यविकल्पेन सन्तानस्याध्यवसितत्वात्सः प्रत्यक्षेणाध्यवसित इत्यभिधीयते। अनुमानस्यापि ग्राह्याध्यवसेयतया द्विविधो विषयः, तत्राध्यवसेयं स्वलक्षणम्, जातेऽनुमानेऽध्यवसायादर्थक्रियाकारिणि स्वलक्षण एव प्रमातुः प्रवृत्त्युपलब्धेः। ग्राह्यो विषयः, सामान्यमेव, अनुमाने स्वलक्षणस्यास्फुरणात् सामान्यस्यार्थक्रियाकारित्वाभावेन परमार्थतोऽनुमानं निर्विषयम्, स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तत्वाद्भ्रान्तञ्च, तथात्वेऽपि प्रणालिकया मूलवस्तुस्वलक्षणप्रभवत्वान्मणिप्रभायां मणिबुद्धिरिव वस्तुप्राप्त्या प्रापकत्वमिति भावः ॥

वस्तुनो राशिद्वयेऽन्तर्भावादिति वाच्यम्, स्वसंविदितवस्त्वपह्नवस्य युक्तिशतेनापि कर्तुमशक्यत्वात्, उपेक्षणीयं हि वस्तु नेष्टसाधनं न वानिष्टसाधनम्, इष्टानिष्टसाधनयोर्यत्नोपादेयत्वहेयत्वदर्शनात्, उपेक्षणीयस्य च यत्नसाध्योपादानत्यागाविषयत्वात् राशिद्वये नान्तर्भाव इति न प्रदर्शकत्वमेव प्रापकत्वम्। न च तव मतेन प्रदर्शितार्थप्रापकत्वं
5 क्वचिदपि ज्ञाने सम्भवति, तद्धि सन्तानाश्रयेण स्यात्, न च सन्तानः सन्तानिभिन्नतया: वस्तुसन्नभ्युपगम्यते, क्षणिकवादहानिप्रसङ्गात्, सामान्यानभ्युपगमस्य निर्निबन्धनत्वापत्तेश्चातो न तस्य स्वरूपेण प्रवृत्त्यादिविषयता। सन्तानिरूपेण च तस्य सत्त्वे सन्तानिन एव तथाभूता न तद्व्यतिरिक्तः सन्तानः प्रवृत्त्यादिविषयः, सन्तानिनामुत्पत्त्यनन्तरं ध्वंसादिति न तद्विषयं विज्ञानं प्रदर्शितार्थप्रापकम्, दृश्यप्राप्यक्षणयोरत्यन्तभेदात्, यत्र हि देश-
10 कालाकारभेदादभेदेन प्रतीयमानस्यापि वस्तुनो भेदस्तत्र स्वरूपेण भिन्नयोः पूर्वोत्तरक्षणयोः कथमभेदो येन साधननिर्भासिज्ञानं प्रदर्शितार्थप्रापकं स्यात्। संवृत्त्या सन्तानस्य स्वरूपसिद्धिमभ्युपेत्योक्तदोषवारणे तु लोकव्यवहारानुरोधेन प्रमाणस्य प्रदर्शितार्थप्रापकत्वाभ्युपगमात् कुतो नित्यानित्यवस्तुप्रदर्शकस्य प्रदर्शितार्थप्रापकत्वं नाभ्युपगम्यते, तत्रैव लोकव्यवहारस्योपपत्तेः। न च तथाविधवस्तुग्राहकं युक्तिबाधितत्वान्निर्विषयमिति वाच्यम्, सन्तानविषयस्यैव
15 पूर्वोक्तन्यायेन युक्तिबाधितत्वोपपत्तेः, तस्मान्नाध्यवसितार्थप्रापकं प्रत्यक्षं बौद्धाभ्युपगमेन सम्भवति। अध्यक्षेण हि यदेवोपलब्धं न तदेव तेनाध्यवसितम्, न च सन्तानस्तेन पूर्वमुपलब्ध इति कथमसावध्यवसीयते, न हि क्षणमात्रभाविनां सन्तानिनां दर्शनविषयत्वे तत्पृष्ठभाविनाऽध्यवसायेन तदट्टष्टस्यैव विषयीकरणम्, न चान्यथाभूतार्थस्य ग्रहणेऽन्यथाभूताध्यवसायिनः प्रदर्शितार्थप्रापकत्वं प्रामाण्यं युक्तम्, तथाभ्युपगमे शुक्तिकायां रजताध्यव-
20 सायिनोऽपि स्यात् प्रदर्शितार्थप्रापकत्वम्। न चात्र प्रवृत्तो न रजतमवाप्नोतीति न प्रदर्शितार्थप्रापकतेति वाच्यम्, सन्तानेऽध्यवसितेऽपि क्षणस्य प्राप्त्यभावेन प्रदर्शितार्थप्रापकत्वाभावात्, सन्तानस्य च प्राप्तौ तस्यैव वस्तुसत्त्वात् स्वरूपेण सामान्यधर्माणामसत्त्वाभ्युपगमस्यायुक्तत्वात्, अक्षणिकवस्तुसिद्धेः, तस्मान्नैतन्मतेन परमार्थतः प्रदर्शितार्थप्रापकं प्रमाणं सम्भवति इति ॥

25 नैयायिका अव्यभिचारादिविशेषणविशिष्टार्थोपलब्धिजनिका सामग्री प्रमाणम्, तज्जनकत्वञ्च प्रामाण्यमिति प्रतिपन्नाः। अथ सामग्र्याः प्रमाणत्वे साधकतमत्वमनुपपन्नम्, सामग्री ह्यनेककारकस्वभावा, तत्र चानेककारकसमुदाये कस्य स्वरूपेणातिशयो वक्तुं शक्यते, तथाहि सर्वस्मात्कारणकलापात् कार्यमुपजायमानमुपलभ्यते, तदन्यतमापायेऽप्यनुपजायमानं कस्य कार्योत्पादने साधकतमत्वमावेदयतु। न च समस्तसामग्र्याः साधकतमत्वम्, अपर-

स्यासाधकतमस्याभावे तदपेक्षया साधकतमत्वस्यानुपपत्तेः, असाधकतममपेक्ष्य साधकतम-
त्वव्यवस्थितेः । न चानेककारकजन्यत्वेऽपि कार्यस्य विवक्षातः कारकाणि भवन्तीति न्याया-
त्साधकतमत्वं विवक्षात इति वक्तव्यम्, पुरुषेच्छानिबन्धनत्वेन वस्तुव्यवस्थितेरयोगात् । अथ
कर्मकर्तृविलक्षणस्याव्यभिचारादिविशेषणविशिष्टोपलब्धिजनकस्य प्रमाणत्वान्न यथोक्तदोषानु-
षङ्गः, असदेतत्, अनेकसन्निधानात् कार्यस्य स्वरूपलाभे एकस्य तदुत्पत्तौ वैलक्षण्याभावे सा- 5
धकतमत्वानुपपत्तेः, तन्न कर्मकर्तृवैलक्षण्यमपि साधकतमत्वम् । सन्निपत्यजनकत्वे पूर्वोदित-
दोषाभावः, तथाहि अनेकसन्निधौ कार्यनिष्पत्तेः साधकतमत्वानुपपत्तिः, तस्मिंस्तु सति यदा
नियमेन कार्यमुपजायते तदा कथं न तस्य साधकतमत्वोपपत्तिः, असदेतत्, एवं प्रमाण-
त्वस्याव्यवस्थितिप्रसक्तेः तथाहि दीपादेः प्रकाशस्य सामग्र्येकदेशस्य कस्याञ्चिदवस्थायां
प्रमाणत्वेनाभिमतस्य सद्भावेऽपि प्रमेयाभावात्कार्यानिष्पत्तौ तत्सद्भावे तु तन्निष्पत्तौ तस्यापि 10
प्रदीपवत् सन्निपत्यकारकत्वात् प्रमाणताप्रसक्तिर्भवेत्, तथा प्रमातुरपि मूर्छाद्यवस्थायामन-
वधाने वाऽन्यकारकसन्निधानेऽपि कार्यानुत्पत्तौ तदवधानादिसन्निधाने तज्जन्यकार्यनिष्पत्तेः
सन्निपत्यजनकत्वेन साधकतमत्वप्रसक्तिः । अत्र कारकसाकल्यस्य साधकतमत्वेनाभ्युपगमात्
पूर्वोक्तदोषाभावं केचिन्मन्यन्ते तथाहि नैकस्य प्रदीपादेः सामग्र्येकदेशस्य कारणता, अपि
तु कारकसाकल्यस्य तदभावेऽभावेनाभिमतकार्याभावात् प्रमातृप्रमेयसद्भावे कारकसाकल्य- 15
स्योत्पत्तौ प्रमितिलक्षणस्य कार्यस्य भाव एव । अथ मुख्यप्रमातृप्रमेयसद्भावेऽपि पूर्वोदितस्य
नियमस्य तुल्यता न, कारकसाकल्यभावाभावनिमित्तत्वात्तन्मुख्यगौणभावस्य, तथाहि कथञ्चि-
त्कारकवैकल्ये तयोः सत्त्वेऽपि गौणता, तत्साकल्ये कुतश्चिन्निमित्तान्तराद्यथोक्तप्रमितिलक्ष-
णकार्यनिष्पत्तावगौणता प्रमातृप्रमेययोः, तयोश्चानुपपत्तौ साकल्यस्यासत्त्वम्, अतः कार-
कसाकल्ये कार्यस्यावश्यम्भाव इति तस्यैव साधकतमत्वम्, अनेककारकसन्निधाने उपजाय- 20
मानोऽतिशयः सन्निपत्यजननं साधकतमत्वं यद्युच्येत तदा न कश्चिद्दोषः, तथाहि सामग्र्येक-
देशकारकसद्भावेऽपि प्रमितिकार्यस्यानुत्पत्तेरेकदेशस्य न प्रमाणता, सामग्रीसद्भावे त्ववश्य-
न्तया विशिष्टप्रमितिस्वरूपोत्पत्तेः, एकदेशापेक्षया तस्या एव सन्निपत्यजनकत्वेन साधकत-
मता । न चात्र किमपेक्षया तस्याः साधकतमत्वम्, अन्यस्मिन्नसाधकतमे साधके साध-
कतरे वा सद्भावे तदपेक्षया तस्याः साधकतमत्वमुपपन्नमिति वाच्यम्, सामग्र्यन्तर्गतैक- 25
देशानां जनकत्वात्क्षतेस्तेषामेव सामग्र्या धर्मरूपतया तदेकदेशापेक्षया तस्याः साधकतम-
त्वात् प्रमाणत्वोपपत्तेः, मैवम्, यतः कारकसाकल्यं किं सकलान्येव कारकाणि, किं वा
तद्धर्मः, उत तत्कार्यम्, अथवा पदार्थान्तरम्, तत्र न प्रथमः, कर्तृकर्मणोर्भावे तेषां करण-
त्वानुपपत्तेः, तत्सद्भावे वा नान्येषां कर्तृकर्मरूपता सकलकारकव्यतिरेकेणान्येषामभावात्

भावे वा न कारकसाकल्यम् । न च तेषामेव कर्तृकर्मरूपत्वम्, तेषां करणत्वानुपपत्तेः
कर्तृत्वकर्मत्वकरणत्वानां परस्परं विरोधात्, कर्तृत्वं हि ज्ञानचिकीर्षाधारत्वं स्वतंत्रता वा,
कर्मत्वं निर्वर्त्त्यविकार्यप्राप्यादिधर्मयोगित्वम्, प्रधानक्रियानाधारत्वञ्च करणत्वं विरुद्धान्ये-
तानि कथमेकत्र सम्भवन्ति । न च भिन्नभिन्ननिमित्तभेदात्तेषामविरोध इति वाच्यम्,
5 निमित्तानां तेषां सकलकारकेभ्योऽभेदे कर्तृत्वादीनामप्यभेदात्, भेदे वा तेषां कारक-
स्यापि भेदात्, सकलकारकभिन्नत्वे च सम्बन्धासिद्धेः, समवायादीनां निषिद्धत्वात् ।
विशेषणविशेष्यभावादिकोऽपि न सम्बन्धस्तत्रापि सम्बन्धान्तरकल्पनातोऽनवस्थाप्रसङ्गात्,
न च तस्य सम्बन्धरूपतया न सम्बन्धान्तरकल्पनाप्रसङ्ग इति वाच्यम्, एकान्तभेदे
सम्बन्धरूपताया एवायोगात् । न द्वितीयः, तस्यापि कारकाव्यतिरिक्तत्वे धर्ममात्रस्य
10 कारकमात्रस्य वा प्रसङ्गात्, व्यतिरिक्तत्वे कारकैस्तस्य सम्बन्धासिद्धिः सकलकारणेषु
च युगपत्तस्य सम्बन्धे तद्गतबहुत्वसंयोगविभागसामान्यानामन्यतमस्वरूपापत्तिरिति तद्दू-
षणेनैतस्यापि दूषितत्वात् । नापि तृतीयः पक्षः, नित्यानां साकल्यजननस्वभावत्वे स-
र्वदा तदुत्पत्तिप्रसङ्गात्, ततश्चैकप्रमाणोत्पत्तिसमये सकलतदुत्पाद्यप्रमाणोत्पत्तिप्रसङ्गः, त-
ज्जनकस्वभावस्य कारणेषु पूर्वोत्तरकालभाविनस्तदैव भावात्, तथाहि यज्जनकं यदाऽ-
15 स्ति तत्तदोत्पत्तिमत्, यथा तत्कालाभिमत प्रमाणम्, अस्ति च पूर्वोत्तरकालभाविनां
सर्वप्रमाणानां तदा नित्याभिमतं जनकमात्मादिकं कारणमिति कथं न तदुत्पाद्यसकलप्रमा-
णोत्पत्तिप्रसङ्गः, अन्यथा तत्कारणमेव तन्न भवेदिति सकृदपि ततो न स्यात् ततश्च
प्रमाणविकलं जगत् स्यात्, न च तत्करणसमर्थे आत्मादिके सत्यपि प्रमाणानि स्वकाल
एव भवन्तीति वाच्यम्, तत्कार्यत्वाभावप्रसङ्गात्, सत्यपि तस्मिन् तदाऽभावात्, स्वयमेवा-
20 न्यदा च भावात् । न च स्वकालेऽपि कारणे सत्येव भवन्तीति तत्कार्यत्वमिति वाच्यम्,
गगनादीनामपि सत्त्वे तेषां भावाद्गगनादिकार्यताप्रसङ्गात्, न चेष्टापत्तिः प्रमितिलक्षणस्य
तत्फलस्यापि व्योमादिजन्यतयाऽऽत्मानात्मविभागाभावप्रसङ्गात्, न च प्रमितिर्यत्र सम-
वेता स आत्मा नान्य इति विभागसम्भवः, समवायस्य नित्यैकसर्वगतत्वेन प्रमितेर्व्योमा-
दावपि समवेतताप्रसक्तेः, समवायाविशेषेऽपि समवायिनोर्विशेषाङ्गीकारेण तत्परिहारे तु
25 समवायाभावप्रसङ्गात्, तत एव विशेषान्नियमसम्भवात् । अथ यदा यत्र यथा यद्भवति तदा
तत्र तथा तदात्मादिकं कर्तुं समर्थमिति नैकदा सकलतदुत्पाद्यप्रमाणोत्पत्तिप्रसङ्ग इति चेन्न,
स्वभावभूतसामर्थ्यभेदमन्तरेण कार्यस्य कालादिभेदायोगात्, अन्यथा दृश्यपृथिव्यादिमहा-
भूतकार्यनानात्वस्य कारणं किमर्थमदृष्टं पृथिवीपरमाण्वादिचतुर्विधमभ्युपगम्यते, एकमेवा-
नंशं नित्यं सर्वगतं सर्वोत्पत्तिमतां समवायिकारणमभ्युपगम्यताम् । न च कारणजातिभेदम-

न्तरेण कार्यभेदो नोपपद्यत इति वाच्यम्, कारणशक्तिभेदमन्तरेणापि न कार्यभेद उपपद्यत इत्यभ्युपगमप्रसङ्गात् । न च यया शक्त्या एकमनेकाश्शक्तीर्बिभर्ति तत्राप्यपरापरशक्तिपरिकल्पनेऽनवस्थाप्रसङ्गात्कारणजात्यैव तदनेकं कार्यं विधास्यतीति न शक्तिभेदपरिकल्पनेति वाच्यम्, कयाचिच्छक्त्या भिन्नाः शक्तीर्बिभर्तीत्यनभ्युपगमात्, किन्तु स्वकारणकलापात्परमाण्वादेरनेकशक्त्यात्मकतयैवोत्पादात्, न चैकमनेकात्मकमदृष्टमिति वाच्यम्, नानारूपात्मकैकपटादेः प्रमाणतः प्रतिपत्तेः, अन्यथा समवायस्याभावाद्गुणगुणिभाव एव न स्यात् । तस्मात्सकलकारणानि नित्यानि चेत्साकल्यजननस्वभावानि तर्हि सकलकालभाविसाकल्यस्य तदैवोत्पत्तिप्रसक्तिः नो चेत्तज्जननस्वभावानि नैकदापि तदुत्पत्तिरतज्जननस्वभावाविशेषात्, नित्यस्यानुपकार्यतया सहकार्यपेक्षाभावेन तदपेक्षया जनकत्वस्याप्यसम्भवाच्च । नापि पदार्थान्तरं साकल्यम्, निखिलपदार्थान्तरस्य साकल्यरूपताप्रसङ्गात्, तथा च यस्य कस्यचित्पदार्थान्तरस्य सद्भावे सकलार्थोपलब्धिर्भवेदिति सर्वदा सर्वस्य सर्वज्ञताप्रसङ्ग इति न कारकसाकल्यं प्रमाणम्, एतेन प्रमातृप्रमेययोरभावे साकल्याभाव इति निरस्तम् । सन्निपत्यजननस्वरूपं साधकतमत्वमपि तस्य साकल्यरूपतया तत्प्रतिषेधे प्रतिषिद्धमेव । तस्मात् प्रमाणं स्वार्थनिर्णीतिस्वभावं ज्ञानमित्येतदेव प्रमाणसामान्यलक्षणमनवद्यम् ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानंदसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य प्रमाणपरीक्षणं नाम त्रयोविंशं सोपानम् ॥



## अथ स्वपरनिर्णयस्वभावस्थापनम् ।

ननु कथमर्थनिर्णीतिस्वभावं ज्ञानं स्वनिर्णीतिस्वभावमपि, घटादिज्ञानं स्वग्राह्यं न भवति, ज्ञानान्तरग्राह्यं वा, ज्ञेयत्वाद्घटादिवदिति बाधकस्यानुमानस्य सद्भावादिति नैयायिकाः वदन्ति तन्न हेतोः स्वरूपासिद्धत्वादाश्रयासिद्धत्वाच्च, धर्मी हि ज्ञानं तच्च न प्रमाणसिद्धम्, ततश्च कथं तदाश्रितज्ञेयत्वधर्मप्रतिपत्तिः, न हि धर्मिप्रसिद्धिरध्यक्षेण, ज्ञानस्येन्द्रियेणासन्निकर्षात्तज्जन्यतत्प्रत्यक्षासम्भवात् । ननु संयुक्तसमवायलक्षणसन्निकर्षेण मनसा तत्प्रत्यक्षं भवति आत्मना हि मनःसंयुक्तमात्मनि च ज्ञानं समवेतमिति तत्प्रत्यक्षेण घटादिज्ञानस्य ग्राह्यत्वात्कथमाश्रयासिद्धत्वादिदुष्टो हेतुरिति चेन्न, मनसोऽसिद्धेः, न च नानेन्द्रियविषयात्मसन्निधा-

नेऽपि युगपज्ज्ञानानि न भवन्ति ततो विज्ञायतेऽस्ति किञ्चित्तत्र निमित्तम्, यस्मात्तथाऽनुत्पत्तिः, तदेव च मन इति तत्सिद्धिरिति वक्तव्यम्, तदनुत्पत्तिर्मनःप्रतिबद्धेत्यस्यासिद्धेः, ननु व्यापकस्यात्मनः सर्वैरर्थैः सम्बन्धादिन्द्रियैः पञ्चभिरात्मसम्बद्धैः स्वविषयसम्बन्धे एकदा किमिति ज्ञानानि नोत्पद्यन्ते यद्यणु मनो नेन्द्रियैस्सम्बन्धमनुभवेत्, तत्सद्भावे तु यदै-
5 केनेन्द्रियेणैकदा मनः सम्बद्ध्यते न तदा परेण तस्य सूक्ष्मत्वादिति सिद्धा युगपज्ज्ञानानुत्पत्तिर्मनो निमित्तेति, मैवम्, तस्यात्मसम्बन्धसमये श्रोत्रसंज्ञकेन नभसा संयोगात् संयुक्तसमवायाविशेषात् सुखादिवच्छब्दोपलब्धिरपि तदैव भवेत्, ततो निमित्तस्य समानत्वेऽपि युगपज्ज्ञानानुदयेन निमित्तान्तरकल्पनाप्रसङ्गात्। न च कर्णशष्कुल्यवच्छिन्नाकाशदेशस्य श्रोत्रत्वात् तेन च तदा मनसः सम्बन्धाभाव इति वाच्यम्, निरंशस्याकाशस्य प्रदेशाभा-
10 वात्। न च संयोगस्याव्याप्यवृत्तित्वं प्रदेशव्यपदेशनिमित्तम्, उपचरितस्य व्यपदेशमात्रनिबन्धनस्यार्थक्रियायामुपयोगाभावात, न ह्युप चरिताग्नित्वो माणवकः पाकनिर्वर्तनसमर्थो दृष्टः। किञ्च चक्षुरादीन्द्रियसम्बन्धाद्रूपादिज्ञानोत्पत्तिकाले मनसः सम्बद्धसम्बन्धान्मानसज्ञानमपि भवेत्, तथाविधादृष्टाभावादिति चेत्तर्हि युगपज्ज्ञानान्यप्यदृष्टाभावादेव न भवन्तीति न मनः सिद्ध्येत्। अश्वविकल्पसमये गोदर्शनानुभवाद्युगपज्ज्ञानानुत्पत्तिश्चासिद्धा, न च तयोः
15 क्रमिकत्वमध्यक्षविरोधात्। न चोत्पलपत्रशतव्यतिभेदवदाशुवृत्तेः क्रमेऽपि यौगपद्याभिमानः, अध्यक्षसिद्धस्य दृष्टान्तमात्रेणान्यथाकर्तुमशक्तेः, क्षयोपशमापेक्षस्य चात्मनो युगपत् स्वपरप्रकाशस्वभावस्य स्वयममूर्तस्यानाप्तार्थग्राहिणो युगपत्स्वविषयग्रहणे न कश्चिद्विरोध इति कुतो न युगपज्ज्ञानोत्पत्तिर्भवेत्। ननु 'जुगवं दो णत्थि उवओगा [ आवश्यकनि० गा ९७९ ] इति वचनाद्भवतोऽपि युगपज्ज्ञानानुत्पत्तिः सिद्धैव, न, अस्य मानसविकल्पद्वय-
20 यौगपद्यनिषेधपरत्वात् इन्द्रियमनोविज्ञानयोर्यौगपद्यानिषेधात्। न च विवादास्पदीभूतानि ज्ञानानि क्रमभावीनि ज्ञानत्वात्, मानसविकल्पद्वयवदित्यनुमानाद्युगपज्ज्ञानानुत्पत्तिसिद्धिरिति वाच्यम्, अस्य प्रत्यक्षबाधितकर्मनिर्देशानन्तरप्रयुक्तत्वेन कालात्ययापदिष्टत्वात्। एवञ्च मनसोऽसिद्धेर्न ततोऽप्याश्रयः सिद्धः। न च घटादिज्ञानज्ञानमिन्द्रियार्थसन्निकर्षजम्, प्रत्यक्षत्वे सति ज्ञानत्वादित्यनुमानेन तत्सिद्धिरिति वाच्यम्, हेतोरस्याप्रसिद्धविशे-
25 षणत्वात, घटादिज्ञानज्ञानस्याध्यक्षत्वासिद्धेः, मन इन्द्रियसिद्धौ तस्याध्यक्षतासिद्धिस्तत्सिद्धौ सविशेषणहेतुसिद्ध्या मनइन्द्रियसिद्धिरित्यन्योन्याश्रयात्, घटज्ञानाद्भिन्नस्य तद्ग्राहकस्यापरस्य ज्ञानस्याननुभवाद्धेतोर्विशेष्यासिद्धत्वात्, अध्यक्षत्वे सति ज्ञानत्वस्य सुखसंवेदने सत्त्वेन व्यभिचाराच्च। न चेदमपि पक्षीक्रियत इति वाच्यम्, व्यभिचारिहेत्वप्रसिद्ध्यापत्तेः, अनित्यः शब्दः प्रमेयत्वाद्घटवदित्यादावपि व्यभिचारविषयात्मादेरपि पक्षीकरणसम्भवात्।

न चात्र प्रत्यक्षबाधेति वाच्यम्, अत्रापि समानत्वात्, न हि अविदितस्वरूपं सुखादिकं पूर्वं घटादिवदुत्पन्नं पश्चादिन्द्रियसम्बन्धोपजातज्ञानान्तराद्वेद्यत इति लोकप्रतीतिः, अपि तु प्रथममेव स्वप्रकाशरूपं तदुदयमासादयदुपलभ्यत इति । न च स्वात्मनि क्रियाविरोधो वाच्यः स्वरूपेण सह पदार्थस्य विरोधाभावात्, अन्यथा प्रदीपादेरप्यपरप्रकाशविकलस्वरूपप्रकाशविरोधः स्यात्, न च तत्स्वरूपत्वं तस्यासिद्धमिति वाच्यम्, प्रदीपादावपि तथास्वभा- 5 वासिद्धिप्रसङ्गात्, तथा दर्शनन्तूभयत्र समानम्, खड्गादेरात्मनि छिदिक्रियाऽजननेऽपि न तद्धर्मोऽन्यत्रापादयितुं शक्यः, अन्यथा घटनिष्ठायाः स्वपराप्रकाशनतायाः प्रदीपेऽप्यभ्युपगमप्रसङ्गात् । नापि सुखावगमात्पूर्वं तदभ्युपगमो युक्तः, शब्दस्यापि श्रवणसमयात्पूर्वं पश्चाच्च सत्ताभ्युपगमप्रसङ्गेन नित्यतापत्तेः । न चात्मनो ज्ञानाच्च पृथग्भूताः सुखादयोऽनुग्रहादिविधायिनो भवेयुः, इतरथा मुक्तात्मनोऽपि ते तथा स्युः । न च तेषां तत्रासमवेत- 10 त्वान्नायं दोषः, समवायाभावात्तस्मान्न सुखादिग्रहणे मनइन्द्रियसिद्धिः । अत एवात्मा मनसा संयुक्त इति न युक्तम्, आत्ममनसोर्निरंशतया संयोगासम्भवात्, एकदेशेन संयोगे सांशताप्रसक्तेः, सर्वात्मना संयोगे उभयोरेकताप्राप्तेः । यदि च यत्र मनः संयुक्तं तत्र समवेतं ज्ञानं समुत्पादयति तदा सर्वात्मनां व्यापित्वात् समानदेशत्वेन मनसः तैस्संयुक्तत्वात् सर्वात्मसमवेतसुखादिषु तदेव मन एकं ज्ञानमुत्पादयतीति प्रतिप्राणि भिन्नमनःपरिकल्पन- 15 मनर्थकमासज्येत । न च यस्य सम्बन्धि यन्मनः तत्समवेतसुखादिज्ञाने तद्धेतुरिति नायं दोषः, प्रतिनियतात्मसम्बन्धित्वस्यैव तत्रासिद्धेः, न हि तदात्मकार्यत्वेन तन्मनसस्तत्सम्बन्धित्वम्, तस्य नित्यताभ्युपगमात्, तत्र चानाधेयाप्रहेयातिशये तत्कार्यत्वायोगात् । न च यस्यादृष्टेन प्रेरितं सत्तत्प्रवर्त्तते तत्तत्सम्बन्धीति वाच्यम्, अदृष्टस्याचेतनत्वेन प्रतिनियतविषये तत्प्रेरकत्वायोगात्, प्रेरकत्वे वेश्वरपरिकल्पनं निरर्थकं भवेत् । न 20 चेश्वरप्रेरित एवात्मा तत्प्रेरक इति न तत्परिकल्पनव्यर्थता, अदृष्टप्रेरणामन्तरेणेश्वरस्य साक्षान्मनःप्रेरकत्वोपपत्तेरदृष्टपरिकल्पनाया निरर्थकत्वात् । न च सर्वसाधारणत्वादीश्वरस्यादृष्टविकलस्य मनःप्रेरकत्वे न ततस्तस्य प्रतिनियतात्मसम्बन्धित्वमिति अदृष्टस्यावश्यकतेति वक्तव्यम्, तस्याचेतनतयेश्वरसहितस्यापि प्रतिनियतमनःप्रवृत्तिहेतुत्वायोगात् तस्मान्न मनसोऽदृष्टादिः प्रतिनियमहेतुः, किञ्च स्वसंविदितज्ञानानभ्युपगमे मदस- 25 द्वर्गः कस्यचिदेकज्ञानावलम्बनः, अनेकत्वात् पञ्चाङ्गुलिवदित्यत्र पक्षीकृतैकदेशेन व्यभिचारः,

१ स्वात्मा हि क्रियायाः स्वरूपं, तत्र क्रियायाः कथं विरोधः स्वरूपस्याविरोधकत्वात्, विरोधस्य द्विष्ठत्वाच्च न स्वात्मनि क्रियाविरोध इति भावः । ज्ञानक्रियायाः कर्मतया स्वात्मनि विरोधः, ततोऽन्यत्रैव कर्मत्वदर्शनादित्यत्राह न चेति ।

तज्ज्ञानान्यसदसद्वर्गयोरनेकत्वाविशेषेऽपि एकज्ञानावलम्बनत्वाभावात, एकशाखाप्रभवत्वा-
नुमानवत् । ईश्वरज्ञानतदन्यसदसद्वर्गयोरेकज्ञानावलम्बनत्वे वाभ्युपगते स्वसंविदितत्वं
ज्ञानस्य भवेत्, सर्वं ज्ञानं स्वसंविदितं ज्ञानत्वात् सर्वज्ञज्ञानवदित्यनुमानात् तथा च सति
ज्ञेयत्वं हेतुर्व्यभिचारि स्यात् । किञ्च सति प्रथमज्ञाने यदि तद्ग्राहकं द्वितीयं ज्ञानमुत्पद्यते
5 तर्हि युगपज्ज्ञानानभ्युपगमविरोधः । असति चोत्पादे ग्राह्यस्यैवाभावान्न तद्ग्राहकत्वमन्यथा
द्विचन्द्रादिविज्ञानस्येव भ्रान्तत्वं तस्य भवेत् । तदेवमनेकदोषात् स्वनिर्णीतिस्वभावमेव
ज्ञानमिति सिद्धम् ॥

सौगताश्च भवतु ज्ञानं स्वसंविदितमर्थग्रहणस्वभावता तु तस्य न युक्ता, अर्थस्यैवा-
भावात्, यदवभासते तज्ज्ञानं यथा सुखादिः, अवभासते च नीलादिरिति स्वभावहेतुना
10 सर्वस्य ज्ञानात्मत्वादिति वदन्ति तदसत्, यतोऽत्र किं स्वतोऽवभासो हेतुः, परतो वा,
अवभासमात्रं वा, नाद्यः, परस्यासिद्धेः, न हि परानपेक्षो नीलाद्यवभासः परस्य सिद्धः,
नीलमहं वेद्मीति नीलव्यतिरिक्तस्वरूपतया प्रतिभासमानेन ज्ञानेन नीलादेर्ग्रहणाभ्युपगमात् ।
यदि परानपेक्षनीलाद्यवभासः परस्य सिद्धः स्यात्तर्हि किमतो हेतोरपरं साध्यमिति वक्त-
व्यम्, यदि ज्ञानरूपता साध्येत्युच्यते तर्हि सा यदि प्रकाशनारूपा तदा सापि हेतुसिद्धौ
15 सिद्धैव न साध्या, न सिद्धा सा चेत्तदा हेतुरप्यसिद्धैव । ननु भ्रान्तिः पुरुषधर्मः, तेन नी-
लादेः स्वतोऽवभासनमङ्गीकुर्वन्नपि तस्य ज्ञानरूपतां नेच्छति अतस्तम्प्रति साध्यते, नैवम्,
को हि भावधर्मं हेतुमिच्छन् भावं नेच्छेदित्यभिधानविरोधात्, भ्रान्त्या भावस्यानभ्युपगम-
सम्भवात् । नीलादेर्भिन्नेन ज्ञानेन ग्रहणं नोपपद्यते, भिन्नकालस्य समानकालस्य वाऽर्थस्य
भिन्नेन ज्ञानेन निर्व्यापारेण भिन्नाभिन्नव्यापारवता वा परोक्षेण वा स्वसंविद्रूपेण वा ज्ञाना-
20 न्तरवेद्येन वा ग्रहणासम्भवादतो नासिद्धो हेतुरिति चेन्न, अनुमानविलोपप्रसङ्गात्, अनुमानं
हि त्रिरूपलिङ्गप्रभवं लिङ्गञ्चानुमानाद्भिन्नं भिन्नकालञ्च यदि तस्य जनकं भवेत् कुतो न

---

१. अयम्भावः ययोः सहोपलम्भनियमस्तयोरभेदः यथा तैमिरिकोपलभ्यमानमृगाङ्कमण्डलयोः, सहोप-
लम्भश्च ज्ञानार्थयोरिति । भेदे हि तयोर्नियमेन सहोपलम्भो न स्यात् स्तम्भकुम्भयोरिव, तथा यत्प्रकाशते
तद्विज्ञप्तिमात्रं यथा सुखादिकम्, तथा यद्येन वेदनेन वेद्यते तत्ततो न भिद्यते यथा वेदनस्य स्वरूपम्,
25 वेद्यन्ते च वेदनेन नीलादयः, भेदे हि ज्ञानेनैषां वेद्यत्वं न स्यात्, नियमहेतुतादात्म्याभावात्तदुत्पत्तेश्चक्षुरा-
दिना व्यभिचारात् । प्रतिनियततया ग्राह्यत्वेनार्थस्य ग्राहकत्वेन ज्ञानस्य प्रतीतिस्तु अनाद्युपप्लववासनासामर्थ्यादिति॥
२. अयम्भावः, स्वभिन्नकालमप्यर्थं योग्यमेव ज्ञानं गृह्णाति, दृश्यते हि पूर्वचरादिलिङ्गप्रभवप्रत्ययात्
भिन्नकालस्यापि प्रतिनियतस्यैव शकटोदयाद्यर्थस्य ग्रहणम्, अन्यथा किञ्चिदपि लिङ्गं साध्यस्यानुमापकं न
स्यात्, भावे वा भस्मादिलिङ्गमतीतस्य पावकादेरिव ममस्तस्याप्यतीतस्य प्रतिपत्तिहेतुः स्यात्, भिन्नकाल-
त्वाऽविशेषादिति ॥

तर्हि तत्समस्तानुमानजनकम्, तथाविधमपि लिङ्गं किञ्चिदेव कस्यचिदेव कारणमिति चेत्तदा ज्ञानमपि तथाविधं किञ्चिदेव कस्यचिद्ग्राहकमर्थो वा भिन्नकालः कश्चिदेव कस्यचिद्ग्राह्य इति कुतो न स्यात् । न च भिन्नकालीनार्थग्रहणप्रवृत्तज्ञानस्य निर्विषयताप्रसङ्ग इति वाच्यम्, विनष्टानुत्पन्नाल्लिङ्गादुपजायमानस्यापि निर्हेतुकताप्रसङ्गात् । न च समकालमेव लिङ्ग-मनुमानकारणमिति वाच्यम्, समकालस्य जनकत्वविरोधात्, अन्यथाऽनुमानस्यापि 5 लिङ्गजनकत्वापत्तेः । न चानुमान एव जन्यता प्रतीयत इति वाच्यम्, ग्राह्य-ताया इवानुमानव्यतिरेकेण जन्यताया अप्रतिभासनात् । अनुमानस्वरूपमेव जन्य-तेति चेल्लिङ्गेऽपि स्वरूपसद्भावेन जन्यताप्रसक्तिः । लिङ्गानुमानयोः स्वरूपाविशेषेऽपि लिङ्गा-पेक्षजन्यता तत्रैव न तु लिङ्गेऽनुमानापेक्षजन्यतेति चेत्तर्हि नीलतत्संवेदनयोः स्वरूपाविशे-षेऽपि नीलस्यैव तत्संवेदनापेक्षग्राह्यता न तु तत्संवेदनस्य नीलापेक्षग्राह्यतेति समानत्वात् । 10 न च लिङ्गमुत्पादकमनुमानोत्पत्तिकरणादिति वाच्यम्, उत्पत्तेरनुमानादव्यतिरेकात्तेन तस्यैव करणादुत्तरलिङ्गक्षणवदनुमानस्य लिङ्गत्वापत्तेः, लिङ्गजन्यत्वात् । न चानुमानोपादानजन्य-त्वात्तदनुमानमेवेति वक्तव्यम्, अनवस्थाप्रसङ्गात्. तदपि ह्युपादानकारणं कुतो जन्यत इति पर्यनुयोगेऽपरलिङ्गादिति वक्तव्यम्, तत्र च तस्य लिङ्गजन्यतया लिङ्गत्वापत्तौ पुनरप्यनुमा-नोपादानत्वादनुमानत्वमित्युत्तरपर्यनुयोगाविश्रान्तिः । लिङ्गजन्यत्वाविशेषेऽपि तथा प्रतीतेः 15 किञ्चिल्लिङ्गं किञ्चिच्चानुमानमित्युच्यते चेत्तर्हि ज्ञानजन्यत्वाविशेषेऽपि किञ्चिज्ज्ञानमपरश्चार्थ इत्यपि किं न स्यात्, ततश्च नीलादि ज्ञानं ज्ञानकार्यत्वादुत्तरज्ञानवदित्यभिधानमयुक्तमेव । तस्मान्न स्वतोऽवभासनं हेतुरसिद्धत्वात् । न द्वितीयः, ' नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या-नानुभवोऽपरः । ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते ' इत्यभिधानात्तवाभिप्रायेण पर-प्रकाशतायाः कस्यचिदप्यसिद्धेर्वाद्यसिद्धत्वात् । परतः प्रतिभासनानङ्गीकारे च प्रकाशनलक्ष- 20 णस्य हेतोर्ज्ञानत्वेन न व्याप्तिसिद्धिः, ज्ञानस्य स्वरूपमात्रपर्यवसितत्वेन निखिलमवभा-सनं ज्ञानत्वव्याप्तमिति निश्चयासम्भवात्. सर्वेषां सम्बन्धिनामग्रहे हि द्विष्ठसम्बन्धसंवित्तिः कथं भवेत् । न चैकं ज्ञानमात्मन्येव ज्ञानत्वमवभासनञ्च विज्ञाय तयोर्व्याप्तिमधिगच्छतीति वक्तव्यम्, तथा सति तत्रैवानुमानप्रवृत्तेस्तस्य च व्यर्थत्वात् साध्यस्य सिद्धत्वात् । सकल-ज्ञानस्य स्वात्मनि ज्ञानासम्भवाद् व्याप्तिप्रतिपत्तेरसम्भवाच्च । न च ज्ञानत्वस्वप्रकाशनयोः कुत- 25 श्चित्प्रमाणाद्व्याप्तिः प्रसिद्धा, ज्ञानवज्जडस्य नीलादेरपि परतो ग्रहणसिद्धेर्हेतोर्व्यभिचारप्रस-ङ्गात् । नैयायिकादेः सुखादेर्ज्ञानरूपता न सिद्धेति सुखादिदृष्टान्तोऽपि साध्यविकलः, अने-नैव हेतुना तत्रापि ज्ञानरूपतासाधने च निदर्शनान्तरं मृग्यम्, तत्राप्येवं पर्यनुयोगेऽपरापर-निदर्शनान्वेषणप्रसङ्गतोऽनवस्था, सुखादौ दृष्टान्तमन्तरेणापि तद्रूपतासिद्धौ च नीलादेरपि

तथैव तदापत्तिः। न च सुखादेर्जडत्वे न स्यात्प्रतिभासः जडस्य, प्रकाशायोगित्वादिति वाच्यम्, नीलादेः प्रकाशतासिद्धावप्येवं वक्तुं शक्यतया सुखादिनिदर्शनवैयर्थ्यात्। न च सुखादेरज्ञानतायामनुग्रहाद्यभावः स्यादिति वाच्यम्, सुखादेरनुग्रहाद्यव्यतिरेके ज्ञानत्वेनानुग्रहस्य क्वापि व्याप्त्यप्रतिपत्तेरज्ञानत्वेऽनुग्रहाद्यभावोपवर्णनस्यासंगतत्वात्, व्यापकाभावे 5 हि नियमेन व्याप्याभावो भवेत्, व्यतिरेके च सुखादेर्ज्ञानरूपताविरहेऽर्थान्तरभूतानुग्रहाद्यभावस्य कथं सिद्धिः, न हि यज्ञदत्तस्य गौरत्वाभावे सति देवदत्तस्याभावो दृष्टः। ननु जैनस्य सुखादौ ज्ञानरूपतया प्रकाशमानत्वं व्याप्तमिति चेन्न, स्वतः प्रकाशनं हि सुखादौ ज्ञानरूपतया सिद्धम्, तच्च न स्तम्भादौ, यच्च स्तम्भादौ परतः प्रकाशन जैनस्य सिद्धं न तज्ज्ञानरूपतया व्याप्तम्, स्तम्भादावुपलभ्यमानं प्रकाशनमात्रन्तु जडत्वेन सहाविरुद्धत्वा-

10 नैकान्तेन ज्ञानरूपतां साधयतीति न प्रकाशनलक्षणो हेतुर्नीलादेर्ज्ञानरूपतासाधनसमर्थः। ननु नीलादेर्ज्ञानरूपता माभूत्. तत्साधकप्रमाणाभावात्, पारमार्थिकार्थरूपता तस्य कुतः, येन तद्ग्राहिज्ञानमर्थनिर्णीतिरूपतया प्रमाणं भवेदिति चेदुच्यते, जाग्रदवस्थोपलभ्यमानो नीलादिः परमार्थसन्, सुनिश्चितासम्भवद्बाधकप्रमाणत्वात्, सुखादिसंवेदनवदिति तद्रूपतासिद्धेः। न हि अत्र प्रत्यक्षं बाधकमस्खलत्प्रत्ययविषयतया सर्वैरस्य दर्शनात्, न चानुमानं

15 बाधकमध्यक्षसिद्धेऽनुमानस्य बाधकत्वेनाप्रवृत्तेः। न च प्रत्यक्षानुमानव्यतिरिक्तं प्रमाणान्तरं सौगतस्याभीष्टमिति न सुनिश्चितासम्भवद्बाधकप्रमाणत्वादिति हेतुरसिद्धः। अपरमार्थसत्यस्य हेतोरसम्भवान्नायमनैकान्तिकः। ननु स्वप्नदृष्टे घटादावपरमार्थसति हेतोरस्य सद्भावादनैकान्तिकत्वम्, न हि स घटादिर्बाधकप्रमाणविषयः, बाध्यतायाः क्वाप्यसम्भवात्, ज्ञानस्य प्रतिभासकाले बाधकेन न स्वरूपं बाध्यते, तस्य परिस्फुटरूपेण प्रतिभासनात्, नाप्युत्तरकालम्,

20 क्षणिकतया तदा तस्य स्वयमेवाभावात्। नापि तज्ज्ञानप्रमेयस्य स्वरूपं प्रतिभासमानरूपेण बाध्यते प्रतिभासनादेव। न च प्रतिभासमानरूपसहचारिणा स्पर्शादिरूपेण, तस्य ततोऽन्यत्वात्, न चान्याभावेऽन्यस्याभावोऽतिप्रसङ्गात्। न च ज्ञानस्य ज्ञेयस्य वा फलमुत्पन्नमनुत्पन्नं वा बाध्यते उत्पन्नस्य विद्यमानत्वेन बाध्यत्वायोगात्, अनुत्पन्नस्यापि स्वयमेवासत्त्वात्, मैवम्, बाधकेन ज्ञानेन ज्ञानस्यासद्विषयताया अर्थस्य वाऽसत्प्रतिभासनरूपताया ज्ञापनात्, यथा शुक्तिकाज्ञानेन रजतविज्ञानस्य रजतार्थस्य वा, एतच्च बाध्यबाधकभावमनिच्छताप्यवश्यमभ्युप-

25 गन्तव्यम्, प्रतिभासाद्वैते स्कन्धसन्तानादिविकल्पानां स्वयमेव निर्विषयत्वोपवर्णनात्, तदुपवर्णनाभावे बाह्यभावानामेकानेकरूपतया सामान्यसामानाधिकरण्यविशेष्यविशेषणभावादेः

पारमार्थिकस्य भावात् प्रतिभासाद्वैतस्याभाव एव स्यात । तस्मान्न स्वप्नोपलब्धघटादौ प्रकृतहेतुर्व्यभिचारी । नापि विरुद्धता, परमार्थसत्त्वाभावेन व्याप्त्यसिद्धेः, अन्यथाऽपारमार्थिकं स्वसंवेदनमात्रमपि भवेदित्यसिद्धविरुद्धानैकान्तिकदोषरहितादस्माद्धेतोर्जाग्रदवस्थोपलभ्यमानस्य घटादेः परमार्थसत्त्वसिद्धिः तस्माद्विज्ञानशून्यवादयोर्निषेधादर्थनिर्णीतिस्वभावताऽपि प्रमाणस्य सिद्धा ॥ 5

इति तपोगच्छनभोमणिश्रीमद्विजयानंदसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपाने स्वपरनिर्णयस्वभावस्थापनं नाम चतुर्विंशं सोपानम् ॥



10

## अथ प्रत्यक्षलक्षणपरीक्षणम् ।

अत्र सौगतः प्रमाणं स्वार्थनिर्णीतिस्वभावमपि तदनुमानरूपम्, प्रत्यक्षं तु निर्विकल्पकत्वान्न तन्निर्णयस्वभावम्. तथाहि यद्यथाऽवभाति तत्तथा व्यवहृतिपथमवतरति, यथा विशदमाभासमानं सुखादिसंवेदनम, नामोल्लेखशून्यतया चाध्यक्षं सवेदनमाभातीति स्वभावहेतुः । नामोल्लेखपरिष्वक्तवपुषः संविदोऽध्यक्षत्वविरोधात्, साक्षात्कारि ज्ञानं ह्यध्यक्षतया लोके 15 प्रसिद्धम्, साक्षात्कारित्वञ्च सन्निहितार्थावभासित्वम्, असन्निहिते तदभावात्, नामादिकञ्चासन्निहितत्वात् परोक्षमिति न तद्योजनामवतरीतुमलम्, अत्र वैयाकरणाः, न काचित्प्रतिपत्तिर्वाक्यसंस्पर्शरहिता विद्यते शब्दानुविद्धाया एव प्रतिभासनात्, अन्यथा प्रकाशरूपतापि न स्यात्, न हि निरस्तोल्लेखं स्वसवेदनं व्यवहाररचनाचतुरमिति सविकल्पकमभ्युपगन्तव्यमिति चेन्न, अध्यक्षं हि पुरःसन्निहितमेव भावात्मानमवभासयति तत्रैवाक्षवृत्तेः, 20 वाग्रूपता च न पुरः सन्निहिता, अतो न सा तत्र प्रतिभासते, न चार्थदर्शने व्यापितया पदार्थात्मतया वाऽर्थदेशे सन्निहितत्वात्सा तत्र प्रतिभातीति वक्तव्यम्, अर्थदेशे वाचां सन्निधेरयोगात् अक्षान्वये संवेदने पुरोवर्त्तिनीलादेरेवावभासनात्, न हि तद्देश एव शब्दोऽ-

---

१. स्वप्नो हि द्विविधः सत्यस्तद्विपरीतश्च, प्रथमो देवताविशेषकृतो धर्माधर्मकृतो वा कश्चित्साक्षादर्थाव्यभिचारी, यद्देशकालाकारतयाऽर्थः स्वप्ने प्रतिपन्नः तद्देशकालाकारतया जाग्रद्दशायां तस्य प्राप्तिसिद्धेः । 25 कश्चित्पुनः परम्परयाऽर्थाव्यभिचारी, राजादिदर्शनेन स्वप्नाध्यायनिगदितस्य कुटुम्बवर्धनादेः प्राप्तिहेतुत्वादनुमानवत् । योऽपि वातपित्ताद्युद्रेकजनितोऽसत्यत्वेन प्रसिद्धः स्वप्नः सोऽपि नार्थमात्रव्यभिचारी, न हि सर्वथाऽप्यननुभूतेऽर्थे स्वप्नोऽपि समुपजायत इति न निरालम्बनः स्वप्नप्रत्ययः ॥

स्थि तस्य वक्तृमुखदेशेऽवभासनात्. अतोऽसन्निधानान्न वाक्संस्पर्शवती अक्षमतिः । न
च वाचः पदार्थस्वरूपता, तत्त्वेन प्रतिभासनात्, पुरः शब्दाकारविविक्तस्य स्तम्भादेरर्थवि-
विक्ततया श्रोत्रज्ञाने शब्दस्य च प्रतिभासनैकरूपत्वासम्भवात् । असन्निहिताया अपि
वाचः प्रतिभासे सकलव्यवहितभावपरम्पराप्रतिभासः स्यात्, वाचोऽर्थसन्निधानेऽपि च
5 लोचनमतौ तत्प्रतिभासेऽपि वाचोऽप्रतिभासान्न तद्विषयत्वम् । यो हि यद्विषयः स सन्नि-
हितोऽपि न तत्र प्रतिभाति, यथाऽऽम्ररूपप्रतिपत्तौ तद्रसः, अविषयश्च लोचनमतेः शब्द
इति । नयनमतिरपि स्वविषयमेवावभासयति नेन्द्रियान्तरविषयं सन्निहितमपि, यथा
रसनमनुद्भवा मधुरादिमतिर्मधुरादिकमेव न परिमलादिकम्, अन्यथा लोचनबुद्ध्यैव सर्वे-
न्द्रियविषयप्रतिभासे इन्द्रियान्तरकल्पनावैयर्थ्यं स्यात्, तस्मात्सकलमक्षवेदनं वाचकविकलं
10 स्वविषयमेवावलोकयतीति निर्विकल्पकम् । लोचनव्यापारानुसारिणी दृग् वर्त्तमानं रूपमात्रं
विशदतयाऽवभासयति विकल्पस्तु शब्दस्मरणप्रभवोऽसन्निहितां वाग्रूपतामध्यवस्यतीति
हेतुविषयभेदाद्दर्शनविकल्पयोर्विभेदः, न चाक्षव्यापाराद्रूपमिदमित्येकं संवेदनं शब्दपरिष्वक्तं
रूपमधिगच्छदध्यवस्यति जन इति तयोरैक्यमिति वाच्यम्, रूपमिदमिति ज्ञानेन हि किं
वाग्रूपतापन्नपदार्थग्रहणं भिन्नवाग्रूपताविशेषणविशिष्टपदार्थग्रहणं वा, न प्रथमः, वाग्रूप-
15 तायां लोचनस्यासामर्थ्यात्तदनुमार्यक्षमतेरपि न तत्र प्रवृत्तेः, न द्वितीयः, तथापि नयन-
दृशः, स्वविषये शुद्ध एव पुरस्थे प्रवृत्तेर्न तु वाचि, तत्रावर्त्तमाना कथं तद्विशिष्टं
स्वविषयमवभासयेत्, न हि विशेषणं भिन्नमनवभासयन्ती तद्विशिष्टतया विशे-
ष्यमवभासयति दण्डाग्रहणे इव दण्डिनम् न च दृशि वाचोऽप्रतिभासनेऽपि स्मृतौ प्रतिभासना-
दर्थस्य विशेषणं भवति, भिन्नज्ञानग्राह्यस्यापि विशेषणत्वोपपत्तेरिति वाच्यम्, संविदन्तर-
20 प्रतीतस्य स्वातन्त्र्येण प्रतिभासनात् तदनन्तरप्रतीयमानविशेषणत्वानुपपत्तेः । न ह्येककालम-
नेककालं वा शब्दस्वरूपं स्वतन्त्रतया स्वग्राहिणि ज्ञाने प्रतिभासमानं विशेषणभावं प्रतिपद्यते
सर्वत्र तस्य तद्भावापत्तेः । न च शब्दानुरक्तरूपाद्यध्यक्षमतिरुदेतीति शब्दो विशेषणं रूपा-
दिर्विशेष्यमिति युक्तम्, यदि हि तदनुरक्तता तत्प्रतिभासलक्षणा तदा लोचनबुद्धौ शब्दाप्र-
तिभासनान्न तदनुरक्तता भवेत्, यदि च रूपादिदेशे शब्दवेदनं तदनुरक्तता तदा स्वज्ञाने
25 शब्दाऽप्रतिभासनेऽपि रूपादीनां प्रतिभासनात्तदनुरक्तताऽयोगः । न च शब्दानुषक्तरूपस्मृ-
तिर्दृश्यतेऽतः प्राक् तद्रूपस्य तस्य दर्शनमुपेयत इति वाच्यम्, शब्दविविक्तमर्थरूपं प्रत्यक्षम-
धिगच्छति वाचकन्तु स्मृतिरुल्लिखतीति शब्दसंस्पर्शमध्यक्षनानुभवतीति निर्विकल्पकमासक्तम्,
अन्यथा शब्दस्मरणासंभवादध्यक्षाभावो भवेत् । यदि हि वाक्संस्पृष्टस्य सकलार्थस्य संवे-
दनं तथासत्यर्थदर्शने तद्वाक्यस्मृतिस्तत्र च तत्परिकरितार्थदर्शनम्, न च कश्चिद् वाक्संस्पर्श-

विकलमर्थमवगच्छति तमन्तरेण च न वाक्यस्मृतिः, ताञ्चान्तरेण न वाऽनुषक्तार्थदर्शनमि-
त्यर्थदर्शनाभावो भवेत्, ततोऽर्थदर्शनान्निर्विकल्पकमेव तदभ्युपगन्तव्यम् । यदि च वाक्संसृ-
ष्टार्थस्यैव ग्रहणं तदाऽगृहीतसङ्केतस्य बालकस्य तद्ग्रहणं न भवेत् । ततोऽध्यक्षमर्थसाक्षात्क-
रणान्न वाग्योजनामुपस्पृशतीति रूपमात्रसाक्षात्कारिनयनसंवेदनं निर्विकल्पकमेव, तद्दर्शनोप-
जनितन्तु विकल्पज्ञानं वचनपरीतार्थाध्यवसायस्वभावं भिन्नमेवेत्यविकल्पकमध्यक्षं सिद्धम् । 5
अत्र यद्यपि वाचो नयनजप्रतिपत्त्यविषयत्वान्न तद्विशिष्टार्थदर्शनमध्यक्षं तथापि द्रव्यादेर्नय-
नादिविषयत्वात्तद्विशिष्टार्थाध्यक्षप्रतिपत्तिः सविकल्पिका भविष्यति, तथाहि नियतदेशादि-
तया वस्तु परिदृश्यमानं व्यवहारोपयोगि, अन्यथा तदसम्भवात्, देशादिसंसर्गरहितस्य
च तस्य कदाचिदप्यननुभवात्, यच्च देशादिविशिष्टतया नामोल्लेखाभावेऽपि वस्तु संगृह्णाति
तत्सविकल्पकम्, विशेष्यविशेषणभावेन हि प्रतीतिर्विकल्पना, देशादयश्च नीलादिवत्तदवच्छे- 10
दका दर्शने प्रतिभान्तीति न तत्र शब्दसंयोजनापक्षभावी दोष इति नैयायिका वदन्ति, तदपि
न सम्यक्, अध्यक्षस्य पुरोवर्त्तिनीलादेरवभासन एव सामर्थ्यात्, न तु तदवष्टब्धभूतलादे-
रपि, अनवष्टब्धस्य शुद्धस्यैव प्रतिभासनाच्च न विशेष्यविशेषणभावग्रहणम् । दर्शने हि
रूपमालोकश्च स्वस्वरूपव्यवस्थितं द्वितयमाभाति न तु तद्व्यतिरिक्तं कालदिगादिकमिति कथ-
मप्रतिभासमानं तद्विशेषणं भवति, सर्वत्र तद्भावप्रसक्तेः, यत्रापि स्थिराधेयदर्शनादधस्तादा- 15
धारमनुमिन्वन्ति तत्रापि नानुमानावसेयमधिकरणमिन्द्रियविज्ञानविषयविशेषणम्, नापि
तदवसायोऽक्षबुद्धेः स्वरूपमिति न विशेषणविशिष्टप्रतिपत्तिरक्षबुद्धिः । किञ्च किं समान-
कालयोर्वा भावयोर्विशेष्यविशेषणभावमध्यक्षबुद्धिरवभासयति भिन्नकालयोर्वा, तत्र यदि
भिन्नकालयोर्न तर्हि युगपत्तयोस्तत्राप्रतिभासनाद्विशेष्यविशेषणभावावगमः, यदा हि पूर्व
स्वादिकमवभाति न तदा स्वाम्यादिकम्, यदा च स्वाम्यादिकं न तदा स्वादिकमित्यसन्नि- 20
धानात्कथं तद्विशिष्टतयाऽऽध्यक्षेण तस्य ग्रहणम्, चक्षुर्व्यापारे सति हि पुरोवस्थितश्चैत्र एव
परिस्फुटमाभातीति तन्मात्रग्रहणान्न तद्विशिष्टत्वप्रतीतिः । न चासन्निहितमपि विशेषणं स्म-
रणसन्निधापितमध्यक्षबुद्धिरधिगच्छति, स्मरणात् प्रागिव तदुत्तरकालमपि विशेषणासन्निधे-
स्तुल्यत्वान्न तत्र तदाऽध्यक्षबुद्धिप्रवृत्तिरित्यपास्तविशेषणस्यार्थस्य साक्षात्करणं युक्तियुक्तम् । नापि
तुल्यकालयोर्भावयोर्विशेषणविशेष्यभावमध्यक्षमधिगन्तुं समर्थं तस्यानवस्थितेः, अविशिष्टे हि 25

१. समीपवर्त्तिन निजाङ्गव्यापिनं कालान्तरस्थायिन स्थगितप्रतिक्षणपरिणाममलक्ष्यमाणपरमाणुपरिमाणं वस्त्वन्तरैः सह सदृशविसदृशाकारं कुम्भादिकं शब्दसंस्पर्शरहितमपि भावमवभासयन्तीति कृत्वा सविकल्पकमित्यभिधीयते, एवमध्यक्षविषयीकृत एव वस्तुनि व्यवहाराः संज्ञासंज्ञिसम्बन्धग्रहणादयस्तत्त्ववृत्त्यैव घटन्ते नान्यथा ॥

दण्डपुरुषसंयोगे कश्चिद्दण्डविशिष्टतया पुरुषं दण्डीति प्रतिपद्यते, अपरस्तु तत्रैव पुरुषविशिष्टतया दण्डोऽस्येति, असङ्कुलितविशेष्यविशेषणभावस्तु दण्डपुरुषाविति स्वतंत्रं द्वयम्। वास्तवे तु तस्मिन्योग्यदेशस्थप्रतिपत्तॄणां दण्डपुरुषरूपयोरिव तुल्याकारतयाऽवभासो भवेत्, न चैवम्, तस्माद्दण्डपुरुषस्वरूपमेव स्वतंत्रमध्यक्षावसेयं विशेष्यविशेषणभावस्तु काल्पनिक एव।

5 येन हि दण्डोपकृतपुरुषजनितार्थक्रिया प्रागुपलब्धा तदर्थी च स तत्र विशेषणत्वेन दण्डं विशेष्यत्वेन च पुरुषं प्रतिपद्यते प्रधानत्वात्, येन च पुरुषोपकृतदण्डेन फलमभ्युपेतं स तत्र दण्डं प्राधान्याद्विशेष्यमध्यवस्यति, अपरिगतफलोपकारस्य प्रथमदर्शने स्वरूपमात्रनिर्भासात् ततोऽन्वयव्यतिरेकाभ्यामवगतसामर्थ्यं द्वयमासाद्य विशिष्टत्वप्रतिपत्तिः प्रागवगते च सामर्थ्ये-नेन्द्रियस्य व्यापारः, तस्यासन्निहितत्वात्, न च व्यापाराविषये तत्प्रतिपत्तिजननसमर्थम्।

10 न च पुरः सन्निहितेऽर्थे प्रवर्त्तमानमिन्द्रियं तत्रापि प्रतिपत्तिमुपजनयितुं समर्थम्, वर्त्तमानकालालीढनीलादिदर्शनप्रवृत्तस्य चिरातीतभावपरम्परादर्शनप्रवृत्तिप्रसक्तेः सकलातीतभावविषयस्मृतेरध्यक्षता भवेत, तथा स्वगोचरचारिणी स्मृतिरपि स्फुटमर्थं वर्त्तमानसमयमुद्भासयिष्यतीति सर्वाक्षमतिः स्मृतिर्भवेत। ननु वर्त्तमानमर्थमध्यक्षमेवोद्भासयति न तु स्मृतिः, यत्र च न दर्शनमवतरति तत्र स्मृतिः वर्त्तमाने रूपादौ स्पष्टदर्शनावतारे स्मृतिप्रवृत्तिरसम्भ-

15 विनी विफला चेति चेन्न, अतीते विशेषणादौ स्मृतेरेव प्रवृत्तेस्तत्र विशदसंविदवतारस्य व्यर्थत्वात्। सा हि विशदसंवित् संनिहितमेवार्थमवतरति न च तदा विशेषणादयः सन्निहिताः, तानवलम्बमाना निरालम्बनैव भवेत, ततो विशुद्धरूपमात्रप्रतिभासादध्यक्षवेदनं निरस्तविशेषणमर्थमवगमयति विशेषणयोजना तु स्मरणादुपजायमानाऽपास्ताक्षार्थसन्निधिर्मानसी। न च स्पष्टप्रतिभासाद्वर्तमानार्थग्राहिणीति वक्तव्यम, तामन्तरेणापि स्फुटमर्थप्रतिभासनात्। न च

20 स्मृतिं विनापि यदर्थात्मा विशदतनुः प्रतिभातीति न तस्य ग्राहिका स्मृतिस्तदक्षव्यापार-सद्भावे सुखमन्तरेणापि विषयावगतिरस्तीति सुखमपि विषयग्राहि न स्यादिति वाच्यम, यतो निरस्तबहिरर्थसन्निधयो भावनाविर्भूततनवः सुखादयो नार्थावेदकाः, तेषां स्वग्रहणपर्यवसितस्वरूपत्वात। अक्षान्वयव्यतिरेकानुविधायिन्यो विशदसंविद एव बहिरर्थावभासिकाः पृथगवसीयन्ते सुखादिभ्यस्ता एव तदवभासिकास्तद्वद्विकल्पोऽपि नार्थसाक्षात्करणस्वभावः।

25 ननु पुरःस्थितार्थग्राही यदि न विकल्पः कथं तर्हि ततस्तत्र प्रवृत्तिर्भवेत्, यदेव हि विशेषणं प्राक् तेनानुभूतं तत्रैव ततः प्रवृत्तिर्भवेत्, न च स्वात्मानमनारूढेऽर्थे प्रवृत्तिविधायि विज्ञानमुपलब्धम, अन्यथा शुक्लमर्थमवतरन्ती सविन्नीलार्थे प्रवर्त्तिका भवेत्, न च निर्विकल्पकमेव संवेदनं वर्त्तमानार्थे प्रवर्त्तकम, सर्वत्र विकल्पव्यतिरेकेणापि प्रवृत्तिप्रसङ्गात्, न च विना सुखसाधनतानिश्चयं पुरःप्रकाशनमात्रेण कस्यापि प्रवृत्तिरिति विकल्प एव प्रवर्त्त-

कत्वात् पुरोवस्थितार्थग्राही, अक्षानुसारित्वात्स एवाध्यक्षमिति युक्तं पूर्वदृष्टनामादिविशेषण-
ग्राही निश्चय इति चेन्न, विकल्पस्य पुरोवर्त्त्यर्थप्रकाशनसामर्थ्येऽपि तत्रैव प्रवृत्त्यसम्भवात्,
प्रवृत्तिविधानसमर्थार्थक्रियायोग्यरूपानवभासनात, तदवभासने ह्यर्थक्रियार्थिनां प्रवृत्तिः स्यात्,
वर्त्तमानसमयसम्बधिन्यर्थे न हि विकल्पोऽर्थक्रियासम्बन्धमादर्शयति, तस्यास्तदानीमभावात,
पदार्थस्वरूपमात्रावसायाच्च न सामर्थ्यावगतिरतिप्रसङ्गात, तस्मान्न पुरोवर्त्तिनि प्रवर्त्तमा- 5
नोऽपि विकल्प[1] प्रवर्त्तकः। न च पूर्वं यस्मादर्थक्रिया जायमाना दृष्टा सम्प्रत्यपि तदर्थक्रि-
यार्थितया तदध्यवसायात् प्रवृत्तिरिति वाच्यम्, तदेवेदमिति निर्भासाभावे प्रवृत्त्यसिद्धेः, न
च तदध्यवसायिनी कल्पनैव तन्निर्भासः, कल्पनाबुद्ध्यध्यवसितस्यार्थस्य परमार्थसद्व्यवहा-
राविषयत्वात्, प्रत्यक्षावगतस्यैव तद्व्यवहारविषयत्वात तदभावे तदभावात, तस्मान्न कल्प-
नाऽध्यक्षविपयस्तत्त्वम, आद्यदर्शनानधिगतत्वादिति, अत्र प्रतिविधीयते, स्वार्थनिर्णयस्वभावं 10
प्रत्यक्षं न भवतीत्येतत् किं तद्ग्राहकप्रमाणाभावात, उत तद्बाधकप्रमाणसद्भावादुच्यते, न प्रथमः
पक्षः, स्थिरस्थूलसाधारणस्य स्तम्भादेरर्थस्य बहिरन्तश्च सद्द्रव्यचेतनत्वाद्यनेकधर्माक्रान्तस्य
ज्ञानस्यैकदा निर्णयात् सांशस्वार्थनिर्णयात्मनोऽध्यक्षस्य स्वसंवेदनप्रत्यक्षसिद्धत्वात्तद्ग्राहकप्रमा-
णाभावोऽसिद्धः। तथाहि अन्तर्बहिश्च स्वलक्षणं पश्यन् लोकः स्थूलमेकं स्वगुणावयवात्मकं
ज्ञानं घटादिकञ्च सकृत्प्रतिपत्त्याऽध्यवस्यति, न चेयं प्रतिपत्तिरनध्यक्षा, विशदस्वभावतयानु- 15
भूतेः। न च विकल्पाविकल्पयोर्मनसो युगपद्वृत्तेः क्रमभाविनोर्लघुवृत्तेर्वा एकत्वमध्यवस्यति
जनस्तत्रेत्यविकल्पाध्यक्षगतं वैशद्यं विकल्पे स्वांशस्वार्थाध्यवसायिन्यध्यारोपयतीति वैश-
द्यावगतिः, एकस्यैव तथाभूतस्वार्थनिर्णयात्मनो विशदज्ञानस्यानुभूतेरननुभूयमानस्यापर-
निर्विकल्पस्य परिकल्पने बुद्धेश्चैतन्यस्यापरस्य परिकल्पनाप्रसङ्ग इति सांख्यमतमप्यनिषेध्य
स्यात्। किञ्च सविकल्पाविकल्पयोः कः पुनरैक्यमध्यवस्यति, न तावदनुभवो विकल्पे- 20
नात्मन ऐक्यमध्यवस्यति, व्यवसायविकलत्वेनाभ्युपगमात्तस्य, अन्यथा भ्रान्तताप्रसङ्गात।
नापि विकल्पोऽविकल्पेन स्वस्यैक्यमध्यवस्यति, तेनाविकल्पस्याविषयीकरणादन्यथा स्वल-
क्षणगोचरताप्राप्तेः, अविषयीकृतस्य चान्यत्राध्यारोपासम्भवात, न ह्यप्रतिपन्नरजतः शुक्ति-
कायां रजतमेतदिति रजतमध्यारोपयितुं समर्थः। किञ्च तयोरैक्यं व्यवस्यतीत्यत्र यदि
विकल्पं व्यवहारी निर्विकल्पतया मन्यते तदा निर्विकल्पकमेव सर्वं ज्ञानमिति विकल्पव्य- 25

---

१ पार्थक्येन हि प्रतीतादपरत्रापरस्यारोप उपपन्नः, चैत्रे मैत्रारोपवत, न चास्पष्टाभो विकल्प. स्पष्टा-भश्च निर्विकल्पकं प्रत्यक्षत. प्रतीतम्, तथापि परिस्फुटत्वेनानुभूयमानस्वरूप विकल्पं परित्यज्याननुभूयमान-स्वभावं निर्विकल्पकं परिकल्पकं परिकल्पयन् कथं नाम परीक्षक. स्यात, अनवस्थाप्रसक्ते., निर्विकल्पकस्व-भावादप्यन्यादृक्स्वभावं प्रत्यक्षमित्यपि कल्पनापत्तेरिति ॥

वहारोच्छेदादनुमानप्रमाणाभावः । अथाविकल्पं विकल्पकतया तदा सविकल्पकमेव सर्वं प्रमाणमित्यविकल्पकप्रत्यक्षवादो विशीर्येत । ननु यथा य एव मणिर्मया दृष्टः स एव प्राप्त इत्यभिमानिनो दृश्यप्राप्ययोरेकत्वाध्यवसायाद् दृश्यं प्राप्यारोपात् प्राप्यं तथाऽविकल्पो विकल्पारोपात् विकल्पो भवति, यथा च मणिप्राप्तौ मणिप्रतिभासस्य नाभावः, अन्यथा
5 मणिः प्रतिभातो न प्राप्तः स्यात्, तथा सविकल्पाविकल्पयोरेकत्वाध्यवसायेऽपि निर्विकल्पस्य नाभाव इति चेन्न, सांशस्थूलैकस्पष्टप्रतिभासव्यतिरिक्तस्य निरंशक्षणिकपरमाणुप्रतिभासलक्षणनिर्विकल्पकानुभवस्य तदैव निर्णयप्रसङ्गात् । अथ विकल्पेनाविकल्पस्य सहस्रांशुना तारानिकरस्येव तिरस्कारान्न तथा निर्णयस्तर्हि विकल्पस्याप्यविकल्पेन तिरस्कारात् प्रतिभासनिर्णयो न स्यात् । अथ विकल्पस्य बलीयस्त्वादविकल्पस्य च दुर्बलत्वात्तेन तस्य तिर-
10 स्कारः, न, विकल्पस्य हि किं प्रचुरविषयत्वाद्बलीयस्त्वम किं वा निर्णयात्मकत्वात्, नाद्यः, अविकल्पविषय एव प्रवृत्त्यभ्युपगमात्, अन्यथाऽस्य गृहीतग्राहित्वासम्भवात्, न द्वितीयः, विकल्पस्य स्वरूपे निर्णयात्मकत्वे सर्वचित्तचैत्तानामात्मसंवेदनं प्रत्यक्षमित्यस्य विरोधात्, एवमपि तस्य स्वरूपे निर्णयात्मकत्वे चक्षुरादिज्ञानं स्वपरयोस्तदात्मकं किं न भवेत्, तथा च स्वार्थाकाराध्यवसायाधिगमश्चक्षुरादिचेतसां सिद्ध इति केन कस्य तिरस्कारः । यदि
15 विकल्पोऽर्थे निर्णयात्मकस्तदैकस्य विकल्पस्य निर्णयेनिर्णयस्वभावरूपद्वयमायातं तच्च परस्परं तद्वतश्च यद्येकान्ततो भिन्नमभ्युपगम्यते तदा समवायादेरनभ्युपगमात् सम्बन्धासिद्धेर्बलवान् विकल्पो निर्णयात्मकत्वादित्यस्यासिद्धेः । न च रूपादीनामिव परस्परमेकसामग्र्यधीनतालक्षणस्तयोः सम्बन्धः तद्वता चाग्निधूमयोरिव तदुत्पत्तिलक्षण इति वक्तव्यम्, स्वाभ्युपगमविरोधात् । यदि निर्णयानिर्णयस्वभावयोरन्योन्यं तद्वतश्च कथंचित्तादात्म्यं तर्हि यत्स्वात्मनि
20 अनिर्णयात्मकं बहिरर्थे च निर्णयस्वभावं रूपं तत्साधारणमात्मनं प्रतिपद्यते चेद्विकल्पः स्वरूपेऽपि सविकल्पकः प्रसक्तः, अन्यथा निर्णयस्वभावतादात्म्यायोगात् । न च स्वरूपमनिश्चिन्वन् विकल्पोऽर्थं निश्चिनोतीति वाच्यम, यतोऽगृहीतस्वरूपमपि ज्ञानमर्थग्राहकं भवेदिति न नैयायिकमतप्रतिक्षेपः । न च नैयायिकाभ्युपगमेन परगृहीतस्य स्वगृहीततादोषः, भवन्मतेऽपि परनिश्चितस्य स्वनिश्चितत्वप्रसक्तेः । यथा च परज्ञातमननुभूतत्वान्नात्मनो विषयः
25 तथा विकल्पस्य स्वरूपमनिश्चितत्वान्नात्मनो विषय इति समानं पश्यामः, न च तस्यापि विकल्पान्तरेण निश्चयः, तस्यापि विकल्पान्तरेण निश्चयापत्तेरनवस्थाप्रसक्तेः । न च विकल्पस्वरूपमनुभूतमपि क्षणिकत्वादिवदनिश्चितमर्थनिश्चायकं युक्तम्, अनिश्चितस्यानुभवेऽपि क्षणिकत्ववत् स्वयमव्यवस्थितत्वादव्यवस्थितस्य च शशशृङ्गादेरिवान्यव्यवस्थापकत्वा-

१ स्वस्वरूपापेक्षयाऽनिर्णयात्मकत्वादर्थरूपापेक्षया निर्णयात्मकत्वादिति भाव ॥

योगात् । यथा च विकल्पस्य स्वार्थनिर्णयात्मकत्वं तथा चक्षुरादिबुद्धीनामपि तदुक्तम्, अन्यथा तासां तद्ग्राहकत्वायोगात्, अथ विकल्पस्य बहिरर्थे प्रवृत्तिरेव नास्तीति कथं स तन्निर्णयात्मकः, न हि नीलज्ञानं पीतप्रवृत्तिकं तन्निर्णयात्मकं वक्तुं शक्यम्, प्रतिपत्रभिप्रायवशात्, बौद्धैः बाह्यार्थव्यवसायात्मकत्वं विकल्पस्य परमार्थतो निर्विषयत्वेऽपि व्याख्यायते तदयुक्तम्, यतः किमिदं परमार्थतो विकल्पस्य निर्विषयत्वम्, यद्यात्मविषयत्वं 5 तर्ह्यात्मविषयं निर्विकल्पकमपि ज्ञानं निर्विषयमित्यर्थनिर्णयात्मकत्वाद् बलवान् विकल्पो निर्विकल्पकानुभवस्य तिरस्कारक इत्यसङ्गतं स्यात्, सविकल्पकस्यैव कस्यचिदभावादात्मविषयस्य निर्विकल्पकस्यापि विकल्पवत् सविकल्पकस्यैव वाभावात्, नचैवं कस्यचित् प्रतिपत्तुरभिप्रायः । अथ साधारणस्यास्पष्टस्य स्वपरयोरविद्यमानस्याकारस्य शब्दसंसर्गयोग्यस्य विषयीकरणं निर्विषयत्वम्, न, तस्य तत्र सम्बन्धाभावतो विषयीकरणासम्भवात्, 10 तथापि तद्विषयीकरणे सर्वमपि ज्ञानं तथैव स्वविषयं विषयीकुर्यादिति तदुत्पत्त्यादिसम्बन्धकल्पनमनर्थकमासज्येत, न च तादात्म्यलक्षणस्तत्र तस्य सम्बन्धः, तदाकारेऽविकल्पकत्वस्याविकल्पके वा तदाकारत्वस्य प्रसक्तेः । तदुत्पत्तिसम्बन्धवशात्तेन तद्ग्रहणमित्येतदप्ययुक्तम्, तदाकारस्य तज्ज्ञानोत्पादकत्वेन स्वलक्षणत्वप्राप्तेः तज्ज्ञानस्य सविषयताप्रसक्तिदोषात् । न च स्ववासनाप्रकृतिविभ्रमवशादतदुत्पन्नमतदाकारञ्च तत् तद्विषयीकरोति, 15 अक्षसमनन्तरविशेषादन्यस्याप्युपजातस्य तथास्वविषयीकरणप्रसक्त्याः सर्वत्र तदाकारतदुत्पत्तिप्रतिबन्धकल्पनावैयर्थ्यप्रसक्तेः । अतस्तदाकारविषयीकरणासम्भवाद्विकल्प्यार्थाभावतो दृश्यविकल्प्यार्थावेकीकृत्य प्रवर्त्तत इत्ययुक्तमभिधानम्, ततो न बलवान् विकल्प इति कथं तेनाविकल्पकतिरस्कार इति अविकल्पनिश्चयस्तदैव भवेत्, न चैवम्, अतो नाविकल्पस्य विकल्पेनैकत्वाध्यवसायः । किञ्च विकल्पेऽविकल्पकस्यैकत्वेनाध्यारोप इति कुतो 20 निश्चीयते, अस्पष्टास्वलक्षणग्राहिणि स्पष्टस्वलक्षणग्राहित्वस्य प्रतीतेस्तदध्यारोपावगतिरिति चेन्न, यदि हि तत्र तत्प्रतीतिः तर्हि कुतोऽविकल्पारोपः, स्पष्टत्वादेस्तद्धर्मस्य तत्र दर्शनादिति चेत्, स्पष्टत्वादिस्तद्धर्म इत्येतदेव कुतः, तत्र दर्शनादिति चेत्, अत एव विकल्पधर्मोऽप्यस्तु, अन्यथाऽविकल्पस्यापि मा भूत् । न च विकल्पव्यतिरेकेणापरमविकल्पमनुभूयते यस्य स्पष्टत्वादिधर्मः परिकल्पेत, एवमपि तत्र तत्परिकल्पने ततोऽप्यपरमननुभूयमानं 25 विशदत्वादिधर्माधारं परिकल्पनीयमित्यनवस्थाप्रसक्तिः । अथ किञ्चिज्ज्ञानं सविकल्पकमपरं निर्विकल्पकं राश्यन्तराभावात्, विकल्पस्यार्थसामर्थ्योद्भूतत्वासम्भवान्न विशदत्वादिधर्मयोगः, अविकल्पस्यापि तद्योगाभावे विशदत्वादिकं न क्वचिदपि भवेदित्यविकल्पकस्यैव तदभ्युपगन्तव्यमिति चेन्न, अर्थसामर्थ्यप्रभवत्वेन वैशद्यस्य व्याप्त्यभावात्, अर्थसामर्थ्यो-

द्भूतेऽपि दूरस्थितपादपादिज्ञाने वैशद्यादेरभावात्, योगिप्रत्यक्षे चार्थप्रभवत्वाभावेऽपि भावात्, न च तदप्यर्थसामर्थ्योद्भूतम्, तत्समानसमयस्य चिरातीतानुत्पन्नस्य चार्थस्य तद्ग्रहणानुपपत्तेः। नन्वार्थाप्रभवमपि यथा विशदं, अन्यथा प्रत्यक्षत्वानुपपत्तेस्तथाविकल्पज्ञानमर्थसामर्थ्याप्रभवमपि यदि विशदं भवेत् को विरोधः। तस्माद्विकल्प एव वैशद्योप-
5 पत्तेर्निर्विकल्पकस्य च निरंशक्षणिकपरमाणुमात्रावभासिनः कदाचिदप्यनुपलब्धेस्तत्र वैशद्य-कल्पना दूरापास्ता। ननु उपसंहृतनिखिलविकल्पसमये विशदमक्षप्रभवं रूपादिदर्शनं निर्विकल्पकं संवेद्यते तथाचाध्यक्षत एव ज्ञानानां कल्पनाविरहः सिद्धः, न ह्यस्यामवस्थायां नामादियोजितार्थोल्लेखो विकल्पस्वरूपोऽनुभूयते, न च विकल्पानां स्वसंविदितरूपतयाऽननुभूयमानानामपि संभव इति विकल्पविकला साऽवस्था सिद्धेति चेन्न तस्यामवस्थायां
10 सविकल्पकज्ञानस्यैवानुभवात्, तदा स्थिरस्थूलस्वभावशब्दसंसर्गयोग्यपुरोवस्थितगवादिप्रतिभासस्यानुभूतेः न हि सविकल्पकत्वं शब्दसंसर्गप्रतिभास एव, किन्तु तद्योग्यावभासस्यापि, अन्यथाऽव्युत्पन्नसंकेतस्य ज्ञानं शब्दसंसर्गविरहान्न कल्पनात्वं स्यात्। न च पूर्वकालदृष्टत्वस्य वर्त्तमानसमयभाविनि सयोजनाच्छब्दोल्लेखाभावेऽपि असदर्थग्राहितयाऽविशदप्रतिभासत्वात्तत्सविकल्पकम्, पूर्वकालदृष्टत्वस्य पूर्वदर्शनाप्रतीतावपि असत्त्वासि-
15 द्धेस्तत्सम्बन्धित्वग्राहिणोऽसदर्थत्वासिद्धेर्वैशद्याभावस्य तत्रानुपपत्तेः। शब्दसंसर्गयोग्यप्रतिभासस्य विशदतया विकल्परूपस्याप्यध्यक्षतोपपत्तेः शब्दयोजनामन्तरेणापि स्थिरस्थूलार्थप्रतिभासं निर्णयात्मकं ज्ञानमध्यक्षमभ्युपगन्तव्यम्, अन्यथा तस्य प्रामाण्यमेवानुपपन्नं भवेत्। यत्रैवांशे हि नीलादौ विधिप्रतिषेधविकल्पद्वयं पाश्चात्यं तज्जनयति तत्रैव तस्य प्रामाण्यम्, तदाकारोत्पत्तिमात्रेण प्रामाण्ये क्षणिकत्वादावपि तस्य प्रामाण्यप्रसक्तेस्तदनुमानवैयर्थ्यप्रसङ्गः।
20 विकल्पश्च शब्दसंयोजितार्थग्रहणलक्षणः, तत्सयोजनं च न शब्दस्मरणं विना संभवति, पूर्वं तत्सन्निध्युपलब्धार्थदर्शनमन्तरेण च तत्स्मरणं नोपपद्यते तद्दर्शनं चाध्यक्षतः क्षणिकत्वादाविव निश्चयजननमन्तरेणासम्भवि, निश्चयस्तु शब्दयोजनाव्यतिरेकेण नाभ्युपगम्यत इत्यध्यक्षस्य क्वचिदप्यर्थप्रदर्शकत्वासम्भवात् प्रामाण्यं न भवेत्। तस्माच्छब्दयोजनामन्तरेणापि अर्थनिर्णयात्मकमध्यक्षमभ्युपगन्तव्यम्, अन्यथाऽविकल्पाध्यक्षेण लिङ्गस्याप्यनिर्णयात्, अनुमाना-
25 त्तन्निर्णयेऽनवस्थाप्रसक्तेरनुमानस्याप्यप्रवृत्तितः सकलप्रमाणादिव्यवहारविलोपः स्यात्। यदपि निरंशवस्तुसामर्थ्योद्भूतत्वात् प्रथमाक्षसन्निपातजं निरंशवस्तुग्राहि निर्विकल्पकमित्युक्तं तदपि न सम्यक्, निरंशवस्त्वभावेन तत्सामर्थ्योद्भूतत्वस्य निर्विकल्पकत्वहेतोस्तत्रासिद्धेः। न च

१ तदुक्तं 'संहृत्य सर्वतश्चिन्तां स्तिमितेनान्तरात्मना। स्थितोऽपि चक्षुषा रूपमीक्षते साक्षजा मतिः॥ प्रत्यक्षं कल्पनापोढं प्रत्यक्षेणैव सिद्ध्यति। प्रत्यात्मवेद्यः सर्वेषां विकल्पो नामसंश्रयः॥' इति॥

यन्निरंशप्रभवं तन्निरंशग्राहीति वाच्यम्, निरंशरूपक्षणप्रभवस्याप्युत्तररूपक्षणस्य तद्ग्राहित्वादर्शनात् । न च ज्ञानत्वे सतीति विशेषणान्नायं दोषः, प्रत्यक्षप्रभवविकल्पस्य ज्ञानत्वेऽपि तद्भावानुपपत्तेः, उपपत्तौ वा हिंसाविरतिदानचित्तस्वसंवेदनाध्यक्षप्रभवनिर्णयेन तद्ग्रहणोपपत्तेः निश्चयविषयीकृतस्य चानिश्चितरूपान्तराभावात् स्वर्गप्रापणसामर्थ्यादेरपि तद्गतस्य निश्चयात् तत्र विप्रतिपत्तिर्न भवेत् । अथानुभवस्यैवायं यथावस्थितवस्तुग्रहणलक्षणः स्वभावविशेषो न 5 विकल्पस्य तेनायमदोषस्तर्हि यथा दानचित्तानुभवः स्वसंवेदनाध्यक्षलक्षणः तद्गतं सद्द्रव्यचेतनादिकं विषयीकरोति तथा स्वर्गप्रापणसामर्थ्यमपि तत्स्वरूपाव्यतिरिक्तत्वात् विषयीकुर्यात् ततश्च सद्द्रव्यचेतनत्वादाविव तत्रापि विवादो न भवेत् । अथ तच्चित्तादभिन्नं तत्प्रापणसामर्थ्यं तद्ग्रहे गृहीतमेव किन्तु स्वसंवेदनस्याविकल्पकाध्यक्षतया तद्गृहीतस्यागृहीतकल्पत्वाद्विवादसम्भवः, न निर्विकल्पकाध्यक्षविषयत्वाद्गृहीतस्यापि सामर्थ्यस्यागृहीतकल्पत्वे तच्चित्तस्यापि तत एवागृहीतकल्पत्वापत्तेः, अविशेषात्, तथा च यद्दानादिचित्तं द्वहुजन सेव्यतानिबन्धनम्, यथा त्यागिनृपतिचित्तम्, दानादिचित्तञ्च विवक्षितमित्याद्यनुमानमगमकं प्रसज्येत, आश्रयासिद्धत्वादिदोषात् । तस्माद्वस्तुनो निरंशतायां तच्चित्तग्रहणे तत्सामर्थ्यस्यापि ग्रहणप्रसक्तेर्विवादाभावो भवेत्, न चैवमिति सांशं वस्तु तथाभूतवस्तुग्राहकं प्रमाणमपि सांशं सत् सविकल्पकम् । किञ्चार्थप्रभवत्वाज्ज्ञानं यद्यर्थग्राहकं तर्हीन्द्रि- 15 यादेरपि ग्राहकं भवेत्, तत्प्रभवत्वात्, न चेष्टापत्तिः, अतीन्द्रियत्वात्, किञ्च प्रमातृप्रमेयाभ्यामर्थान्तरमर्थसहकार्यर्थवत्प्रमाणमिति नैयायिकैः स्वीकृतम्, तेन न तत्प्रभवत्वं तन्निमित्तम्, तदभ्युपगमे वा शब्दज्ञाने शब्दवत्तत्समवायिकारणकर्णशष्कुल्यवच्छिन्ननभोदेशाख्यश्रोत्रेन्द्रियतत्समवाययोरपि प्रतिभासः स्यादित्याकाशसमवायविषयानुमानोपन्यासो वैयर्थ्यमनुभवेत्, प्रत्यक्षसिद्धत्वात्, न च समवायविषयाध्यक्षस्याविकल्पकत्वेन गृहीतस्याप्य- 20 गृहीतरूपत्वान्नायं दोष इति वाच्यम्, शब्देऽप्यस्य समानत्वात्, यतो नैकमेकत्र निर्णयात्मकमपरत्रान्यथेत्येकान्तवादिनो वक्तुं युक्तम्, एवं रूपतत्सामान्यसमवायेष्वपि वाच्यम् । अथ न कारणमित्येवार्थग्रहः किन्तु योग्यतातः, नन्वेवं किं निमित्तमर्थस्य ज्ञानं प्रतिकारणता कल्प्यते, न च तद्ग्रहणान्यथानुपपत्त्या तत्प्रति न तस्य कारणता परिकल्प्यते किन्तु अन्वयव्यतिरेकाभ्यामिति वाच्यम्, योगिज्ञानस्य सकलातीतानागतपदार्थाभावेऽपि 25 भावाभ्युपगमात्, न हि सर्वेऽप्यतीतानागता भावास्तदा सन्ति सर्वभावानां नित्यताप्रसक्तेः । न च तद्विषयं तज्ज्ञानं न भवति, सदसद्वर्गः कस्यचिदेकज्ञानावलम्बनः, अनेकत्वात् पञ्चाङ्गुलिवदित्यनुमानविरोधात् । अत एव नाननुकृतान्वयव्यतिरेकं कारणं नाकारणं विषय इति सौगतमतमप्यपास्तम्, तथाहि किं कारणं विषय एव, उत कारणमेव विषयः,

न चाध्यक्षं सन्निहितार्थेऽवतरति नामादिकञ्च विशेषणमसन्निहितं न तत्रावतरीतुं समर्थ-
मिति वाच्यम्, नामादिविशेषणोल्लेखराहित्येनाक्षमतेः अप्रतिभासनात् जातिगुणक्रियादि-
विशेषणविशिष्टतयैवैकानेकस्वभावस्य स्वसंवेदनाध्यक्षान्निर्णयात्, तथा सन्निहितस्यैवार्थ-
स्याध्यक्षेऽवतारे पक्ष्ममूलपरिष्वक्ताञ्जनाद्यप्यवतरेत्। न च योग्यं वस्त्वेवावतरति, अञ्जनम-
5 योग्यं स्तंभादिकन्तु योग्यमिति वाच्यम्, नियामकाभावात्, स्तम्भादिप्रतिभासस्य नियाम-
कत्वे चान्योन्याश्रयात्। न च योग्यतातो न प्रतिभासव्यवस्था, किन्तु प्रतिभासाद्योग्यता
व्यवस्थाप्यते प्रतिभासनव्यवस्था च स्वसंवेदनादिति वाच्यम्, तथा सति सन्निधानासन्नि-
धानयोरनुपयोगितासिद्धेः, तथा चासन्निहितस्यापि नामादेरध्यक्षबुद्धौ प्रतिभासे न कोऽपि
विरोधः, तस्माद्बाधकाभावात् साधकप्रमाणविषयत्वात्सविकल्पकमध्यक्षं सिद्धमिति स्वार्थ-
10 निर्णीतिस्वभावं ज्ञानं प्रमाणं व्यवस्थितमिति संक्षेपः ॥

अथ नैयायिकाः, बौद्धोक्तनिर्विकल्पस्याध्यक्षप्रमाणत्वासम्भवेऽपि ' इन्द्रियार्थसन्नि-
कर्षोत्पन्नं ज्ञानमव्यपदेश्यम व्यभिचारि व्यवसायात्मकं प्रत्यक्षम् [न्यायद १-१-४] इत्येत-
ल्लक्षणलक्षितं तु प्रत्यक्षं प्रमाणं भवति, अस्यार्थः इन्द्रियं द्रव्यत्वकरणत्वनियताधिष्ठानत्वाऽ-
तीन्द्रियत्वे सत्यपरोक्षोपलब्धिजनकत्वाच्चक्षुरादिमनःपर्यन्तम्, तस्यार्थः परिच्छेद्य इन्द्रि-
15 यार्थः, तेन सन्निकर्षः प्रत्यासत्तेरिन्द्रियस्य प्राप्तिः, सन्निकर्षस्य च व्यवहितार्थानुपलब्ध्या
सद्भावः सूत्रकृता प्रतिपादितः, तत्सद्भावे च सिद्धे पारिशेष्यात्तत्संयोगादिकल्पना, द्रव्य-
स्येन्द्रियेण संयोग एव, युतसिद्धत्वात्, गुणादीनां द्रव्यसमवेतानां संयुक्तसमवाय एव,
अद्रव्यत्वे सत्यत्र समवायात्, तत्समवेतेषु संयुक्तसमवेतसमवाय एव, अन्यस्यासम्भ-
वात, शब्दे समवाय एव, गगनस्य श्रोत्रत्वेन व्यवस्थापितत्वात्, शब्दत्वे समवेतसमवाय
20 एव परिशेषात्, समवायाभावयोश्च विशेषणविशेष्यभाव एव, कारणकार्यस्वरूपगर्भत्वेन
लक्षणस्य च त्रैविध्यादन्ययोगव्यवच्छेदार्थमिन्द्रियार्थसन्निकर्षः कारणमित्यभिधीयते, कार-
णत्वेऽपि दोषाशङ्कापरिजिहीर्षयाऽसाधारणकारणवचनं न त्वनुयायिकारणव्यावृत्तिः, एव-
म्भूतस्येन्द्रियार्थसन्निकर्षस्यैव कारणत्वाभिधानम्, न त्वन्तःकरणेन्द्रियसम्बन्धस्य, तस्या-
व्यापकत्वात, अव्यापकत्वन्तु सुखादिज्ञानोत्पत्तावसम्भवात्। सम्यङ् निकर्षः संनिकर्षः, इदं
25 सन्निकर्षषट्कप्रतिपादनार्थम्, एतदेव सन्निकर्षषट्कं ज्ञानोत्पादने समर्थं कारणं न संयुक्त-
संयोगादिकमिति, न चेन्द्रियग्रहणं व्यर्थम्, अनुमानव्यवच्छेदार्थत्वात्, तस्याप्यर्थसन्नि-
कर्षादुत्पत्तेः, इन्द्रियविषयेऽर्थे सन्निकर्षाद्यदुत्पद्यते ज्ञानं तत्प्रत्यक्षमित्युक्तौ च तद्व्यवच्छेदः,
तस्येन्द्रियविषये इन्द्रियसम्बन्धादनुत्पत्तेः। तथाप्यर्थग्रहणमनर्थकमिति चेन्न, स्मृतिफल-
सन्निकर्षनिवृत्त्यर्थत्वात्, आत्मान्तःकरणसम्बन्धाद्धि स्मृतिरुदेति इति तज्जनकस्यापि लक्षणे-

समावेशः स्यात् । न चेन्द्रियार्थसन्निकर्षजा स्मृतिः, अतीतस्यापि तदाऽसतः स्मर्यमाणत्वात् । उत्पत्तिग्रहणं कारकत्वज्ञापनार्थम्, ज्ञानग्रहणं सुखादिनिवृत्त्यर्थम् । न च तुल्यकारणजन्यत्वाज्ज्ञानसुखादीनामेकत्वम्, अतो न ज्ञानग्रहणं सार्थकमिति वाच्यम्, तुल्यकारणजन्यत्वस्यासिद्धत्वात्, आह्लादादिस्वभावाः सुखादयोऽनुभूयन्ते ग्राह्यतया ज्ञानन्त्वार्थावगमस्वभावं ग्राहकतयाऽनुभूयत इति ज्ञानसुखाद्योर्भेदोऽध्यक्षसिद्ध एव विशिष्टादृष्टकारणजन्यत्वात् सुखादेः ज्ञानजात्युत्पाद्यत्वाच्च ज्ञानस्य तु तद्भिन्नकारणजत्वान्न भिन्नहेतुजत्वमसिद्धं ज्ञानसुखाद्योः, अतो बोधजनकस्य ज्ञापनार्थं युक्तं ज्ञानग्रहणम् । व्यपदेशः शब्दस्तेनेन्द्रियार्थसन्निकर्षेण चोत्पादितस्याध्यक्षतानिवृत्त्यर्थमव्यपदेश्यपदोपादानम्, नन्विन्द्रियविषये शब्दस्य सामान्यविषयत्वेन व्यापारासम्भवादिन्द्रियस्य च स्वलक्षणविषयत्वान्नोभयोरेकविषयत्वमिति न तज्जन्यमेकं ज्ञानं सम्भवतीति चेन्न, तयोर्भिन्नविषयत्वाभावात्, तद्भावभावित्वाच्चोभयजन्यत्वं ज्ञानस्यावगतमेव, चक्षुर्गोशब्दव्यापारे सति अयं गौरिति विशिष्टकाले ज्ञानमुपजायमानमुपलभ्यते एव, तद्भावभावित्वेन चान्यत्रापि कार्यकारणभावो व्यवस्थाप्यते, तच्चात्रापि तुल्यमिति कथं नोभयजं ज्ञानम् । न चान्तःकरणानधिष्ठितत्वदोषश्चक्षुषः तेनाधिष्ठानात् शब्दस्य च प्रदीपवत्करणत्वात् । न च ग्राह्यत्वकाले शब्दस्य करणत्वमयुक्तम्, श्रोत्रस्यैव तदा करणत्वात् शब्दस्य तु तदा ग्राह्यत्वमेव गृहीतस्य चोत्तरकालमन्तःकरणाधिष्ठितचक्षुःसहायस्य चार्थप्रतिपत्तौ व्यापार इत्युभयजं गौरिति ज्ञानम् । व्यपदेशकर्मतापन्नज्ञाननिवृत्त्यर्थमव्यपदेश्यविशेषणमिति केचित्तन्न, प्रदीपेन्द्रियसुवर्णादीनामभिधीयमानत्वेऽपि कारणप्रमाणतापक्षे प्रत्यक्षत्वानिवृत्तेः । इन्द्रियार्थसंनिकर्षादुपजातं शब्देनाजनितं च व्यभिचारिज्ञानं न प्रत्यक्षमित्यव्यभिचारिपदोपादानम्, मरीचिपूदकज्ञानस्येन्द्रियजत्वं तद्भावभावित्वेनावसीयते मरीच्यालम्बनत्वमपि तत एवावसीयते, मरीचिदेशं प्रति प्रवृत्तेश्च, पूर्वानुभूतोदकविषयत्वे तु तद्देश एव प्रवृत्तिर्भवेत, न मरीचिदेशे । भ्रान्तत्वान्मरीचिदेशे स्यादिति चेन्न भ्रान्तिनिमित्ताभावात्, इन्द्रियव्यापारस्य निमित्तत्वे तु इन्द्रियजत्वं सिद्धमेव, बाह्येन्द्रियजत्वाच्च न स्मृतिः । नचाप्रतिभासमाना मरीचयः कथमुदकज्ञानस्यालम्बनमिति शक्यम्, तेषु सत्सु भावात्, कुतो नान्यत्र घटादाविति चेन्न, उदकेन सारूप्याभावात् । अपरे तु स्मर्यमाणशब्दसहायेन्द्रियार्थसन्निकर्षजमपि मरीचिषु उदकमित्युल्लेखवज्ज्ञानमव्यभिचारिपदापोह्यमेव मन्यन्ते, अव्यपदेश्यपदव्यवच्छेद्यं तु यत्र प्रथमत एवेन्द्रियसन्निकृष्टेऽर्थे संकेतानभिज्ञस्य श्रूयमाणाच्छब्दात् पनसोऽयमिति ज्ञानमुत्पद्यते तत्र शब्दस्यैव तदवगतौ प्राधान्यादिन्द्रियार्थसंनिकर्षस्य तु विद्यमानस्यापि तदवगतावप्राधान्यात्तदेवाव्यपदेश्यपदव्यवच्छेद्यम्, न त्ववगतसंकेतस्मर्यमाणशब्दसचिवेन्द्रियार्थसन्निकर्ष-

प्रभवम् , तत्र तत्सन्निकर्षस्यैव प्राधान्यात् , वाचकस्य तद्विपर्ययात् । ननु सामग्र्यां कस्य न्यूनतया व्यभिचारः, कर्तुः करणस्य कर्मणो वा, उच्यते, तत्र स्वाकारसंवरणेनाकारान्तरेण ज्ञानजननात् कर्मणो व्यभिचारः, कर्तृकरणयोस्तु तथाविधकर्मसहकारित्वादिति मन्यन्ते, स्यादयं व्यभिचारो न त्वेतन्निवृत्त्यर्थमव्यभिचारिपदोपादानमर्थवत् , अनिन्द्रियार्थसन्निक-
5 र्षजत्वादेव तन्निवृत्तिसिद्धेः । न हि मरीचिकायामुदकज्ञानमिन्द्रियार्थसन्निकर्षजम् , जलेने-न्द्रियसन्निकर्षाभावात् , तस्माद्यदतस्मिंस्तदित्युत्पद्यते तद्व्यभिचारि ज्ञानं तद्व्यवच्छेदेन तस्मिं-स्तदिति ज्ञानमव्यभिचारिपदसङ्ग्राह्यम् । न च ज्ञानपदमनर्थकमव्यभिचारिपदादेव ज्ञान-सिद्धेः व्यभिचारित्वमव्यभिचारित्वं हि ज्ञानस्यैवेति वाच्यम् , इन्द्रियार्थसन्निकर्षोत्पन्नस्या-ज्ञानरूपस्यापि सुखस्याव्यभिचारात्तन्निवृत्त्यर्थं ज्ञानपदमर्थवत् , सुखस्य व्यभिचारित्वञ्चासु-
10 खसाधनपराक्रमादौ सुखस्य भावः मरीचिकासूदकज्ञानस्य ज्ञानतेव यथोक्तविशेषणविशिष्टं संशयज्ञानं भवति अतस्तद्व्यवच्छेदार्थं व्यवसायात्मकपदोपादानम् , व्यवसीयतेऽनेनेति व्यवसायो विशेष उच्यते विशेषजनितं व्यवसायात्मकं ज्ञानम् , संशयज्ञानन्तु सामान्य-जनितत्वान्नैवम् , अथवा निश्चयात्मकं व्यवसायः, संशयज्ञानन्त्वनिश्चयात्मकमिति तन्न युक्तम् , इन्द्रियार्थसन्निकर्षोत्पन्नत्वादेरघटमानत्वात् , इन्द्रियं यदि चक्षुर्गोलकाद्यवयविलक्षणं
15 तदा तस्य पर्वतादि स्वविषयेण व्यवहितदेशेन सन्निकर्षोऽसिद्धः संयोगादेर्निषिद्धत्वात् , योऽपि कथञ्चित् पदार्थाव्यतिरिक्तः संश्लेषलक्षणः काष्ठजतुनोरिव सम्बन्धः प्रसिद्धः सोऽपि व्यवहितेन पर्वतादिना चक्षुर्गोलकस्यानुपपन्नः तत्प्रसाधकप्रमाणाभावात् , न हि तत्र प्रत्यक्षं प्रमाणम् , देवदत्तचक्षुस्तद्विषयेण पर्वतादिना सम्बद्धमित्येवं न ह्यस्मदादेर-क्षप्रभवा प्रतिपत्तिः, न च चक्षुःप्राप्तार्थप्रकाशकं बाह्येन्द्रियत्वात् , त्वगादिवदित्यनुमानं
20 तत्सन्निकर्षप्रसाधकमिति वाच्यम् , चक्षुर्गोलकतदर्थयोरध्यक्षेणैवामन्निकृष्टयोः प्रतिपत्तेरस्य हेतोः कालात्ययापदिष्टत्वात् , अवयविलक्षणचक्षुषोऽसिद्धेराश्रयासिद्धत्वात् , अत एव स्वरू-पासिद्धेश्च, न ह्यविद्यमानस्यावयविनो बाह्येन्द्रियत्वं सिद्धम् । न च चक्षुःशब्देनात्र तद्रश्म-योऽभिधीयन्ते इति नोक्तदोष इति वक्तव्यम् , तेषामप्यसिद्धेः, अन्यथाऽस्यानुमानस्य वैक-ल्यापत्तेः । न चानेनैवानुमानेन तत्सिद्धिः, इतरेतराश्रयात् , रश्मिसिद्धावाश्रयासिद्धिपरि-
25 हारः ततश्चातो हेतोस्तत्सिद्धिरिति । यदि गोलकबहिर्भूतरश्मिविशेषस्य चक्षुःशब्दवाच्य-त्वेऽर्थप्रकाशकत्वे च गोलकस्याञ्जनादिना सम्कार उन्मीलनादिकश्च व्यापारो व्यर्थः स्यात् । अथ ते गोलकाश्रया इति तन्निमीलनेऽसंस्कारे वा तेषामपि स्थगनादसंस्कृतत्वाच्च विषयं

१ यद्यप्यत्र चक्षुष एतोपर्युक्तहेतुभिरसिद्धिरतस्तद्रश्मयोऽत्र पक्षतयोपन्यस्यन्त इत्याशङ्कनं न युज्यते तथापि शिष्यबुद्धिनैर्मल्यापादनायैवाऽऽशङ्कामुद्भाव्य निरासः कृतः ॥

प्रति गमनं तत्प्रकाशनञ्च न स्यादतस्तदर्थं तदुन्मीलनं तत्संस्कारश्च न व्यर्थं उच्यते तर्हि
गोलकानुषक्तकामलादेः प्रकाशकत्वं तेषां स्यात्, न हि प्रदीपः स्वात्मानं शलाकादिकं न प्रका-
शयतीति दृष्टम् । गोलकान्तर्गतं किञ्चित्तेजोद्रव्यमस्ति तस्य रश्मय इत्यभ्युपगमेऽप्ययं दोष-
स्तुल्यः, न हि काचकूपिकान्तर्गताः प्रदीपादिरश्मयस्ततो निर्गच्छन्तस्तत्सम्बद्धमर्थं न प्रका-
यन्तीति, तदेवं रश्मीनामसिद्धेर्न ते चक्षुःशब्दाभिधेयाः । अथ रसनादयो बाह्येन्द्रियत्वात् 5
प्राप्तार्थप्रकाशका उपलब्धाः बाह्येन्द्रियं च चक्षुः, ततस्तदपि प्राप्तार्थप्रकाशकम्, न च गोलक-
स्य बाह्यार्थप्राप्तिः सम्भाविनीति पारिशेष्यात्तद्रश्मीनां तत्प्राप्तिरिति रश्मिसिद्धिः, न, अ-
त्यासन्नमलाञ्जनशलाकादेः प्रकाशप्रसक्तेः । किञ्च यदि गोलकान्निर्गत्य बाह्यार्थेनाभिसम्बद्ध्य
तद्रश्मयोऽर्थं प्रकाशयन्ति तर्ह्यर्थं प्रत्युपसर्पन्तस्त उपलभ्येरन्, रूपस्पर्शविशेषवतां तैज-
सानां वह्न्यादिवत्सतामनुपलम्भे निमित्ताभावात्, न चोपलभ्यन्त इत्युपलब्धिलक्षणप्राप्ता- 10
नामनुपलम्भादसत्त्वम । न चानुद्भूतरूपस्पर्शत्वात्स्वर्णतप्तोदकयोरिव तेषामनुपलम्भ इति
वाच्यम, स्वर्णतप्तोदकयोस्तेजस्त्वासिद्धेः, दृष्टानुसारेण चानुपलभ्यमानभावकल्पनाः प्रभ-
वन्ति, अन्यथा रात्रौ भास्करकराः सन्तोऽपि नोपलभ्यन्ते अनुद्भूतरूपस्पर्शत्वान्नायन-
रश्मिवदित्यपि कल्पनाप्रसक्तेः । न च चक्षुस्तेजोरश्मिवत्, रूपादीनां मध्ये रूपस्यैव
प्रकाशकत्वात्, प्रदीपवदित्यनुमानात्तद्रश्मिसत्त्वसिद्धिरिति वाच्यम्, गाढान्धकारायां रात्रौ 15
वृषदंशचक्षुः, बाह्यालोकमनपेक्ष्यार्थप्रकाशकं चक्षुष्ट्वात्, दिवा पुरुषचक्षुर्वदित्यनुमानेन तदा
भास्करकराणामपि सिद्ध्यापत्तेः । न च वृषदंशकादेश्चाक्षुषं तेजोऽस्ती न किञ्चित्प्रयोजनमनुद्भूत-
भास्करकरकल्पनयेति वाच्यम्, मनुष्यादीनामपि तदस्तीति बाह्यतेजसो वैयर्थ्यापत्तेः । न च
दृष्टानुसारित्वादभ्युपगमस्य नायनं सौर्यं च तेजो मनुष्यादीनां विज्ञानकारणं मार्जारादे रात्रौ
नायनमेव दृश्यत इति तदेव कारणमिति वाच्यम्, तथा दर्शनस्यैवाभावात्, नरनायनर- 20
श्म्यदर्शनात् तेषामनुमेयत्वे तु रात्रौ भास्करकराणामपि तथा स्यात्, न चान्धकारावष्टब्धायां
रात्रौ भास्करकरसंभवे नक्तञ्चराणामिव नराणामपि रूपदर्शनं स्यादिति वाच्यम्, सता-
मपि तत्कराणां नरान् प्रति रूपदर्शनजननासमर्थत्वात्, यथा न एव वासरे उलूकादीनाम्,
भावशक्तीनां विचित्रत्वात्, तस्मादनुपलम्भात् क्षपायां यथा न भास्करकरास्तथा नायना र-
श्मयोऽन्यदेति स्थितम् । यदपि चक्षुः, स्वरश्मिसम्बद्धार्थप्रकाशकम्, तैजसत्वात्, प्रदीप- 25
वदित्यनुमानम्, तदपि न सम्यक्, किमनेन चक्षुषो रश्मयः साध्यन्ते उतान्यतः सिद्धानां
ग्राह्यार्थसम्बन्धस्तेषां साध्यते, आद्ये तरुणनारीनयनानां दुग्धधवलतया भासुररश्मिरहि-
तानामध्यक्षतः प्रतीतेः कालात्ययापदिष्टो हेतुः । न चाध्यक्षग्रहणयोग्यस्यानुपलम्भो बाधः,
यथाऽनुष्णोऽग्निः सत्त्वादित्यादौ, नायनाश्च रश्मयो नाध्यक्षग्रहणयोग्याः सदा तेषामदृ-

द्रव्यत्वादिति वाच्यम्, पृथिव्यादावपि तेषां साध्यताप्रसक्तेः । न च वृषदंशचक्षुषो रश्मयोऽध्यक्षतो वीक्ष्यन्त इति नयनानां तत्साधने दुग्धधवलाबलालोचनादौ न विरोधो भूम्यादेस्तत्साधन इवेति वाच्यम्, तत्रेक्षणमात्रादन्यत्रापि तत्साधने हेम्नि पीतत्वप्रतीतौ रजतेऽपि पीतत्वप्रसङ्गात्, प्रमाणबाधाया उभयत्रापि तुल्यत्वात् । तैजसत्वमपि चक्षु-
5 ष्यसिद्धम्, न च तैजसं चक्षुः, रूपादीनां मध्ये रूपस्यैव प्रकाशकत्वात्, प्रदीपवदित्यनु-मानात्तत्सिद्धिरिति वक्तव्यम्, यतोऽत्र भास्वररूपोष्णस्पर्शवत्तेजोद्रव्यसमवेतगोलकस्वभाव-कार्यद्रव्यस्य चक्षुःशब्दवाच्यत्वेऽध्यक्षविरोधः, तद्विपरीतरूपस्पर्शाधारतयाऽध्यक्षतः प्रतिपत्तेः अबलापारावतबलीवर्दादीनां चक्षुषो धवललोहितनीलरूपतयोष्णस्पर्शविकलतया चाध्यक्षतोऽ-वगमात् । न च गोलकव्यतिरिक्तं चक्षुः, तद्ग्राहकप्रमाणाभावात् तस्माद्धाश्रयासिद्धः । रूप-
10 स्यैव प्रकाशकत्वादिति हेतुरपि चन्द्रकिरणादिनाऽनैकान्तिकः, तस्य रूपस्यैव प्रकाशकत्वेऽपि अतैजसत्वात् । न च तस्यापि पक्षीकरणम्, अनैकान्तिकहेत्वभावप्रसक्तेः, सर्वत्र व्यभि-चारविषयस्य पक्षीकरणसम्भवात् । न च चन्द्रकिरणान्तर्गतं तेजः रूपप्रकाशकमतो न व्यभिचार इत्यादेश्यम्, प्रदीपेऽप्यन्यस्य तदन्तर्गतस्य रूपप्रकाशकस्य प्रकल्पनया दृष्टान्ता-सिद्धिप्रसङ्गात् । रूपस्यैव प्रकाशकेन रूपचक्षुःसन्निकर्षेण व्यभिचाराच्च । न चासौ
15 रसादेरपि प्रकाशकः, इन्द्रियान्तरकल्पनावैयर्थ्यप्रसङ्गात् । रूपप्रकाशकत्वस्य रूपज्ञान-जनकत्वस्वरूपतया रूपादौ व्यभिचारोऽपि । यदि रूपादीनां मध्ये रूपस्यैव प्रकाश-ककरणद्रव्यत्वादिति हेतुरुच्यते तर्हि यथा सम्बन्धादेरद्रव्यादेरप्यतैजसस्य रूपज्ञानजनकता तथा चक्षुषोऽपि किं न स्यात् । एवं प्रदीपवदिति दृष्टान्तस्यापि रूपप्रकाशकत्वासिद्धेः साधनविकलता । न च प्रदीपे सति प्रतिनियतप्राणिनां रूपदर्शनसंभवात्तस्य रूपप्रकाशक-
20 त्वम्, अञ्जनादिसंस्कृतचक्षुषां तदभावेऽपि रूपदर्शनसद्भावात् कारणताव्यभिचारात् । न च प्रदीपसहकृतदर्शनस्य तदव्यभिचारित्वमिति वाच्यम्, यतो यादृशमेव रूपदर्शनमालोके संस्कृतचक्षुषां तदभावेऽपि तादृशमेव भवति भेदानवधारणात्, तद्भेदकल्पने हि न किंचित् केनचित्सदृशमिति सौगतमतानुप्रवेशः स्यात्, रूपप्रदीपयोश्च सहोत्पन्नयोर्युगपद्दर्शने प्रदीपव-द्रूपस्यापि प्रदीपप्रकाशकत्वाद्रूपं तैजसं भवेत्, अन्यथा न प्रदीपोऽपि तैजसः स्यात्,
25 तयोस्तज्जनकत्वाविशेषात् । न चान्यदा प्रदीपस्यैव रूपप्रकाशकत्वोपलब्धेः स एव तदापि प्रकाशक इति वाच्यमन्यदाऽप्यञ्जनादिसंस्कृतचक्षुषां तदभावेऽपि रूपदर्शनसद्भावात् तस्य तत्प्रकाशकत्वासिद्धेः । अथ तस्मिन् सति कदाचित् कस्यचिद्रूपदर्शनात्तस्य तत्प्रदर्शकत्वं तर्हि नक्तञ्चराणामन्धकारे रूपदर्शनात्तदभावे तदभावात् कार्यकारणभावस्य सर्वत्र तन्निबन्धन-त्वात् तमोऽपि रूपप्रकाशकत्वात् प्रदीपवत्तैजसं भवेत्, अन्यथा रूपप्रकाशकत्वस्य हेतोरने-

नैव तमसा व्यभिचारः स्यात् । न चालोकाभाव एव तमो नातिरिक्तं किञ्चिदिति वाच्यम्, आलोकस्यापि तमोऽभावरूपताप्रसक्तेः, तरतमरूपतयोपलम्भस्योभयत्र समानत्वान्न स आ-लोकस्य भावरूपतासाधकः । आलोकप्रतिभासाभाव एव तम इति चेत्तमःप्रतिभासाभाव एवालोक इत्यस्यापि समानत्वात् । न च चक्षुर्व्यापाराभावेऽपि तत्प्रतिभाससंवेदनात् आलो-कप्रतिभासाभाव एव तमःप्रतिभासः, प्रतिनियतसामग्रीप्रभवविज्ञानावभासित्वात् प्रतिनिय- 5
तभावानां तमसस्तदतत्प्रभवविज्ञानावभासित्वात्, आलोकस्य तद्विपर्ययात्, यद्वाऽऽलोक-स्याप्यचक्षुर्जे सत्यस्वप्नज्ञाने प्रतिभासनात्तमोज्ञानाभावरूपता भवेत् । आलोकस्य रूपप्रति-पत्तौ कारणत्वान्नाभावरूपता तर्हि तमसोऽपि नक्तंचररूपप्रतिपत्तौ हेतुभावो विद्यत इति नाभावरूपता भवेत्, तदेवमालोकस्य वस्तुत्वे तमसोऽपि तदस्त्विति तेन हेतोर्व्यभिचारः । भवतु वाऽऽलोकाभाव एव तमस्तथापि न व्यभिचारपरिहारः तदभावस्यातैजसस्यापि 10
तत्प्रकाशकत्वात् । न च तमोऽभावेऽपि रूपदर्शनान्न तस्य तत्प्रकाशकत्वमिति वाच्यम्, नक्तं-चराणामालोकाभावेऽपि रूपदर्शनादालोकस्यापि तत्प्रकाशकत्वाभावप्रसक्तेः । आलोकाभावेऽपि किमिति नास्मदादीनां रूपदर्शनमिति न शङ्क्यम्, रूपदर्शनस्य भावात्, अन्यथा न स्याद-न्धकारसाक्षात्कारः, बहुलतमोव्यवधानान्न घटादिरूपदर्शनम्, तीव्रालोकतिरोहितात्परूप-वत्, तद्व्यवच्छेदाय च प्रदीपोपादानम्, प्रदीपस्य च घटरूपव्यवधायकतमोऽपनेतृत्वे 15
तैजसं चक्षुः, रूपादीनां मध्ये रूपस्यैव प्रकाशकत्वात् प्रदीपवदिति साधनविकलो दृष्टान्तः । अथान्यतो रश्मयः सिद्धाः केवलमनेन प्राप्तार्थप्रकाशत्वं साध्यत इति चेन्न तद्ग्राहकप्रमाणा-भावात् । न चाप्राप्तार्थप्रकाशकत्वे सर्वं प्रकाशयेदिति वाच्यम्, भावानां नियतशक्तित्वात्, य एव हि यत्र योग्यः स एव तत् प्रकाशयति, अन्यथा संयुक्तसमवायाविशेषाद्रूपादीनिव गन्धादीनपि प्रकाशयेत् । न च तत्र योग्यता नास्तीति वक्तव्यं योग्यताया अभावादेव 20
प्राप्त्यभावेऽपि अतिदूरसन्निकृष्टस्य प्रकाशासम्भवात्सर्वत्र योग्यताया एवाश्रयणस्यौचित्यात्, ततश्च सम्बन्धकल्पना व्यर्थैव । किञ्च यदि चक्षुःप्राप्तार्थपरिच्छेदकं तर्हि स्फटिकाद्यन्तरित-वस्तुप्रकाशकं न स्यात् तद्रश्मीनां स्फटिकादिना प्रतिबन्धात् । न च रश्मिभिः स्फटिका-देर्ध्वंसः स्फटिकव्यवहितवस्तुदर्शनवेलायां स्फटिकादेरपि दर्शनात् । व्यवहितपदार्थस्यापि दर्शने कलुषितजलाद्यावृतार्थस्यापि चक्षुः प्रकाशकं स्यात् । न च जलेन तद्रश्मयः प्रतिह- 25
न्यन्त इति वक्तव्यम्, स्वच्छजलेनापि प्रतिहतिप्रसङ्गेन तद्व्यवहितार्थप्रकाशकता न स्यात्, तेषां तत्र प्रकाशनयोग्यताकल्पने च तत एवाप्राप्तार्थप्रकाशसम्भवात् संयुक्तसमवायादिस-

१ अत्रापि तमसो भावरूपत्वं तेजसोऽभावरूपत्वं वा भवतु तथापि पूर्वोदितव्यभिचारो नैव व्यपगत. तथापि प्रसङ्गात्तमसोऽभावस्वरूपत्वं निराकर्तुं न चालोकाभाव एव तम इत्याशङ्कोत्थापितेति विज्ञेयम् ॥

न्निकर्षकल्पनावैयर्थ्यम् । एवं समवायस्याभावात् संयुक्तसमवायादीनामप्यभावेन रूपाप्रका-
शकतया रूपस्यैव प्रकाशकत्वमसिद्धम् । इह तन्तुषु पट इत्यादिबुद्ध्या समवायः साध्यत
इति चेत्, न इह बुद्ध्या सम्बन्धमात्रसाधने घटतद्रूपयोः कथञ्चित्तादात्म्यसम्बन्धा-
भ्युपगमात् सिद्धसाध्यताप्रसङ्गः । तद्बुद्धिनिमित्ततया तत्सम्बन्धाप्रतिपत्तौ कथं समवायोऽपि
5 तन्निमित्ततया प्रतिपन्नः । घटतद्रूपयोः कथञ्चित्तादात्म्यसम्बन्धो विरोधान्नेष्यते चेत्तर्हि भावा-
भावयोः कथञ्चित्तादात्म्याभावे समवायादेरसम्भवादसम्बन्धः स्यात्, तथा चाभावेन सहा-
क्षाणां सन्निकर्षाभावान्नाक्षतस्तत्प्रतिपत्तिः स्यात् । न च भावाभावयोर्विशेषणविशेष्यभाव एव
सम्बन्ध इति वाच्यम्, भावाभावाभ्यां तस्यानर्थान्तरत्वे तावेव स एव वा स्यात्, अर्था-
न्तरत्वे न भावाभावाभ्यां तस्य सम्बन्धः, सम्बन्धाभावात्, सम्बन्धान्तरकल्पनायामनवस्था-
10 नात् अतस्तयोः कथञ्चित्तादात्म्यमभ्युपेयमन्यथाऽभावोऽध्यक्षप्रमाणग्राह्यो न स्यात् । एवञ्च
समवायासिद्ध्या नाक्षस्य रूपेण सम्बन्धः संयोगादिषड्विधसन्निकर्षाभावात् । अथ भवतोऽपि
कथमप्राप्तार्थप्रकाशकत्वं सिद्धमिति चेन्न, अप्राप्तार्थप्रकाशकं चक्षुः, अत्यासन्नार्थाप्रकाशक-
त्वात्, यन्नैवं तन्नैवं यथा श्रोत्रादि, न चेदं तथा इति व्यतिरेकिहेतुना तत्साधनात्, न
चायमसिद्धो हेतुः, गोलकस्य कामलादेः पक्ष्मपुटगतस्य चाञ्जनादेस्तेनाप्रकाशनात् । अथ
15 श्रोत्रादौ अत्यासन्नार्थप्रकाशकत्वं न सिद्धमिति कथं तस्य वैधर्म्यदृष्टान्ततेति चेन्न, कर्णशष्कु-
लीप्रविष्टमशकादिशब्दस्य श्रवणात्, स्पर्शनादौ विवादाभावाच्च, एवञ्च सन्निकर्षादेश्चक्षुषोऽ-
सिद्धेरिन्द्रियार्थसन्निकर्षोत्पन्नत्वं प्रत्यक्षस्यासिद्धम्, एवमेवान्तःकरणेन्द्रियसम्बन्धोऽपि न
सम्भवति, परकल्पितान्तःकरणस्यासिद्धेः । यच्चार्थग्रहणं स्मृतिफलसन्निकर्षनिवृत्त्यर्थमित्युक्तं
तदयुक्तम्, स्मृतिवज्ज्ञानस्याप्यर्थजन्यत्वासिद्धेः, तज्जन्यत्वात्तस्य तद्ग्राहकत्वे समानसमय-
20 चिरातीतानागतार्थग्राहकत्वं तस्य न स्यात्, तथाभूतस्यार्थस्य तत् प्रत्यजनकत्वात्, तथा च
सर्वज्ञज्ञानं सकलपदार्थग्राहकं न भवेदिति । ज्ञानग्रहणं सुखादिनिवृत्त्यर्थमित्यप्यसङ्गतम्,
ज्ञानरूपत्वानतिक्रमात्सुखादेः, अन्यथाऽऽह्लादाद्यनुभवो न स्यात्, अनवस्थादोषप्रसङ्गात् ।
ज्ञानसुखयोरेकत्वे प्रत्यक्षविरोधो ज्ञानमर्थावबोधस्वभावं सुखादिकमाह्लादादिस्वभावमिति
यदुक्तं तन्न, यतः स्वावबोध एव विज्ञानेऽव्यभिचरितो धर्मः, स्मरणादौ ज्ञानरूपतायामप्य-
25 र्थावबोधरूपताया अभावात् स्वावबोधरूपता तु ज्ञानाव्यभिचारिता सुखादावप्यस्ति, अन्यथा
तस्यानुभव एव न स्यात्, ततश्च सुखादेर्ज्ञानरूपतायां कथमध्यक्षविरोधः । अव्यपदेश्य-
पदोपादानमप्यनर्थकम्, व्यवच्छेद्याभावात्, उभयजं ज्ञानं व्यवच्छेद्यमिति चेन्न, तस्याध्य-
क्षतायां दोषाभावात् । शब्दजन्यत्वाद्यदि तस्य शाब्देऽन्तर्भावस्तर्हि अक्षजत्वात् किमिति
अध्यक्षे नान्तर्भावः । शब्दस्य प्राधान्यादिति चेन्न, अक्षलिङ्गातिक्रान्त एव शब्दस्य प्राधान्येन

व्यापारयोगात्। यद्युभयजज्ञानविषयस्यापि तदतिक्रान्तत्वं तद्व्यपदेश्यपदोपादानमन्तरेणापि शाब्द एव तस्यान्तर्भावो भविष्यतीति तद्व्यवच्छेदार्थमव्यपदेश्यपदोपादानमनर्थकम्। अथोभयजत्वादस्य प्रमाणान्तरत्वं अव्यपदेश्यग्रहणेऽसति स्यादिति चेन्न, यतोऽक्षप्राधान्ये प्रत्यक्षता शब्दप्राधान्ये तु शाब्दतेति कथं प्रमाणान्तरता, न चोभयोरपि प्राधान्यम्[१] सामग्र्यामेकस्यैव साधकतमत्वात्, तेनैव च व्यपदेशप्राप्तेः। अव्यभिचारादिपदमपि न व्यभिचारिज्ञाननिवृत्त्यर्थं 5 युज्यते, तत्प्रतिपाद्यार्थस्य परमतेनासङ्गतेः, तथाहि अदुष्टकारणारब्धत्वं बाधारहितत्वं वा नाव्यभिचारित्वं, प्रवृत्तिसामर्थ्यावगमव्यतिरेकेण ज्ञातुमशक्तेः, अतः प्रवृत्तिसामर्थ्यमेवाव्यभिचारित्वम्, तच्च विज्ञानस्याव्यभिचारित्वं ज्ञायमानं यदि प्रतिभातविषयप्राप्त्याऽवगम्यते तर्हि उदकज्ञाने किमुदकावयवी प्रतिभातः प्राप्यते, उत तत्सामान्यम्, किं वोभयम्। नाद्यः, अवयविन एवाभावात् प्रतिभासाविषयत्वात्, सत्त्वेऽपि तस्य न प्रतिभासस्य पराभ्युपगमेन 10 प्राप्तिः, झषादिविवर्त्तनाभिघातोपजातावयवक्रियादिक्रमेण ध्वंससम्भवात्। न च विद्यमानव्यूहैरवयवैरारब्धस्य तस्य तज्जातीयतया प्रतिभातस्यैव प्राप्तिरिति वाच्यम्, प्रतिभातस्य प्राप्तस्य चान्यत्वात्, न ह्यन्यस्य प्रतिभासनेऽन्यत्र प्राप्तावव्यभिचारिता, अतिप्रसङ्गात्। न च प्रतिभातोदकसामान्यप्राप्त्या तदव्यभिचारीति पक्ष आश्रियत इति वाच्यम्, व्यक्तिभ्य एकान्ततो भिन्नस्याभिन्नस्य वा सामान्यस्यासत्त्वात्, सत्त्वेऽपि तस्य नित्यतया स्वप्रतिभास- 15 ज्ञानजनकत्वायोगात्, अजनकस्याविषयत्वाभ्युपगमात्, विषयत्वेऽपि तस्य पानाद्यर्थक्रियाजनकत्वायोगेन प्रवृत्त्यभावप्रसङ्गात्। न च तदनगमेऽपि व्यक्तौ अर्थक्रियार्थिनां प्रवृत्तिरिति वाच्यम्, अन्यप्रतिभासेऽन्यत्र प्रवृत्त्ययोगात्। न च समवायस्यातिसूक्ष्मतया जातिव्यक्त्योरेकलोलीभावेन जातिप्रतिपत्तावपि भ्रान्त्या व्यक्तौ प्रवृत्तिरिति वाच्यम्, तज्ज्ञानस्यातस्मिंस्तद्ग्रहणरूपतया भ्रान्तिरूपत्वादव्यभिचरित्वायोगात्। नापि तृतीयः, अवयविसामान्ययोरभावे 20 तद्वत्पक्षस्यापि दुरापास्तत्वात्। प्रवृत्तिसामर्थ्येन पूर्वज्ञानस्याव्यभिचारिता किं लिङ्गभूतेन ज्ञायते उताध्यक्षरूपेण, नाद्यः, तेन सह सम्बन्धानवगतेः, अवगतौ वा प्रवृत्तिसामर्थ्येन न किञ्चित् प्रयोजनम्। न द्वितीयः ध्वस्तेन पूर्वज्ञानेन सहेन्द्रियस्य सन्निकर्षाभावात्तद्विषयज्ञानस्याध्यक्षतानुपपत्तेः, केशोण्डुकादिज्ञानवत् तस्य निरालम्बनत्वाच्च कथमव्यभिचारिताव्यवस्थापकत्वम्। न ह्यविद्यमानस्य कथञ्चिद्विषयभावः सम्भवति, जनकत्वाकारार्पकत्वमहत्त्वादिधर्मोपेतत्वसहोत्पादसत्त्वमात्रादीनां विषयत्वहेतुत्वेन परिकल्पितानामसति पदार्थे सर्वे- 25 षामभावात्। अथात्मान्तःकरणसम्बन्धेनाव्यभिचारितादिविशिष्टज्ञानमुत्पन्नं गृह्यत इति तदव्यभिचारितावगम इति चेन्न अव्यभिचारिताया ज्ञानधर्मत्वे सामान्यदूषणरीत्या नित्यता

१ सकलप्रवृत्तिजनकत्वं प्रवृत्तिसामर्थ्यम्।

तस्या न सम्भवति, अनित्यत्वे ज्ञानात्प्रागुत्पन्नत्वे च न ज्ञानधर्मो भवेत्, धर्मिणोऽभावात्, सहोत्पादे च तादात्म्यतदुत्पत्तिसमवायादिसम्बन्धाभावे तस्य धर्म इति व्यपदेशानुपपत्तिः पश्चादुत्पादे पूर्वं तज्ज्ञानं व्यभिचारि स्यात्। यद्यव्यभिचारितादि ज्ञानस्वरूपं तर्हि विपर्ययज्ञानेऽपि तत्प्रसक्तिः, विशिष्टज्ञानमव्यभिचारितादिस्वभावमिति चेन्न विशेषमन्तरेण विशि-
5 ष्टतानुपपत्तेः विशेषस्य चैकान्ततो भेदे सम्बन्धानुपपत्तिः, अभेदे च न विशिष्टता, कथञ्चिद्भेदे तु परपक्षसिद्धिः, तस्मान्नाव्यभिचारितापदोपादानमर्थवत्। किञ्च मरीच्युदकज्ञानस्य इन्द्रियार्थसन्निकर्षपदेनैव व्यावृत्तिसम्भवादव्यभिचारिपदोपादानं निरर्थकम्, तज्ज्ञाने ह्युदकं प्रतिभाति न तेनेन्द्रियसम्बन्धः, अविद्यमानत्वात, अन्यथा व्यभिचारिता न स्यात् न च मरीचिभिः सम्बन्धादिन्द्रियार्थसन्निकर्षप्रभवत्वं तज्ज्ञानस्येति वाच्यम्, अप्रतिभास-
10 मानमरीच्यादेरालम्बनत्वासम्भवात्, ज्ञानजनकतामात्रेणालम्बनत्वे इन्द्रियादेरप्यालम्बनता स्यात्। न चोदकाकारतया ते प्रतिभान्तीति वाच्यम्, उदकाकारताया ताभ्यः अभेदे परमार्थसत्त्वे च तत्प्रतिपत्तेर्व्यभिचारित्वासम्भवात्। अपरमार्थसत्त्वे च तासामप्यपरमार्थसत्त्वप्रसक्तिः। अपारमार्थिकोदकतादात्म्ये च मरीचीनां तदुदकज्ञानवन्मरीचिज्ञानमपि वितथं भवेत्। न चोदकाकार एकस्मिन् प्रतीयमाने मरीचयः प्रतीयन्त इति वक्तुं शक्यमतिप्रस-
15 ङ्गात्। ताभ्यो व्यतिरेके तु उदकप्रतिपत्तौ कथं मरीचयः प्रतिभान्ति, अन्यप्रतिभासेऽप्यन्यप्रतिभासाभ्युपगमेऽतिप्रसङ्गात्। न च मरीचिदेशं प्रति प्रवृत्तेः मरीच्यालम्बनत्वम्, एवं सति तद्देशस्यालम्बनत्वप्रसक्तेः। न च प्रतिभासमानभिन्नार्थसन्निकर्षजत्वमुदकविज्ञानस्योपपद्यते, सत्योदकज्ञानेऽदृष्टत्वात, अन्यथाऽनुमेयवह्निज्ञानस्यापि इन्द्रियार्थसन्निकर्षजत्वमापनीपद्येत, आत्ममनःसन्निकर्षजत्वात। अथ प्रतीयमानवह्निना नास्ति मनसः सम्बन्ध इति
20 चेत्तदेहापि नोदकेन सह चक्षुषस्सम्बन्ध इति व्यर्थमव्यभिचारिपदम्। तथा व्यवसायपदमपि न संशयज्ञानव्यवच्छेदार्थं कार्यम्, इन्द्रियार्थसन्निकर्षपदेनैव तद्वारणसम्भवात्, न हि पराभ्युपगमेन स्थाणुर्वा पुरुषो वेति संशयज्ञानमेकमुभयोल्लेखीन्द्रियार्थसन्निकर्षजं सम्भवति, सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च किं स्विदित्यनवधारणात्मकः प्रत्ययः संदेहः, तत्र किं प्रतिभाति धर्मिमात्रं धर्मो वा, यदि धर्मी वस्तुसन् प्रतिभाति तदा सम्यग्ज्ञान-
25 त्वान्न व्यवच्छेद्यः, अथावस्तुसन्नसावत्र प्रतिभाति तदाऽव्यभिचारिपदव्यावर्तितत्वान्न व्यवसायपदं सार्थकम्, यदि धर्मः प्रतिभाति, तथा स किं स्थाणुत्वपुरुषत्वान्यतरः, उभयं वा, प्रथमे स्थाणुत्वलक्षणो यदि वस्तुसन तर्हि न तज्ज्ञानं व्यवच्छेद्यं सम्यग्ज्ञानत्वात्, यद्यवस्तु सन् तदा तज्ज्ञानमव्यभिचारिपदापोह्यमेव, पुरुषत्वधर्मप्रतिभासेऽप्येवं वाच्यम्, उभयमिति पक्षेऽपि तथैव। एकस्य धर्मस्य तात्त्विकत्वेऽपरधर्मस्यातात्त्विकत्वेऽपि तात्त्विकधर्मावभासित्वा-

तज्ज्ञानमव्यभिचारि, अतात्त्विकधर्माभासित्वाच्च तदेव व्यभिचारीति एकमेव ज्ञानं प्रमाण-
मप्रमाणञ्च प्रसक्तम्, न च सन्दिग्धाकारप्रतिभासित्वात्सन्देहज्ञानमिति वाच्यम्, परमार्थतः
संदिग्धाकारताया अर्थे सद्भावेऽबाधितार्थग्रहणरूपत्वात्संशयज्ञानरूपत्वायोगात् सत्यार्थज्ञान-
वत् । तस्या अर्थेऽसद्भावे तु तज्ज्ञानमव्यभिचारिपदव्यावर्त्यमेवेति न व्यवसायपदं सार्थ-
कम्, तस्मान्नेदं प्रत्यक्षलक्षणमदुष्टम् । किन्तर्ह्यदुष्टं लक्षणमिति चेदुच्यते, स्वार्थसंवेदनं 5
स्पष्टमध्यक्षं मुख्यगौणतः इति, मुख्यमतीन्द्रिय[1]ज्ञानमशेषविशेषालम्बनमध्यक्षम् । गौणन्तु
संव्यवहारनिमित्तमसर्वपर्यायद्रव्यविषयमिन्द्रियप्रभवमस्मदाद्यध्यक्षं विशदम् । अस्य च स्व-
योग्योऽर्थः स्वार्थः तस्य संवेदनं विशदतया निर्णयस्वरूपम्, तेन संशयविपर्ययाऽनध्यव-
सायलक्षणस्य ज्ञानस्य संव्यवहारानिमित्तस्य नाध्यक्षताप्रसक्तिः, नाप्यज्ञानरूपस्येन्द्रियादे-
रविकल्पस्य वा सौगताभिमतस्य प्रत्यक्षता । स्वश्चार्थश्च स्वार्थौ तयोः संवेदनं स्वार्थ- 10
संवेदनमित्यपि व्युत्पत्त्या अर्थसंवेदनस्यैव जैमिनीयवैशेषिकादिपरिकल्पितस्य परोक्षस्य
तदेकार्थसमवेतान्तरज्ञानग्राह्यस्यास्वसंविदितस्वभावस्याध्यक्षताव्युदासः, तथा विज्ञानवादि-
परिकल्पितस्य स्वरूपमात्रग्राहकस्य । प्रमाणप्रमेयरूपस्य च सकलस्य क्रमाक्रमभाव्यनेकधर्मा
कान्तस्यैकरूपस्य वस्तुनः सद्भावेऽध्यक्षप्रमाणस्यैकस्य क्रमवर्त्तिपर्यायवशात्तथाव्यपदेशमासा-
दयतश्चातुर्विध्यमवग्रहेहावायधारणरूपतयोपपन्नम् । तत्र विषयविषयिसन्निपातानन्तरमाद्यं 15
ग्रहणमवग्रहः विषयो द्रव्यपर्यायात्मार्थः, तस्य विषयिणश्च द्रव्येन्द्रियस्य निर्वृत्त्युपकरणस्य
लब्ध्युपयोगस्वभावस्य भावेन्द्रियस्य यथाक्रमं सन्निपातो योग्यदेशावस्थानं तदनन्तरोद्भूतं
सत्तामात्रदर्शनस्वभावं दर्शनं स्वविषयव्यवस्थापनविकल्परूपमुत्तरपरिणामं प्रतिपद्यमानम-
वग्रहः, अवगृहीतविषयाकांक्षणमीहा, तदीहितविशेषनिर्णयोऽवायः, अवेतविषयस्मृति-
हेतुर्धारणेति । अत्र पूर्वपूर्वस्य प्रमाणता, उत्तरोत्तरस्य च फलतेत्येकस्यापि मतिज्ञानस्य 20
चातुर्विध्यं कथञ्चित्प्रमाणफलभेदश्चोपपन्नः, ग्राह्यग्राहकसंविदां प्रतिभासभेदेऽपि युगपदेकत्व-
मिव क्रमभाविनामवग्रहादीनां हेतुफलतया व्यवस्थितस्वरूपाणामपि कथञ्चिदेकत्वमविरुद्धम् ।
धारणास्वरूपा च मतिरविसंवादस्वरूपस्मृतिफलस्य हेतुत्वात् प्रमाणं स्मृतिरपि तथाभूत-
प्रत्यवमर्शस्वभावसंज्ञाफलजनकत्वात्, संज्ञापि तथाभूततर्कस्वभावचिन्ताफलजनकत्वात्,
चिन्ताऽप्यनुमानलक्षणाभिनिबोधफलजनकत्वात्, सोऽपि हानादिबुद्धिजनकत्वात्, तदुक्तम् 25
'मतिस्मृतिसंज्ञाचिन्ताऽभिनिबोध इत्यनर्थान्तरम्' [ तत्त्वार्थ १-१३ ] अनर्थान्तरमिति
कथञ्चिदेकविषयम् । प्राक् शब्दयोजनान्मतिज्ञानमेतत्, शेषमनेकप्रभेदं शब्दयोजनादुपजाय-
मानमविशदं ज्ञानं श्रुतमिति केचित् । सैद्धान्तिकास्तु अवग्रहेहावायधारणाप्रभेदरूपाया

---

१ अत्रातीन्द्रियज्ञानपदेनाशेषविशेषालम्बनभिन्नयोरवधिमनःपर्यायज्ञानयोरपि ग्रहणं कार्यम् ॥

मतेर्वाचकाः पर्यायशब्दा मतिः स्मृतिः संज्ञा चिन्ता अभिनिबोध इत्येते प्रतिपन्नाः, स्मृतिसंज्ञाचिन्तादीनान्तु कथञ्चिद्गृहीतग्राहित्वेऽपि अविसंवादकत्वादनुमानवत् प्रमाणताऽभ्युपेया। न चानुमानस्यागृहीतस्वलक्षणाध्यवसायात् प्रामाण्यं न यथोक्तस्मृत्यादेरिति, शब्दानित्यत्वादिषु लिङ्गलिङ्गिधियोरप्रमाणताप्रसङ्गात्, व्याप्तिग्राहकप्रमाणेन साकल्येनान-
5 धिगतस्वलक्षणाध्यवसायिना सत्त्वानित्यत्वादेर्ग्रहणे तयोः समधिगतस्वलक्षणविषयत्वात्। अत्र च यच्छब्दसंयोजनात् प्राक् स्मृत्यादिकमविसंवादिव्यवहारनिर्वर्त्तनक्षमं प्रवर्त्तते तन्मतिः, शब्दसंयोजनात् प्रादुर्भूतं तु सर्वं श्रुतमिति विभाग इति दिक् ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानंदसूरीश्वरपट्टालङ्कारश्रीमद्विजय-
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
10 लब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य प्रत्यक्षलक्ष-
णपरीक्षणं नाम पञ्चविंशं सोपानम् ॥



## अथ अनुमानविचारः ।

अत्र चार्वाकाः । विशदं सांव्यवहारिकमध्यक्षं युक्तम्, अनुमानादिकन्तूपचरितविष-
15 यत्वाद्विषयाभावाच्च न प्रमाणमिति कथं शब्दसंयोजनात् स्मृत्यादिश्रुतमुपपत्तिमत्। तदुक्तं 'प्रमाणस्यागौणत्वादनुमानादर्थनिर्णयो दुर्लभः' तथा 'अनधिगतार्थपरिच्छित्तिः प्रमाणम्' इति। न चानुमानमर्थपरिच्छित्तिस्वभावम्, तद्विषयाभिमतस्य सामान्यादेरर्थस्याभावात्, भावेऽपि यदि विशेषस्तद्विषयोऽभ्युपगम्यते तदा तत्र हेतोरनुगमाभावः, अथ सामान्यं तद्विषयस्तदा सिद्धसाध्यताप्रसक्तिः, विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यतेति न्यायात्।
20 किञ्च व्याप्तिग्रहणे पक्षधर्मतावगमे च सत्यनुमानं प्रवर्त्तते, न च व्याप्तिग्रहणमध्यक्षतः सम्भवति, तस्य सन्निहितमात्रार्थग्राहकत्वेन सकलपदार्थाक्षेपेण व्याप्तिग्रहणेऽसामर्थ्यात्। नाप्यनुमानं तद्ग्रहणक्षमम्, अनवस्थाप्रसङ्गात्, प्रत्यक्षानुमानाभ्यामन्यस्य व्याप्तिग्राहकत्वायोगात् कुतोऽनुमानं प्रमाणमिति। अत्र सौगताः अस्ति प्रत्यक्षातिरिक्तं प्रमाणान्तरम्,

१ नन्वनुमानेन किं धर्मी साध्यते धर्मो वा समुदायो वा, नाद्यः, धर्मिणः प्रसिद्धत्वेन साधनवैफल्यात्, हेतोरनन्वयाच्च न हि यत्र यत्र धूमस्तत्र तत्र पर्वतनितम्ब इत्यन्वयः सम्भवति. द्वितीये किं सामान्यरूपो विशेषरूपो वा धर्मः साध्यः, तत्र सामान्यरूपे सिद्धसाधनम्, न वा तन्मात्रप्रतिपत्तौ किञ्चित् फलमुपलभामहे तस्य दाहपाकादावसामर्थ्यात्। सामान्यात् प्रतीताच्च प्रवर्त्तमानः प्रमाता कथं नियतदिगभिमुखमेव प्रवर्त्तेत, न हि सामान्यं नियतदिक्कम्, सकलव्यक्तिव्यापित्वाभावप्रसक्तेः। विशेषोऽपि न साध्यः, तत्साधनस्यानन्वयात्, न हि पर्वतवह्निव्यक्तिर्महानसादौ दृष्टान्ते वर्त्तते येन तेन सह धूमस्य व्याप्तिप्रतीतिर्भवेत् ॥

अन्यथा प्रमाणेतरसामान्यस्थितेः परबुद्धिपरिच्छित्तेः स्वर्गापूर्वदेवताप्रतिषेधस्य चाकृतसंस्काराभिः स्वसंवित्तिभिः कर्तुमशक्तेः । प्रमाणस्यागौणत्वं यद्यनुपचरितलक्षणमिष्टं तदानुमानमप्यनुपचरितमेव अस्खलद्बुद्धिरूपत्वात् । अथानुमानेन धर्मधर्मिसमुदायः साध्यः, तेन च हेतोर्नान्वयः पक्षधर्मता वा सम्भवति, तत्र पक्षधर्मतासिद्धये धर्मिणस्साध्यत्वमन्वयसिद्धये च धर्मस्योपचरितमित्युपचरितविषयत्वादनुमानमुपचरितमिति चेन्न, यत्र धर्मिणि 5 धूममात्रमग्निमात्रव्याप्तमुपलभ्यते तत्रैवाग्निप्रतिपत्तेर्लोकस्य भावात्कस्याप्यत्रानुपचारात्, धर्मिणि केवलस्य धर्मस्य साधनेऽपि इष्टसमुदायस्य सिद्धेः, न ह्यनुमानविषये साध्यशब्दोपचारेऽनुमानमुपचरितं भवति । न च प्रमाणस्यागौणत्वेनाभ्रान्तत्वादनुमानस्य भ्रान्तत्वादप्रामाण्यं वाच्यम्, भ्रान्तस्यापि तस्य प्रतिबन्धफलादुपजायमानस्य प्रामाण्यसिद्धेः, प्रत्यक्षस्य ह्यर्थस्यासम्भवेऽभाव एवाव्यभिचारित्वलक्षणं प्रामाण्यं तच्च साध्यप्रतिबद्धहेतुप्रभवस्यानु 10 मानस्याप्यस्तीति कथं न प्रमाणम् । अनधिगतार्थपरिच्छित्तिः प्रमाणमित्यपि न युक्तम्, सर्व एव हि प्रवृत्तिकामः प्रेक्षावान् प्रवृत्तिविषयार्थप्रदर्शकं प्रमाणमन्वेषते, प्रवृत्तिविषयश्चार्थक्रियासमर्थोऽर्थः, अर्थस्यानागतं प्रवृत्तिसाध्यमर्थक्रियासामर्थ्यं नाध्यक्षमधिगन्तुं समर्थम्, भाविनि प्रमाणव्यापारासम्भवात्, तस्मात्कथं प्रत्यक्षस्यार्थपरिच्छेदमात्रात् प्रामाण्यं युक्तम्, अतः स्वविषयेऽध्यक्षं तदुत्पत्त्या यत्पूर्वं मया प्रबन्धेनार्थक्रियाकारि प्रतिपन्नं वस्तु 15 तदेवेदमिति निश्चयं कुर्वत् प्रवर्तकत्वात् प्रमाणम्, अनुमानेऽपि चैतत्समानम्, यतोऽर्थक्रियाकारित्वेन निश्चितादर्थात् पारम्पर्येणोत्पत्तिरेवाव्यभिचारित्वलक्षणं प्रामाण्यनुमानेऽप्यध्यक्षवत् कथं नाविप्रतिपत्तिविषयः, प्रतिपद्यत एव चाग्न्यनुमानस्य तदुत्पत्त्या बाह्यवह्न्यध्यवसायेन लोकोऽध्यक्षवत् प्रामाण्यम् । अथाध्यक्षमपि प्रमाणं नेष्यते तर्हि लोकप्रतीतिबाधा स्यात्, न च नानुमानस्य प्रामाण्यं प्रतिषिध्यते किन्तु लिङ्गस्य त्र्यादिलक्षणं न केनचित्प्रमाणेन प्रसिद्ध- 20 मित्युच्यते, अनुमानेन तदवगमेऽनवस्थापत्तेरिति वाच्यम्, पक्षधर्मात्तदंशव्याप्तात् प्रमाणतोऽवगतात् साध्यप्रतिपत्तिर्हि अनुमानम्, पक्षधर्मतानिश्चयश्च क्वचित् प्रत्यक्षात् क्वचिच्चानुमानात्, यत्राप्यनुमानात्तन्निश्चयस्तत्र नानवस्थादिदूषणम्, प्रत्यक्षादेव क्वचित्तन्निश्चयात् । तदंशव्याप्तिनिश्चयश्च कार्यहेतोः कस्यचित् स्वभावहेतोश्च विशिष्टप्रत्यक्षादेव, स्वभावहेतोरप्यनित्यत्वादेरध्यक्षेणैव प्रतिपत्तेस्तन्निबन्धन एव तन्निश्चयः, अध्यक्षावगतेऽपि च क्षणिकत्वे तद्व्यवहारप्र- 25 साधनाय प्रवर्त्तमानमनुमानं न वैयर्थ्यमनुभवेत्, शिंशपात्वाद्वृक्षत्वानुमानवत् । न च सत्त्व-

१ संक्षिप्ताक्षिप्तचेतोभि शास्त्रकारैर्धर्मधर्मिसमुदाये सङ्केतितोऽपि पक्षशब्दस्तदेकदेशे धर्मिण्युपचारेण प्रयुक्तो भवेत्तावता शास्त्रे पक्षशब्दात् प्रतिपत्तौ धर्मिणो गौणता, अनुमानसमये तु प्राकृतैरिव तार्किकैरप्रयुक्तपक्षशब्दैरेव धर्मिणः प्रत्यक्षत. प्रतीयमानत्वे कथं गौणता, यतस्तद्वृत्तिहेतोरपि गौणतयाऽनुमानस्य गौणता स्यादिति बोध्यम् ॥

क्षणिकत्वयोस्तादात्म्ये एकनिश्चयेऽपरस्यापि निश्चयः, अन्यथा तत्तादात्म्यायोगात्, अतस्तदनु-
मानं व्यर्थमिति वाच्यम्, निश्चयापेक्षो हि गम्यगमकभावः, निश्चयश्चानुभवाविशेषेऽपि सत्त्व
एव न क्षणिकत्वे, सदृशापरापरोत्पत्त्यादेर्भ्रान्तिनिमित्तस्य सद्भावाद्विपर्यये बाधकप्रमाणवृत्त्या
सत्त्वक्षणिकत्वयोस्तादात्म्यसिद्धेः, बाधकप्रमाणस्य च प्रतिबन्धसिद्धिरध्यक्षत इति नानव-
5 स्थादिदोषः। न च निर्विकल्पकं व्याप्त्या प्रतिबन्धग्रहणेऽक्षममिति शङ्क्यम्, विकल्पोत्पाद-
नद्वारेण तत्र तस्य सामर्थ्याभ्युपगमात्। अनुमानविषयस्य सामान्यस्याभावो य उक्तस्सोऽपि
न युक्तः, अतद्रूपपरावृत्तवस्तुमात्रप्रसाधकत्वादनुमानस्य, यथोक्तस्य च सामान्यस्यायोगव्य-
च्छेदेन प्रतिनियतदेशादिसम्बन्धितयाऽनुमानेन प्रसाधनात्, अवगततादात्म्यतदुत्पत्तिप्रति-
बन्धस्य च लिङ्गस्य साध्यगमकत्वे न कश्चिद्दोष इति नानुमानप्रामाण्यानुपपत्तिरिति न
10 चार्वाकमतं युक्तम्। तत्र हेतुः पक्षधर्मत्वान्वयव्यतिरेकलक्षणकार्यस्वभावानुपलब्धिस्वरूपेण
त्रिविधः अतोऽन्ये हेत्वाभासाः, अन्येषां हेत्वभावनिश्चयश्च विरुद्धोपलब्ध्या, हेतुतदाभा-
सयोर्विरोधश्च परस्परपरिहारस्थितिलक्षण एव, हेतुलक्षणप्रतीतिकाल एव तदात्मनियतप्रति-
भासज्ञानादेव तद्विपरीतस्यान्यतया तदाभासताप्रतीतेः, परस्परमितरेतररूपाभावनिश्चयात्,
तेन हेत्वाभासत्वं त्रिविधहेतुव्यतिरिक्तेषूपलभ्यमानं स्वविरुद्धं हेतुत्वं निराकरोति कुतः
15 पुनः प्रमाणात्त्रिसंख्याबाह्यानामर्थानां हेत्वाभासत्वेन व्याप्तिरवगतेति चेदुच्यते, अविनाभाव-
नियमात्, लिङ्गतयाऽऽशङ्क्यमाने त्रिविधहेतुव्यतिरिक्तेऽर्थे पक्षधर्मतासद्भावेऽप्यविनाभाव-
स्याभावात्, अतो हेत्वाभासत्वेनासिद्धविरुद्धानैकान्तिकसामान्यधर्मेण व्याप्तमविनाभाव-
वैकल्यं प्रमेयत्वादाववगतमिति हेत्वाभासत्वे साध्ये तत्स्वभावहेतुस्त्रिविधहेतुव्यतिरिक्तत्वा-
देव व्यापकानुपलब्धेः तदन्येषामविनाभाववैकल्यं सिद्धम्, अविनाभावस्य तादात्म्यतदुत्प-
20 त्तिभ्यां व्याप्तत्वात्, तयोरेव तस्य भावात्, अतदुत्पत्तेरतत्स्वभावस्य च तदनायत्ततया तदव्य-
भिचारनियमाभावात्। रसात्समानसमयस्य रूपादेः प्रतिपत्तिरपि स्वकारणाव्यभिचारनिमि-
त्ताविनाभावनिबन्धनेति तत्कारणोत्पत्तिरेवाविनाभावनिबन्धनमन्यथा तदनायत्तस्य तत्कार-
णानायत्तस्य वा तेनाविनाभावकल्पनायां सर्वार्थैरविनाभावो भवेदविशेषात्। तदेवं तादात्म्य-
तदुत्पत्त्योरविनाभावव्यापिकयोर्यत्राभावस्तत्राविनाभावाभावाद्धेतुत्वस्याप्यभावः सिद्ध इति।
25 एतेन 'तत्पूर्वकं त्रिविधमनुमानं पूर्ववत् शेषवत् सामान्यतो दृष्टञ्च' [न्यायद १-१-५] इति
नैयायिकोक्तानुमानलक्षणं प्रतिक्षिप्तम्, अत्र सूत्रे तत्पूर्वकमनुमानमित्येतावदेवानुमानलक्षण-
मित्येके, तत्पूर्वकं त्रिविधमनुमानमिति चान्ये, सम्पूर्णसूत्रं तथेत्यपरे। आद्ये तत्पदेन प्रत्यक्षप-
रामर्शः, प्रत्यक्षपूर्वकमनुमानमित्युक्तौ संस्कारेऽतिप्रसङ्गः। अतो ज्ञानग्रहणं कार्यम्, तत्पूर्वकं
ज्ञानं यतो भवति तदनुमानमित्युच्यमाने स्मृत्याश्रयेणातिप्रसङ्गः, द्वितीयलिङ्गदर्शनपूर्विकाया

अविनाभावसम्बन्धस्मृतेस्तत्पूर्वकत्वात् तज्जनकस्यानुमानत्वप्रसङ्ग इति तन्निवृत्तयेऽर्थोपल-
ब्धिग्रहणं कार्यम्, स्मृतेस्त्वनर्थजन्यत्वम्, अर्थं विनापि भावात्, तथापि लैङ्गिकविपर्ययेऽति-
व्याप्तिः, गवयविषाणदर्शनाद्गोप्रतिपत्तिस्तद्गोविषाणसादृश्यज्ञानलक्षणप्रत्यक्षपूर्वकमिति तन्नि-
वृत्तयेऽव्यभिचारिपदमनुवर्त्तनीयम्, एवमपि संशयज्ञानजनकेऽतिप्रसङ्गः, यतो गोगवया-
नुयायिलिङ्गदर्शनाद्गौर्गवयो वेति संशय उपजायते तज्जनकं च सदृशलिङ्गज्ञानं प्रत्यक्षं तत्पूर्वकं 5
संशयज्ञानमर्थविषयञ्च तदर्थं व्यवसायपदमप्यनुवर्त्तनीयम्। तथाप्यविनाभावसम्बन्धस्मरणा-
नन्तरं तथा चायं धूम इति प्रदर्शनज्ञानादग्निरिति वाक्याच्च नारिकेलद्वीपवासिनो विशिष्ट-
देशेऽग्निप्रतिपत्तिरुपजायते, न च तस्यानुमानफलत्वं शाब्दत्वेन व्यवस्थापनात्तन्निवृत्तयेऽ-
व्यपदेश्यपदानुवृत्तिः, तथाप्युपमानेऽतिप्रसङ्गः, गृहीतातिदेशवाक्यस्य पुंसः सादृश्यज्ञानं
वाक्यार्थानुस्मरणसहायमव्यपदेश्यादित्रिशेषणत्रयविशिष्टं संज्ञासंज्ञिसम्बन्धज्ञानं जनयदपि ना 10
नुमानम्, तत्फलस्याव्यपदेश्यत्वञ्च श्रूयमाणवाक्याजनितत्वात् । तस्मात्तत्पूर्वकमित्यत्र
विग्रहद्वयमाश्रयणीयं तानि ते च पूर्वं यस्य तत् तत्पूर्वकम्, तानि इत्यनेन सर्वप्रमाणपूर्वकत्व
मनुमानस्य लभ्यते। ते इत्यनेन द्वे प्रत्यक्षे ग्राह्ये, तथा च तत्पूर्वकमित्यनेन लिङ्गलिङ्गि-
सम्बन्धदर्शनं लिङ्गदर्शनञ्च सम्बध्यते, न चोपमानफलमेवम्भूताध्यक्षफलद्वयपूर्वमिति
तत्फलाच्छिद्यतेऽनुमानफलम् । द्वितीयपक्षे तत्पूर्वकं त्रिविधमिति क्षणम्, त्रिविधपदा- 15
नुपादाने संस्कारस्मृतिशाब्दविपर्ययसंशयोपमानादिषु अतिप्रमङ्गः। त्रिविधमिति पक्ष-
धर्मान्वयव्यतिरेकलक्षणानि त्रीणि रूपाणि गृह्यन्ते, पूर्ववदिति पक्षसत्त्वस्य शेषवदिति
सपक्षसत्त्वस्य सामान्यतो दृष्टमिति विपक्षासत्त्वस्य लाभात्, एतद्रूपलिङ्गालम्बनं यत्त-
त्पूर्वकं तदनुमानं नातः संस्कारादौ दोषः। तथापि बाधितसत्प्रतिपक्षेष्वतिव्याप्तिरनश्च-
शब्देनाबाधितविषयत्वासत्प्रतिपक्षत्वयोर्ग्रहणम् । तत्राप्यन्वयिलिङ्गविवक्षायां सामान्यतो 20
दृष्टस्य व्यतिरेकिविवक्षायां शेषवदित्यस्यानभिसम्बन्धाच्च तदालम्बनयोरसङ्ग्रहः, तथा चान्व-
यलिङ्गविवक्षायां विपक्षासत्त्वव्यतिरिक्तचतुर्लक्षणलिङ्गस्य व्यतिरेकिविवक्षायां सपक्षसत्त्व-
व्यतिरिक्तचतुर्लक्षणलिङ्गस्यान्वयव्यतिरेकिलिङ्गविवक्षायाञ्च पञ्चलक्षणलिङ्गस्य प्राप्तिरिति।
त्रिविधमिति पदमतिप्रसङ्गवारकमपि प्रकारभेदपरतयापि वर्णयन्ति, त एव भेदाः पूर्ववदा-
दिशब्देनोक्ताः, यत्र कारणेन कार्यमनुमीयते तत्पूर्ववत्। ननु कारणात् कार्ये साध्ये कार्यस्य 25
धर्मित्वे आश्रयासिद्धिः, तस्यासिद्धत्वात्, सिद्धत्वे वा साधनवैफल्यम्, न च कार्यसत्तायां
साध्यायां कारणलक्षणो हेतुर्भावधर्मः सिद्धः, कार्यसत्तासिद्धावेव तद्धर्मतासिद्धेः, नाप्य-
भावधर्मोऽसौ, तत्सत्तासाधने तस्य विरुद्धत्वात्। नाप्युभयधर्मः,तत्र तस्य व्यभिचारात्, न
ह्युभयधर्मो भावमेव साधयति, किञ्च कारणात् कार्यस्यास्तित्वे साध्ये हेतुर्व्यधिकरणः

स्यात्, कारणाच्च यदि प्रतिबद्धसामर्थ्यात् भाविकार्यास्तित्वं साध्यते तदाऽनैकान्तिकत्वं हेतोः, न ह्यवश्यं कारणानि तद्वन्ति भवन्ति, प्रतिबन्धवैकल्यसंभवात्, मैवम्, कार्यस्य धर्मित्वेनाकरणात्, किन्तु कारणस्यैव मेघादेर्धर्मित्वं क्रियते स च सिद्ध एव, तत्रैव वृष्ट्युत्पादकत्वं धर्मः साध्यते तद्धर्मेणोन्नतत्वादिना । मेघत्वजातियुक्तानां धर्मित्वं भविष्यद्वृ-

5 ष्ट्युत्पादकत्वं साध्यो धर्मः उन्नतत्वादिकं हेतुः धर्मिणो धर्मयोश्च भिन्नत्वान्न प्रतिज्ञार्थैकदेशता । उन्नतत्वादिधर्मविशिष्टमेघस्य कारणत्वेन तद्धर्मेण भविष्यद्वृष्ट्युत्पादकत्वस्यानुमाने वृष्टेरप्यनुमानात् कारणात्कार्यानुमानमित्युच्यते, विशिष्टोन्नतत्वादेर्धर्मस्य गमकत्वेन न कारणात् कार्यानुमानमनैकान्तिकम्, न च विशेषोऽसर्वज्ञदुर्ज्ञेय इति वाच्यम्, सर्वानुमानोच्छेदप्रसक्तेः, मशकादिव्यावृत्तधूमादीनामपि स्वसाध्याव्यभिचरितत्वमसर्वविदा न हि

10 निश्चेतुं शक्यम् । कार्यात् कारणानुमानं शेषवत्, अत्रापि कार्यगत एव साधनधर्मः कश्चिदुक्तः, तेन च धर्मान्तरमप्रत्यक्षं वृष्टिमद्देशसंबंधित्वादिकं कार्यगतमनुमीयते, नदीशब्दवाच्यो गर्तविशेषो धर्मी तस्योपरिवृष्टिमद्देशसम्बन्धित्वं साध्यो धर्मः, उभयतटव्यापित्वादिकस्तु साधनधर्मः, अनेकफलफेनसमूहवत्त्वशीघ्रतरगमनत्वकलुषत्वादिश्च तस्य विशेषः साध्याव्यभिचारी यदा निश्चितो भवति तदा गमकत्वं नोभयतटव्यापित्वमात्रं तोयस्य । सामान्यतो

15 दृष्टमकार्यकारणभूतेन लिङ्गेन यत्र लिङ्गिनोऽवगमः, अविनाभावित्वं त्रयाणामप्यविशिष्टम् । विवक्षितसाध्यसाधनापेक्षयाऽकार्यकारणभूतत्वादिकस्तस्य विशेषः, अन्यत्र दृष्टस्यान्यत्र दर्शनं व्रज्यापूर्वकं यथा देवदत्तादेः, तथा चादित्यस्यान्यवृक्षोपरि सम्बन्धितया निर्दिश्यमानस्यान्यपर्वतोर्ध्वभागसम्बन्धितया निर्देशो दृष्टः, तेन च गत्यविनाभाविना भाव्यम् । अन्यत्र दर्शनस्य च न गतिकार्यत्वम्, गतेर्विभागादिकार्यजनकत्वात् । अन्यत्रदर्शनं धर्मि, गत्यविना-

20 भूतमिति साध्यो धर्मः, अन्यत्र दर्शनशब्दवाच्यत्वात्, देवदत्तान्यत्र दर्शनवत् । तृतीयमतेऽप्येवमेव व्याख्यानं व्यवच्छेदोऽपि पूर्ववदेव, पूर्वव्याख्याने तत्पूर्वकं त्रिविधमिति लक्षणं पूर्ववदादयस्तु त्रिप्रकारलिङ्गविशेषणार्थाः । अत्र तु सर्वमेतदनुमानलक्षणमिति विशेष इति दिशानि रूपितं तन्मतम्, तदेतत्सर्वं तदुक्तलक्षणलक्षितप्रत्यक्षस्य प्रमाणत्वासिद्ध्या निरस्तम्, तत्पूर्वकत्वस्यानुमानलक्षणस्यासम्भवात् । कारणात् कार्यानुमानमपि न युक्तम्,

25 अप्रतिरुद्धसामर्थ्यात् कारणात् कार्यानुमाने तथाभूतकारणदर्शनसमय एव कार्यस्योत्पत्तेरनन्तरसमये तस्याध्यक्षतादोषस्याविचलितरूपत्वात्, प्रतिबन्धाद्यनुस्मरणवैयर्थ्यापत्तेः । न च नास्त्यध्यक्षतादोषः, तथाहि निष्पाद्ये पटेऽनुत्पन्नावयवक्रियस्य अन्त्यतन्तोर्यदा क्रियातो विभागस्तदाऽविनाभावसम्बन्धस्मृतिः, ततो विभागात् पूर्वसंयोगनाशः तन्त्वन्तरेण संयोगोत्पत्तिर्यदैव तदैवाविनाभावसम्बन्धस्मरणात् परामर्शज्ञानम्, यदा संयोगात्कार्योत्पादस्तदैव

परामर्शविशिष्टाल्लिङ्गाद्भविष्यति कार्यमित्यनुमेयप्रतिपत्तिः, न चोत्पादकाल एव कार्यस्य प्रत्यक्षता, तदा तत्र रूपाद्यभावादिति वाच्यम्, ईदृशप्रक्रियायाः प्रमाणबाधितत्वेनासिद्धया तद्दोषस्य दुर्वारत्वात् । अस्वसंविदितविज्ञानाभ्युपगमवादिनां प्रदर्शितन्यायेन उक्तत्वादिधर्मोद्यसिद्धेः, अवयविसंयोगविशेषणविशेष्यभावादीनाञ्च पराभ्युपगमेनासिद्धेर्हेतोराश्रयस्वरूपदृष्टान्तासिद्धिदोषा वाच्याः, न हि कार्याभावात् कारणमात्रस्याभावसिद्धिरिति संदिग्धव्यतिरेको हेतुः, अप्रतिरुद्धसामर्थ्यस्य कारणविशेषस्याभावसिद्धावपि नाप्रतिरुद्धसामर्थ्यत्वं कारणस्य ज्ञातुं शक्यम्, ज्ञप्तौ वा कार्यस्यैव तदा प्रत्यक्षता स्यात् । तथाऽवयविरूपो नदीविशेषोऽप्यसिद्ध उभयतटव्यापित्वादिकन्तु संयोगविशेषत्वात्तदभावाद्धेतुरप्यसिद्धः । तथाऽकार्यकारणभूतस्यास्वभावभूतस्य च लिङ्गस्य गमकत्वेऽविनाभावनिमित्तस्य तादात्म्यतदुत्पत्तिलक्षणप्रतिबन्धस्याभावेऽपि गमकत्वाभ्युपगमात् सर्वस्य सर्वं प्रति गमकत्वापत्तिः । न चासत्यपि जन्यजनकभावे तादात्म्ये वा स्वसाध्येनैव लिङ्गस्याविनाभावो नान्येनेत्यत्र नियामकं स्वभावातिरिक्तं किञ्चिदस्ति, स च स्वभावो यद्याकस्मिकस्तदा स सर्ववस्तूनां स्यात्, न तु कस्यचित्, न ह्यहेतोर्देशकालनियमो युक्तः । तस्माद्येनाविनाभूतं यद् दृश्यते तेन तस्य तत्त्वचिन्तकैरव्यभिचारनिबन्धनं वाच्यम्, तच्च यथोक्तादन्यदव्यभिचारनिबन्धनं नोपपत्तिमत् । न च तादात्म्यतदुत्पत्तिव्यतिरेकेण हेतोः पक्षधर्मतापि सम्भवति, संयोगादीनामसिद्धेः । एवं दृष्टान्तधर्मिणि प्रत्यक्षेण सामान्यरूपतया साध्यसाधनयोः प्रतिबन्धग्रहणेऽपि नानुमानस्योत्थानं सम्भवति, साध्यधर्मिणि हेतोः साध्यधर्मेणाविनाभूतत्वाग्रहणात्, अन्यथा लोहलेख्यं वज्रं पार्थिवत्वात् काष्ठवदित्यत्रापि साध्यप्रतिपत्तिर्भवेत्, दृष्टान्तधर्मिणि पार्थिवत्वलोहलेख्यत्वयोरध्यक्षतः प्रतिपत्तेः । न चात्राध्यक्षबाधा, बाधाविनाभावयोर्विरोधात्, अविनाभावयुक्तेऽध्यक्षबाधाऽयोगात् । न च तत्राबाधितत्वं नास्तीति वक्तव्यम्, तस्याविसंवादित्वप्रतिपत्तिमन्तरेण ज्ञातुमशक्तेः । न च सर्वोपसंहारेणाध्यक्षं दृष्टान्तधर्मिणि प्रवृत्तमप्यविनाभावगमकम्, अध्यक्षस्य निखिलदेशकालसाध्यसाधनावभासनसामर्थ्यविरहात्, न च मानसं सर्वोपसंहारेण तद्ग्राहकम्, तस्याविशदत्वात्, विशदावभासस्य तदवगतिस्वभावत्वात्, तस्मात्तादात्म्यतदुत्पत्तिव्यवस्थापकमेव प्रमाणं सकलोपसंहारेण व्याप्तिव्यवस्थापकमिति त्रिरूपाल्लिङ्गाल्लिङ्गिनि ज्ञानमनुमानमिति ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानंदसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्यानुमानविचारात्मकं नाम षड्विंशं सोपानम् ॥

# अथ प्रमाणसंख्यानिर्णयः ।

अत्र प्रत्यक्षानुमानलक्षणे द्वे एव प्रमाणे, परोक्षोऽर्थो हि न स्वत एव तदाकारोत्पत्त्या प्रतीयते, प्रमाणेन तस्यापरोक्षत्वप्रसक्तेः, विकल्पमात्रस्य च स्वतंत्रस्य राज्यादिविकल्पवद्-प्रमाणत्वात्, तदप्रतिबद्धस्यावश्यन्तया तदव्यभिचाराभावात् । न च स्वसाध्येन विना-
5 भूतोऽर्थो गमकः अतिप्रसक्तेः, धर्मिसम्बन्धानपेक्षस्यापि गमकत्वे प्रत्यासत्तिविप्रकर्षाभावात् सर्वत्र प्रतिपत्तिहेतुर्विकल्पो भवेत्, यस्मात्परोक्षस्यार्थस्य प्रतिपत्तौ स्वसाध्येन धर्मिणा च सम्बद्धं प्रमाणं तदनुमानमेव तस्यैवंलक्षणत्वात्, तथा च प्रयोगः, यदप्रत्यक्षं प्रमाणं तदनुमानान्तर्भूतं यथोभयसम्मतलिङ्गबलभावि, अप्रत्यक्षप्रमाणञ्च शाब्दादिप्रमाणान्तरत्वेनाभ्युपगम्यमानमिति स्वभावहेतुः । यच यत्रान्तर्भूतं तस्य न ततो बहिर्भावः यथा प्रसिद्धान्तर्भावस्य कचित्
10 कस्यापि, अन्तर्भूतं चेदं सर्वं प्रत्यक्षादन्यत् प्रमाणमनुमान इति विरुद्धोपलब्धिः, अन्त-र्बहिर्भावयोः परस्परपरिहारस्थितिलक्षणतया विरोधादिति **सौगताः** ।

शाब्दोपमानार्थापत्त्यभावा अपि प्रमाणान्तराणि, प्रत्यक्षावगतप्रतिबद्धलिङ्गाप्रभवत्वा-दिति **मीमांसकाः**, तन्नेति **सौगताः**, शाब्दस्य त्रैरूप्यराहित्येन तादृग्विषयाभावादनुमानेऽन्त-र्भावासम्भवे शाब्दज्ञानस्य प्रामाण्यमेव न स्यात्, शब्दस्यार्थेन प्रतिबन्धाभावात्, न हि
15 शब्दोऽर्थस्य स्वभावः, अत्यन्तभेदात्, नापि कार्यं तेन विनापि भावात् । न च तादात्म्य-तदुत्पत्तिव्यतिरिक्तः सम्बन्धो गमकत्वनिबन्धनमस्ति । न च सङ्केतबलाद्वास्तवप्रतिपत्तियुक्तानां शब्दानामर्थप्रकाशकत्वं सम्भवति न च सङ्केतेन व्यवस्थितार्थप्रतिपादनयोग्यता शब्दस्याभिव्य-ज्यते, पुरुषेच्छावशादन्यत्रार्थे शब्दस्य सङ्केतादप्रवृत्तिप्रसक्तः, दृश्यते च पुरुषेच्छावशादन्यत्रापि विषये शब्दानां प्रवृत्तिः, ततो न बाह्यार्थे शब्दानां प्रामाण्यम्, प्रतिबन्धाभावात् । उपमा-
20 नमपि न प्रमाणमपूर्वार्थाधिगन्तृत्वाभावात्, तस्य हि सादृश्यविशिष्टो गौस्तद्विशिष्टं वा सादृश्यं विषयो भवता उक्तः, न हि सामान्यं तद्योगो वा वस्तु सम्भवति, तद्ग्राहकप्रमाणा-भावात्, सम्भवेऽपि परैस्तस्य प्रत्यक्षविषयत्वाभ्युपगमादुपमानस्य तद्गोचरत्वे गृहीतार्थग्रा-हित्वेन प्रामाण्यं न सम्भवत्येव । तथा येन प्रतिपत्त्रा गौरुपलब्धो न गवयः, न चातिदेश-वाक्यं गौरिव गवय इति श्रुतम् तस्याटव्यां पर्यटतो गवयदर्शने प्रथमे उपजाते परोक्षगवि
25 सादृश्यज्ञानं यदुत्पद्यते अनेन सदृशो गौरिति तदुपमानमिति भवद्भिरभ्युपगम्यते तत्स्मार्तं

१ शाब्दो हि नानुमानं त्रिरूपलिङ्गजन्यत्वाभावात्, न हि शब्द पक्षधर्मः, धर्मिणोऽयोगात्, नार्थो धर्मी तेन तस्य सम्बन्धासिद्धेः, अर्थस्य धर्मित्वेऽपि तत्सामान्यस्य यदि साध्यता तदा तस्य धर्मिज्ञानकाल एव सिद्धत्वाद्व्यर्थं तत्साधनम्, शब्दस्य धर्मित्वेऽर्थस्य साध्यत्वे शब्दस्य हेतुतायां प्रतिज्ञार्थैकदेशता स्यात्, शब्दत्वन्तु न गमकं, व्यभिचारात्, तदभावाच्च, अत एव न गवादिशब्दत्वमपि हेतुरिति न त्रिरूपहेतुः कश्चिदस्तीति भावः॥

ज्ञानं कथं प्रमाणान्तरं भवेत्, यदेतद्विषाणित्वादिसादृश्यं पिण्डेऽस्मिन्नुपलभ्यते यथा तद्गव्य-
प्युपलब्धमिति हि स्मरति ततश्च गवि अनेन पिण्डेन सदृशो गौरिति गवि विषाणित्वादि-
सादृश्यप्रतिसन्धानं जायत इति। तथा नैयायिकोक्तमप्युपमानं प्रमाणं न भवति, यथा गौः
तथा गवय इति वाक्याद्गोसदृशार्थसामान्यस्य गवयशब्दवाच्यताप्रतिपत्त्याऽनधिगतार्थगन्तृ-
त्वाभावात्, अन्यथा विसदृशमहिषाद्यर्थदर्शनादपि अयं स गवय इति संज्ञासंज्ञिसम्बन्ध- 5
प्रतिपत्तिः स्यात्। तस्माद्यथा कश्चिद् योऽङ्गदी छत्री कुण्डली स राजेति कुतश्चिदुपश्रुत्याङ्गदा-
दिमदर्थदर्शनादयं स राजेति प्रतिपद्यते, न चासौ प्रतीतिः प्रमाणम्, उपदेशवाक्यादेवाङ्गदा-
दिमतोऽर्थस्य राजशब्दवाच्यत्वेन प्रतिपन्नत्वात्तथेहापि यथा गौस्तथा गवय इत्यतिदेशवाक्या-
त्सम्बन्धमवगत्य गवयदर्शनात्संकेतानुस्मरणे सत्ययं स गवयशब्दवाच्योऽर्थ इति प्रतिपत्तेर-
प्रमाणमुपमानम्। अतिदेशवाक्यात्सम्बन्धप्रतिपत्तेरनभ्युपगमे पश्चादपि सा न स्यात्, अन्य- 10
निमित्ताभावात्, दृश्यते चातो गृहीतग्रहणान्नेदं प्रमाणम्। न च तदानीं सामान्यतः प्रतिप-
त्तावपि गवयदर्शनानन्तरं गवयविशेषं तच्छब्दवाच्यतया पूर्वमप्रतीतं प्रतिपद्यत इति न गृही-
तग्राहितेति वाच्यम्, सन्निहितगवयविशेषविषयस्य ज्ञानस्य प्रत्यक्षतयोपमानत्वानुपपत्तेः,
गवयदर्शनोत्तरकालभावि तु अयं स गवयशब्दवाच्योऽर्थ इति यज्ज्ञानं तत् प्रत्यक्षबलोत्पन्न-
त्वात्स्मृतिरेव न प्रमाणमिति। प्रत्यक्षादिप्रमाणप्रसिद्धोऽर्थो येन विना नोपपद्यते तस्यार्थस्य 15
प्रकल्पनमर्थापत्तिरिति हि भवद्भिरर्थापत्तेर्लक्षणमुच्यते तन्न युज्यते, अग्नेर्हि दाहकत्वेन
विनाऽग्नित्वं नोपपद्यत इति तदादाहकत्वं परिकल्प्यते यदि तयोः कश्चित्सम्बन्धो भवेत्,
असति चतत्र सत्यप्यग्नौ दाहकत्वस्याभावोऽसत्यपि च भाव इति कथं दाहकत्वमन्तरेण
वह्नेरभावसिद्धिरिति दाहकत्ववददाहकत्वमपि कल्पनीयं स्यात्। अतः सम्बन्धे निश्चिते सति
एकमविनाभूतं सम्बन्धिनमुपलभ्य द्वितीयस्य सम्बन्धिनः प्रकल्पना युक्तिमती, एवञ्चकल्पनेऽ 20
नुमानत्वमेव, सम्बन्धनिश्चयपूर्वकत्वादेकस्माद् द्वितीयपरिकल्पनस्य, कृतकत्वदर्शनपूर्वका-
नित्यत्वानुमानवत्। सम्बन्धश्चार्थापत्तिप्रवृत्तेः प्रागेव तयोः प्रतिपत्तव्यः, एवं ह्यर्थापत्त्युत्था-
पकस्यार्थस्यानन्यथाभावोऽर्थापत्तेराश्रयः सिद्धो भवेत्। न च प्रकल्प्यमानार्थानन्यथाभवनम-
र्थापत्त्युत्थापकस्यार्थस्यार्थापत्तिप्रवृत्तिकाल एव सिद्धमित्यनुमानादर्थापत्तेर्भेद इति वाच्यम्,
यदि हि प्रमाणान्तरात् प्रतिपन्नं तदन्यथाभवनमर्थापत्तेराश्रयस्तदाऽनुमानेऽन्तर्भावः, अथ न 25
सिद्धं तदा नार्थापत्तिप्रवृत्तिरतिप्रसङ्गात्। अभावोऽपि त्रिप्रकारो भवद्भिरुच्यते प्रमाणपञ्चका-
भावः, तदन्यज्ञानं ज्ञानविनिर्मुक्त आत्मा वेति, तत्र प्रथमो निरुपाख्यत्वान्न किञ्चिदिति
कथं प्रमेयाभावं परिच्छिन्द्यात्, परिच्छित्तेर्ज्ञानधर्मत्वात्। न च प्रमाणपञ्चकाभावो वस्त्व-
भावविषयज्ञानं प्रमाणं जनयन्नुपचारादभावाख्यं प्रमाणमुच्यत इति वाच्यम्, तस्यावस्तु-

त्वेनाभावज्ञानजनकत्वायोगात्, वस्त्वेव हि कार्यमुत्पादयति नावस्तु, सर्वसामर्थ्यविकलत्वात्, अन्यथा तस्यापि भावरूपताप्रसक्तिः। द्वितीयपक्षेऽपि यत्तदन्यज्ञानं प्रत्यक्षमेव तत् प्रमाणम्, पर्युदासवृत्त्या च तदेवाभावप्रमाणशब्दवाच्यतामनुभवति, तथाविधेन च तेन तदन्यभावलक्षणो भावः परिच्छिद्यत एव। यत्पुनरिह घटो नास्तीति ज्ञानं तत् प्रत्यक्षसामर्थ्यप्रभवत्वा-
5 त्स्मृतिरूपतामासादयन्न प्रमाणम्, तथा हि सकलत्रैलोक्यव्यावृत्तपदार्थसामर्थ्योद्भूततदाकारदर्शनानन्तरं विकल्पद्वयमिदमत्रास्ति, इदं नास्तीति दर्शनसामर्थ्यभावि तद्गृहीतमेवार्थमुल्लिखदुपजायते, तत्र दर्शनमेव भावाभावयोः प्रतिपादकत्वात् प्रमाणं न तु विधिप्रतिषेधविकल्पौ, गृहीतग्राहित्वात्, अन्यमात्रलक्षणस्य भावाभावस्याध्यक्षेणैव सिद्धत्वात्, व्यवहार एवान्योपलब्ध्यापि साध्यते, स्वयमेव वा नास्तीह घट इति विकल्पयति, न च तावता प्रमाणान्त-
10 रत्वम्, यथादृष्टस्यैव विकल्पनात्। सकलत्रैलोक्यव्यावृत्तस्वरूपस्याध्यक्षेण ग्रहणेऽपि य एव निराकर्तुमिष्टो घटादिकोऽर्थः स एव व्यवच्छिद्यत इति। तृतीयपक्षे त्वसम्भव एव, आत्मनोऽभावात्, भावेऽपि तस्य ज्ञानाभावे कथं वस्त्वभावावेदकत्वं, वेदनस्य ज्ञानधर्मत्वात्, ज्ञानविनिर्मुक्तात्मनि च तस्याभावात्, तस्मात् प्रमाणपञ्चकाभावो ज्ञानविनिर्मुक्तात्मलक्षणश्चाभावः प्रमाणं न भवति, तदन्यज्ञानलक्षणश्चाभावः प्रत्यक्षमेवेति न प्रमाणान्तरमभावः,
15 तस्मात् प्रत्यक्षानुमाने द्वे एव प्रमाणे इति सौगतमतम्। अत्रोच्यते, त्रिलक्षणयोगिलिङ्गं नानुमापकम्, त्रिलक्षणे हेताववश्यन्तयाऽविनाभावसद्भावे नियमाभावात्, तत्पुत्रत्वादेस्त्रैलक्षण्येऽपि गमकत्वादर्शनात्। न वा यत्राविनाभावित्वं तत्र त्रैलक्षण्यमवश्यम्भावीति नियमः, सर्वमनेकान्तात्मकं क्षणिकं वा सत्त्वादिति साधयतः क्वचिदन्वयाभावेऽपि सत्त्वस्यानेकान्तात्मकत्वेन क्षणिकत्वेन वा विनाऽनुपपत्त्या गमकत्वदर्शनात्। तथा परिणामी ध्वनिः क्षणिको
20 वा श्रावणत्वादित्यत्रापि न क्वचिदन्वयसद्भावः, न चानित्यत्वमन्तरेण श्रावणत्वं सम्भवति नित्यस्य श्रावणज्ञानजनकत्वासम्भवात्, यस्मिन् सत्येव यद्भवति यदभावे च न भवत्येव कथं न तत्तस्य गमकं भवेत्। तथा सर्वोऽपि धूमोऽग्निमन्तरेण न कदाचित्प्रभवतीति व्याप्तिसाधने नान्वयः सम्भवति, तदसिद्धौ च कुतोऽभिमतप्रदेशे धूमादग्निनिश्चयोऽतस्त्रिलक्षणपरिकल्पनायां व्याप्तिनिश्चयस्य सर्वत्रासम्भवात् कार्यस्वभावहेतुद्वयस्यापि गमकत्वं न स्यात्।
25 तथा नास्तीह घट उपलब्धिप्राप्तस्यानुपलब्धेरित्यत्रापि दृष्टान्ताभावान्नान्वयः सिद्धः, शशशृङ्गादिदृष्टान्तस्वीकारे तत्रापि व्याप्तिनिश्चयाय दृष्टान्तान्तरकल्पनायामनवस्थाप्रसक्तेः। न च

१ यद्यस्य विपक्षेऽपि वर्त्तते न तत्तस्य लक्षणम्, यथा सत्त्वं वह्नेः, हेत्वाभासे च विपक्षे वर्त्तते रूपत्रयम्, तस्मान्न हेतोस्तल्लक्षणम्। न चान्यथाऽनुपपत्तिमन्तरेण त्रैरूप्यं हेतुलक्षणं न तु त्रैरूप्यमात्र तच्च हेत्वाभासे न सम्भवतीति वाच्यम्, त्रैरूप्यकल्पनावैयर्थ्यात्, अन्यथानुपपत्तिनियमादेव गमकत्वोपपत्तेरिति भावः॥

शशशृङ्गादावनुपलम्भात् प्रवर्त्तिताभावव्यवहारोऽपि मूढः, अनुपलभ्यमानेऽपि प्रदेशविशेषे घ-
टादौ यस्तं व्यवहारं न प्रवर्त्तयति स निमित्तदर्शनात्तत्र प्रवर्त्त्यत इति भवत्येव शशशृङ्गादिरभा-
वव्यवहारे साध्येऽनवस्थादोषविकलो दृष्टान्तः, तत्रानुपलम्भेनाभावव्यवहारस्य प्रवृत्तासद्व्य-
वहारशशशृङ्गादिदृष्टान्तबलात् प्रसाधनात्, प्रदेशविशेषे घटाभावस्य स्वध्यक्षसिद्धत्वादिति
वाच्यं, घटाभावसिद्धिर्हि घटाभावनिर्णयः, तस्य सिद्धत्वेऽभावव्यवहारोऽपि सिद्धः, अभाव- 5
निर्णयाभावेऽभावव्यवहारायोगात् । न च विशेषप्रदेशे घटाभावं निश्चिन्वानोऽपि तच्छब्दा-
दिकं कश्चिन्न प्रवर्त्तयेदित्यनुपलम्भेन प्रवर्त्त्यत इति वाच्यम्, एवं हि भावं निश्चिन्वानोऽपि
कश्चिच्छब्दं नोच्चारयेदिति तत्प्रवर्त्तनाय हेत्वन्तरं मृग्यं स्यात्, ततो घटादावप्यभावस्य
साधनीय दृष्टान्तान्वेषणे तत्राप्यभावो यदि दृष्टान्तान्तरात् सिद्धः तदा सैवानवस्था । अथ तत्र
साध्याविनाभूतादनुपलम्भादेर्लिङ्गाद् दृष्टान्तान्तरमन्तरेणाप्यभावनिर्णयः शब्दादिव्यवहारस्य 10
च प्रवृत्तिः तर्ह्यनुपलब्धान्वयमन्तरेणापि गमकत्वमविनाभावमात्रात् कथं नाभ्युपगतं
भवेत्। एतेन व्यतिरेकस्यान्वयेन विनाभावादगमकाङ्गतेत्यपास्तम् । ननु साध्याभावे सर्वत्र सा-
धनाभावो व्यतिरेकः, साधनसद्भावेऽपि साध्यसद्भावाभावे व्यतिरेक एव न भवेत्, साधना-
भावेन साध्याभावस्याव्याप्तत्वात्, य एव च साध्यसद्भाव एव साधनसद्भावः स एवान्वयः,
स च दृष्टान्तधर्मिणमन्तरेणापि साध्यधर्मिण्यपि विपर्यये बाधकप्रमाणबलान्निश्चीयमानः 15
कथमसन्, न चैवं सति पक्षत्वेनेच्छाव्यवस्थितलक्षणेन तत्र पारमार्थिकस्य सपक्षत्वस्य
बाधा, अन्यथा साध्यधर्मिण्येव हेतुरविद्यमानसाध्यधर्मे वर्त्तमानो विरुद्धः स्यादिति, तत्र
तद्युक्त एव वर्त्तमानः कथं न सपक्षवृत्तिरिति यत्र व्यतिरेकसद्भावस्तत्रावश्यमन्वयः
यत्रासौ तत्र चावश्यम्भावी व्यतिरेक इति नैकसद्भावे द्वितीयस्याभाव इति चेन्नन्वेमपि
जाता समुद्रवृद्धिः शशाङ्कोदयादित्यादिप्रयोगेषु हेतोः पक्षधर्मत्वाभावेऽपि गमकत्वोपलब्धेर्न 20
पक्षधर्मत्वं तल्लक्षणम्[1], न च कालस्य देशस्य वा पक्षता, लोकस्य साध्यान्यथानुपपन्न-
हेतुप्रदर्शनमात्रादेव पक्षधर्मत्वाद्यनुस्मरणमन्तरेणापि साध्यप्रतिपत्तिदर्शनात्त्रैलक्षण्यस्य तत्र
सतोऽप्यकिञ्चित्करत्वात् । न च सौगताभ्युपगमेन पक्षधर्मता हेतोः सम्भवति सामान्यस्या-
वस्तुतयाऽभ्युपगतस्य हेतुत्वे शशशृङ्गादेरिव पक्षधर्मताऽसम्भवात्, स्वलक्षणस्य च हेतुत्वे

---

१ शकटोदयाद्यनुमाने कृत्तिकोदये पक्षधर्मता सम्भवति, न च कालाकाशादि धर्मी भविष्यच्छकटोदयादिमत्, कृत्तिकोदयादिमत्त्वादिति प्रयोगेण पक्षधर्मता विद्यत इति वाच्यम्, तथा सत्यपक्षधर्महेतोरप्रसिद्धेः, न च प्रासादधावल्ये साध्ये काकस्य कार्ष्ण्यं हेतुरपक्षधर्म इति वाच्यम्, जगतः पक्षत्वसम्भवात्, लोकविरोधस्तुल्य उभयत्र, तन्न पक्षधर्मता गमकत्वाङ्गम्, अनित्यः शब्दः श्रावणत्वादित्यादौ सपक्षसत्त्वाभावेऽपि गमकत्वात्तदपि नाङ्गम्, नापि विपक्षेऽसत्त्वं तदङ्गम्, तत्पुत्रत्वस्यापि गमकत्वप्रसङ्गात्, किन्तु सर्वत्रान्तर्व्याप्तिरेव गमकताङ्गमिति तत्सद्भावे किं त्रैलक्षण्यादिनेति भावः ॥

पक्ष एव हेतुरिति नैतद्धर्मो हेतुः, अभेदे धर्मधर्मिभावस्यानुपपत्तेः स्वलक्षणस्यान्यत्राननुगमाच्चान्वयसिद्धिः, अतद्रूपपरावृत्तस्य तस्य हेतुत्वेऽपि स्वलक्षणपक्षभावी दोषस्तदवस्थ एव, अतद्रूपपरावृत्तेः स्वलक्षणादव्यतिरेकात्, व्यतिरेके अनुगतत्वे पारमार्थिकत्वे च सामान्यस्य भङ्ग्यन्तरेण हेतुत्वमभ्युपगतं भवेत्, कल्पनाविरचितस्य हेतुत्वे कुतः पक्ष-
5 धर्मता, कल्पनायाः परमार्थतो वस्त्वसंस्पर्शात् । न च परपक्षे पक्षधर्मत्वं सम्भवति, पक्षलक्षणस्यैवासम्भवात्, न च जिज्ञासितविशेषो धर्मी पक्ष इति तल्लक्षणमस्तीति वाच्यम्, शब्देऽनित्यत्वं हि न वादी जिज्ञासितुमर्हति, स्वनिश्चयवदन्येषां निश्चयोत्पादनाय तेन साधनप्रयोगात् । नापि प्रतिवादी, प्रतिपक्षसाधनाय वाऽनुक्तसाधनप्रतिघाताय च तस्य प्रवृत्तेः, नापि प्राश्निकाः, तेषां विदितवेद्यतया तत्र जिज्ञासाऽसम्भवात् । तस्माद्यदन्तरेण
10 यन्नोपपद्यते तत्साधनमितरच्च साध्यमित्येतावदेव पक्षादिलक्षणमनवद्यम् । एवमेव प्रतिपिपादयिषितविशेषो धर्मीत्यादिलक्षणं निरस्तं वेदितव्यम्, तदेवं त्रैलक्षण्यस्यासम्भवात्, सम्भवेऽपि सति साध्याविनाभावित्वमात्रेणैव हेतोर्गमकत्वान्न किञ्चित् पक्षधर्मत्वादिना रूपान्तरेण । तथाहि न क्वचित् धूमसत्ताऽग्निं विना भाविनीति सिद्धमविनाभावित्वम्, तत्सिद्धौ च सत्यपि पक्षधर्मोद्विवचने तथैव गमकत्वम्, न हि वास्तवं रूपं साध्यावि-
15 नाभावित्वलक्षणं हेतोरुपलभ्यमानं पक्षधर्मत्वादिवचनेऽवचने वा स्वसाध्यं न साधयति, न हि वस्तुबलायातां स्वसाध्यप्रतिपादनशक्तिं लिङ्गं पक्षधर्मत्वादिवचनादवचनाद्वा मुञ्चति, वस्तुशक्तीनां वचनादव्यावृत्तेः । अथ त्रैलक्षण्यमपि हेतोः सम्भवति तदपि लक्षणत्वेन प्रकल्प्यते, सत्यं सम्भवति, किन्तु अविनाभावित्वेनैव हेतोः गमकत्वं सिद्धं न किञ्चित्तल्लक्षणवचनेन, यद्रूपानुवादेन हि हेतोः स्वरूपं लक्ष्यते तदेव लक्षणत्वेनानुवदितव्यमित्यविनाभावित्वरूपा-
20 नुवादमात्रेण हेतुलक्षणपरिसमाप्तेर्न पक्षधर्मत्वादि विधेयमनुवदितव्यं वा लक्षणत्वेन । सम्भवमात्रेणाभिधानेऽबाधितविषयत्वमपि तादृग्विधे हेतौ सम्भवतीति लक्षणान्तरत्वेन वचनीयं स्यात् । न चाविनाभावित्वं सदपि पक्षधर्मत्वाद्यभावेऽगमकमिति वाच्यम्, व्याहतत्वात्, अविनाभावित्वं हि स्वसाध्येन विना तस्यासम्भव उच्यते, अगमकत्वन्तु विनापि साध्यं सम्भवस्तस्यैवेति परस्परं व्याहतिः । एवञ्च धर्ममात्रवचनेऽपि साधारस्यैवाविना-
25 भावित्वं यथा कृतकत्वमनित्यत्वमन्तरेणानुपपद्यमानं कृतकत्ववत्स्वेव भावेषु व्यवतिष्ठते, न ह्यन्यत्र तत्कृतकत्वं नाप्यविनाभावीति कृतकत्वस्याविनाभावित्वमाक्षिप्तधर्मिस्वरूपमेवेति सामर्थ्यसिद्धम् । तेन नावश्यं तत्सत्त्वं वचनेन विधातव्यं धर्मोपरक्तधर्मिणि पृथक् पक्षधर्मत्ववचनमन्तरेणाप्यन्यथानुपपन्नत्वं कृतकस्यार्थस्य स्वरूपं जानानस्तदुपलभमान एव तदविनाभाविनमपरं स्वभावं झगिति अवगच्छति, यतो नानेन पूर्वमन्यथानुपपत्तिरूपनिश्चय-

समयेऽन्यत्र व्यवस्थितो धूमोऽन्यत्र व्यवस्थितेन वह्निना विनाऽनुपपन्न इत्यविनाभावः प्रतीतः, नापि तयोस्तथाविधः प्रतिबन्धः, न च प्रदेशव्यवस्थितं धूममुपलभमानोऽवश्यं यत्र यत्र धूमस्तत्राग्निरिति तथा चेह धूम इति परामृश्याग्निमानिति प्रत्येति, किन्तु परिज्ञाताविनाभावो धूमदर्शनानन्तरं प्रदेशेऽग्निरत्रेति प्राक्तनानुभवदाढर्यात्स्मरति, असत्यत्र वह्नौ धूम एव न स्यादिति लिङ्गलक्षणाविनाभावानुस्मरणं प्रकृतस्मरणस्य तथाभावमन्तरेणाभाव इति प्रदर्शनार्थम् । अथात्राप्यन्यथानुपपन्नं स्वरूपं हेतोः क्वचिदनेन निश्चतव्यम्, यत्र च तन्निश्चीयते स सपक्षः, पुनस्तथाविधरूपवेदिनां यत्रासौ हेतुस्तत्रैव ततो हेतोस्तदन्यप्रतिपत्तिरिति पक्षधर्मान्वयव्यतिरेकबलादेव हेतुर्गमक इति, तन्न, यतोऽविनाभावित्वरूपेणैव सपक्षे सत्त्वमत्राक्षिप्तमिति न रूपान्तरम् । तथा हि अविनाभावित्वं रूपं ज्ञातं सद्गमकमिति तत्क्वचिज्ज्ञातव्यं तेन तद्रूपपरिज्ञानोपायत्वात् तद्रूपं सदविनाभावित्वमेवैकं हेतोरूपं विधीयमानं स्वात्मन्यन्तर्भावयति । ज्ञेयसत्ताया ज्ञानसत्तानिबंधनत्वात् ज्ञानं यथा न पृथग्रूपं तथा क्वचित्सपक्षे सत्त्वमप्यपश्यतस्तदविनाभाविरूपग्रहणाभाव इति तदेवैकं रूपं विधीयमानमन्यत्सर्वमाक्षिपतीति न तस्माद्धेतोरन्यद्रूपं युक्तम । अथ तैर्विना तदेवैकं रूपं हेतोर्न ज्ञायत इति रूपान्तरं कल्प्यते तर्हि न केवलं सपक्षे सत्त्वं विना तद्रूप न ज्ञायते किन्तु बुद्धीन्द्रियादिकमपि विना तन्न ज्ञायत इति तेषामपि तद्रूपताप्रसक्तिः । अत एव अपक्षधर्मस्यापि गमकत्वे चाक्षुषत्वमपि शब्दे नित्यत्वस्य गमकं स्यादिति परोक्तमपास्तम्, यतश्चाक्षुषत्वमनित्यत्वाविनाभावि शब्दश्चाक्षुषो न भवतीति कुतोऽत्र दोषावकाशः । यदपि यदि धूमोऽग्न्यविनाभावित्वमात्रादग्निं गमयेत् महाम्बुराशौ किं न गमयेत् इति तदपि न युक्तम्, यतो नान्यदेशो धूमोऽम्भोनिधिपावकाविनाभावी सिद्धः, तद्देशसाध्याविनाभावित्वात्तस्य । अत एव यद्यप्यन्यदेशस्थो हेतुर्नान्यदेशस्थसाध्याविनाभावी, तथाप्यपक्षधर्मोऽसौ गमको न भवतीत्यस्यार्थस्य ज्ञापनार्थं पृथक् पक्षधर्मत्ववचनं लक्षणे विधेयमिति न वक्तव्यम्, साध्यान्यथानुपपन्नत्वैकरूपप्रतिपत्तेरेव तदर्थस्य लब्धत्वात् । एवं स्वभावकार्यानुपलम्भकल्पनामन्तरेणाप्यन्यथानुपपत्तिमात्राद्धेतोर्गमकत्वोपपत्तेर्नाविनाभावस्त्रिसंख्येन हेतुना व्याप्तः, तथाहि वृक्षाच्छायानुमानं लोके प्रसिद्धम् । न च वृक्षस्तच्छायाकार्यं सहभावित्वात्, नापि स्वभावः, स्वभावभेदोपलब्धेः । एवं तुलादेर्नमनादुन्नामाद्यनुमानं चिन्तितम्, परभागवानिन्दुः, अर्वाग्भागवत्त्वाद्घटादिवदित्यत्रापि न तादात्म्यं तदुत्पत्तिर्वा, पराभ्युपगमेन सम्भवति,

१ ननु अन्यथानुपपत्तिरविनाभाव इत्यत्र किं निमित्तं, उच्यते तादात्म्यतदुत्पत्तिरूपम्, स्वाभावहेतोर्हि तादात्म्यं स्वसाध्याविनाभावे निबन्धनम्, यो भावो यदात्मा स कथं तदुत्सृजति, कार्यहेतोस्तु तदुत्पत्तिस्तत्र निबन्धनम्, कारणाधीनात्मलाभमेव हि कार्यम, तत्कथं तदन्तरेण क्वापि स्यात्, न चाभ्यामन्यो हेतुरस्ति, अनुपलब्धेः स्वभावहेतावनुप्रवेशादिति बौद्धाः ॥

ऊर्ध्वभागवतामधोभागवताञ्च परमाणूनां स्वभावभेदात्, सहभावाच्च एकसामग्र्यधीनताप्रति-
बन्धकल्पनायां रूपादे रसादेरिवानुमानं कारणात् कार्यानुमानं प्रसक्तम्, समानकालभावि-
नो हि रूपादेर्यद्रसतोऽनुमानं तत्कारणाद्रूपजनकादनुमितादनुमानम् । न च समानकालभावि
रूपजनकत्वानुमानं रसहेतोरेतदिति हेतुधर्मानुमानम्, कारणात्कार्यानुमानेऽप्येवं दोषाभावात् ।
5 न चात्रैवं लोकप्रतीत्यभावदोषः, हेतुधर्मानुमानेऽपि लोकप्रतीतेरभावात् । तथाविधरसोपल-
म्भाद्धि तत्समानकालं तथाविधं रूपं अर्वाग्भागदर्शनाच्च परभागं लोकः प्रतिपद्यते न
पुनर्विशिष्टं कारणम् । अथाप्रतिबद्धादेकतोऽन्यप्रतिपत्तावतिप्रसङ्गः, न, अविनाभूता-
दन्यतोऽन्यप्रतिपत्त्यभ्युपगमात् । अथ प्रतिबन्धमन्तरेणान्यस्याविनाभाव एव कुतः, ननु
प्रतिबन्धोऽप्यपरप्रतिबन्धमन्तरेण कुतः, अथ प्रतिबन्धोऽपि न वास्तवः प्रतिबद्धयोरन्यः,
10 किन्तु कारणानन्तरमपरस्य कार्याभिमतस्य भावो वस्तुस्वरूपमेव, तच्च पूर्वोत्तरवस्तुस्वरूपग्रा-
हिप्रत्यक्षानुपलम्भाभ्यां निश्चीयते, तन्निश्चयनमेव कार्यकारणभावप्रतिबन्धनिश्चयनम्, न, एवं
प्रत्यक्षानुपलम्भाभ्यामन्येनान्यस्याविनाभावित्वनिश्चयेऽपि न दोषः । अथैकदा अन्येनान्यस्या-
विनाभावित्वदर्शनेऽपि सर्वदा सर्वत्रानयोरेवमेव भाव इति न दर्शनादर्शनाभ्यां निश्चेतुं
शक्यम्, प्रतिबन्धग्रहणे तु नायं दोषः, कर्पूरोर्णादीन्धनस्वभावानुकारिधूमस्वरूपग्राहिणा
15 विशिष्टाध्यक्षेण सकृदपि प्रवृत्तेनाग्निधूमयोः कार्यकारणभावनिश्चयात् सर्वदाऽनग्नि व्या-
वृत्ताग्निजन्योऽधूमव्यावृत्तो धूम इति निश्चीयते, अन्यथाऽन्यदैकदाऽप्यग्नेर्धूमस्योत्पादो
न भवेत्, अहेतोः सकृदप्यभावात्, भावे वा निर्हेतुकताप्रसक्तेः नैवम्, परपक्षे कार्यधर्मा-
नुवृत्तेरेवायोगात् । एकदेशेन कार्यधर्मानुवृत्तौ कार्यस्य कारणरूपतापत्तेः कार्यकारणभावाभा-
वप्रसङ्गात् । किञ्च सर्वत्र सर्वदा अग्निजन्यो धूम इति न प्रत्यक्षमनुपलम्भसहायमपीयतो
20 व्यापारान् कर्तुं समर्थम्, सन्निहितविषयबलोत्पत्तेरविचारकत्वाच्च, तत्पृष्ठभाविनोऽपि विक-
ल्पस्य नात्रार्थे सामर्थ्यम्, तदर्थविषयतया तस्य गृहीतग्राहित्वेनाप्रामाण्याभ्युपगमात् ।
अनुमानमपि नैवं प्रतिबन्धग्राहकम्, अनवस्थेतरेतराश्रयदोषप्रसक्तेः । न च भवत्पक्षेऽप्य-

---

१ बौद्धानां मते कार्ये हेतौ व्याप्तिप्रतिपत्तिः प्रत्यक्षानुपलम्भपञ्चकाज्जायते, परिदृश्यमानेष्वग्निधूमव्यतिरि-
क्तेषु भूतलादिषु प्रथमं धूमस्यानुपलम्भ एकः, ततोऽग्नेरुपलम्भः पश्चाद्धूमस्येत्युपलम्भद्वयम्, ततोऽग्ने-
रनुपलम्भोऽनन्तरं धूमस्यापीति द्वावनुपलम्भौ । अनुपलम्भोऽपि प्रत्यक्षविशेष एव । एवं पञ्चकेनैकस्यामपि
व्यक्तौ कार्यकारणभावावगमो भवत्यग्ने कार्यं धूम इति । स्वभावहेतौ तत्प्रतिपत्तिश्च विपक्षे बाधकानुमाना-
दिति, तदयुक्तं, प्रत्यक्षं सन्निहितमात्रविषयतयाऽविचारकतया च यावान् कश्चिद्धूमः स सर्वो देशान्तरे
कालान्तरेऽग्निजन्मा, अन्यजन्मा वा न भवतीत्येतावतो व्यापारान् कर्तुमसमर्थमिति कथं व्याप्तिस्तद्विषयः
स्यात्, प्रत्यक्षगृहीतमात्राध्यवसायितत्पृष्ठभाविविकल्पोऽपि न सर्वोपसंहारेण व्याप्तिग्राहक इति भावः ॥

विनाभावित्वग्रहणे हेतोरयं समानो दोषः, यतोऽन्यथाऽनुपपन्नैकलक्षणो हेतुरित्यस्माकं हेतुलक्षणम्, अन्यथानुपपन्नत्वञ्च तादात्म्यतदुत्पत्त्योः पूर्ववच्छेषवत्सामान्यतोदृष्टमित्येतेषाञ्च तथैकार्थसमवायिसंयोगिसमवायीत्यादीनाञ्च तथा वीतमवीतं वीतावीतं चेत्यादीनाञ्च सर्वहेतूनां व्यापकम्, सति गमकत्वे सर्वेषामप्यन्येषां साध्याविनाभावित्वात्, तद्विकलानाञ्च गमकत्वायोगात्. तस्य च ग्राहकमूहः प्रत्यक्षानुपलम्भप्रभवः, तच्चाविसंवादकत्वादनक्षजत्वालिङ्गजत्वाच्च स्वार्थाध्यवसायरूपं मतिनिबन्धनमस्माकं प्रमाणान्तरम्, परैरपि प्रमाणान्तरत्वेनावश्यमभ्युपगन्तव्यमन्यथा व्याप्तिग्राहकप्रमाणाभावतोऽनुमानस्याप्यप्रवृत्तिप्रसक्तेः, एवञ्च प्रत्यक्षमनुमानं चेति द्वे एव प्रमाणे इति न वक्तव्यम् प्रमाणान्तरस्यापि सत्त्वात्, शब्दस्य चाप्तप्रणीतत्वेन सामान्यविशेषात्मकबाह्यार्थविषयस्य प्रमाणान्तरत्वात् । अर्थापत्तेश्च प्रमाणत्वेनानुमानेऽन्तर्भावनं सिद्धसाधनमेव, अभावस्य च पृथगप्रामाण्यप्रतिपादनमस्मकमभीष्टमेव, सदसदात्मकवस्तुतत्त्वग्राहिणाऽध्यक्षेण यथाक्षयोपशमं भावांशवदभावांशस्यापि ग्रहणात् । केवलं कचिदुपसर्जनीकृतसदंशस्य प्रधाननयाऽसदंशस्य ग्रहणं कचिच्च वैपरीत्येन, न च सदंशासदंशयोरेकान्तेन भेदोऽभेदो वा, उभयात्मकतया जात्यन्तररूपस्य वस्तुनो विरोधादिदोषविकलस्य सद्भावात् । उपमानादेरप्यविसंवादकस्य प्रमाणत्वे सर्वस्य परोक्षेऽन्तर्भावात्, अन्यसंख्याव्युदासेन प्रत्यक्षं परोक्षञ्चेति द्वे एव प्रमाणे अभ्युपगन्तव्ये, अन्यथा तत्संख्यानवस्थितेः । अविशदमविसंवादञ्च ज्ञानं परोक्षम् ।

अत्र मतिश्रुतावधिमनःपर्यायकेवलज्ञानानां मध्ये मतिश्रुते मुख्यतः परोक्षं प्रमाणमवधिमनःपर्यायकेवलानि तु प्रत्यक्षं प्रमाणम्, मते. परोक्षप्रमाणता च मुख्यया वृत्त्या, सव्यवहारतस्तु विशदरूपस्य मतिभेदस्य प्रत्यक्षताभ्युपगतैवेति दिक् ॥ ५५ ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानंदसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य प्रमाणसंख्यानिर्णयात्मकं नाम सप्तविंशं सोपानम् ॥



## अथ सर्वज्ञोपयोगविचारः ।

सामान्यविशेषात्मके प्रमाणप्रमेयरूपे वस्तुतत्त्वे व्यवस्थिते द्रव्यास्तिकस्यालोचनमात्रं विशेषाकारत्यागिदर्शनं यत्तत्सत्यमितरस्य तु विशेषाकारं सामान्याकाररहितं यज्ज्ञानं तदेव पारमार्थिकमभिप्रेतम्, प्रत्येकमेषोऽर्थपर्याय इति वचनात्, प्रमाणन्तु द्रव्यपर्यायौ दर्शनज्ञानस्वरूपावन्योऽन्याविनिर्भागवर्त्तिनाविति दर्शयन्नाह—

**दव्वट्ठिओ वि होऊण दंसणे पज्जवट्ठिओ होइ ।**
**उवसमियाईभावं पडुच्च णाणे उ विवरीयं ॥ ५६ ॥**

द्रव्यास्तिकोऽपि भूत्वा दर्शने पर्यायास्तिको भवति ।
औपशमिकादिभावं प्रतीत्य ज्ञाने तु विपरीतम् ॥ छाया ॥

5 **द्रव्यास्तिक इति,** द्रव्यार्थरूप आत्मा चेतनालोकमात्रस्वभावो भूत्वा तदैव विशेषाकारोऽपि भवति, यदा हि विशेषरूपतयाऽऽत्मा सम्पद्यते तदा सामान्यस्वभावमपरित्यजन्नेव, विशेषाकारश्च विशेषावगमस्वभावं ज्ञानं, दर्शने सामान्यालोचने प्रवृत्तोऽप्युपात्तज्ञानाकारः, न हि विशिष्टेन रूपेण विना सामान्यं सम्भवति, तथा च औपशमिकक्षायिकक्षायोपशमिकादीन् भावानपेक्ष्य विशेषरूपत्वेन ज्ञानस्वभावाद्वैपरीत्यं सामान्यरूपतां प्रतिपद्यते, विशेष-
10 रूपः सन् स एव सामान्यरूपोऽपि भवति, न ह्यस्ति सामान्यं विशेषविकलं वस्तुत्वात्, शिवकादिविकलमृत्त्ववत् । विशेषा वा सामान्यविकला न सन्ति, विशेषत्वात्, मृत्त्वरहितशिवकादिवदिति ॥ ५६ ॥

अत्र च सामान्यविशेषात्मके प्रमेयवस्तुनि तद्ग्राहिप्रमाणमपि दर्शनज्ञानरूपं तथापि छद्मस्थोपयोगस्वाभाव्यात् कदाचिज्ज्ञानोपसर्जनो दर्शनोपयोगः कदाचित्तु दर्शनोपसर्जनो
15 ज्ञानोपयोग इति क्रमेण ज्ञानदर्शनोपयोगौ,क्षायिके तु ज्ञानदर्शने युगपद्वर्त्तिनी इति दर्शयन्नाह—

**मणपज्जवणाणंतो णाणस्स य दरिसणस्स य विसेसो ।**
**केवलणाणं पुण दंसणं ति णाणं ति य समाणं ॥ ५७ ॥**

मन पर्ययज्ञानान्तो ज्ञानस्य च दर्शनस्य च विश्लेषः ।
केवलज्ञानं पुनर्दर्शनमिति ज्ञानमिति च समानम् ॥ छाया ॥

20 **मन इति,** ज्ञानस्य दर्शनस्य च विश्लेषः पृथग्भावो मनःपर्यवज्ञानान्तः, मत्यादिषु चतुर्षु ज्ञानदर्शनोपयोगौ क्रमेण भवत इत्यर्थः । तथाहि चक्षुरचक्षुरवधिज्ञानानि चक्षुरचक्षुरवधिदर्शनेभ्यः पृथक्कालानि, छद्मस्थोपयोगात्मकज्ञानत्वात्, श्रुतमनःपर्यायज्ञानवत्, वाक्यार्थविशेषविषयं श्रुतज्ञानं मनोद्रव्यविशेषालम्बनञ्च मनःपर्यायज्ञानमेतद्द्वयमपि अदर्शनस्वभावं मत्यवधिज्ञानदर्शनोपयोगाद्भिन्नकालञ्च सिद्धम् । केवलाख्यो बोधस्तु दर्शनमिति च
25 ज्ञानमिति च समानं समानकालं द्वयमपि युगपदेवेत्यर्थः । एककालौ हि केवलिगतज्ञानदर्शनोपयोगौ, तथाभूतप्रतिहताविर्भूततत्स्वभावत्वात्, तथाभूतादित्यप्रकाशतापाविव, यदैव केवली जानाति तदैव पश्यतीति सूरेरभिप्रायः ॥ ५७ ॥

१ क्रमोपयोगवादिनो जिनभद्रगणिक्षमाश्रमणपूज्यपादाः, युगपदुपयोगवादिनो मल्लवादिप्रमुखयः, यदैव केवलज्ञानं तदैव केवलदर्शनमिति सिद्धसेनदिवाकरा ॥ २ युगपदाविर्भूतस्वभावत्वादिति भाव. ॥

अथज्ञागमविरोधीति केषाञ्चिन्मतमुपदर्शयन्नाह—

केई भणंति 'जइया जाणइ तइया ण पासइ जिणो' त्ति।
सुत्तमवलंबमाणा तित्थयरासायणाऽभीरू ॥ ५८ ॥

केचिद्भणन्ति 'यदा जानाति तदा न पश्यति जिन' इति ।
सूत्रमवलम्बमानास्तीर्थकराशातनाऽभीरवः ॥ छाया ॥ 5

केचिदिति, केचित् यदा जानाति तदा न पश्यति जिन इति सूत्रमवलम्बमाना ब्रुवते, तथाहि 'केवली णं भंते ! इमं रयणप्पभं पुढविं आयारेहिं पमाणेहिं हेऊहिं संठाणेहिं परिवारेहिं जं समयं जाणइ नो तं समयं पासइ ! हंता गोयमा ! केवलीणं' इत्यादिप्रज्ञापनासूत्रम्, अस्यार्थः—केवली सम्पूर्णबोधः णं इति प्रश्नोऽभ्युपगमसूचकः, भंते इति भगवन् ! इमां रत्नप्रभामन्वर्थाभिधानां पृथ्वीमाकारैः समनिम्नोन्नताभिः प्रमाणैर्दैर्घ्यादिभिः 10 हेतुभिरनन्तानन्तप्रदेशिकैः स्कन्धैः संस्थानैः परिमण्डलादिभिः परिवारैर्घनोदधिवलयादिभिः, यं समयं इति कालाध्वनोरत्यन्तसंयोगे द्वितीया, यदा जानाति न तदा पश्यति, विशेषोपयोगः सामान्योपयोगान्तरितः, सामान्योपयोगश्च विशेषोपयोगान्तरितः तत्स्वाभाव्यादिति प्रश्नार्थः उत्तरन्तु हंता गोयमा ! इत्यादिकं प्रश्नानुमोदकं, हंता इत्यभिमतस्यामंत्रणम्, गौतम इति गोत्रामंत्रणम्, प्रश्नानुमोदार्थं, पुनस्तदेव सूत्रमुच्चारणीयम्, हेतुप्रश्नस्य चात्रसूत्रे उत्तरम् 15 'साकारे से णाणे अणागारे दंसणे' साकारं विशेषावलम्बि अस्य केवलिनो ज्ञानं भवति अनाकारमतिक्रान्तविशेषं सामान्यालम्बिदर्शनम् । न चानेकप्रत्ययोत्पत्तिरेकदा निरावरणस्यापि, तत्स्वाभाव्यात्, न हि चक्षुर्ज्ञानकाले श्रोत्रज्ञानोत्पत्तिरुपलभ्यते । न चावृतत्वात्तदा तदनुत्पत्तिः स्वसमयेऽप्यनुत्पत्तिप्रसङ्गात् ततो युगपदनेकप्रत्ययानुत्पत्तौ स्वभाव एव कारणं नावरणसद्भावः। सन्निहितेऽपि च द्व्यात्मके विषये विशेषांशमेव गृह्णन् केवली तत्रैव 20 सामर्थ्यात् सर्वज्ञ इति व्यपदिश्यते सर्वविशेषज्ञत्वात्सर्वसामान्यदर्शित्वात्तु सर्वदर्शी । यच्चैवं व्याख्यायामकिञ्चिज्ज्ञत्वं केवलिनो ह्योढदानञ्चेति दूषणं तन्न, यतो यदि तत् केवलं ज्ञानमेव भवेत् दर्शनमेव वा ततः स्यादकिञ्चिज्ज्ञता न चैवम्, आलदानमपि न सम्भवति यं समयमित्याद्युक्तव्याख्याया सम्प्रदायाविच्छेदतोऽपव्याख्यानत्वायोगात् न च दुःसम्प्रदायोऽयम्, तदन्यव्याख्यातृणामविसंवादात् 'जं समयं च णं समणे भगवं महावीरे' इत्या- 25 दावप्यागमेऽसकृदुच्चार्यमाणस्यास्य शब्दस्यैतदर्थत्वेन सिद्धत्वात्। ततो दुर्व्याख्यैषा यैः समकं यत्समकमिति भवतैव ह्योढदानं कृतम् । एते च व्याख्यातारः तीर्थकरासादनाया अभीरवः तीर्थकरानासादयन्तो न बिभ्यतीति यावत्, मा च न किञ्चिज्जानाति तीर्थकृदित्यधिक्षेपः, अन्यथोक्ते तीर्थकृतैवमुक्तमित्यालदानम् । तथाहि यदि विषयः सामान्यविशेषात्मकस्तदा

विषयि केवलं विशेषात्मकं वा भवेत् सामान्यात्मकं वा, आद्ये निःसामान्यविशेषग्राहित्वात् तेषां च तद्विकलानामभावान्निर्विषयतया तदवभासिनो ज्ञानस्याभाव इत्यकिञ्चिज्ज्ञः सर्वज्ञस्ततो भवेत् । अथ सामान्यात्मकम् एवमपि विशेषविकलसामान्यरूपविषयाभावतो निर्विषयस्य दर्शनस्याप्यभावान्न किञ्चित् केवली पश्येत्, अथायुगपज्ज्ञानदर्शने तस्याभ्युपगम्येते तथापि 5 यदा जानाति न तदा पश्यति यदा च पश्यति न तदा जानातीत्येकरूपाभावेऽन्यतरस्याप्यभावात् पूर्ववदकिञ्चिज्ज्ञोऽकिञ्चिद्दर्शी च स्यात्, उभयरूपे वा वस्तुन्यन्यतरस्यैव ग्राहकत्वात् केवलोपयोगो विपर्यस्तो वा भवेत् तथाहि यदुभयरूपे वस्तुनि सामान्यस्यैव ग्राहकं तद्विपर्यस्तम्, यथा सांख्यज्ञानं, तथा च सामान्यग्राहि केवलदर्शनमिति, तथा यद्विशेषावभास्येव तथाभूते वस्तुनि तदपि विपर्यस्तम्, यथा सुगतज्ञानम्, तथा च केवलज्ञानमिति । 10 यथा च सामान्यविशेषात्मकं वस्तु तथा प्रतिपादितमनेकधा । होढदानमपि सूत्रस्यान्यथा व्याख्यानादुपपन्नम्, तथाहि न पूर्वप्रदर्शितस्तत्रार्थः किन्त्वयम्–केवलीमां[1] रत्नप्रभां पृथिवीं यैराकारादिभिः समकं तुल्यं जानाति न तैराकारादिभिः तुल्यं पश्यतीति, किमेवंग्राह्यम्, एवमित्यनुमोदना, ततो हेतौ पृष्टे सति तत्प्रतिवचनं भिन्नालम्बनप्रदर्शकम्, तज्ज्ञानं साकारं भवति यतो दर्शनं पुनरनाकारमित्यतो भिन्नालम्बनावेतौ प्रत्ययाविति । इदञ्चोदाहरणमात्रं 15 प्रदर्शितम्, एवञ्च सूत्रार्थव्यवस्थितौ पूर्वार्थकथनमालदानमेव ॥ ५८ ॥

आगमेन यौगपद्यमभिधाय ज्ञानदर्शनयोरनुमानेनापि तयोस्तद्दर्शयितुमाह—

**केवलणाणावरणक्खयजायं केवलं जहा णाणं ।**
**तह दंसणं पि जुज्जइ णियआवरणक्खयस्संते ॥ ५९ ॥**

केवलज्ञानावरणक्षयजातं केवलं यथा ज्ञानम् ।
20 तथा दर्शनमपि युज्यते निजावरणक्षयस्यान्ते ॥ छाया ॥

केवलेति, केवलज्ञानावरणक्षये समुत्पन्नं यथा विशेषावबोधस्वभावं ज्ञानं तथा तदैव दर्शनावरणक्षये सति सामान्यपरिच्छेदस्वभावं दर्शनमप्युपपद्यताम्, न ह्यविकलकारणे सति कार्यानुत्पत्तिर्युक्ता तस्यातत्कार्यताप्रसक्तेरितरत्राप्यविशेषतोऽनुत्पत्तिप्रसक्तेश्च । ज्ञानकाले दर्शनस्यापि संभवः तदुत्पत्तौ कारणसद्भावात्, युगपदुत्पत्त्यविकलकारणघटयुग-

---

१ रत्नप्रभाकर्मकाकारादिनिरूपितयावदन्यूनानतिरिक्तविषयताकज्ञानवान् न तादृशतावदन्यूनानतिरिक्तविषयताकदर्शनवान् केवलीति फलितोऽर्थः रत्नप्रभाकर्मकाकारादिनिरूपितयावदन्यूनानतिरिक्तविषयताकं ज्ञानं न तादृशं केवलिकर्तृकं दर्शनमिति वा ॥

पदुत्पत्तिवत । ननु हेतौ सत्यपि श्रुताद्यावरणक्षयोपशमे श्रुताद्यनुत्पद्यमानमपि कदाचिद् दृष्टमित्यनैकान्तिको हेतुः, न, श्रुतादौ क्षीणावरणत्वस्य हेतोरभावात्, श्रुतादेः क्षीणोपशान्तावरणत्वात् । भिन्नावरणत्वादेव च श्रुतावधिवन्नैकत्वमेकान्ततो ज्ञानदर्शनयोरेकदोभयाभ्युपगमवादेनैव ॥ ५९ ॥

यज्जातीये ... दृष्टस्तज्जातीय एवासावन्यत्राप्यभ्युपगमार्हो न जात्यन्तरे धूमवत पावकेतरभावाभावयोः, अन्यथानुमानादिव्यवहारविलोपप्रसङ्गादित्याह— 5

भण्णइ खीणावरणे जह मइणाण जिणे ण संभवइ ।
तह खीणावरणिज्जे विसेसओ दंसणं नत्थि ॥ ६० ॥

भण्यते क्षीणावरणे यथा मतिज्ञानं जिने न संभवति ।
तथा क्षीणावरणीये विश्लेषतो दर्शनं नास्ति ॥ छाया ॥ 10

भण्यत इति, यथा मतिश्रुतावधिमनःपर्यवज्ञानानि जिने न सम्भवंतीत्यभ्युपगम्यते तथा तत्रैव क्षीणावरणीये ज्ञानोपयोगादन्यदा दर्शनं न सम्भवतीत्यभ्युपगन्तव्यम्, क्रमोपयोगस्य मत्याद्यात्मकत्वात् तदभावे तदभावात् ॥ ६० ॥

क्रमवादिनो न केवलमनुमानविरोधोऽपि त्वागमविरोधश्चेत्याह—

सुत्तंमि चेव साई अपज्जवसियं ति केवलं वुत्तं । 15
सुत्तासायणभीरूहिं तं च दट्ठव्वयं होइ ॥ ६१ ॥

सूत्रे चैव साद्यपर्यवसितमिति केवलमुक्तम् ।
सूत्रासातनभीरुभिस्तच्च द्रष्टव्यं भवति ॥ छाया ॥

सूत्र इति, आगमे केवलज्ञानदर्शनयोः साद्यपर्यवसितत्वमुक्तम्, क्रमोपयोगे तु द्वितीयसमये तयोः पर्यवसानमिति कुतोऽपर्यवसितता स्यात्, अतः क्रमोपयोगवादिभिः सूत्रासातनाभीरुभिः, 'केवलणाणे णं भंते' इत्याद्यागमोक्तं पर्यालोचनीयं भवति, अत्र सूत्रासातना सर्वज्ञाधिक्षेपद्वारेण, अचेतनस्य वचनस्याधिक्षेपायोगात । न च द्रव्यापेक्षयाऽपर्यव- 20

१ मतिश्रुतज्ञानावरणयोरेकदा क्षयोपशमेऽपि यथा तदुपयोगक्रम तथा ज्ञानदर्शनावरणयोर्युगपत्क्षयेऽपि केवलिन्युपयोगक्रमः स्यादिति शङ्काशयः ॥ २ श्रुतोपयोगे मतिज्ञानस्य हेतुत्वेन स शब्दादौ प्रत्यक्षादिसामग्र्या. प्रतिबन्धकत्वेन च तत्सम्भवः, अत्र तु क्षीणावरणत्वेन परस्परकार्यकारणभावप्रतिबध्यप्रतिबन्धकभावाद्यभावेन विशेष इति भाव ॥ ३ क्रमोपयोगत्वस्य मत्याद्यात्मकत्वव्याप्यत्वादित्यर्थ । सामान्यविशेषोभयालम्बनक्रमोपयोगत्वस्य चावग्रहाद्यात्मकत्वव्याप्यत्वात् केवलयोः क्रमोपयोगत्वे तस्यापत्तिरित्यभिप्राय. तथा च केवलदर्शनं केवलज्ञानतुल्यकालोत्पत्तिकं, तदेककालीनसामग्रीकत्वात् तादृशकार्यान्तरवदित्यनुमानप्रयोगः फलितः ॥

सितत्वम्, द्रव्यविषयप्रश्नोत्तराश्रुतेः । अथ भवतोऽपि कथं तयोरपर्यवसानता, पर्यायाणामुत्पादविगमात्मकत्वात् । न च द्रव्यापेक्षयेति वाच्यम्, अस्मत्पक्षेऽप्यस्य समानत्वात् । तद्विषयप्रश्नप्रतिवचनाभावान्नेति चेत्तर्हि भवतोऽपि द्रव्यापेक्षयाऽपर्यवसानकथनमयुक्तम्, न, तयोर्युगपद्रूपरसयोरिवोत्पादाभ्युपगमान्न ऋजुत्ववक्रतावत् । एवमपि सपर्यवसानतेति चेन्न
5 कथञ्चित्केवलिद्रव्यादव्यतिरेकतस्तयोरपर्यवसितत्वात् । न च क्रमैकान्तेऽप्येवं भविष्यति, अनेकान्तविरोधात् । न चात्रापि तथाभावः, तथाभूतात्मकैककेवलिद्रव्याभ्युपगमात्, रूपरसात्मकैकद्रव्यवत्, अक्रमरूपत्वे च द्रव्यस्य तदात्मकत्वेन तयोरप्यक्रम एव न च तयोस्तद्रूपतया तथाभावो न स्वरूपत इति वाच्यम्, तथात्वेऽनेकान्तरूपताविरोधान्निरावरणस्याक्रमस्य क्रमरूपत्वविरोधाच्च तस्यावरणकृतत्वात् । किञ्च यदि सर्वथा क्रमेणैव तयोरुत्पत्तिः
10 तर्ह्यनेकान्तविरोधः, अथ कथञ्चित्तदा युगपदुत्पत्तिपक्षोऽप्यभ्युपगतः । न च द्वितीये क्षणे तयोरभावेऽपर्यवसितता छाद्मस्थिकज्ञानस्येव युक्ता, पुनरुत्पादादपर्यवसितत्वे पर्यायस्याप्यपर्यवसिततापसक्तिः, द्रव्यार्थनया तत्त्वे द्वितीयक्षणेऽपि तयोः तद्भावोऽन्यथा द्रव्यार्थत्वायोगात् ॥ ६१ ॥

तदेवं क्रमाभ्युपगमे तयोरागमविरोध इत्युपसंहरति—

15 **संतम्मि केवले दंसणम्मि णाणस्स संभवो णत्थि ।**
**केवलणाणम्मि य दंसणस्स तम्हा सणिहणाइं ॥ ६२ ॥**

सति केवले दर्शने ज्ञानस्य संभवो नास्ति ।
केवलज्ञाने च दर्शनस्य तस्मात् सनिधने ॥ छाया ॥

सतीति, स्पष्टम्, तस्मात्केवलज्ञानदर्शने सनिधने नाशसहिते प्रसक्ते ॥ ६२ ॥

20 अत्र प्रकरणकारः क्रमोपयोगवादिनं तदुभयप्रधानाक्रमोपयोगवादिनञ्च पर्यनुयुज्य स्वपक्षं दर्शयति—

**दंसणणाणावरणक्खए समाणम्मि कस्स पुव्वअरं ।**
**होज्ज समं उप्पाओ हंदि दुए णत्थि उवओगा ॥ ६३ ॥**

दर्शनज्ञानावरणक्षये समाने कस्य पूर्वतरम् ।
25 भवेत्समुत्पादो हंदि द्वौ न स्त उपयोगौ ॥ छाया ॥

१ यद्धर्मावच्छिन्ने क्रमिकत्वप्रसिद्धिः तद्धर्मावच्छिन्नेऽपर्यवसितत्वान्वयो निराकाङ्क्षः, अन्यथा ऋजुत्ववक्रत्वे अपर्यवसिते इति प्रयोगस्यापि प्रसङ्गः, मम तु रूपरसात्मकैकद्रव्यवदक्रमभाविभिन्नोपाधिकोत्पादविगमात्मकत्वेऽपि केवलिद्रव्यादव्यतिरेकतः तयोरपर्यवसितत्वं नानुपपन्नमिति भावः ॥

**दर्शनेति** । सामान्यविशेषपरिच्छेदकावरणापगमे समाने सति कस्य प्रथमतरमुत्पादो भवेत्, अन्यतरोत्पादे तदितरस्याप्युत्पादः स्यात्, न चेदन्यतरस्याप्युत्पादो न स्यात्, अविशेषादित्युभयोरप्यभावप्रसक्तिः, अक्रमोपयोगवादिनश्च तयोरेककालमुत्पादो भवेत्, सत्यक्रमकारणे कार्यस्याप्यक्रमस्य भावात् इत्यक्रमौ द्वावुपयोगौ । एकोपयोगवाद्याह हंदि द्वावुपयोगौ नैकदेति ज्ञायताम, सामान्यविशेषपरिच्छेदात्मकत्वात् केवलस्येति ॥ ६३ ॥ 5

यदेव ज्ञानं तदेव दर्शनमित्येतस्मिन्नेव वादे सर्वज्ञतासंभव इत्याह—

**जइ सव्वं सायारं जाणइ एक्कसमएण सव्वण्णू ।**
**जुज्जइ सयावि एवं अहवा सव्वं ण याणाइ ॥ ६४ ॥**

यदि सर्वं साकारं जानाति एकसमयेन सर्वज्ञः ।
युज्यते सदाप्येवं अथवा सर्वं न जानाति ॥ छाया ॥ 10

**यदीति** । यदि सर्वं साकारं जानंस्तदात्मकं सामान्यं तदैव पश्यति, तत् पश्यन् वा तद्व्यतिरिक्तं विशेषं तदैव जानाति, उभयात्मकवस्त्ववबोधैकरूपत्वात् सर्वज्ञोपयोगस्य तदा सर्वज्ञत्वं सर्वदर्शित्वञ्च तस्य सर्वकालं युज्यते, प्रतिक्षणमुभयात्मकैकरूपत्वात्तस्य । अथवा सर्वं सामान्यं साकारं वा वस्तु न पश्यति न जानाति च, तथाभूतयोः तयोरसत्त्वात्, जात्यन्धवत् आकाशवद्वा । अथवा सर्वं न जानात्येकदेशोपयोगवृत्तित्वात्, मतिज्ञानिवत् । युगपत् 15 क्रमेण चैकान्तभिन्नोपयोगद्वयवादिमते न सर्वज्ञता सर्वदर्शिता चेत्याशय आचार्यस्य । तत्र जिनभद्रगणिक्षमाश्रमणपूज्यानामयुगपद्भाव्युपयोगद्वयमभिमतम, मल्लवादिनस्तु युगपद्भावि तद्द्वयमिति, प्रकरणकारस्य तयोरुपयोगयोरभेद इति मतम् ॥ ६४ ॥

साकारानाकारोपयोगयोर्नैकान्ततो भेद इति दर्शयितुमाह—

**परिसुद्धं सायारं अवियत्तं दंसणं अणायारं ।** 20
**ण य खीणावरणिज्जे जुज्जइ सुवियत्तमवियत्तं ॥ ६५ ॥**

परिशुद्धं साकारमव्यक्तं दर्शनमनाकारम् ।
न च क्षीणावरणीये युज्यते सुव्यक्तमव्यक्तम् ॥ छाया ॥

**परिशुद्धमिति** । ज्ञानस्य रूपं व्यक्तता दर्शनस्य चाव्यक्तता । क्षीणावरणे चार्हति व्यक्तताव्यक्तते न युज्येते तस्मात् सामान्यविशेषज्ञेयस्पर्शी उभयैकस्वभाव एवायं केवलि- 25

---

१ यदेव ज्ञानं तदेव दर्शनम्, उभयहेतुसमाने समुद्घालम्बनोत्पादस्यैवान्यत्र दृष्टत्वात् नात्रापरिदृष्टकल्पनाक्लेश इति भावः ॥

प्रत्ययः, न च ग्राह्यद्वित्वाद्ग्राहकद्वित्वमिति तत्र सम्भावना युक्ता, केवलज्ञानस्य ग्राह्यानन्त्ये-
नानन्ततापत्तेः, अन्योऽन्यानुविद्धग्राह्यांशद्वयमभेदाद्ग्राहकस्य तथा त्वकल्पने एकत्वानति-
क्रमान्न दोष इति । अत्रायमभिप्रायः न चैकस्वभावस्य प्रत्ययस्य शीतोष्णस्पर्शवत् परस्पर-
विभिन्नस्वभावद्वयविरोधो दर्शनस्पर्शनशक्तिद्वयात्मकैकदेवदत्तवत्, स्वभावद्वयात्मकैकप्रत्ययस्य
5 केवलिन्यविरोधात्, अनेकान्तवादस्य प्रमाणोपपन्नत्वादिति ॥ ६५ ॥

क्रमाक्रमोपयोगद्वयाभ्युपगमे तु भगवत इदमापन्नमिति दर्शयति—

**अद्दिट्ठं अण्णायं च केवली एव भासइ सया वि ।**
**एगसमयम्मि हंदी वयणवियप्पो न संभवइ ॥ ६६ ॥**

अदृष्टमज्ञानञ्च केवली एव भाषते सदापि ।
10 एकसमये हंदी वचनविकल्पो न सम्भवति ॥ छाया ॥

अदृष्टमिति । केवली जात्यन्धहस्तिपरिज्ञानवददृष्टमेव ज्ञातं तथाऽलातचक्रदर्शनवद-
ज्ञातमेव च दृष्टं सर्वदा भाषत इत्यक्रमोपयोगपक्षे प्रसक्तम्, क्रमवर्त्युपयोगपक्षे तु यदेकस्मिन्
समये जानाति तदेव भाषते ज्ञातं न तु दृष्टम्, समयान्तरे तु यदा पश्यति तदापि दृष्टं
भाषते न तु ज्ञातम्, बोधानुरूपेण वाचः प्रवर्त्तनात्, बोधस्य चाक्रमोपयोगपक्षे एकांशाव-
15 लम्बित्वात्, क्रमोपयोगे तु तत्त्वाद्भिन्नसमयत्वाच्च एकस्मिन् समये दृष्टं ज्ञातञ्च भाषत
इत्येष वचनविशेषो भवद्दर्शने न सम्भवतीति ग्राह्यताम् ॥ ६६ ॥

तथा च सर्वज्ञत्वं न सम्भवतीत्याह—

**अण्णायं पासंतो अद्दिट्ठं च अरहा वियाणंतो ।**
**किं जाणइ किं पासइ कह सवण्णु त्ति वा होइ ॥ ६७ ॥**

20 अज्ञातं पश्यन्नदृष्टञ्चार्हन् विजानानः ।
किं जानाति किं पश्यति कथं सर्वज्ञ इति वा भवति ॥ छाया ॥

अज्ञातमिति । अज्ञातं पश्यन् दृष्टञ्च जानानः किं जानाति किं पश्यति न किञ्चिद-
पीति भावः । कथं वा तस्य सर्वज्ञता भवेत् ॥ ६७ ॥

ज्ञानदर्शनयोरेकसंख्यत्वादप्येकत्वमित्याह—

**केवलणाणमणंतं जहे व तह दंसणं पि पण्णत्तं ।**
25 **सागारग्गहणाहि य णियमपरित्तं अणागारं ॥ ६८ ॥**

केवलज्ञानमनन्तं यथैव तथा दर्शनमपि प्रज्ञप्तम् ।
साकारग्रहणाच्च नियमपरीतमनाकारम् ॥ छाया ॥

**केवलेति,** यद्येकत्वं ज्ञानदर्शनयोर्न स्यात्ततोऽल्पविषयत्वाद्दर्शनमनन्तं न स्यादिति " अणंते केवलणाणे अणंते केवलदंसणे " इत्यागमविरोधः प्रसज्येत, दर्शनस्य ज्ञानाद्भेदे हि साकारग्रहणादनन्तविशेषवर्त्तिज्ञानादनाकारं सामान्यमात्रालम्बिकेवलदर्शनं यतो नियमे- 5 नैकान्तेनैव परीतमल्पं भवतीति कुतो विषयभेदादनन्तता ॥ ६८ ॥

क्रमवादिदर्शने ज्ञानदर्शनयोरपर्यवसितत्वादिकं नोपपद्यत इति यत् प्रेरितमेकत्ववादिना तत्परिहारार्थमाह—

**भण्णइ जह चउणाणी जुज्जइ णियमा तहेव एयं पि ।**
**भण्णइ ण पंचणाणी जहेव अरहा तहेयंपि ॥ ६९ ॥** 10

भण्यते यथा चतुर्ज्ञानी युज्यते नियमात्तथैवैतदपि ।
भण्यते न पञ्चज्ञानी यथैवार्हंस्तथैतदपि ॥ छाया ॥

**भण्यत इति,** भण्यते आक्षिप्यते यथा क्रमोपयोगप्रवृत्तोऽपि मत्यादिचतुर्ज्ञानी अपर्यवसितचतुर्ज्ञान उत्पद्यमानतज्ज्ञानसर्वदोपलब्धिको व्यक्तबोधो ज्ञातदृष्टभापी ज्ञाता द्रष्टा चावश्यमेव युज्यते तच्छक्तिसमन्वयात्, तथैतदपि एकत्ववादिना यदपर्यवसितत्वादि केवलिनि 15 कथमिति यत् प्रेर्यते तद्युज्यत एव, सार्वदिककेवलज्ञानदर्शनशक्तिसमन्वयात् । अत्रैकत्ववादिना प्रति समाधानं भण्यते यथैवार्हन्न पञ्चज्ञानी भवति तथैतदपि क्रमवादिना यदुच्यते भेदतो ज्ञानवान् दर्शनवानिति च तदपि न भवतीति सूत्रकृतोऽभिप्रायः । अत्र च छद्मस्थे किल उपयोगक्रमस्य दृष्टत्वात् केवलिनि च छद्माभावान्न क्रमवान् ज्ञानदर्शनोपयोग इत्ययमर्थो विवक्षित इति केचित् प्रतिपन्नाः, न हि यो यज्जातीये दृष्टः सोऽतज्जातीयेऽपि भवत्य- 20 तिप्रसङ्गात्, अन्यथा छद्मस्था अपि केवलिवत् क्रमोपयोगित्वात् सर्वज्ञाः स्युः, सोऽपि वा न भवेत्, तत एव सर्वज्ञवन्निरावरणास्ते, सोऽपि वा सावरणः, तत एव एकज्ञानिनो वा ते, सोऽपि चतुर्ज्ञानी वा स्यात् । अत एव छद्मस्थे भुजिक्रियादर्शनात् केवलिनि तद्विजातीये भुजिक्रियाकल्पना न युक्ता, अन्यथा चतुर्ज्ञानित्वाकेवलित्वसंसारित्वादयोऽपि तत्र स्युः, न च देहित्वं तद्भुक्तिकारणम्, तथाभूतशक्त्यायुष्कर्मणोस्तद्धेतुत्वादेकवैकल्ये तदभावात्, औदा- 25

---

१ तथा प्रयोगो विवादास्पदः केवली न कवलाहारवान् भवति, छद्मस्थाद्विजातीयत्वात्, यन्नैवं तन्नैव यथास्मदादिः । न च देहित्वात्कवलाहारवानित्यनुमानेन बाधितः पक्ष इति वाच्यम्, देहिनामपि त्रिदशादीनां कवलाहाराभावेन देहित्वस्य व्यभिचारादिति ॥

रिकव्यपदेशोऽप्युदारत्वात्, न तु भुक्तेः। यदपि एकेन्द्रियादीनामयोगिपर्यन्तानामाहारित्वस्य
सूत्रोपदेशात् केवलिनः कवलाहारित्वं केचित् प्रतिपन्नाः, तदपि सूत्रार्थापरिज्ञानात्, तत्र
ह्येकेन्द्रियादिभिः सह भगवतो निर्देशान्निरन्तराहारोपदेशाच्च शरीरप्रायोग्यपुद्गलग्रहणमा-
हारत्वेन विवक्षितमन्यथा क्षणत्रयमात्रमपहाय समुद्घातावस्थायां निरन्तराहारो भगवां-
5 स्तेनाहारेण भवेत्। यदपि यथासम्भवमाहारव्यवस्थितेः सहनिर्देशेऽपि कवलाहार एव
केवलिनो युक्त्या व्यवस्थाप्यते, अन्यथा तच्छरीरस्थितेरभावादिति, तदपि न युक्तिक्षमम्,
अस्मदादेर्हि प्रकृताहारमन्तरेण औदारिकशरीरस्थितेः प्रभूतकालमभावात् केवलिनोऽपि
यदि तथाऽनुमीयते तर्हि तस्य सर्वज्ञता नाक्षेप्तुं शक्या, दृष्टव्यतिक्रमप्रकल्पनाऽयोगात्,
श्रूयते च प्रकृताहारमन्तरेणापि चिरतरकाला औदारिकशरीरस्थितिः प्रथमतीर्थकृत्प्रभृती-
10 नामिति, अत्रोच्यते, उपयोगक्रमे न छद्म कारणम्, किन्तु क्षयोपशमकार्यं क्रमोपयोगः केव-
लिनि च तदभावात्तत्कार्यस्य क्रमोपयोगस्याप्यभावः, यद्यत्कारणकं तत्तदभावे न भवति,
यथा चक्षुरभावे चक्षुर्ज्ञानम्, क्षयोपशमकारणश्च क्रमोपयोग इति क्षायिकोपयोगवति केव-
लिनि क्रमोपयोगाभावः। न च भवतु मत्यादिक्रमवदुपयोगाभावः क्षयोपशमाभावात्,
केवलज्ञानदर्शनयोस्तु क्षायिकत्वात् कथं क्षयोपशमाभावे क्रमाभाव इति वाच्यम्, अविक-
15 लकारणतयाऽवश्यं प्रादुर्भावात्, यद्धि यदाऽविकलकारणम् तत्तदाऽवश्यन्तया प्रादुर्भवति,
यथाऽन्त्यसामग्रीकालेऽङ्कुरः, अविकलकारणञ्च केवलज्ञानोपयोगकाले केवलदर्शनम्, स्वा-
वरणक्षयलक्षणाविकलकारणसद्भावेऽपि तदा तस्यानुत्पत्तावतद्धेतुकताप्रसक्तेर्देशकालाकारनि-
यमो न भवेत्, अतायत्तस्य तदसम्भवात्। क्रमोत्पत्तिस्वभावप्रकल्पनायां क्षायिकत्वं तस्य
परित्यक्तं स्यात्, अध्यक्षसिद्धे च क्रमे तत्स्वभावप्रकल्पना युक्तिसङ्गता, अन्यथाऽतिप्रसङ्गः,
20 सर्वभावव्यवस्थाविलोपप्रसक्तेः। न वा यो यज्जातीये दृष्टः सोऽन्यत्रातज्जातीये न भवती-
त्येतदत्र विवक्षितम्, किन्तु कारणाभावे कार्यं न भवति, अविकलकारणञ्चाविलम्बितोत्प-
त्तिकमित्येतदत्र प्रतिपादयितुमभिप्रेतमाचार्यस्य। एवं केवलिनो भुक्त्यभावनिश्चयस्तदा स्या-
द्यदि भुक्तिकारणाभावः सिद्धो भवेत्, स्वकार्यकरणे कारणस्य प्रतिबद्धत्वं वा सिद्धं भवेत्,
न चैतदुभयमपि भवस्थकेवलिनि सिद्धम्, अप्रतिबद्धसामर्थ्यस्य क्षुद्वेदनीयकर्मोदयस्य
25 तत्र सद्भावात् अत एव न चतुर्ज्ञानित्वाकेवलित्वादिप्रसङ्गः, तत्कारणस्य तत्राभावा-
न्निर्निमित्तस्य च कार्यस्यासम्भवात्। किञ्च केवलिनः किमतज्जातीयत्वमस्मदाद्यपेक्षया
किं वाऽऽत्मीयछद्मस्थावस्थापेक्षयाऽभिप्रेतम्, आद्ये सिद्धसाध्यता। द्वितीयेऽपि किं घाति-
कर्मापेक्षया तत्तस्याभ्युपगम्यते किं वा भुक्तिनिमित्तकर्मक्षयापेक्षया, प्रथमे सिद्धं विजाती-
यत्वं न तु तावता तस्य भुक्तिप्रतिषेधः, अप्रतिबद्धसामर्थ्यस्य भुक्तिकारणस्य तथाविजाती-

यत्वेऽपि स्वकार्यनिर्वर्त्तकत्वात्। न द्वितीयोऽतज्जातीयत्वस्यैवासिद्धत्वात् तन्निमित्तस्य कर्मणो भवस्थकेवलिनि पर्यन्तसमयं यावदनुवृत्तेः । यदपि न देहित्वं भुक्तिकारणमित्याद्युक्तं तदपि नोचितम्, विशिष्टकर्मोदयसामग्र्या भुक्तिकारणभूतायास्ततोऽप्यव्यावृत्तेः, तथाभूतशक्त्या-युष्ककर्मणोश्चैकस्यापि वैकल्यासिद्धेरेकवैकल्ये तदभावादित्यसिद्धम् । यच्चौदारिकव्यपदेशोऽ-प्युदारत्वान्न भुक्तिरिति तदपि न युक्तम्, औदारिकशरीरित्वे स्वकारणाधीनाया भुक्तेरप्रतिषे- 5 धात्, व्यपदेशस्योदारत्वनिमित्तत्वेऽपि स्वकारणनिमित्तप्रकृतभुक्तिसिद्धेः । यदपि एकेन्द्रि-यादीनामयोगिपर्यन्तानामाहारिणां सूत्र उपदेश इत्याद्युक्तं तदप्यसाम्प्रतम्, एकेन्द्रियादिसह-चरितत्वनिरन्तराहारोपदेशत्वाद्यन्तरेणापि ' विग्गहगइमावण्णा केवलिणो समुहया अयोगी या [ ] सिद्धा य अणाहारा सेसा आहारगा जीवा ॥' इत्यादिसूत्रसन्दर्भस्य केवलिभुक्तिप्रति-पादकस्यागमे सद्भावात् । न च तस्याप्रामाण्यम्, सर्वज्ञप्रणीतत्वेनाभ्युपगतसूत्रस्येव प्रामा- 10 ण्योपपत्तेः । न च तत्प्रणीतागमैकवाक्यतया प्रतीयमानस्याप्यतत्प्रणीतत्वम्, अन्यत्रापि तत्प्रसक्तेः। यदुक्तं निरन्तराहारोपदेशाच्च शरीरप्रायोग्यपुद्गलग्रहणमाहारत्वेन विवक्षितमन्यथा क्षणत्रयमात्रमपहाय समुद्घातावस्थायां निरन्तराहारो भगवांस्तेनाहारेण भवेदिति तदपि न, यतो विग्रहगत्यापन्नसमवहतकेवल्ययोगिसिद्धव्यतिरिक्ताशेषप्राणिगणस्य शरीरप्रायोग्यपुद्गल-ग्रहणमेवाहारशब्दवाच्यमिह सूत्रेऽभिप्रेतमिति कोऽन्यः सामयिकशब्दार्थविदो भवतोऽभिधातुं 15 समर्थः । विशिष्टाहारस्य च विशिष्टकारणप्रभवत्वात् तस्य प्रतिक्षणं कथं सम्भवः, यस्तु-पुद्गलादानलक्षणो लोमाद्याहारस्तस्य प्रतिक्षणं सद्भावेऽप्यदोष एव । यथासम्भवमाहार-व्यवस्थोक्तिस्तु युक्तैव, न हि देशोनपूर्वकोटिं यावत् अन्तरेण विशिष्टाहारं विशिष्टौदारिक-शरीरस्थितिः सम्भविनी । न च तच्छद्मस्थावस्थातः केवल्यवस्थायामात्यन्तिकं तच्छरी-रस्य विजातीयत्वम्, येन प्रकृताहारविरहेऽपि तच्छरीरस्थितेरविरोधो भवेत्, ज्ञानाद्यति- 20 शयेऽपि प्राक्तनसंहननाद्यधिष्ठितस्य तस्यैवापातमनुवृत्तेः । अस्मदाद्यौदारिकशरीरविशिष्ट-स्थितेर्विशिष्टाहारनिमित्तत्वं प्रत्यक्षानुपलम्भप्रभवप्रमाणेन सर्वत्राधिगतमिति विशिष्टाहारम-न्तरेण तत्स्थितेरन्यत्र सद्भावे सकृदपि तत्स्थितिस्तन्निमित्ता न भवेत, अहेतोः सकृदपि सद्भावाभावात् । यदि तु विशिष्टाहारनिमित्ताप्यस्मदादिषु विशिष्टशरीरस्थितिः पुरुषान्तरे तद्व्यतिरेकेणापि भवेत् तर्हि महानसादौ धूमध्वजप्रभवोऽपि धूमः पर्वतादौ तमन्तरेणापि 25 भवेदिति धूमादेरग्न्याद्यनुमानमसङ्गतं भवेत्, व्यभिचारात् । अथैतज्जातीयो धूमः एत-ज्जातीयाग्निप्रभवः सर्वत्र सकृत् प्रवृत्तेनैव प्रमाणेन व्यवस्थाप्यते, तत्कार्यताप्रतिपत्तिबलाद-ग्निस्वभावादन्यत्र तस्य भावे सकृदप्यग्नेर्न भावः स्यात्, अग्निस्वभावावजन्यत्वात्तस्य भवति चाग्निस्वभावान्महानसादौ धूम इति सर्वत्र सर्वदा तत्स्वभावादेव तस्योत्पादेऽतदु-

त्पत्तिकस्याधूमस्वभावत्वादिति न धूमादेरग्न्याद्यनुमाने व्यभिचारस्तर्हि प्रकृतेऽप्ययं प्रकारः समानः, विशिष्टौदारिकशरीरस्थितेर्विशिष्टाहारमन्तरेणापि भावे तच्छरीरस्थितिरेवासौ न भवेत्, न चात्यन्तविजातीयत्वं तस्या इत्युक्तमेव। सर्वथा समानजातीयत्वन्तु महान-सपर्वतोपलब्धधूमयोरप्यसम्भवि। ततोऽस्मदादेरिव केवलिनोऽपि प्रकृताहारमन्तरेणौदारि-
5 कशरीरस्थितिर्न चिरकाला संभवतीत्यनुमानं प्रवर्त्तत एव, अन्यथा धूमादेरग्न्याद्यनुमानमपि न स्यात्। यदपि कुतस्तस्यैवं सर्वज्ञतासिद्धिरित्यभिधानं तदप्यसङ्गतम्, घातिकर्मक्षयप्रभव-सर्वज्ञतादेः प्रकृताहारेण तत्कार्येण वा चिरकालभाव्यौदारिकशरीरस्थित्यादिना विरोधा-सम्भवात्, सर्वज्ञतासिद्धिनिबन्धनस्य प्रमाणस्य च पूर्वमेव प्रतिपादितत्वात्। यदपि निराहा-रौदारिकशरीरस्थितेः प्रथमतीर्थकरप्रभृतीनामतिशयश्रवणात्तदियत्तानियमप्रतिपादकप्रमाणा-
10 भावाच्चेति तदप्यसाम्प्रतम्, तस्य प्रामाण्ये तदियत्तानियमस्यापि तत एव सिद्धेः, तदधिक-निराहारतच्छरीरस्थितेः सूत्रे निषेधान्निरशनकालस्य तावदेवोत्कृष्टताप्रतिपादनाच्च। भूयांसि प्रकृताहारप्रतिपादकानि केवलिनः सूत्राण्यागम उपलभ्यन्ते, प्रतिनियतकालप्रकृता-हारनिषेधकानि च, यथा च प्रथमतीर्थकृत एव चतुर्दशभक्तनिषेधेनाष्टापदनगे दशसहस्रकेवलि-महितस्य निर्वाणगतिप्रतिपादकानि सूत्राणि। तदेवं बाधकप्रमाणाभावात् साधकस्य च
15 सद्भावात् केवलिभुक्तिः सिद्धा॥ ६९॥

क्रमेण युगपद्वा परस्परनिरपेक्षस्वविषयपर्यवसितज्ञानदर्शनोपयोगौ केवलिन्यसर्वार्थ-त्वान्मत्यादिज्ञानचतुष्टयवन्न स्त इति दृष्टान्तभावनयाह—

**पण्णवणिज्जा भावा समत्तसुयणाणदंसणा विसओ।**
**ओहिमणपज्जवाण उ अण्णोण्णविलक्खणा विसओ॥ ७०॥**

20 प्रज्ञापनीया भावाः समस्तश्रुतज्ञानदर्शनो विषयः।
अवधिमनःपर्यवयोस्तु अन्योन्यविलक्षणा विषयः॥ छाया॥

प्रज्ञेति, द्वादशाङ्गवाक्यात्मकस्य समस्तश्रुतज्ञानस्य दर्शनप्रयोजिकायास्तद्वाक्योपजाताया बुद्धेः शब्दाभिलप्या द्रव्यादयो भावा विषयः आलम्बनम्, मतेरपि त एव शब्दानभिधेया विषयः, मतिश्रुतयोः असर्वपर्यायसर्वद्रव्यविषयत्वेनाभिन्नार्थत्वात् मूले श्रुतस्य भावनया
25 मापि भाविता। अवधिमनःपर्यायोस्तु अन्योन्यविलक्षणा भावा विषयः, अवधेः पुद्गलाः, मनःपर्यवज्ञानस्य मन्यमानानि द्रव्यमनांसि विषय इति, असर्वार्थान्येतानि मत्यादिज्ञानानि परस्परविलक्षणविषयाणि च, अत एव भिन्नोपयोगरूपाणि॥ ७०॥

एवमसकलार्थत्वं भिन्नोपयोगपक्षे दृष्टान्तसमर्थनद्वारेण प्रदर्श्य उपसंहारद्वारेण अक्रमो-पयोगद्वयात्मकमेकं केवलमन्यथा सकलार्थता तस्यानुपपन्नेति दर्शयति—

**तम्हा चउव्विभागो जुज्जइ ण उ णाणदंसणजिणाणं ।**
**सयलमणावरणमणंतमक्खयं केवलं जम्हा ॥ ७१ ॥**

तस्माच्चतुर्विभागो युज्यते न तु ज्ञानदर्शनजिनानाम् ।
सकलमनावरणमनन्तमक्षयं केवलं यस्मात् ॥ छाया ॥

**तस्मादिति,** यस्मात् केवलं सकलं सकलविषयं न तु ज्ञानदर्शनप्रधानानां निर्मूलिताशेषघातिकर्मणां जिनानां छद्मस्थावस्थोपलब्धतत्तदावरणक्षयोपशमकारणभेदप्रभवमत्यादिचतुर्ज्ञानेष्विव ज्ञानदर्शनयोः पृथक् क्रमाक्रमविभागो युज्यते । कुतः पुनः सकलविषयत्वं भगवति केवलस्य, अनावरणत्वात्, न ह्यनावृतं असकलविषयं भवति, न च प्रदीपादिना व्यभिचारोऽनन्तत्वात्, अनन्तत्वञ्च द्रव्यपर्यायात्मकानन्तार्थग्रहणप्रवृत्तोत्पादव्ययध्रौव्यात्मकोपयोगवृत्तत्वेनाक्षयत्वात्, ततोऽक्रमोपयोगद्वयात्मकमेकमिति स्थितम्, न चाक्रमोपयोगद्वयात्मकत्वे कथं तस्य केवलव्यपदेश इति क्रमाक्रमभिन्नोपयोगवादिना प्रेर्यम्, इन्द्रियालोकमनोव्यापारनिरपेक्षनिरावरणात्मसत्तामात्रनिबन्धनतथाविधार्थविषयप्रतिभासस्य तथाविधव्यपदेशविषयत्वात् । अद्वैतैकान्तात्मकत्वन्तु तन्न भवति सामान्यविशेषोभयानुभयविकल्पचतुष्टयेऽपि दोषानतिक्रमात् । तथाहि न तावत् सामान्यरूपतया तदद्वयं सामान्यस्य विशेषनिबन्धनत्वात्तदभावे तस्याप्यभावात् । नापि विशेषमात्रत्वात्तदद्वयम्, अवयवावयविविकल्पद्वयानतिक्रमात्, न तावदवयवरूपम्, अवयव्यभावे तदपेक्षावयवरूपत्वासम्भवात्, न चावयविरूपम्, अवयवाभावे तद्रूपस्यासम्भवात्, न च तद्रूपातिरिक्तविशेषरूपम्, असद्विशेषप्रसङ्गात् न चैकान्तव्यावृत्तोभयरूपम्, उभयदोषानतिक्रमात् । न चानुभयस्वभावम्, असत्त्वप्रसक्तेः । न च ग्राह्यग्राहकविनिर्मुक्ताद्वयस्वरूपम्, तथाभूतस्यात्मनः कदाचिदप्यननुभवात्, सुषुप्तावस्थायामपि न ग्राह्यग्राहकस्वरूपविकलमद्वयं ज्ञानमनुभूयत इति ॥ ७१ ॥

ज्ञानदर्शनोपयोगात्मकैककेवलोपयोगवादी स्वपक्षे आगमविरोधं परिहरन्नाह—

**परवत्तव्वयपक्खाअविसिट्ठा तेसु तेसु सुत्तेसु ।**
**अत्थगईअ उ तेसिं वियंजणं जाणओ कुणइ ॥ ७२ ॥**

परवक्तव्यपक्षाविशिष्टाः तेषु तेषु सूत्रेषु ।
अर्थगत्या तु तेषां व्यञ्जनं ज्ञायकः करोति ॥ छाया ॥

**परेति,** युगपज्ज्ञानानुत्पत्तिः, नागृहीतविशेषणा विशेष्ये बुद्धिरित्यादिरूपा ये वैशेषिकादिप्रतिपाद्याभ्युपगमास्तैरविशिष्टा भगवन्मुखांभोजनिर्गतेषु तेषु तेषु सूत्रेषु ' जं समयं पासइ णो तं समयं जाणइ ' इत्यादिषु प्रतिभासन्ते, न च ते तथैव व्याख्येयाः प्रमाणबाधनात्

तस्मादर्थगत्यैव सामर्थ्येनैव तेषां व्यक्ति—सकलवस्तुव्याप्यनेकान्तात्मकैककेवलावबोधप्रभव-द्वादशाङ्गैकश्रुतस्कन्धाविरोधेन व्याख्यां ज्ञायकः ज्ञाता करोति । श्रुतावधिमनःपर्यायकेवली त्रिविधो 'जं समयं पासइ नो तं समयं जाणइ' नत्वेवं केवलकेवली, तस्यासर्वज्ञताप्राप्तेरिति सूरेरभिप्रायः ॥ ७२ ॥

5 यद्यक्रमोपयोगद्वयात्मकमेकं केवलं किमिति मनःपर्यायज्ञानवत् तज्ज्ञानत्वेनैव न निर्दिष्टम्, तस्मात् 'केवलनाणे केवलदंसणे' इति भेदेन सूत्रनिर्देशात् क्रमेण युगपद्वा भिन्नमुपयोगद्वयं केवलावबोधरूपमित्याशङ्क्याह—

जेण मणोविसयगयाण दंसणं णत्थि दव्वजायाण ।
तो मणपज्जवणाणं णियमा णाणं तु णिद्दिट्ठं ॥ ७३ ॥

10 येन मनोविषयगतानां दर्शनं नास्ति द्रव्यजातानाम् ।
ततो मनःपर्यवज्ञानं नियमाज्ज्ञानं तु निर्दिष्टम् ॥ छाया ॥

येनेति, यतो मनःपर्यायज्ञानविषयगतानां परमनोद्रव्यविशेषाणां विशेषरूपतया बाह्यस्य चिन्त्यमानस्य घटादेर्लिङ्गिनो गमकत्वोपपत्तेर्दर्शनं सामान्यरूपं नास्ति, द्रव्यरूपाणां चिन्त्यमानालम्बनपरमनोद्रव्यगतानां चिन्त्याविशेषाणां विशेषरूपतया बाह्यार्थगमकत्वात् 15 तद्ग्राहि मनःपर्यायज्ञानं विशेषाकारत्वात् ज्ञानमेव, ग्राह्यदर्शनाभावात् ग्राहकेऽपि तदभावः, ततो मनःपर्यवाख्यो बोधो नियमाज्ज्ञानमेवागमे निर्दिष्टो न तु दर्शनम् । केवलन्तु सामान्यविशेषोपयोगैकरूपत्वात् केवलं ज्ञानं केवलं दर्शनं चेत्यागमे निर्दिष्टम् ॥ ७३ ॥

तथा पुनरप्येकरूपानुविद्धामनेकरूपतां दर्शयन्नाह—

चक्खुअचक्खुअवहिकेवलाण समयम्मि दंसणविअप्पा ।
20 परिपढिया केवलणाणदंसणा तेण ते अण्णा ॥ ७४ ॥

चक्षुरचक्षुरवधिकेवलानां समये दर्शनविकल्पाः ।
परिपठिताः केवलज्ञानदर्शने तेन ते अन्ये ॥ छाया ॥

चक्षुरिति, स्वसमये चक्षुरचक्षुरवधिकेवलानां दर्शनभेदाः परिपठिताः, तेन दर्शनमध्ये पाठाद्दर्शनमपि केवलं ज्ञानमध्ये पाठाज्ज्ञानमपि, अतः केवलज्ञानदर्शने भिन्ने, न चात्यन्तं 25 तयोर्भेद एव, केवलान्तर्भूतत्वेन तयोरभेदात्, न चैवमभेदाद्वैतमेव, सूत्रयुक्तिविरोधात्, तत्परिच्छेदकस्वभावतया कथञ्चिदेकत्वेऽपि तथा तद्व्यपदेशात् ॥ ७४ ॥

एतदेव दृष्टान्तद्वारेणाह—

**दंसणमुग्गहमेत्तं घडो त्ति णिव्वण्णणा हवइ णाणं ।**
**जह एत्थ केवलाण वि विसेसणं एत्तियं चेव ॥ ७५ ॥**

दर्शनमवग्रहमात्रं घट इति निर्वर्णना भवति ज्ञानम् ।
यथात्र केवलयोरपि विशेषणमेतावदेव ॥ छाया ॥

**दर्शनमिति,** मतिरूपे बोधेऽवग्रहमात्रं दर्शनम् इदं तदित्यव्यपदेश्यम्, घट इति निश्च- 5
येन वर्णना निश्चयात्मिका, यथा मतिज्ञानं तथेहापि केवलयोरप्येतन्मात्रेणैव विशेषः, एका-
न्तभेदाभेदपक्षे तत्स्वभावयोः पूर्वोक्तदोषप्रसङ्गात्, अजहद्वृत्त्यैकरूपयोरेवाभिनिबोधिकरूप-
योस्तत्तद्रूपतया तथाव्यपदेशस्यासादनात् कथञ्चिदेकानेकात्मकत्वोपपत्तेर्भेदैकान्ते तयोरप्य-
भावापत्तेः ॥ ७५ ॥

इतश्च कथञ्चिद्भेद इत्याह— 10

**दंसणपुव्वं णाणं णाणणिमित्तं तु दंसणं णत्थि ।**
**तेण सुविणिच्छियामो दंसणणाणाण अण्णत्तं ॥ ७६ ॥**

दर्शनपूर्वं ज्ञानं ज्ञाननिमित्तं तु दर्शनं नास्ति ।
तेन सुविनिश्चिनुमः दर्शनज्ञानयोरन्यत्वम् ॥ छाया ॥

**दर्शनेति,** दर्शनपूर्वं ज्ञानं ज्ञाननिमित्तन्तु दर्शनं नास्ति, यतः सामान्यमुपलभ्य पश्चा- 15
द्विशेषमुपलभते न विपर्ययेणेत्येवं छद्मस्थावस्थायां हेतुहेतुमद्भावक्रमः । तेनाध्यवगच्छामः
कथञ्चित्तयोर्भेद इति, अयञ्च क्षयोपशमनिबन्धनः, केवलिनि च तदभावादक्रम इति ॥७६॥

नन्ववग्रहमात्रं मतिज्ञानं दर्शनमिति, तदयुक्तमिति व्याप्तेरित्याह—

**जइ उग्गहमित्तं दंसणं ति मण्णसि विसेसिअं णाणं ।**
**मइणाणमेव दंसणमेवं सइ होइ निप्फण्णं ॥ ७७ ॥** 20

यद्यवग्रहमात्रं दर्शनमिति मन्यसे विशेषितं ज्ञानम् ।
मतिज्ञानमेव दर्शनमेवं सति भवति निष्पन्नम् ॥ छाया ॥

---

१ घटाकाराभिलापजनकं घटे मतिज्ञानमित्यर्थः । विशेष इति, एकमेव केवलं सामान्यांशे दर्शनं विशे-
षांशे च ज्ञानमित्यर्थः ॥ २ क्रमाभ्युपगमे हि केवलिनि नियमाज्ज्ञानोत्तरं दर्शनं वाच्यम्, सर्वासां लब्धीनां
साकारोपयोगप्राप्यत्वेन प्रथमं ज्ञानोत्पत्त्युपगमौचित्यात्, तथा च ज्ञानहेतुकमेव केवलिनि दर्शनमभ्युपगन्तव्यं
तच्चात्यन्तादर्शनव्याहतमिति भावः ॥

यदीति, मत्यवबोधे यद्यवग्रहमात्रं दर्शनं विशेषितं ज्ञानमिति मन्यसे एवं सति मतिज्ञानमेव दर्शनं प्राप्तं, न चैतद्युक्तम्, स द्विविधोऽष्टचतुर्भेदः [ तत्त्वार्थ अ० २, सू० ९ ] इति सूत्रविरोधात् ॥ ७७ ॥

तथा—

5 **एवं सेसिंदियदंसणम्मि नियमेण होइ ण य जुत्तं ।**
**अह तत्थ णाणमित्तं घेप्पइ चक्खुम्मि वि तहेव ॥ ७८ ॥**

एवं शेषेन्द्रियदर्शनेषु नियमेन भवति न च युक्तम् ।
अथ तत्र ज्ञानमात्रं गृह्यते चक्षुष्यपि तथैव ॥ छाया ॥

एवमिति, एवं शेषेन्द्रियदर्शनेष्वप्यवग्रह एव दर्शनमित्यभ्युपगमेन मतिज्ञानमेव
10 तदिति, न च तद्युक्तं पूर्वोक्तदोषानतिवृत्तेः । अथ तेषु श्रोत्रादिष्विन्द्रियेषु दर्शनमपि भवत् तज्ज्ञानमेव, मात्रशब्दस्य दर्शनव्यवच्छेदकत्वात्, अत एव तत्र श्रोत्रज्ञानं इत्यादिव्यपदेश उपलभ्यते, श्रोत्रदर्शनं घ्राणदर्शनमित्यादिव्यपदेशस्तु नागमे क्वचित् प्रसिद्धस्तर्हि चक्षुष्यपि तथैव गृह्यताम्, चक्षुर्ज्ञानमिति, न तु चक्षुर्दर्शनमिति । अथ तत्र दर्शनं इतरत्रापि तथैव गृह्यताम् ॥ ७८ ॥

15 नन्ववग्रहस्य मतिभेदत्वान्मतेश्च ज्ञानरूपत्वादवग्रहरूपस्य दर्शनस्याभाव एव भवेत्, उच्यते—

**णाणं अपुट्ठे अविसए य अत्थम्मि दंसणं होइ ।**
**मोत्तूण लिंगओजंअणागयाईयविसएसु ॥ ७९ ॥**

ज्ञानमस्पृष्टेऽविषये चार्थे अर्थे दर्शनं भवति ।
20 मुक्त्वा लिङ्गाद्यदनागातातीतविषयेषु ॥ छाया ॥

ज्ञानमिति, अस्पृष्टेऽर्थरूपे चक्षुषा य उदेति प्रत्ययः स चक्षुर्दर्शनं ज्ञानमेव सदिन्द्रियाणामविषये च परमाण्वादावर्थे मनसा ज्ञानमेव सदचक्षुर्दर्शनम्, मुक्त्वा मेघोन्नतिरूपाल्लिङ्गाद्भविष्यद्वृष्टौ नदीपूराद्वा व्यतीतवृष्टौ यज्ज्ञानं तस्यास्पृष्टाविषयार्थस्याप्यदर्शनत्वात् ॥ ७९ ॥

25 यद्यस्पृष्टाविषयार्थज्ञानं दर्शनमभिधीयते ततः—

**मणपज्जवणाणं दंसणं ति तेणेह होइ ण य जुत्तं ।**
**भण्णइ णाणं णोइंदियम्मि ण घडादओ जम्हा ॥ ८० ॥**

मनःपर्यवज्ञानं दर्शनमिति तेनेह भवति न च युक्तम् ।
भण्यते ज्ञानं नोइन्द्रिये न घटादयो यस्मात् ॥ छाया ॥

**मन इति,** एतेन लक्षणेन मनःपर्यवज्ञानमपि दर्शनं प्राप्तं परकीयमनोगतानां घटादीनामालम्ब्यानां तत्रासत्त्वेनास्पृष्टेऽविषये च घटादावर्थे तस्य भावात्, न चैतद्युक्तम्, आगमे तस्य दर्शनत्वेनापाठात्, उच्यते, नोइन्द्रिये मनोवर्गणाख्ये मनोविशेषे प्रवर्त्तमानं मनःपर्यायबोधरूपं ज्ञानमेव न दर्शनम्, यस्मादस्पृष्टा घटादयो नास्य विषया लिङ्गानुमेयत्वात्तेषाम् । ननु च परकीयमनोगतार्थाकारविकल्पस्योभयरूपत्वात् किमिति तद्ग्राहिणो मनःपर्यायावबोधस्य न दर्शनरूपता, न, मनोविकल्पस्य बाह्यार्थचिन्तनरूपस्य विकल्पात्मकत्वेन ज्ञानैकरूपत्वात् तद्ग्राहिणो मनःपर्यायज्ञानस्यापि तद्रूपतैव, घटादेस्तु तत्र परोक्षतैवेति दर्शनस्याभाव एव, मनोविकल्पाकारस्योभयरूपत्वेऽपि छाद्मस्थिकोपयोगस्य परिपूर्णवस्तुग्राहकत्वासम्भवाच्च न मनःपर्यायज्ञाने दर्शनोपयोगसम्भवः ॥ ८० ॥

किञ्च—

**मइसुयणाणणिमित्तो छउमत्थे होइ अत्थउवलंभो ।**
**एगयरम्मि वि तेसिं ण दंसणं दंसणं कत्तो ॥ ८१ ॥**

मतिश्रुतज्ञाननिमित्तः छद्मस्थे भवत्यर्थोपलम्भः ।
एकतरस्मिन्नपि तयोर्न दर्शनं दर्शनं कुतः ॥ छाया ॥

**मतीति,** आगमे छद्मस्थानां मतिश्रुतज्ञाननिमित्तोऽर्थोपलंभ उक्तः तयोरेकतरस्मिन्नपि न दर्शनं सम्भवति, न तावदवग्रहो दर्शनं तस्य ज्ञानात्मकत्वात्ततः कुतो दर्शनं ? नास्तीत्यर्थः, अस्पृष्टेऽविषये चार्थे ज्ञानमेव दर्शनं नान्यदिति प्रसक्तम् ॥ ८१ ॥

ननु श्रुतमस्पष्टे विषये किमिति दर्शनं न भवेदित्याह—

**जं पच्चक्खग्गहणं ण इन्ति सुयणाण सम्मिया अत्था ।**
**तम्हा दंसणसद्दो ण होइ सयले वि सुयणाणे ॥ ८२ ॥**

यस्मात् प्रत्यक्षग्रहणं न यन्ति श्रुतज्ञानसंमिता अर्थाः ।
तस्माद्दर्शनशब्दो न भवति सकलेऽपि श्रुतज्ञाने ॥ छाया ॥

**यस्मादिति,** यस्मात् श्रुतज्ञानप्रमिताः पदार्था उपयुक्ताध्ययनविषयास्तथाभूतार्थवाचक-

१ तथा च मनःपर्यवज्ञानस्य व्यञ्जनावग्रहाविषयार्थप्रत्यक्षत्वेऽपि बाह्यविषयव्यभिचारेण स्वग्राह्यतानवच्छेदकावच्छेदेन प्रत्यक्षत्वाभावान्न दर्शनत्वमिति भावः ॥

त्वात् श्रुतशब्दस्य प्रत्यक्षं न यान्ति अतो न श्रुतं चक्षुर्दर्शनसंज्ञं मानसचक्षुर्दर्शनं श्रुतं भविष्यतीत्येतदपि नास्ति, अवग्रहस्य मतित्वेन पूर्वमेव दर्शनतया निरस्तत्वात् ॥ ८२ ॥

नन्वेवमवधिदर्शनस्याप्यभावः स्यादित्याह—

**जं अपुट्ठा भावा ओहिण्णाणस्स होंति पच्चक्खा ।**
**तम्हा ओहिण्णाणे दंसणसद्दो वि उवउत्तो ॥ ८३ ॥**

यस्मादस्पृष्टा भावा अवधिज्ञानस्य भवन्ति प्रत्यक्षाः ।
तस्मादवधिज्ञाने दर्शनशब्दोऽप्युपयुक्तः ॥ छाया ॥

**यस्मादिति,** यस्मादस्पृष्टा भावा अण्वादयोऽवधिज्ञानस्य प्रत्यक्षा भवन्ति चक्षुर्दर्शनस्येव रूपसामान्यम, ततस्तत्रैव दर्शनशब्दोऽप्युपयुक्तः ॥ ८३ ॥

केवलावबोधस्तु ज्ञानदर्शनोपयोगद्वयात्मको ज्ञानमेव सद्दर्शनमप्युच्यत इत्याह—

**जं अप्पुट्ठे भावे जाणइ पासइ य केवली णियमा ।**
**तम्हा तं णाणं दंसणं च अविसेसओ सिद्धं ॥ ८४ ॥**

यस्मादस्पृष्टान भावान् जानाति पश्यति च केवली नियमात् ।
तस्मात्तज्ज्ञानं दर्शनञ्चाविशेषतः सिद्धम् ॥ छाया ॥

**यस्मादिति,** केवली यतोऽस्पृष्टान् भावानवश्यन्तया चक्षुष्मानिव पुरःस्थितं उभयप्राधान्येन पश्यति जानाति च, तस्मात्तत्केवलावबोधस्वरूपं ज्ञानमप्युच्यते दर्शनमपि, उभयाभिधाननिमित्तस्याविशेषात, न पुनर्ज्ञानमेव सदविशेषतोऽभेदतो दर्शनमिति सिद्धम्, यतो न ज्ञानमात्रमेव तत, नापि दर्शनमात्रं केवलं नाप्युभयाक्रमरूपं परस्परविविक्तम्, नापि क्रमस्वभावम, अपि तु ज्ञानदर्शनात्मकमेकं प्रमाणमन्यथोक्तवत्तदभावप्रसङ्गात् । छद्मस्थावस्थायां तु प्रमाणप्रमेययोः सामान्यविशेषात्मकत्वेऽप्यनपगतावरणस्यात्मनो दर्शनोपयोगसमये ज्ञानोपयोगस्यासम्भवादप्राप्यकारिनयनमनःप्रभवार्थावग्रहादिमतिज्ञानोपयोगप्राक्तनी अवस्था अस्पृष्टावभासिग्राह्यग्राहकत्वपरिणत्यवस्थाव्यवस्थितात्माप्रबोधरूपा चक्षुरचक्षुर्दर्शनव्यपदेशमासादयति । द्रव्यभावेन्द्रियालोकमतिज्ञानावरणकर्मक्षयोपशमादिसामग्रीप्रभवरूपादिविषयग्रहणपरिणतिश्चात्मनोऽवग्रहादिरूपा मतिज्ञानशब्दवाच्यतामश्नुते श्रुतज्ञानावरण-

95 २ अक्षजस्यैव व्यवहारतः प्रत्यक्षत्वात् तथा व्यञ्जनावग्रहाविषयार्थप्रत्यक्षत्वमेव दर्शनत्वम्, अचक्षुर्दर्शनमित्यत्र नञ पर्युदासार्थकत्वादप्राप्यकारित्वेन मनस एव चक्षुःसदृशत्वात्मानसदर्शनमेव ग्राह्यं न घ्राणादिदर्शनम् ॥

कर्मक्षयोपशमवाक्यश्रवणादिसामग्रीविशेषनिमित्तप्रादुर्भूतो वाक्यार्थग्रहणपरिणतिस्वभावो वाक्यश्रवणानिमित्तो वा आत्मनः श्रुतज्ञानमितिशब्दाभिधेयतामाप्नोति । रूपिद्रव्यग्रहणपरिणतिविशेषस्तु जीवस्य भवगुणप्रत्ययावधिज्ञानावरणकर्मक्षयोपशमप्रादुर्भूतो लोचनादिबाह्य निमित्तनिरपेक्षोऽवधिज्ञानमिति व्यपदिश्यते तज्ज्ञैः, अवधिदर्शनावरणकर्मक्षयोपशमप्रादुर्भूतस्तु स एव तद्द्रव्यसामान्यपर्यालोचनस्वभावोऽवधिदर्शनभाग्भवति, अर्धतृतीयद्वीप- 5 समुद्रान्तर्वर्त्तिसकलमनोविकल्पग्रहणपरिणतिर्मनःपर्यायज्ञानावरणकर्मक्षयोपशमादिविशिष्टसामग्रीसमुत्पादिता चक्षुरादिकरणनिरपेक्षस्यात्मनो मनःपर्यायज्ञानमिति वदन्ति विद्वांसः । छाद्मस्थिकोपयोगश्चात्मा स्वप्रदेशावरणक्षयोपशमद्वारेण प्रतिपद्यते न त्वनन्तज्ञेयज्ञानस्वभावस्यात्मन, एतदेव खण्डशः प्रतिपत्तिलक्षणं पारमार्थिकं रूपं सामान्यविशेषात्मकवस्तुविस्तरव्यापि, युगपत्परिच्छेदस्वभावद्वयात्मकैककेवलावबोधतादिवकरूपत्वात्तस्य । तत्र 10 तस्य स्वरूपं केवलज्ञानदर्शनावरणकर्मक्षयाविर्भूतं करणक्रमव्यवधानातिवर्त्तिसकललोकालोकविषयत्रिकालस्वभावपरिणामभेदानन्तपदार्थयुगपत्सामान्यविशेषसाक्षात्करणप्रवृत्तं केवलज्ञानं केवलदर्शनमिति च व्यपदिश्यते । तेनावग्रहरूप आभिनिबोधो दर्शनं स एव चेहादिरूपो विशेषग्राहको ज्ञानं तद्व्यतिरिक्तस्यापरस्य ग्राहकस्याभावात् तस्यैवैकस्य तथाग्रहणात् तथा व्यपदेशादुत्फणविफणावस्थासर्पद्रव्यवत् ततस्तयोरवस्थयोरव्यतिरेकात्, तस्य च तद्रूपत्वा- 15 देक एवाभिनिबोधो दर्शनं मतिज्ञानं चाभिधीयत इति सूत्रकृतोऽभिप्राय इति यत्कैश्चिद्व्याख्यानं तदसङ्गतं लक्ष्यते, आगमविरोधात्, युक्तिविरोधाच्च, न ह्येकान्ततोऽभेदे पूर्वमवग्रहो दर्शनं पश्चादीहादिकं ज्ञानं तयोश्च तत्रान्तर्भाव इति शक्यमभिधातुम्, कथञ्चिद्भेदनिबन्धनत्वादस्य, आत्मरूपतया तु तयोरभेदोऽभ्युपगम्यत एव । न चैकस्यैव मतिज्ञानस्योभयमध्यपातादुभयव्यपदेशः, अवग्रहस्य दर्शनत्वे अवग्रहादिधारणापर्यन्तं मतिज्ञानमित्यस्य व्याहतेः, 20 तस्य वाऽदर्शनत्वे अवग्रहमात्रं दर्शनमित्यस्य विरोधात्, आगमविरोधश्च तद्व्यतिरेकेण दर्शनानभ्युपगमे तदभ्युपगमे वा अष्टाविंशतिभेदमतिज्ञानव्यतिरिक्तदर्शनाभ्युपगमात् कुतो ज्ञानमेव दर्शनं छद्मस्थावस्थायाम्, केवल्यवस्थायान्तु क्षीणावरणस्यात्मनो नित्योपयुक्तत्वात् सदैव दर्शनावस्था, वर्त्तमानपरिणतेर्वस्तुनोऽवगमरूपायाः प्राक् तथाभूतानवबोधरूपत्वासम्भवात्, तथाभूतज्ञानविकलावस्थासम्भवे वा प्रागितरपुरुषाविशेषप्रसङ्गात् । ततो युगपज्ज्ञान- 25 दर्शनोपयोगद्वयात्मकैकोपयोगरूपः केवलावबोधोऽभ्युपगन्तव्य इति सूरेरभिप्रायः ॥ ८४ ॥

द्व्यात्मक एक एव केवलावबोध इति दर्शयन्नाह—

**साईअपज्जवसियं ति दो वि ते ससमयं हवइ एवं ।**
**परतित्थियवत्तव्वं च एगसमयंतरुप्पाओ ॥ ८५ ॥**

साद्यपर्यवसिते इति द्वे अपि ते स्वसमयो भवत्येवम् ।
परतीर्थिकवक्तव्यश्च एकसमयान्तरोत्पादः ॥ छाया ॥

सादीति, द्वे अपि ते ज्ञानदर्शने यदि युगपज्ञाना न भवतस्तदा स्वसिद्धान्तः साद्यपर्यवसिते इति घटते, यस्तु तयोरेकसमयान्तरोत्पादः यदा जानाति तदा न पश्यतीत्येवमभिधीयते स परतीर्थिकशास्त्रं नार्हद्वचनं नयाभिप्रायेण प्रवृत्तत्वादिति ॥ ८५ ॥

एवम्भूतं वस्तुतत्त्वं श्रद्दधानः सम्यग्ज्ञानवानेव पुरुषः सम्यग्दृष्टिरित्याह—

**एवं जिणपण्णत्ते सद्दहमाणस्स भावओ भावे ।**
**पुरिसस्साभिणिबोहे दंसणसद्दो हवइ जुत्तो ॥ ८६ ॥**

एवं जिनप्रज्ञप्तान् श्रद्दधानस्य भावतो भावान् ।
पुरुषस्याभिनिबोधे दर्शनशब्दो भवति युक्तः ॥ छाया ॥

एवमिति, एवमनन्तरोक्तविधिना जिनप्रज्ञप्तान् भावान् श्रद्दधानस्य पुरुषस्य यदाभिनिबोधिकं ज्ञानं तदेव सम्यग्दर्शनं विशिष्टावबोधरूपाया रुचेः सम्यग्दर्शनशब्दवाच्यत्वादिति भावः ॥ ८६ ॥

ननु यदि सम्यग्ज्ञाने सम्यग्दर्शनं नियमेन, दर्शनेऽपि रुचिलक्षणे सम्यग्ज्ञानं किमिति न स्यात्, न, एकान्तरुचावपि सम्यग्ज्ञानप्रसक्तेरित्याह—

**सम्मण्णाणे णियमेण दंसणं दंसणे उ भयणिज्जं ।**
**सम्मण्णाणं च इमं ति अत्थओ होइ उववण्णं ॥ ८७ ॥**

सम्यग्ज्ञाने नियमेन दर्शनं दर्शने तु भजनीयम् ।
सम्यग्ज्ञानञ्चेदमित्यर्थतो भवति उपपन्नम् ॥ छाया ॥

सम्यग्ज्ञान इति, सम्यग्ज्ञाने नियमेन सम्यग्दर्शनम्, सम्यग्दर्शने तु विकल्पनीयं सम्यग्ज्ञानम्, एकान्तरुचौ न सम्भवति अनेकान्तरुचौ तु सम्यग्दर्शने समस्ति । यतश्चैवमतः सम्यग्ज्ञानञ्चेदं सम्यग्दर्शनञ्च विशिष्टरुचिस्वभावमवबोधरूपमर्थतः सामर्थ्यादुपपन्नं भवति ॥ ८७ ॥

अत्र साद्यपर्यवसितं केवलज्ञानं सूत्रे प्रदर्शितम्, अनुमानञ्च तथाभूतस्य तस्य प्रतिपादकं सम्भवति, तथाहि घातिकर्मचतुष्टयप्रक्षयाविर्भूतत्वात् केवलं सादि, न च तथोत्पन्नस्य पश्चात्तस्यावरणमस्ति, अतोऽनन्तमिति न पुनरुत्पद्यते विनाशपूर्वकत्वादुत्पादस्य, न हि घटस्याविनाशे कपालानामुत्पादो दृष्ट इत्यनुत्पादव्ययात्मकं केवलमित्यभ्युपगमवतो निराकर्तुमाह—

**केवलणाणं साई अपज्जवसियं ति दाइयं सुत्ते ।**
**तेत्तियमित्तोत्तूणा केइ विसेसं ण इच्छंति ॥ ८८ ॥**

केवलज्ञानं साद्यपर्यवसितमिति दर्शितं सूत्रे ।
तावन्मात्रे दृप्ताः केचन विशेषं नेच्छन्ति ॥ छाया ॥

**केवलेति,** केवलज्ञानं साद्यपर्यवसितमिति सूत्रे दर्शितमित्येतावन्मात्रेण गर्विताः केचन 5
विशेषं पर्यायं पर्यवसितत्वस्वभावं नेच्छन्ति ते तु न सम्यग्वादिनः ॥ ८८ ॥

यतः—

**जे संघयणाईया भवत्थकेवलिविसेसपज्जाया ।**
**ते सिज्झमाणसमये ण होंति विगयं तओ होइ ॥ ८९ ॥**

ये संहननादयो भवस्थकेवलिविशेषपर्यायाः । 10
ते सिद्ध्यत्समये न भवन्ति विगतं ततो भवति ॥ छाया ॥

**य इति,** वज्रर्षभनाराचसंहननादयो ये भवस्थस्य केवलिन आत्मपुद्गलप्रदेशयोरन्योन्यानुवेधाद्व्यवस्थितेः विशेषपर्यायास्ते सिद्ध्यत्समयेऽपगच्छन्ति, तदपगमे तदव्यतिरिक्तस्य केवलज्ञानस्याप्यात्मद्रव्यद्वारेण विगमात्, अन्यथाऽवस्थातुरवस्थानामात्यन्तिकभेदप्रसक्तेः केवलज्ञानं ततो विगतं भवतीति सूत्रकृतोऽभिप्रायः ॥ ८९ ॥ 15

विनाशवत् केवलज्ञानस्योत्पादोऽपि सिद्ध्यत्समय इत्याह—

**सिद्धत्तणेण य पुणो उप्पण्णो एस अत्थपज्जाओ ।**
**केवलभावं तु पडुच्च केवलं दाइयं सुत्ते ॥ ९० ॥**

सिद्धत्वेन च पुनरुत्पन्न एषोऽर्थपर्यायः ।
केवलभावं तु प्रतीत्य केवलं दर्शितं सूत्रे ॥ छाया ॥ 20

**सिद्धत्वेनेति,** अशेषकर्मविगमस्वरूपेण सिद्धत्वेन पुनः पूर्ववत् केवलज्ञानाख्य एषोऽर्थपर्याय उत्पन्नः, वस्तुन उत्पादविगमध्रौव्यात्मकत्वात्, अन्यथा वस्तुत्वहानेः । सूत्रे यच्चापर्यवसितत्वं केवलस्य दर्शितं तत्तस्य केवलभावं सत्तामात्रमाश्रित्य, तस्य कथञ्चिदात्मान्यतिरिक्तत्वात्, आत्मनश्च द्रव्यरूपतया नित्यत्वात् ॥ ९० ॥

ननु केवलज्ञानस्यात्मरूपतामाश्रित्य तस्योत्पादविनाशाभ्यां केवलस्य तौ भवतो न 25
चात्मनः केवलरूपतेति कुतस्तद्वारेण तस्य ताविल्याह—

**जीवो अणाइणिहणो केवलणाणं तु साइयमणंतं ।**
**इअ थोरम्मि विसेसे कह जीवो केवलं होइ ॥ ९१ ॥**

जीवोऽनादिनिधनः केवलज्ञानन्तु सादिकमनन्तम् ।
इति स्थूरे विशेषे कथं जीवः केवलं भवेत् ॥ छाया ॥

जीव इति, जीवोऽनादिनिधनः केवलज्ञानन्तु साद्यपर्यवसितमिति स्थूरे विरुद्धधर्माध्यासलक्षणे विशेषे छायातपवदत्यन्तभेदान् कथं जीवः केवलं भवेत्, जीवस्यैव तावत् 5 केवलरूपता असङ्गता, दूरतः संहननादेरिति भावः ॥ ९१ ॥

**तम्हा अण्णो जीवो अण्णे णाणाइपज्जवा तस्स ।**
**उवसमियाईलक्खणविसेसओ केइ इच्छंति ॥ ९२ ॥**

तस्मादन्यो जीवोऽन्ये ज्ञानादिपर्यवाः तस्य ।
औपशमिकादिलक्षणविशेषतः केचिदिच्छन्ति ॥ छाया ॥

10 तस्मादिति, विरुद्धधर्माध्यासतोऽन्यो जीवो ज्ञानादिपर्यायेभ्यः, अन्ये च ततो ज्ञानादिपर्याया लक्षणभेदाच्च तयोर्भेदः, तथाहि ज्ञानदर्शनयोः क्षायिकः क्षायोपशमिको वा भावो लक्षणम्, जीवस्य तु पारिणामिकादिर्भावो लक्षणमिति केचिद्व्याख्यातारः प्रतिपन्नाः ॥९२॥

एतन्निषेधायाह—

**अह पुण पुव्वपयुत्तो अत्थो एगन्तपक्खपडिसेहे ।**
15 **तहवि उयाहरणमिणं ति हेउपडिजोअणं वोच्छं ॥ ९३ ॥**

अथ पुनः पूर्वप्रयुक्तोऽर्थ एकान्तपक्षप्रतिषेधः ।
तथापि उदाहरणमिदमिति हेतुप्रतियोजनं वक्ष्ये ॥ छाया ॥

अथेति, यद्यप्ययं पूर्वमेव द्रव्यपर्याययोर्भेदाभेदैकान्तपक्षप्रतिषेधलक्षणोऽर्थः प्रयुक्तः 'उत्पादस्थितिभङ्गा' (गा. १२) इत्यादिनाऽनेकान्तव्यवस्थापनात्, तथापि केवलज्ञानेऽनेका-20 न्तात्मकैकरूपत्वसाधनस्य हेतोः साध्येनानुगमप्रदर्शकप्रमाणविषयमुदाहरणमिदं वक्ष्ये ॥९३॥

तदेवाह—

**जह कोइ सट्ठिवरिसो तीसइवरिसो णराहिवो जाओ ।**
**उभयत्थ जायसद्दो वरिसविभागं विसेसेइ ॥ ९४ ॥**

यथा कश्चित् षष्टिवर्षः त्रिंशद्वर्षो नराधिपो जातः ।
25 उभयत्र जातशब्दो वर्षविभागं विशेषयति ॥ छाया ॥

यथेति, यथा कश्चित् पुरुषः षष्टिवर्षः सर्वायुष्कमाश्रित्य त्रिंशद्वर्षः सन्नराधिपो जातः, उभयत्र मनुष्ये राजनि च जातशब्दोऽयं प्रयुक्तो वर्षविभागमेवास्य दर्शयति, षष्टिवर्षायु-

त्मकस्य पुरुषसामान्यस्य नराधिपपर्यायोऽयं जातः, अभेदाध्यासितभेदात्मकत्वात् पर्यायस्य, नराधिपपर्यायात्मकत्वेन चायं पुरुषः पुनर्जातो भेदानुषक्ताभेदात्मकत्वात् सामान्यस्य, एकान्तभेदेऽभेदे वा तयोरभावप्रसङ्गात्, निराश्रयस्य पर्यायप्रादुर्भावस्य तद्विकलस्य वा सामान्यस्यासम्भवात् ॥ ९४ ॥

दृष्टान्तं प्रसाध्य दार्ष्टान्तिकयोजनायाह— 5

**एवं जीवद्दव्वं अणाइणिहणमविसेसियं जम्हा ।**
**रायसरिसो उ केवलिपज्जाओ तस्स सविसेसो ॥ ९५ ॥**

*एवं जीवद्रव्यमनादिनिधनमविशेषितं यस्मात् ।*
*राजसदृशस्तु केवलिपर्यायस्तस्य सविशेषः ॥ छाया ॥*

**एवमिति,** उक्तदृष्टान्तत्रजीवद्रव्यमनादिनिधनमविशेषितभव्यजीवरूपं सामान्यं यतो 10 राजत्वपर्यायसदृशः केवलित्वपर्यायस्तथाभूतजीवद्रव्यस्य विशेषः, तस्मात्तेन रूपेण जीवद्रव्यसामान्यस्यापि कथञ्चिदुत्पत्तेः, सामान्यमप्युत्पन्नं प्राक्तनरूपस्य विगमात् सामान्यमपि तद् भिन्नं कथञ्चिद्विगतम्, पूर्वोत्तरपिण्डघटपर्यायपरित्यागोपादानप्रवृत्तैकमृद्द्रव्यवत्, केवलजीवरूपतया वाऽनादिनिधनत्वान्नित्यं द्रव्यमभ्युपगन्तव्यम्, प्रतिक्षणभाविपर्यायानुस्यूतस्य मृद्द्रव्यस्याध्यक्षतोऽनुभूतेर्न दृष्टान्तासिद्धिः, तस्मात् केवलं कथञ्चित्सादि कथञ्चिदनादि, कथ- 15 ञ्चित्सपर्यवसानं कथञ्चिदपर्यवसानं सत्त्वादात्मवदिति स्थितम् ॥ ९५ ॥

न द्रव्यं पर्यायेभ्यो भिन्नमेवेत्याह—

**जीवो अणाइनिहणो जीवत्ति य णियमओ ण वत्तव्वो ।**
**जं पुरिसाउयजीवो देवाउयजीवियविसिट्ठो ॥ ९६ ॥** 20

*जीवोऽनादिनिधनो जीव इति च नियमतो न वक्तव्यम् ।*
*यत् पुरुषायुष्कजीवो देवायुष्कजीवितविशिष्टः ॥ छाया ॥*

**जीव इति,** जीवोऽनादिनिधनः, जीव एव विशेषविकल इति नियमतो न वक्तव्यम्, यतः पुरुषायुष्कजीवो देवायुष्कजीवाद्विशिष्टः, जीव एवेति त्वभेदे पुरुषजीव इत्यादि भेदो न भवेत्, केवलस्य सामान्यस्य विशेषप्रत्ययाभिधानानिबन्धनत्वात्, निर्निमित्तस्यापि 25 विशेषप्रत्ययाभिधानस्य सम्भवे सामान्यप्रत्ययाभिधानस्यापि निर्निमित्तस्यैव भावात् तन्निबन्धनसामान्याभ्युपगमोऽप्ययुक्तः स्यादिति सर्वाभावः । न च विशेषप्रत्ययस्य बाधारहितस्यापि मिथ्यात्वम्, अन्यत्रापि तत्प्रसक्तेरिति ॥ ९६ ॥

केवलज्ञानस्य कथञ्चिदात्माव्यतिरेकादात्मनो वा केवलज्ञानाव्यतिरेकात् कथञ्चिदेकत्वं तयोरित्याह—

**संखेज्जमसंखेज्जं अणंतकप्पं च केवलं णाणं ।**
**तह रागदोसमोहा अण्णे वि य जीवपज्जाया ॥ १७ ॥**

संख्येयमसंख्येयमनन्तकल्पञ्च केवलं ज्ञानम् ।
तथा रागद्वेषमोहा अन्येऽपि च जीवपर्यायाः ॥ छाया ॥

संख्येयमिति, आत्मन एकत्वात् कथञ्चित्तदव्यतिरिक्तं केवलमप्येकं केवलस्य वा ज्ञानदर्शनरूपतया द्विरूपत्वात्तदव्यतिरिक्त आत्मापि द्विरूपः, असंख्येयप्रदेशात्मकत्वादात्मनः केवलमप्यसंख्येयम्, अनन्तार्थविषयतया केवलस्यानन्तत्वादात्माऽप्यनन्तः । एवं रागद्वेषमोहा अन्येऽपि जीवपर्यायाश्छद्मस्थावस्थाभाविनः संख्येयासंख्येयानन्तप्रकाराः, आलम्ब्यभेदात्तदात्मकत्वात्संसार्यात्मापि तद्वत्तथैव स्यात्, रागादीनामेकाद्यनन्तभेदत्वमात्मपर्यायत्वात्, यो ह्यात्मपर्यायः स एकाद्यनन्तभेदो यथा केवलावबोधस्तथा च रागादय इति स्थित्युत्पत्तितिरोधात्मकत्वमर्हत्यपि सिद्धमिति ॥ १७ ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजय-
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
लब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य सर्वज्ञोप-
योगविचारात्मकमष्टाविंशं सोपानम् ॥



## सामान्यविशेषात्मकत्वस्थापनम् ।

अथ ज्ञानदर्शनयोरिव सामान्यविशेषयोरपि परस्पराविनिर्भागरूपतामाह—

**सामण्णम्मि विसेसो विसेसपक्खे य वयणविणिवेसो ।**
**दव्वपरिणाममण्णं दाएइ तयं च णियमेइ ॥ १८ ॥**

सामान्ये विशेषो विशेषपक्षे च वचनविनिवेशः ।
द्रव्यपरिणाममन्यं दर्शयति तकं च नियमयति ॥ छाया ॥

सामान्य इति, अस्तीत्येतस्मिन् सामान्ये द्रव्यमित्ययं विशेषः, तथा विशेषपक्षे च घटादौ नामनामवतोरभेदाद्वचनस्य सत्तासामान्यस्य विनिवेशः प्रदर्शनम् । सत्ताख्यस्य द्रव्यस्य पृथिव्याख्यं परिणामं सत्तारूपापरित्यागेनैव पृथगन्यं दर्शयति, विशेषाभावे सामा-

न्मस्याप्यभावप्रसक्तेः । यद्यदात्मकं तत्तदभावे न भवति, घटाद्यन्यतमविशेषाभावे मृद्वत्, विशेषात्मकञ्च सामान्यमिति तदभावे तस्याप्यभावः स्यात् । तथा तञ्च विशेषं द्वितीयपक्षे सामान्यात्मनि नियमयति, विशेषः सामान्यात्मक एव, तदभावे तस्याप्यभावप्रसङ्गात्, अतः सामान्यात्मकस्य विशेषस्य सामान्यभावे घटादेरिव मृदभावे न युक्तो भावः ॥ ५८ ॥

न चैकान्तेन सामान्यं विशेषादन्यत्, न वा विशेषास्ततोऽन्ये नियमेन, प्रमाण- 5 विरोधादित्याह—

**एगंतणिव्विसेसं एगंतविसेसियं च वयमाणो ।**
**दव्वस्स पज्जवे पज्जवाहि दवियं णियत्तेइ ॥ ९९ ॥**

एकान्तनिर्विशेषं एकान्तविशेषञ्च वदन् ।
द्रव्यस्य पर्यायान् पर्यायेभ्यो द्रव्यं निवर्त्तयति ॥ छाया ॥ 10

**एकान्तेति,** एकान्तेन विशेपविकलं सामान्यं वदन् द्रव्यस्य पर्यायान् ऋजुत्वादीन् निवर्त्तयति, ऋजुवक्रतापर्यायात्मकाङ्गुल्यादिद्रव्यस्याध्यक्षादिप्रमाणप्रतीयमानस्य विनिवृत्ति-प्रसक्तेरध्यक्षादिप्रमाणबाधापत्तिः, तथा एकान्ततः सामान्यरहितं विशेषं वदन् तेभ्यो द्रव्यं निवर्त्तयति, अङ्गुल्यादिद्रव्याव्यतिरिक्तर्जुवक्रतादिविशेषस्य प्रत्यक्षावगतस्यैवंमति निवृत्ति-प्रसङ्गः । न चाबाधितप्रमाणविषयीकृतस्य तथाभूतस्य तस्य निवृत्तिर्युक्ता, सर्वभावनिवृत्ति- 15 प्रसक्तेः, अन्यभावाभ्युपगमस्यापि तन्निबन्धनत्वात्, तत्प्रतीतस्याप्यभावे सर्वव्यवहाराभाव इति ॥ ९९ ॥

सामान्यविशेषानेकान्तात्मकवस्तुप्रतिपादकं वचनमाप्तस्य, इतरदितरस्येत्याह—

**पच्चुप्पन्नं भावं विगयभविस्सेहिं जं समण्णेइ ।**
**एयं पडुच्चवयणं दव्वंतरणिस्सियं जं च ॥ १०० ॥** 20

प्रत्युत्पन्नं भावं विगतभविष्यद्भ्यां यत् समन्वेति ।
एतत् प्रतीत्यवचनं द्रव्यान्तरनिस्सृतं यच्च ॥ छाया ॥

---

१. तथा च प्रयोग., अर्थः सामान्यविशेषात्मा, अबाध्यमानानुवृत्तव्यावृत्तप्रत्ययगोचरान्यथानुपपत्ते, घटेषु घटो घट इत्यनुवृत्तप्रत्ययस्य, ताम्रो मार्तिक सौवर्ण, पटादिर्वा न भवतीति व्यावृत्तप्रत्ययस्य चाबाध्यमानस्य प्रतिप्राणि प्रतीतत्वान्नात्र साधनमसिद्धम्, न चायं प्रत्ययो भ्रान्त., सविकल्पकत्वेन भ्रान्तत्वे निर्विकल्पकत्वेन निर्विकल्पकस्यापि भ्रान्तत्वापत्त्याऽभ्रान्त. कोऽपि प्रत्ययो न भवेत्, अर्थसामर्थ्यजन्यत्वस्य निर्विकल्पकाभ्रान्ततायां नियामकत्वं तु न सम्भवति, अस्योत्तरस्य सविकल्पकेऽपि तुल्यत्वादिति, विरुद्धानैकान्तिकदोषयोस्तु शंकैव नास्तीति ॥

प्रत्युत्पन्नमिति, प्रत्युत्पन्नं भावं वस्तुनो वर्त्तमानपरिणामं विगतभविष्यद्भ्यां पर्याया-भ्यां यत्समानरूपतया नयति--प्रतिपादयति वचः तत्प्रतीत्यवचनं समीक्षितार्थवचनं सर्वज्ञ-वचनमित्यर्थः अन्यज्ञानासत्वचनम्। ननु वर्त्तमानपर्यायो यदि पूर्वमपि स्यात् तर्हि कारक-व्यापारो व्यर्थः, क्रियागुणव्यपदेशानाञ्च प्रागप्युपलम्भः स्यात्, तथोत्तरकालमपि यदि

5 भवेत्तदा विनाशहेतुव्यापारो व्यर्थः उपलब्ध्यादिश्च भवेत्, तस्माद्यदैवोपलम्भादिकार्यकृत् तत्तदैव, न प्राक् न वा पश्चात्, अर्थक्रियालक्षणसत्त्वविरहे च वस्तुनोऽभावादिति, मैवम्, प्रागसत्त्वे तस्यादलस्योत्पत्त्ययोगात्, न चात्मादिद्रव्यं विज्ञानादिपर्यायोत्पत्तौ दलम्, तस्य निष्पन्नत्वात्, न च निष्पन्नस्यैव पुनर्निष्पत्तिः, अनवस्थाप्रसङ्गात्। न च तत्र विद्यमान एव ज्ञानादिकार्योत्पत्तिः, तत्रेति सम्बन्धाभावतो व्यपदेशाभावप्रसङ्गात्। समवायसम्बन्ध-

10 कल्पनायां तस्य सर्वत्राविशेषात्तद्वदाकाशादावपि तत्स्यात्। अथात्मादिद्रव्यमेव तेनाका-रेणोत्पद्यते इति नादलोत्पत्तिः कार्यस्य, सत्यम्, भवत्वेवमुत्पत्तिः, किन्त्वात्मद्रव्यं पूर्वमप्या-सीत्, पश्चादपि भविष्यति, तत्सर्वावस्थासु तादात्म्यप्रतीतेः, अन्यथा पूर्वोत्तरावस्थयोः तत्प्रतिभासो न स्यात्, न चायमेकत्वप्रतिभासो भ्रान्तः, बाधकाभावे भ्रान्त्यसिद्धेः, न चार्थक्रियाविरोधो नित्यत्वे बाधकः, अनित्यत्व एव तस्य बाधकत्वेन प्रतिपादनात्। उत्पाद-

15 विनाशयोरपि तत्र प्रतिपत्तौ न वैकान्ततो नित्यत्वमेव, परिणामनित्यतया तस्य नित्यत्वात्, अन्यथा खरविषाणवत्तस्याभावप्रसङ्गात्। न चैवं तस्य विकारित्वप्रसङ्गो दोषाय, अभीष्ट-त्वात्। न च नित्यत्वविरोधः, तथैव तत्त्वप्रतीतेः, न चेयं भ्रान्तिः, बाधकाभावात्। अथ ज्ञानपर्यायादात्मनो व्यतिरेके भेदेनोपलम्भः स्यात्, अव्यतिरेके पर्यायमात्रं द्रव्य-मात्रं वा भवेत्, उभयपक्षश्च विरुद्धः, अनुभयपक्षस्तु अन्योऽन्यव्यवच्छेदरूपाणामेकनिषेधे-

20 नापरविधानादसङ्गतः, मैवम्, व्यतिरेकाव्यतिरेकपक्षस्याभ्युपगमात्। न च व्यतिरेक पक्षोक्तस्तत्पृथगुपलब्धिप्रसङ्गो दोषः, एकज्ञानव्यतिरेकेण ज्ञानान्तरेऽपि तस्य प्रतीतेर्व्यति-रेकोपलम्भस्य सद्भावात्, अव्यतिरेकोऽपि ज्ञानात्मकत्वेन तस्य प्रतीतेः। न च व्यतिरे-काव्यतिरेकयोरन्योऽन्यपरिहारेणावस्थानाद्विरोधः, अबाधितप्रमाणविषयीकृते वस्तुतत्त्वे विरोधासम्भवात्, अन्यथा संशयज्ञानस्यैकानेकरूपस्य वैशेषिकेण, ग्राह्यग्राहकसंवित्तिरूप-

25 स्य बुद्ध्यात्मनश्चैकानेकस्वभावस्य सौगतेन कथं प्रतिपादनमुपपत्तिमद्भवेद्यदि प्रमाणप्रति-पन्ने वस्तुतत्त्वे विरोधः समुच्छेत, एवञ्च वर्त्तमानपर्यायस्यान्वयिद्रव्यद्वारेण त्रिकाला-स्तित्वप्रतिपादकं प्रतीत्यवचनमिति सिद्धम्। परमाण्वारम्भकद्रव्यात् कार्यद्रव्यं द्व्यणु-काद्रि द्रव्यान्तरं वैशेषिकाभिप्रायतः, तेन निःसृतं सम्बद्धं कारणं परमाण्वादि यत्

१ असंबद्धस्य।

प्रतिपादयति तदपि प्रतीत्यवचनम् । तथाहि द्व्यणुकरूपतया परमाणवः प्रादुर्भूता द्व्यणुकतया प्रच्युताः परमाणुरूपतया अविचलितस्वरूपा अभ्युपगन्तव्याः, अन्यथा तद्रूपतयानुत्पादे प्राक्तनरूपताऽपगमो न स्यात्, तदनपगमे च नोत्तररूपतयोत्पत्तिस्तदवस्थावत् । परमाणुरूपतयाऽपि विनाशोत्पत्त्यभ्युपगमे पूर्वोत्तरावस्थयोर्निराधारविगमप्रादुर्भावप्रसक्तिः । न च पूर्वोत्तरावस्थाविनाशप्रादुर्भावाभ्यां न कारणविनाशप्रादुर्भावाविति वक्तव्यम्, 5 ततस्तस्यैकान्ततो हिमवद्विन्ध्ययोरिव भेदप्रसक्तेः । न च कारणाश्रितस्य कार्यद्रव्यस्योत्पत्तेर्नायं दोषः, तयोर्युतसिद्धितः कुण्डबदरवत् पृथगुपलब्धिप्रसङ्गात्, अयुतसिद्धयङ्गीकारे कार्योत्पत्तौ कारणस्याप्युत्पत्तिः स्यात्, अन्यथाऽयुतसिद्ध्यसम्भवात्, न चायुताश्रयसमवायित्वमयुतसिद्धिः, समवायनिषेधात् । न चायुतसिद्धित एव समवायसिद्धिः, अन्योन्याश्रयात्, न च समवायस्याध्यक्षतः सिद्धिः, तन्त्वात्मकपटप्रतिभासमन्तरेणापरसमवायस्याध्यक्षप्रतिपत्तावप्रतिपत्तेः । तस्मात्तथाभूतवस्तुप्रतिपादकमेवाऽऽप्तवचनम्, एकान्तप्रतिपादकन्तु नाप्तवचनमिति ॥ १०० ॥ 10

ननु प्रत्युत्पन्नपर्यायस्य स्वकालवदतीतानागतकालयोः सत्त्वेऽतीतानागतकालयोर्वर्त्तमानकालतापत्तिः, अन्यथा तद्रूपतया तयोस्तत्सत्त्वासम्भवात्, त्रैकाल्यायोगात् तस्य; तद्विशिष्टतानुपपत्तेस्तथाभूतार्थप्रतिपादकं वचनमप्रतीत्यवचनमेवेत्यत्राह— 15

**दव्वं जहा परिणयं तहेव अत्थित्ति तम्मि समयम्मि ।**
**विगयभविस्सेहिं उ पज्जएहिं भयणा विभयणा व ॥ १ ॥**

द्रव्यं यथा परिणतं तथैवास्तीति तस्मिन् समये ।
विगतभविष्यद्भिस्तु पर्यायैर्भजना विभजना वा ॥ छाया ॥

द्रव्यमिति, चेतनाचेतनं द्रव्यं तदाकारार्थग्रहणरूपतया घटादिरूपतया वा यथा परिणतं 20 वर्त्तमानसमये तत्तथैवास्ति विगतभविष्यद्भिस्तु पर्यायैर्भजना कथञ्चित्तैस्तस्यैकत्वम्, विभजना—कथञ्चिन्नानात्वं वा शब्दस्य कथञ्चिदर्थत्वात् । ततः प्रत्युत्पन्नपर्यायस्य विगतभविष्यद्भ्यां न सर्वथैकत्वमिति कथं तत्प्रतिपादकवचनस्याप्रतीत्यवचनतेति भावः ॥ १ ॥

ननु घटादेरर्थस्य कैः पर्यायैरस्तित्वमनस्तित्वं वेत्यत्राह—

**परपज्जवेहिं असरिसगमेहिं णियमेण णिच्चमवि नत्थि ।** 25
**सरिसेहिं पि वंजणओ अत्थि ण पुणत्थपज्जाये ॥ २ ॥**

परपर्यायैरसदृशगमैर्नियमेन नित्यमपि नास्ति ।
सदृशैरपि व्यञ्जनतोऽस्ति न पुनरर्थपर्यायैः ॥ छाया ॥

परेति, वर्तमानपर्यायव्यतिरिक्तभूतभविष्यत्पर्यायैः विजातीयज्ञानमात्रैः नियमेन सदा नास्ति तद्द्रव्यम्, तैरपि तदा तस्य सद्भावेऽवस्थासंकीर्णताप्रसक्तेः, सामान्यधर्मैः सद्द्रव्यपृथिवीत्वादिभिर्विशेषात्मकैश्च शब्दप्रतिपाद्यैरस्ति, सामान्यविशेषात्मकस्य शब्दवाच्यत्वात्, सामान्यमात्रस्य तद्वाच्यत्वे शब्दादप्रवृत्तिप्रसक्तेरर्थक्रियासमर्थस्य तेनानुक्तत्वात्, विशेष-
5 मन्तरेण सामान्यासम्भवात् सामान्यप्रतिपादनद्वारेण लक्षणया विशेषप्रतिपादनमपि शब्दान्न सम्भवति, क्रमप्रतिपत्तेरसंवेदनात्, विशेषाणान्त्वानन्त्यात् संकेतासम्भवतो न शब्दवाच्यत्वम्, परस्परव्यावृत्तसामान्यविशेषयोरप्यवाच्यत्वम्, उभयदोषप्रसङ्गात् । तत उभयात्मकं वस्तु गुणप्रधानभावेन शब्देनाभिधीयतेऽर्थः सदृशैर्व्यञ्जनतोऽस्तीत्युपपन्नम्, ऋजुसूत्राभिमतार्थपर्यायेण तन्नैवास्ति, अन्योऽन्यव्यावृत्तवस्तुस्वलक्षणग्राहकत्वात्तस्य ॥ २ ॥

10 ननु प्रत्युत्पन्नपर्यायेण भावस्यास्तित्वनियमे एकान्तवादापत्तिरित्याशङ्क्याह—

**पच्चुप्पण्णम्मि वि पज्जयम्मि भयणागइं पडइ दव्वं ।**
**जं एगगुणाईया अणंतकप्पा गमविसेसा ॥ ३ ॥**

प्रत्युत्पन्नेऽपि पर्याये भजनागतिं पतति द्रव्यम् ।
यदेकगुणादयोऽनन्तकल्पा गमविशेषाः ॥ छाया ॥

15 प्रत्युत्पन्नेऽपीति, वर्त्तमानेऽपि परिणामे स्वपररूपतया सदसदात्मकरूपतां अधोमध्योर्ध्वादिरूपेण च भेदाभेदात्मकतां द्रव्यं भजनागतिमासादयति, यत एकगुणकृष्णत्वादयोऽनन्तप्रकारास्तत्र गमविशेषाः, तेषां च मध्ये केनचिद्गुणविशेषेण युक्तं तत्, तथाहि कृष्णं द्रव्यं तद्द्रव्यान्तरेण तुल्यमधिकमूनं वा भवेत् प्रकारान्तराभावात्, प्रथमपक्षे सर्वथा तुल्यत्वे तदेकत्वापत्तिः उत्तरपक्षयोः सङ्ख्येयादिभागगुणवृद्धिहानिभ्यां षट्स्थानकप्रतिपत्तिरवश्य-
20 म्भाविनी । ननु पुद्गलद्रव्यस्यापरपुद्गलद्रव्यापेक्षयाऽनेकान्तरूपता भवतु, प्रत्युत्पन्ने त्वात्मद्रव्यपर्याये कथमनेकान्तरूपता, न, आत्मपर्यायस्यापि ज्ञानादेस्तत्ग्राह्यार्थापेक्षयाऽनेकान्तरूपत्वे पुद्गलवदविरोधात्, द्रव्यकषाययोगोपयोगज्ञानदर्शनचारित्रवीर्यप्रभेदात्मकत्वादात्मनोऽनेकान्तरूपताया आगमे प्रतिपादितत्वाच्च ॥ ३ ॥

इतश्चानेकान्तात्मकताऽऽत्मन इत्याह—

25 **कोवं उप्पायंतो पुरिसो जीवस्स कारओ होइ ।**
**तत्तो विभएयव्वो परम्मि सयमेव भइयव्वो ॥ ४ ॥**

कोपमुपनयन् पुरुषो जीवस्य कारको भवति ।
ततो विभजनीयः परस्मिन् स्वयमेव भजनीयः ॥ छाया ॥

कोपमिति, पुरुषः कोपपरिणतिमुपनयन् जीवस्य परभवप्रादुर्भावनिर्वर्तको भवति, तन्निमित्तकर्मोपादानात् । कोपपरिणाममापद्यमानः पुरुषः परभवजीवाद्भिन्नो व्यवस्थापनीयः, मृत्पिण्डघटवत्कार्यकारणयोः कथञ्चिद्भेदात्, अन्यथा कार्यकारणभावो न स्यात् । न चासौ ततो भिन्न एव परभवे स्वयमेव पुरुषो भजनीयः, आत्मरूपतयाऽभेदेन व्यवस्थाप्यत इति भावः, घटाद्याकारपरिणतमृद्द्रव्यवत् कथञ्चिदभिन्न इत्यनेकान्तः ॥ ४ ॥ 5

द्रव्यं गुणादिभ्योऽनन्यत्, तेऽपि द्रव्यादनन्य एवेत्यनेकान्तानभ्युपगमवादिन आहुः—

**रूवरसगंधफासा असमाणग्गहणलक्खणा जम्हा ।**
**तम्हा दव्वाणुगया गुण त्ति ते केइ इच्छंति ॥ ५ ॥**

रूपरसगन्धस्पर्शा असमानग्रहणलक्षणा यस्मात् ।
तस्माद् द्रव्यानुगता गुणा इति ते केचिदिच्छन्ति ॥ छाया ॥ 10

रूपेति, यस्माद् रूपादयो भिन्नप्रमाणग्राह्या भिन्नलक्षणाश्च स्तम्भकुम्भादिवत्, ततो द्रव्याद्भिन्ना गुणा इति वैशेषिकादयः, सिद्धान्तानभिज्ञाः स्वयूथ्या वा केचनाभ्युपगच्छन्ति, वदन्ति चोक्तौ हेतू नासिद्धौ, द्रव्यस्य यमहमद्राक्षं तमेव स्पृशामीति अनुसंधानाध्यक्षग्राह्यत्वात्, रूपादीनाञ्च प्रतिनियतेन्द्रियजन्यप्रत्ययवेद्यत्वात् । दार्शनं स्पार्शनञ्च द्रव्यमित्याद्यभिधानादसमानग्रहणता द्रव्यगुणयोः सिद्धा, गुणवद्द्रव्यं, अगुणवान् द्रव्याश्रयी संयोगविभागेष्वकारणमनपेक्षो गुण इति विभिन्नलक्षणत्वमपि इति ॥ ५ ॥ 15

अभेदवादी परिहारमस्याह—

**दूरे ता अण्णत्तं गुणसद्दे चेव ताव पारिच्छं ।**
**किं पज्जवाहिओ होज्ज पज्जवे चेव गुणसण्णा ॥ ६ ॥**

दूरे तावदन्यत्वं गुणशब्दे एव तावत् पारीक्ष्यम् । 20
किं पर्यायाधिको भवति पर्याये चैव गुणसंज्ञा ॥ छाया ॥

दूर इति, गुणगुणिनोरेकान्तेनान्यत्वं तावद्दूरे, असम्भावनीयमिति यावत् गुणात्मकद्रव्यप्रत्ययबाधितत्वादेकान्ततद्भेदस्य, न चायमभेदप्रत्ययः समवायनिमित्तः, तस्य निषिद्धत्वात्, न चैकत्वप्रत्ययस्य प्रागुक्तानुमानबाधा, तस्य एकत्वप्रत्ययाध्यक्षबाधितकर्मनिर्देशानन्तरप्रयुक्तत्वेन कालात्ययापदिष्टत्वात्, ततस्तयोरेकान्तान्यत्वस्यासम्भवात् गुणशब्दे एव 25 तावत् किं पर्यायादधिके गुणशब्दः, उत पर्याय एव प्रयुक्त इति पारीक्ष्यमस्ति अभिप्रायश्च न पर्यायादन्यो गुणः, पर्यायश्च कथञ्चिद्द्रव्यात्मक इति विकल्पः कृतः ॥ ६ ॥

यदि पर्यायादन्यो गुणः पर्यायार्थिकवद्गुणार्थिकोऽपि नयो वक्तव्यः स्यादित्याह—

दो उण णया भगवया दव्वट्ठियपज्जवट्ठिया नियया ।
एत्तो य गुणविसेसे गुणट्ठियणओ वि जुज्जंतो ॥ ७ ॥

द्वौ पुनर्नयौ भगवता द्रव्यार्थिकपर्यायार्थिकौ नियमितौ ।
एतस्माच्च गुणविशेषे गुणार्थिकनयोऽपि युज्यमानः ॥ छाया ॥

5 द्वाविति, भगवता द्रव्यार्थिकपर्यायार्थिकाविति द्वौ मूलनयौ नियमितौ, तत्र गुण-विशेषे पर्यायादधिके ग्राह्ये सति तद्ग्राहकगुणास्तिकनयोऽपि नियमयितुं उचितः स्यात्, अन्यथाऽव्यापकत्वं नयानां भवेत्, अर्हतो वा तदपरिज्ञानं प्रसज्येत ॥ ७ ॥

न चासौ भगवतोक्त इत्याह—

जं पुण अरिहया तेसु तेसु सुत्तेसु गोयमाईणं ।
10 पज्जवसण्णा णियया वागरिया तेण पज्जाया ॥ ८ ॥

यत् पुनरर्हता तेषु तेषु सूत्रेषु गौतमादिभ्यः ।
पर्यायसंज्ञा नियमिता व्याकृतास्तेन पर्यायाः ॥ छाया ॥

यदिति, भगवता यतस्तेषु सूत्रेषु 'वण्णपज्जवेहिं गंधपज्जवेहिं [ भग० सू० शत० १४, उ० ४, सू० ५१३ ] इत्यादिना वर्णादिषु पर्यायसंज्ञा नियमिता गौतमादिभ्यो व्याकृताः, ततः 15 पर्याया एव वर्णादयो न गुणा इत्यभिप्रायः ॥ ८ ॥

अथ तत्र गुण एव पर्यायशब्देनोक्तस्तुल्यार्थत्वात्, य एव पर्यायः स एव गुण इति वचनाच्चेत्याह—

परिगमणं पज्जाओ अणेगकरणं गुणत्ति तुल्लत्था ।
तहवि ण गुण त्ति भण्णइ पज्जवणयदेसणा जम्हा ॥ ९ ॥

20 परिगमनं पर्यायोऽनेककरणं गुण इति तुल्यार्थौ ।
तथापि न गुण इति भण्यते पर्यवनयदेशना यस्मात् ॥ छाया ॥

परिगमनमिति, परि समन्तात् सहभाविभिः क्रमभाविभिश्च भेदैर्वस्तुनः परिणतस्य गमनं परिच्छेदो यः स पर्यायः, विषयविषयिणोरभेदात् । अनेकरूपतया वस्तुनः करणं ज्ञानं करोतेर्ज्ञानार्थत्वात्, गुणः, विषयविषयिणोरभेदादेव । इति गुणपर्यायशब्दौ तुल्यार्थौ 25 तथापि न गुणार्थिक इत्यभिहितं तीर्थकृता, यतो भगवता पर्यायनयद्वारेणैव देशना कृता ॥ ९ ॥

---

१ ज्ञानसुखवीर्यादयः सहभाविनस्त एव गुणाः, सुखदुःखहर्षविषादादयः क्रमवृत्तयः, ते पर्यायाः, काल-भेदविभेदापेक्षया गुणपर्याययोर्भेदस्यानुभवात् कथञ्चिद्भेदः, धर्म्यपेक्षया कथञ्चिदभेदः ॥

गुणद्वारेणापि देशनायां भगवतः प्रवृत्तिरुपलभ्यतेऽतो न गुणाभाव इत्याह—

**जंपन्ति अत्थि समये एगगुणो दसगुणो अणंतगुणो ।**
**रूवाई परिणामो भण्णइ तम्हा गुणविसेसो ॥ १० ॥**

जल्पन्त्यस्ति समये एकगुणो दशगुणोऽनन्तगुणः ।
रूपादिः परिणामो भण्यते तस्माद्गुणविशेषः ॥ छाया ॥ 5

जल्पन्तीति द्रव्यगुणान्यत्ववादिनो जल्पन्ति विद्यत एव सिद्धान्ते ' एगगुणकालए दुगुणकालए ' [ भग० श० पू० उ० ७, सू० २१७ ] इत्यादि रूपादौ व्यपदेशः, तस्माद्रूपादिर्गुणविशेष एवेत्यस्ति गुणार्थिको नयः, उपदिष्टश्च भगवतेति ॥ १० ॥

अत्र सिद्धान्तवाद्याह—

**गुणसद्दमंतरेणावि तं तु पज्जवविसेससंखाणं ।** 10
**सिज्झइ णवरं संखाणसत्थधम्मो तइगुणो त्ति ॥ ११ ॥**

गुणशब्दमन्तरेणापि तत्तु पर्यवविशेषसंख्यानम् ।
सिद्धयति नवरं संख्यानशास्त्रधर्म तावद्गुण इति ॥ छाया ॥

गुणेति, रूपाद्यभिधायिगुणशब्दव्यतिरेकेणापि एकगुणकाल इत्यादिकं पर्यायविशेषसंख्यानवाचकं वचः सिद्धयति न पुनर्गुणास्तिकनयप्रतिपादकत्वेन, यतः संख्यानं गणितशास्त्रधर्मः, अयं तावद्गुण इति, एतावताऽधिको न्यूनो वा भाव इति गणितशास्त्रधर्मत्वादस्येत्यर्थः ॥ ११ ॥ 15

दृष्टान्तोऽमुमेवार्थं द्रढयति—

**जह दससु दसगुणम्मि य एगम्मि दसत्तणं समं चेव ।**
**अहियम्मि वि गुणसद्दे तहेय एयं पि दट्ठव्वं ॥ १२ ॥** 20

यथा दशसु दशगुणे च एकस्मिन् दशत्वं समं चैव ।
अधिकेऽपि गुणशब्दे तथैवैतदपि द्रष्टव्यम् ॥ छाया ॥

यथेति, यथा दशसु द्रव्येषु एकस्मिन् वा द्रव्ये दशगुणिते दशशब्दातिरेकेऽपि दशत्वं सममेव तथैवैतदपि न भिद्यते परमाणुरेकगुणकृष्णादिरिति, एकादिशब्दाधिक्ये गुणपर्यायशब्दयोर्भेदो वस्तु पुनस्तुल्यमिति भावः, न च गुणानां गुणपर्यायत्वे गुणपर्यायवद्द्रव्यम् ' [ तत्त्वा० अ० पू, सू० ३७ ] इति सूत्रं विरुध्यते, युगपदयुगपद्भाविपर्यायविशेषप्रतिपादनार्थत्वात्तस्य, न चैवमपि मतुब्योग्यद्रव्यविभिन्नपर्यायसिद्धिः, नित्ययोगेऽत्र मतुब्विधानात्, 25

द्रव्यपर्याययोः तादात्म्यात्सदाऽविनिर्भागवर्तित्वात्, अन्यथा प्रमाणबाधोपपत्तेः, संज्ञासंख्यास्वलक्षणार्थक्रियाभेदाद्वा कथञ्चित्तयोरभेदेऽपि भेदसिद्धेर्न मतुबनुपपत्तिः ॥ १२ ॥

एवं द्रव्यपर्याययोर्भेदैकान्तप्रतिषेधेऽभेदैकान्तवाधाह—

एयंतपक्खवाओ जो उण दव्वगुणजाइभेयम्मि ।
अह पुव्वपडिकुट्ठो उआहरणमित्तमेयं तु ॥ १३ ॥

एकान्तपक्षवादो यः पुनर्द्रव्यगुणजातिभेदेषु ।
अथ पूर्वप्रतिकुष्ट उदाहरणमात्रमेतत्तु ॥ छाया ॥

एकान्तेति, यः पुनर्द्रव्यगुणजातिभेदेषु एकान्तव्यतिरिक्ताभ्युपगमवादः स पूर्वमेव प्रतिक्षिप्तः, तद्ग्राहकप्रमाणाभावात्, अभेदग्राहकस्य सर्वमेकं सदविशेषात्, विशेषे वा वियत्कुसुमवदसत्त्वप्रसङ्गादिति प्रदर्शितत्वात्, तथापि तत्स्वरूपे दार्ढ्योत्पादनार्थमुदाहरणमात्रं वक्ष्ये ॥ १३ ॥

तदेवाह—

पिउपुत्तणत्तुभव्वयभाऊणं एगपुरिससंबंधो ।
ण य सो एगस्स पियत्ति सेसयाणं पिया होइ ॥ १४ ॥

पितृपुत्रनप्तृभागिनेयभ्रातॄणामेकपुरुषसम्बन्धः ।
न च स एकस्य पितेति शेषाणां पिता भवति ॥ छाया ॥

पित्रिति, पितृत्वादिभिर्य एकस्य पुरुषस्य सम्बन्धः तेनासावेक एव पित्रादिव्यपदेशमासादयति, न चासावेकस्य पितापुत्रसम्बन्धत इति शेषाणामपि पिता भवति ॥ १४ ॥

उपनयति—

जह संबंधविसिट्ठो सो पुरिसो पुरिसभावणिरइसओ ।
तह दव्वमिंदियगयं रूवाइविसेसणं लहइ ॥ १५ ॥

यथा सम्बन्धविशिष्टोऽसौ पुरुषः पुरुषभावनिरतिशयः ।
तथा द्रव्यमिन्द्रियगतं रूपादिविशेषणं लभते ॥ छाया ॥

यथेति, यथोक्तसम्बन्धविशिष्टः पित्रादिव्यपदेशमाश्रित्यासौ पुरुषरूपतया निरतिशयोऽपि सन् तथा द्रव्यमपि घ्राणरसनचक्षुस्त्वक्श्रोत्रसम्बन्धमवाप्य रूपरसगन्धस्पर्शशब्दव्यपदेशमात्रं लभते द्रव्यस्वरूपेणाविशिष्टमपि, न हि शक्रेन्द्रादिशब्दभेदाद्गीर्वाणनाथस्येव रूपादिशब्दभेदात् वस्तुभेदो युक्तः, तदा द्रव्याद्वैतैकान्तस्थितेः कथञ्चिद्भेदाभेदवादो द्रव्यगुणयोर्मिथ्यावाद इति ॥ १५ ॥

अस्य निराकरणायाह—

होज्जाहि दुगुणमहुरं अणंतगुणकालयं तु जं दव्वं ।
ण उ डहरओ महल्लो वा होइ संबंधओ पुरिसो ॥ १६ ॥

भवेद् द्विगुणमधुरं अनंतगुणकृष्णं तु यद्द्रव्यम् ।
न स्वल्पको महान्वा भवति सम्बन्धः पुरुषः ॥ छाया ॥ 5

भवेदिति, यदि नाम आम्रादिद्रव्यमेव रसनसम्बन्धाद्रस इति व्यपदेशमात्रमासादयेत्, द्विगुणमधुरं रसतः कुतो भवेत, तथा नयनसम्बन्धाद्यदि नाम कृष्णमिति व्यवेदनन्तगुणकृष्णं तत् कुतः स्यात्, वैषम्यभेदावगतेर्नयनादिसम्बन्धमात्रादसम्भवात, तथा पुत्रादिसम्बन्धद्वारेण पित्रादिरेव पुरुषो भवेत्, न स्वल्पो महान वेति युक्तः, विशेषप्रतिपत्तेरुपचरितत्वे मिथ्यात्वे वा सामान्यप्रतिपत्तावपि तथाप्रसक्तेरिति भावः ॥ १६ ॥ 10

अभेदैकान्तवाद्याह—

भण्णइ सम्बन्धवसा जइ संबंधत्तणं अणुमयं ते ।
णणु संबंधविसेसे संबंधिविसेसणं सिद्धं ॥ १७ ॥

भण्यते सम्बन्धवशाद्यदि सम्बन्धित्वमनुमतं तव ।
ननु सम्बन्धविशेषे सम्बन्धिविशेषणं सिद्धम् ॥ छाया ॥ 15

भण्यत इति, यदि सम्बन्धसामान्यवशात्सम्बन्धित्वसामान्यं तवानुमत ननु सम्बन्धविशेषद्वारेण तथैव सम्बन्धिविशेषोऽपि किं नाभ्युपगम्यते ॥ १७ ॥

सिद्धान्तवाद्याह—

जुज्जइ संबंधवसा संबंधिविसेसणं ण उण एयं ।
णयणाइविसेसगओ रूपाइविसेसपरिणामो ॥ १८ ॥ 20

युज्यते सम्बन्धवशात्सम्बन्धिविशेषणं न पुनरेतत् ।
नयनादिविशेषगतो रूपादिविशेषपरिणाम ॥ छाया ॥

युज्यत इति, सम्बन्धिविशेषः संबन्धवशाद्युज्यते यथा दण्डादिसम्बन्धविशेषजनितसम्बन्धविशेषसमासादितसम्बन्धिविशेषोऽवगतः । द्रव्याद्वैतवादिनस्तु न सम्बन्धिविशेषः, नापि सम्बन्धविशेषः सङ्गच्छत इति कुतो नयनादिविशेषसम्बन्धविशेषजनितो रूपादिविशेषपरिणामः ॥ १८ ॥ 25

नन्वनेकान्तवादिनोऽपि रूपरमादेरनन्तद्विगुणादिवैषम्यपरिणतिः कथमुपपन्नेत्यत्राह–

**भण्णइ विसमपरिणयं कह एयं होहिइत्ति उवणीयं ।**
**तं होइ परणिमित्तं ण व त्ति एत्थत्थि एगंतो ॥ १९ ॥**

भण्यते विषमपरिणतं कथमेतद्भविष्यतीत्युपनीतम् ।
तद्भवति परनिमित्तं न वेत्यत्रास्त्येकान्तः ॥ छाया ॥

**भण्यत इति**, शीतोष्णस्पर्शवदेकत्रैकदा विरोधादेकत्राम्रफलादौ विषमपरिणतिः कथमिति यदि भण्यते तत्रापि परनिमित्तं तद्भवतीत्युपनीतम्, द्रव्यक्षेत्रकालभावानां सहकारिणां वैचित्र्यात् कार्यमपि वैचित्र्यमासादयति, तदाम्रादिवस्तु विषमरूपतया परनिमित्तं भवति, नवा परनिमित्तमेवेत्यत्राप्येकान्तोऽस्ति, स्वरूपस्यापि कथञ्चिन्निमित्तत्वात्, तन्न 10 द्रव्याद्वैतैकान्तः सम्भवी ॥ १९ ॥

द्रव्यगुणयोर्भेदैकान्तवादिना प्राक् प्रदर्शितलक्षणस्यैकत्वप्रतिपक्षयध्यक्षबाधितत्वाल्लक्षणान्तरं वक्तव्यं तदाह—

**दव्वस्स ठिई जम्मविगमा य गुणलक्खणं ति वत्तव्वं ।**
**एवं सइ केवलिणो जुज्जइ तं णो उ दवियस्स ॥ २० ॥**

15 द्रव्यस्य स्थितिर्जन्मविगमौ च गुणलक्षणमिति वक्तव्यम् ।
एवं सति केवलिनो युज्यते तन्न तु द्रव्यस्य ॥ छाया ॥

**द्रव्यस्येति**, द्रव्यस्य लक्षणं स्थितिर्गुणानाञ्च जन्मविगमौ लक्षणमिति वक्तव्यम्, एवं सति केवलिन एतल्लक्षणं युज्यते, तत्र किल केवलात्मना स्थित एव चेतनाचेतनरूपा अन्येऽर्था ज्ञेयभावेनोत्पद्यन्ते, अज्ञेयरूपतया च नश्यन्ति, न तु द्रव्यस्याण्वादेर्लक्षणमिदम्, न 20 ह्यणौ रूपादयो जायन्ते अत्यन्तभिन्नत्वाद्द्रव्यश्वादिवत्, अथवा केवलिनोऽपि सकलज्ञेयग्राहिणो नैतल्लक्षणं युज्यते, न चापि द्रव्यस्याचेतनस्य गुणगुणिनोरत्यन्तभेदेऽसत्त्वापत्तेः, असतोश्च खरविषाणादेरिव लक्षणासम्भवादिति ॥ २० ॥

**दव्वत्थंतरभूया मुत्ता मुत्ता य ते गुणा होज्ज ।**
**जइ मुत्ता परमाणू णत्थि अमुत्तेसु अग्गहणं ॥ २१ ॥**

25 द्रव्यार्थान्तरभूता मूर्त्ता अमूर्त्ताश्च ते गुणा भवेयुः ।
यदि मूर्त्ताः परमाणवो न सन्ति अमूर्त्तेष्वग्रहणम् ॥ छाया ॥

**द्रव्येति**, द्रव्यार्थान्तरभूतगुणवादिनो द्रव्यादर्थान्तरभूता गुणा मूर्त्ता अमूर्त्ता वा भवेयुः,

यदि मूर्त्ताः न तर्हि परमाणवो भवन्ति, मूर्त्तिमद्रूपाद्याधारत्वात्, अनेकप्रदेशिकस्कन्धद्रव्यवत्, अथामूर्त्ताः, अग्रहणं तेषां, अमूर्त्तत्वादाकाशवत्, ततो द्रव्यगुणयोः कथञ्चिद्भेदाभेदावभ्युपगमनीयौ, अन्यथोक्तदोषप्रसक्तेः । तथा हि द्रव्यगुणयोः कथञ्चिद्भेदः यथाक्रममेकानेकप्रत्ययावसेयत्वात्, कथञ्चिदभेदोऽपि रूपाद्यात्मना द्रव्यस्वरूपस्य रूपादीनाञ्च द्रव्यात्मकतया प्रतीतेः, अन्यथा तदभावापत्तेः ॥ २१ ॥ 5

ततः—

**सीसमईविप्फारणमेत्तत्थोऽयं कओ समुल्लावो ।**
**इहरा कहामुहं चेव णत्थि एवं ससमयम्मि ॥ २२ ॥**

शिष्यमतिविस्फारणमात्रार्थोऽयं कृतः समुल्लापः ।
इतरथा कथामुखमेव नास्ति एवं स्वसमये ॥ छाया ॥ 10

शिष्येति, शिष्यबुद्धिविकासनमात्रार्थोऽयं कृतः प्रबन्धः, इतरथा कथैवैषा नास्ति स्वसिद्धान्ते, किमेते गुणा गुणिनो भिन्ना आहोस्विदभिन्ना इति, अनेकान्तात्मकत्वात्सकलवस्तुनः ॥ २२ ॥

एवंरूपे च वस्तुतत्त्वेऽन्यथारूपं तत्प्रतिपादयन्तो मिथ्यावादिन एवेत्याह—

**ण वि अत्थि अण्णवादो ण वि तव्वाओ जिणोवएसम्मि ।** 15
**तं चेव य मण्णंता अवमण्णंता ण याणंति ॥ २३ ॥**

नाप्यस्त्यन्यवादो नापि तद्वादो जिनोपदेशे ।
तदेव च मन्यमाना अवमन्यमाना न जानन्ति ॥ छाया ॥

नेति, गुणगुणिनोरन्यवादो नैवास्ति नाप्यनन्यवादो जिनोपदेशे द्वादशाङ्गे प्रवचने, सर्वत्र कथञ्चिदित्याश्रयणात्, तदेव अन्यदेवेति वा मन्यमानाः स्वमननीयमेवावमन्यमाना 20 वादिनोऽभ्युपगतविषयावज्ञाविधायित्वादज्ञा भवन्ति, अभ्युपगमनीयवस्त्वस्तित्वप्रतिपादकोपायनिमित्तापरिज्ञानान्मृषावादिवदिति तात्पर्यार्थः । ततोऽनेकान्तवाद एव व्यवस्थितः ॥२३॥

ननु सर्वत्रानेकान्त इति नियमेऽनेकान्तेऽप्यनेकान्तादेकान्तप्रसक्तिः, अथ न तत्रानेकान्तस्तदाऽव्यापकोऽनेकान्तवाद इत्यत्राह—

**भयणा वि हु भइयव्वा जह भयणा भयइ सव्वदव्वाइं ।** 25
**एवं भयणाणियमो वि होइ समयाविरोहेण ॥ २४ ॥**

भजनापि खलु भक्तव्या यथा भजना भजते सर्वद्रव्याणि ।
एवं भजनानियमोऽपि भवति समयाविरोधेन ॥ छाया ॥

भजनेति, यथा भजना अनेकान्तो भजते सर्ववस्तूनि, तद्तत्स्वभावतया ज्ञापयति तथा भजनापि भजनीया, अनेकान्तोऽप्यनेकान्त इत्यर्थः, नयप्रमाणापेक्षया एकान्तश्चानेकान्तश्चेति ज्ञापनीयः, एवञ्च भजना सम्भवति नियमश्च, अनेकान्ते एकान्तश्चेत्यर्थः । सिद्धान्तस्य 'रयणप्पभासिया सासया सियाऽसासया' ( जीवाजीवाभि० प्रतिप० ३ उ० १,
5 सू० ७८ ) इत्येवमनेकान्तप्रतिपादकस्य 'दव्वट्ठयाए सासया पज्जवट्ठयाए असासया' इत्येवं चैकान्ताभिधायकस्याविरोधेन । न चैवमव्यापकोऽनेकान्तवादः, स्यात्पदसंसूचितानेकान्तगर्भस्यैकान्तस्य तत्त्वात्, अनेकान्तस्यापि स्यात्कारलाञ्छनैकान्तगर्भस्यानेकान्तस्वभावत्वात्, न चानवस्था, अन्यनिरपेक्षस्वस्वरूपत एव तथात्वोपपत्तेः, यद्वा स्वरूपत एवानेकान्तस्यैकान्तप्रतिषेधेनानेकान्तरूपत्वात्, स्यादेकान्तः स्यादनेकान्त इति कथं नानेकान्तेऽने-
10 कान्तोऽपि । अनेकान्तात्मकवस्तुव्यवस्थापकस्य तद्व्यवस्थापकत्वं स्वयमनेकान्तात्मकत्वमन्तरेणानेकान्तस्यानुपपन्नमिति न तत्राव्यापकत्वादिदोष इत्यसकृदावेदितमिति ॥ २४ ॥

नन्वनेकान्तस्य व्यापकत्वे षड्जीवनिकायाः, तद्घाते वा धर्म इत्यात्राप्यनेकान्त एव स्यादित्यत्राह—

**णियमेण सद्दहंतो छक्काए भावओ न सद्दहइ ।**
15 **हंदि अपज्जवेसु वि सद्दहणा होइ अविभत्ता ॥ २५ ॥**

नियमेन श्रद्दधानः षट्कायान भावतो न श्रद्धत्ते ।
हंदि अपर्यवेष्वपि श्रद्धा भवत्यविभक्ता ॥ छाया ॥

नियमेनेति, षडेवैते जीवाः कायाश्चेति नियमेन श्रद्दधानः षट्कायान् भावतः परमार्थतो न श्रद्धत्ते जीवराश्यपेक्षया तेषामेकत्वात् कायानामपि पुद्गलतयैकत्वात्, जीवपुद्ग-
20 लप्रदेशानां परस्पराविनिर्भागवर्त्तित्वाच्च जीवप्रदेशानां स्यादजीवत्वं प्रत्येकं प्राधान्यविवक्षया स्यादनिकायत्वम्, सूत्रविहितन्यायेन प्रवृत्तस्याप्रमत्तस्य हिंसाऽप्यहिंसेति तद्घाते स्यादधर्म इति, न भावसम्यग्दृष्टिरसौ स्यात्, द्रव्यसम्यग्दृष्टिस्तु स्यात्, भगवतैवमुक्तमिति जिनवचनरुचिस्वभावत्वात् । ततोऽपर्यायेष्वपि न विद्यन्ते अर्चिर्मुर्मुरादयो विवक्षितपर्याया येषु पुद्गलेषु तेष्वपि अविभक्तश्रद्धानं यत्तदपि भावत एव भवेत्, अर्चिष्मानयं भावो भूतो भावी
25 वेति, तत्राव्यापकोऽनेकान्तवादः ॥ २५ ॥

नन्वनेकान्तस्य व्यापकत्वे गच्छति तिष्ठतीत्यत्राप्यनेकान्तः स्यात्, तथाऽभ्युपगमे च तयोरभावप्रसक्तिरित्यत्राह—

१. हन्दिर्विषादविकल्पपश्चात्तापनिश्चयसत्येषु वर्त्तते ॥

**गइपरिगयं गई चेव केइ णियमेण दवियमिच्छंति ।**
**तं पि य उड्ढगईयं तहा गई अन्नहा अगई ॥ २६ ॥**

गतिपरिगतं गत्येव केचिन्नियमेन द्रव्यमिच्छन्ति ।
तदपि चोर्ध्वगतिकं तथा गतिरन्यथाऽगतिः ॥ छाया ॥

गतीति । गतिक्रियापरिणामं द्रव्यं गतिमदेवेति केचिन्मन्यन्ते तदपि गतिक्रियापरि- 5
णतं जीवद्रव्यं सर्वतो गमनायोगादूर्ध्वादिप्रतिनियतदिग्गतिकं तैर्वादिभिरभ्युपगन्तव्यम्,
एवञ्च तत् प्रतिनियतदिग्गमनेनैव गतिमत्, अन्यथापि गतिमत्स्यात्, तथाचाभिप्रेतदेश-
प्राप्तिवदनभिप्रेतदेशप्राप्तिरपि तस्य भवेदित्यनुपलभ्यमानयुगपद्विरुद्धोभयदेशप्राप्तिप्रसक्तेरत्रा-
प्यनेकान्तो नाव्यापकः, अभिप्रेतगतिरेव तत्रानभिप्रेताऽगतिरिति चेन्न, अनभिप्रेतगत्य-
भावाभावे प्रतिनियतगतिभाव एव न भवेत्, तत्सद्भावे वा तदवस्थोऽनेकान्तः ॥ २६ ॥ 10

स्यादेतत्, दहनाद्दहनः पवनात् पवन इत्यत्राप्यनेकान्ते दहनादावदहनादेर्विरुद्धरूपस्य
सम्भवात्स्वरूपाभावः स्यादित्यत्राह—

**गुणणिव्वत्तियसण्णा एवं दहणादओ वि दट्ठव्वा ।**
**जं तु जहा पडिसिद्धं दव्वमदव्वं तहा होइ ॥ २७ ॥**

गुणनिर्वर्त्तितसंज्ञा एवं दहनादयोऽपि द्रष्टव्याः । 15
यत्तु यथा प्रतिषिद्धं द्रव्यमद्रव्यं तथा भवति ॥ छाया ॥

गुणेति । येषां दहनादिना गुणेनोत्पादिता संज्ञा तेऽपि दहनपवनादय एवमेवानेका-
न्तात्मका द्रष्टव्याः, तथाहि दाह्यपरिणामयोग्यं तृणादिकं दहतीति दहनः, तदपरिगतिस्व-
भावं स्वात्माकाशप्राप्तवज्रादिकं न दहतीति । तेन यद्द्रव्यं यथा दहनरूपतया प्रतिषिद्धं तद-
द्रव्यमदहनादिरूपम्, तथा भजनाप्रकारेण स्याद्दहनः स्यान्नेति भवति ततो नाव्याप्यने- 20
कान्तः । तथाऽदहन इत्यत्राप्यनेकान्तः, तथाहि यदुदकद्रव्यं यथा दहनरूपेण प्रतिषिद्धं
दहनो न भवतीति अदहन इति तदपि न सर्वथाऽदहनद्रव्यं भवति, पृथिव्यादेरदहनरूपा-
द्व्यावृत्तत्वात्, अन्यथा दहनव्यतिरिक्तभूतैकत्वप्रसक्त इत्यनेकान्त एव, अदहनव्यावृत्तस्य
तद्द्रव्यत्वात् ॥ २७ ॥

नन्वेवं तदतद्द्रव्यत्वाज्जीवद्रव्यमजीवद्रव्यम्, अजीवद्रव्यञ्च जीवद्रव्यं स्यादित्यत्राह— 25

**कुंभो ण जीवदवियं जीवो वि ण होइ कुंभदवियं ति ।**
**तम्हा दो वि अदवियं अण्णोण्णविसेसिया होंति ॥ २८ ॥**

कुम्भो न जीवद्रव्यं जीवोऽपि न भवति कुम्भद्रव्यमिति ।
तस्माद्द्वावप्यद्रव्यं अन्योऽन्यविशेषितौ भवतः ॥ छाया ॥

**कुम्भ इति,** कुम्भो जीवद्रव्यं न भवति जीवोऽपि न भवति घटद्रव्यम्, तस्माद्वा-वप्यद्रव्यमन्योऽन्यविशेषितौ—परस्पराभावात्मकौ । तथाहि जीवद्रव्यं कुम्भादेरजीवद्रव्या-द्व्यावृत्तं अव्यावृत्तं वा, आद्ये स्वरूपापेक्षया जीवो जीवद्रव्यम्, कुम्भाद्यजीवद्रव्यापेक्षया च न जीवद्रव्यमित्युभयरूपत्वादनेकान्त एव, द्वितीये च सर्वस्य सर्वात्मकतापत्तेः प्रतिनिय-5 तरूपाभावस्तयोरभावः खरविषाणवत्, ततः सर्वमनेकान्तात्मकमन्यथा प्रतिनियतरूपताऽनुपपत्तेरिति व्यवस्थितम् ॥ २८ ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानंदसूरीश्वरपट्टालङ्कारश्रीमद्विजय-
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
लब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य सामान्य-
10 विशेषात्मकत्वस्थापनं नाम एकोनत्रिंशं सोपानम् ॥



## उत्पादादिविशेषनिरूपणम् ।

अथ प्रत्युत्पन्नपर्यायं विगतभविष्यद्भ्यां यत्समानयति वचनं तत्प्रतीत्यवचनमिति यदुक्तं तत्र वचनादिकोऽपि पर्यायः, स चाप्रयत्नानन्तरीयको वचनविशेषलक्षणः, घटा-15 दिकस्तु प्रयत्नानन्तरीयक इति केचित्संप्रतिपन्नाः, तन्निराकरणाय यद्यतोऽन्वयव्यतिरेकाभ्यां प्रतीयते तत्तत एवाभ्युपगन्तव्यमन्यथा कार्यकारणभावाभावप्रसक्तिरित्याह—

**उप्पाओ दुवियप्पो पओगजणिओ य वीससा चेव ।**
**तत्थ उ पओगजणिओ समुदयवाओ अपरिसुद्धो ॥ २९ ॥**

उत्पादो द्विविकल्पः प्रयोगजनितश्च विस्रसा चैव ।
20 तत्र तु प्रयोगजनितस्समुदयवादोऽपरिशुद्ध. ॥ छाया ॥

**उत्पाद इति,** द्विविध उत्पादः, पुरुषेतरकारकव्यापारजन्यतया अध्यक्षानुमानाभ्यां तथा तस्य प्रतीतेः । पुरुषव्यापारान्वयव्यतिरेकानुविधायित्वेऽपि शब्दविशेषस्य तदजन्यत्वे घटादेरपि तदजन्यताप्रसक्तेः, विशेषाभावात्, प्रत्यभिज्ञानादेश्च विशेषस्य प्रागेव निरासात् । तत्र प्रयोगेण यो जनितः—उत्पादः, मूर्त्तिमद्द्रव्यारब्धावयवकृतत्वात्स समुदाय-25 वादः, तथाभूताऽऽरब्धस्य समुदायात्मकत्वात्, तत एवासावपरिशुद्धः, सावयवात्मकस्य तच्छब्दवाच्यत्वेनाभिप्रेतत्वात् ॥ २९ ॥

विस्रसाजनितोऽप्युत्पादो द्विविध इत्याह—

**साभाविओ वि समुदयकओ व्व एगत्तिओव्व होज्जाहि ।**
**आगासाईआणं तिण्हं परपच्चओऽणियमा ॥ ३० ॥**

स्वाभाविकोऽपि समुदायकृतो वा एकत्विको वा भवेत् ।
आकाशादीनां त्रयाणां परप्रत्ययोऽनियमात् ॥ छाया ॥

**स्वाभाविक इति,** स्वाभाविकश्च द्विविध उत्पादः, एकः समुदायकृतः, प्राक्प्रतिपादितावयवारब्धो घटादिवत्, अपरश्चैकत्विकः अनुत्पादितामूर्तिमद्द्रव्यावयवारब्धः, आकाशादिवत्, आकाशादीनाञ्च त्रयाणां द्रव्याणामवगाहकादिघटादिपरद्रव्यनिमित्तोऽवगाहनादिक्रियोत्पादोऽनियमात्—अनेकान्ताद्भवेत्, अवगाहकगन्तृस्थातृद्रव्यसन्निधानतोऽम्बरधर्माधर्मेष्ववगाहनगतिस्थितिक्रियोत्पत्तिनिमित्तभावोत्पत्तिरित्यभिप्रायः ॥ **ननु** अनारब्धामूर्त्तिमद्द्रव्यावयवत्वे गगनादीनां निरवयवत्वप्रसक्तेरनेकान्तात्मकत्वव्याघातः, न, मूर्त्तिमद्द्रव्यानारब्धानामपि तेषां सावयवत्वात्[2], प्रदेशव्यवहारस्याकाशे दर्शनात् । न च तद्व्यवहारो मिथ्या, मिथ्यात्वनिमित्ताभावात्, न च संयोगस्याव्याप्यवृत्तिसंयोगाधारत्वात्तन्निमित्तः सावयवत्वाध्यारोपो मिथ्यात्वकारणम्, निरवयवेऽव्याप्यवृत्ति सयोगाधारत्वस्याध्यारोपनिमित्तस्यैवानुपपत्तेः, आकाशस्य निरवयवत्वे श्रोत्राकाशसमवेतस्येवान्यत्र समवेते शब्दस्याप्यस्मदादेरुपलम्भप्रसङ्गाच्च, निरवयवैकाकाशसमवेतत्वात् । धर्माधर्माभिसंस्कृतकर्णशष्कुल्यवरुद्धाकाशदेश एव श्रोत्रमन्यत्र समवेतन्तु न तत्र समवेतमिति चेन्न सावयवत्वप्रसङ्गात्, श्रोत्राकाशप्रदेशादन्यत्र समवेतशब्दाधाराकाशदेशस्यान्यत्वात्, सावयवत्वाभावेऽम्बरस्य शब्दस्य नित्यत्वसर्वगतत्वप्रसङ्गाच्च, आकाशैकगुणत्वात्तन्महत्त्ववत्, क्षणिकैकदेशवृत्तिविशेषगुणत्वं शब्दस्य प्रमाणतः सिद्धत्वान्नायं दोष इति चेन्न सावयवत्वप्रसङ्गात्, तदेकदेशवृत्तित्वाच्छब्दस्य, न हि निरवयवत्वे तस्यैकदेशः सङ्गच्छते । न च सयोगस्याव्याप्यवृत्तित्वनिबन्धनोऽयमेकदेशव्यपदेश इति वाच्यम्, आकाशं व्याप्य संयोगो न वर्तेत तदेकदेशे वर्तेत इत्यभ्युपगमप्रसङ्गात्, व्याप्यवृत्तित्वं हि सामस्त्यवृत्तित्वं तत्प्रतिषेधश्च पर्युदासपक्षे[3] एकदेशवृत्तित्वमेव, प्रसज्यपक्षे तु वृत्तिप्रतिषेध एव, न चासौ युक्तः, संयोगस्य गुणत्वेन द्रव्याश्रितत्वात्, तदभावे तदभावात्, आकाशस्य निरवयवत्वे सन्तानवृत्त्या शब्दस्या-

---

१. युगपन्निखिलद्रव्यावगाहः साधारणकारणापेक्षः, युगपन्निखिलद्रव्यावगाहत्वात्, य एवं स एवम्, यथैकसरःसलिलान्तःपातिमत्स्याद्यवगाहः तथाऽवगाहश्चायम्, तस्मात्तथा, यच्चापेक्षणीयमत्र साधारणं कारणं तदाकाशमिति, अत्र विशेषस्तत्त्वन्यायविभाकरे द्रष्टव्यः, एवं धर्मादिसिद्धिरपि ॥ २. पर्यायार्थादेशात् पूर्वपूर्वाकाशप्रदेशेभ्य उत्तरोत्तराकाशप्रदेशोत्पत्त्या कथञ्चित्तदभिन्नस्य व्योम्नोऽपि समुत्पादात् सावयवत्वमिति भाव । ३. प्रसज्यपक्षे व्याप्यवृत्तौ निषिद्धायां न नभस एकदेशानभ्युपगमे तेनापि वृत्त्यसम्भवे वृत्तिमात्रस्यापि प्रतिषेधः स्यात्, न चैतत्तथोपपद्यते शब्दस्य गुणत्वस्वीकाराद्गुणस्य चावश्यं द्रव्याश्रितत्वादिति ॥

गतस्य श्रोत्रेणानुपलब्धिप्रसङ्गश्च, अन्यान्याकाशदेशोत्पत्तिद्वारेण तस्य श्रोत्रसमवेतत्वानुपपत्तेः, वीचीतरङ्गन्यायेनेतरेतराकाशदेशादावन्यान्यशब्दोत्पत्तिप्रकल्पनायां कथं नाकाशस्य सावयवता, किञ्च शब्दं प्रत्याकाशस्य समवायिकारणताऽङ्गीक्रियते, यच्च समवायिकारणं तत्सावयवम्, यथा तन्त्वादि, समवायिकारणञ्च शब्दं प्रत्याकाशं परेणाभ्युपगतम्, न च
5 परमाण्वादिना व्यभिचारः, तस्यापि सावयवत्वात्, अन्यथा द्व्यणुकबुद्ध्यादेस्तत्कार्यस्य सावयवत्वं न स्यात्, न च बुद्ध्यादेः सावयवत्वमसिद्धम्, आत्मनः सावयवत्वेन तद्विशेषगुणस्य बुद्ध्यादेः कथञ्चित्तादात्म्यात् सावयवत्वोपपत्तेः । अपि च सावयवमाकाशं तद्विनाशान्यथानुपपत्तेः, अनित्यञ्चाकाशं तद्विशेषगुणाभिमतशब्दविनाशान्यथानुपपत्तेः तथाहि शब्दो न तावदाश्रयविनाशाद्विनश्यति, तस्य नित्यत्वाभ्युपगमात्, न विरोधिगुणप्रादुर्भावात्,
10 तन्महत्त्वादेरेकार्थसमवायित्वेन रूपरसयोरिव विरोधित्वासिद्धेः, विरोधित्वे वा श्रवणसमयेऽपि तदभावः स्यात्, तदापि तन्महत्त्वस्य भावात् । नापि संयोगादिर्विरोधिगुणः, तस्य तत्कारणत्वात् । नापि संस्कारः, तस्य गुणत्वेन शब्देऽसम्भवात्, सम्भवे वा शब्दस्य द्रव्यत्वप्रसक्तिः, आकाशस्य द्रव्यत्वेन तत्सम्भवेऽपि तस्याभावे आकाशस्याप्यभावप्रसक्तिः तस्य तदव्यतिरेकात्, व्यतिरेके वा तस्येति सम्बन्धायोगात् । नापि शब्दोपलब्धिप्रापक-
15 धर्माद्यभावात् तदभावः, विभिन्नाश्रयस्य तस्यानेन विनाशयितुमशक्यत्वात्, शक्यत्वे वा तदाधारस्यापि विनाशप्रसङ्गः, तस्य तदव्यतिरेकात्, तस्मादम्बरविशेषगुणत्वे शब्दस्य तद्विनाशान्यथानुपपत्त्या तस्यापि विनाशित्वम्, ततोऽपि सावयवत्वम्, एवञ्च सर्वं वस्तूत्पादविनाशस्थित्यात्मकत्वात् कथञ्चित् सावयवं सिद्धम्, ततः प्रयोगविस्रसात्मकमूर्त्तिमद्द्रव्यानारब्धत्वेनाकाशादेरुत्पाद ऐकत्विकोऽभिधीयते, न पुनर्निरवयवकृतत्वादैकत्विकः, अयमपि
20 स्यादैकत्विकः न स्यादनैकत्विकः न त्वैकत्विक एव, एवं मूर्त्तिमदमूर्त्तिमदवयवद्रव्यद्वयोत्पाद्यावगाहगतिस्थितीनां यथोक्तप्रकारेण तत्रोत्पत्तेरवगाहगतिस्थितिस्वभावस्य च विशिष्टकार्यत्वाद् विशिष्टकारणपूर्वकत्वसिद्धेस्तत्कारणे आकाशादिसञ्ज्ञाः समयनिबंधनाः सिद्धाः ॥ ३० ॥

उत्पादवद्विगमोऽपि तथाविध एवेत्याह—

**विगमस्सवि एस विही समुदयजणियम्मि सो उ दुवियप्पो ।**
25 **समुदयविभागमेत्तं अत्थंतरभावगमणं च ॥ ३१ ॥**

विगमस्याप्येष विधिः समुदयजनिते स तु द्विविकल्पः ।
समुदयविभागमात्रमर्थान्तरभावगमनञ्च ॥ छाया ॥

**विगमस्येति,** स्वाभाविकः प्रयोगजनितश्चेति विगमोऽपि द्विविधः, तद्भूयातिरिक्तवस्त्व-

भावात्, पूर्वावस्थाविगमव्यतिरेकेण उत्तरावस्थोत्पत्त्यनुपपत्तेः, न हि बीजादीनामविनाशेऽङ्कुरादिकार्यप्रादुर्भावो दृष्टः, न चावगाहगतिस्थित्याधारत्वं तदनाधारत्वस्वभावप्राक्तनावस्थाध्वंसमन्तरेण सम्भवति तत्र समुदयजनिते यो विनाशः स उभयत्रापि द्विविधः, एकः समुदयविभागमात्रप्रकारो विनाशः, यथा पटादेः कार्यस्य तत्कारणपृथक्करणे तन्तुविभागमात्रम्, द्वितीयप्रकारस्त्वर्थान्तरभावगमनं विनाशः, यथा मृत्पिण्डस्य घटार्थान्तरभावेनोत्पादो विनाशः । न 5 चार्थान्तररूपविनाशविनाशे मृत्पिण्डप्रादुर्भावप्रसक्तिरिति वक्तव्यम्, पूर्वोत्तरकालावस्थयोरसंकीर्णत्वात्, अतीततरत्वेन प्राक्तनावस्थाया उत्पत्तेः, अतीतस्य च वर्तमानताऽयोगात्, तयोः स्वस्वभावापरित्यागतस्तथानियतत्वात्, तुच्छरूपस्य स्वभावस्याभावः स्यादपि तद्भावरूपः, न तु वस्त्वन्तरादुपजायमानं वस्त्वन्तरमतीततरावस्थारूपं भवितुमर्हति, तरतमप्रत्ययार्थव्यवहाराभावप्रसक्तेः ॥ ३१ ॥ 10

न चोत्पादविनाशयोरैकान्तिकतद्रूपताऽभ्युपगमेऽनेकान्तवादव्याघातः, कथञ्चित्तयोस्तद्रूपत्वाभ्युपगमादित्याह—

**तिण्णि वि उप्पायाई अभिण्णकालो य भिण्णकाला य ।**
**अत्थंतरं अणत्थंतरं च दवियाहि णायव्वा ॥ ३२ ॥**

त्रयोऽप्युत्पादादयोऽभिन्नकालाश्च भिन्नकालाश्च । 15
अर्थान्तरमनर्थान्तरञ्च द्रव्याज्ज्ञातव्याः ॥ छाया ॥

त्रय इति, उत्पादविगमस्थितिस्वभावास्त्रयोऽपि परस्परतोऽन्यकालाः, यतो न पटादेरुत्पादसमय एव विनाशः, तस्यानुत्पत्तिप्रसक्तेः, नापि तद्विनाशसमये तस्यैवोत्पत्तिः, अविनाशापत्तेः, न च तत्प्रादुर्भावसमय एव तत्स्थितिः, तद्रूपेणावस्थितस्यानवस्थाप्रसक्तितः प्रादुर्भावायोगात्, न च घटरूपमृत्स्थितिकाले तस्याविनाशः, तद्रूपेणावस्थितस्य विनाशा- 20 नुपपत्तेः, न च घटविनाशविशिष्टमृत्काले तस्या एवोत्पादो दृष्टः, नापि तदुत्पादविशिष्टमृत्समये तस्या एव ध्वंसोऽनुत्पत्तिप्रसक्तत एव ततस्त्रयाणामपि भिन्नकालत्वात्तद्द्रव्यमर्थान्तरं नानास्वभावम्, न ह्यन्योऽन्यव्यतिरिक्तकालोत्पादविगमध्रौव्याव्यतिरिक्तमेकस्वरूपं द्रव्यमुपपद्यते, तस्य तेभ्योऽभेदप्रसक्तेः । न च तद्भिन्नमेवास्तु, तत्त्रितयविकलस्य तस्य तथाऽनुपलब्धितोऽसत्त्वात्, न चैकस्य द्रव्यस्याभावादनेकान्ताभावप्रसक्तिः, यतोऽभि- 25 न्नकालाश्चोत्पादादयः, न हि कुशूलविनाशघटोत्पादयोर्भिन्नकालता, अन्यथा विनाशात् कार्योत्पत्तिः स्यात्, घटाद्युत्तरपर्यायानुत्पत्तावपि प्राक्तनपर्यायध्वंसप्रसक्तिश्च स्यात्, पूर्वोत्तरपर्यायविनाशोत्पादक्रियाया निराधाराया अयोगात्तदाधारभूतद्रव्यस्थितिरपि तदाऽभ्युपग-

न्तव्या, न च क्रियाफलमेव क्रियाधारः, तस्य प्रागसत्त्वात्, सत्त्वे वा क्रियावैफल्यात्, तत-
क्रियाणामभिन्नकालत्वात्तदव्यतिरिक्तं द्रव्यमभिन्नम् । न च घटोत्पादविनाशापेक्षया भिन्न-
कालतयाऽर्थान्तरत्वम्, कुशूलघटविनाशोत्पादापेक्षयाऽभिन्नकालत्वेनानर्थान्तरत्वादेकान्त इति
वक्तव्यम्, द्रव्यस्य पूर्वावस्थायां भिन्नाभिन्नतया प्रतीयमानस्योत्तरावस्थायामपि भिन्ना-
5 भिन्नतया तस्यैव प्रतीतेरनेकान्ताव्याहतेः । न चाबाधिताध्यक्षादिप्रतिपत्तिविषयस्य तस्य
विरोधाद्युद्भावनं युक्तिसङ्गतं सर्वप्रमाणप्रमेयव्यवहारविलोपप्रसङ्गात्, अत एवार्थान्तर-
मनर्थान्तरञ्चोत्पादादयो द्रव्यात्, तद्वा तेभ्यस्तथेति प्रतिज्ञेयम्, द्रव्यात्तथाभूततद्ग्राहकत्वपरि-
णतादात्मलक्षणात् प्रमाणादित्यपि व्याख्येयम्, न हि तथाभूतप्रमाणप्रवृत्तिस्तथाभूतार्थमन्तरे-
णोपपन्ना धूम इव धूमध्वजान्तरेण, संवेद्यते च तथाभूतग्राह्यग्राहकरूपतया अनेकान्तत्वात्,
10 प्रमाणमिति न तदपलापः कर्तुं शक्यः, अन्यथातिप्रसङ्गात् । यद्वा देशादिविप्रकृष्टा उत्पाद-
विनाशस्थितिस्वभावा भिन्नाभिन्नकाला अर्थान्तरानर्थान्तररूपाः, द्रव्यत्वात् द्रव्याव्यतिरिक्त
त्वादित्यर्थः, अन्यथोत्पादादीनामभावप्रसक्तेः, तेभ्यो वा द्रव्यमर्थान्तरानर्थान्तरम् द्रव्य-
त्वात्, प्रतिज्ञार्थैकदेशता च हेतोर्नाशङ्कनीया द्रव्यविशेषे साध्ये द्रव्यसामान्यस्य हेतुत्वेनो-
पन्यासात् ॥ ३२ ॥

15 अत्रैवार्थे प्रत्यक्षप्रतीतमुदाहरणमाह—

**जो आउंचणकालो सो चेव पसारियस्स वि ण जुत्तो ।**
**तेसिं पुण पडिवत्तीविगमे कालंतरं णत्थि ॥ ३३ ॥**

य आकुञ्चनकालः स एव प्रसारितस्यापि न युक्तः ।
तयोः पुनः प्रतिपत्तिविगमयोः कालान्तरं नास्ति ॥ छाया ॥

20 य इति, अङ्गुल्यादेर्द्रव्यस्य य आकुञ्चनकालः स एव तत्प्रसारणस्य न युक्तः भिन्न-
कालतया आकुञ्चनप्रसारणयोः प्रतीतेस्तयोर्भेदः, अन्यथा तयोः स्वरूपाभावापत्तेः, तत्तत्प-
र्यायाभिन्नस्याङ्गुल्यादिद्रव्यस्यापि तथाविधत्वात्तदपि भिन्नमभ्युपगन्तव्यमन्यथा तदनुपल-
म्भात्, अभिन्नञ्च, तदवस्थयोस्तस्यैव प्रत्यभिज्ञायमानत्वात् । तयोः पुनरुत्पादविनाशयोः
प्रतिपत्तिः प्रादुर्भावः, विगमो—विपत्तिः तत्र कालान्तरं भिन्नकालत्वमङ्गुलिद्रव्यस्य च नास्ति,
25 पूर्वपर्यायविनाशोत्तरपर्यायोत्पत्त्यङ्गुलिद्रव्यावस्थितीनामभिन्नकालताऽभिन्नरूपता च प्रतीयते,
एकस्यैव द्रव्यस्य तथाविवर्त्तात्मकस्याध्यक्षतः प्रतीतेः ॥ ३३ ॥

यथोत्पादव्ययस्थितीनां प्रत्येकमेकैकं रूपं त्र्यात्मकं तथाभूतवर्त्तमानभविष्यद्भिरप्येकैकं
रूपं त्रिकालतामासादयतीत्याह—

**उप्पज्जमाणकालं उप्पण्णं ति विगयं विगच्छंतं ।**
**दवियं पण्णवयंतो तिकालविसयं विसेसेइ ॥ ३४ ॥**

उत्पद्यमानकालमुत्पन्नमिति विगतं विगच्छत् ।
द्रव्यं प्रज्ञापयंस्त्रिकालविषयं विशिनष्टि ॥ छाया ॥

**उत्पद्यमानेति,** उत्पद्यमानसमय एव यत्किञ्चित् पटद्रव्यं तावदुत्पन्नं यद्येकतन्तुप्रवेश- 5
क्रियासमये तद्द्रव्यं तेन रूपेण नोत्पन्नं तदुत्तरत्रापि तन्नोत्पन्नमित्यत्यन्तानुत्पत्तिप्रसक्तिस्तस्य
स्यात्, न चोत्पन्नांशेन तेनैव पुनस्तदुत्पद्यते तावन्मात्रपटादिद्रव्योत्पत्तिप्रसक्तेरुत्तरोत्तर-
क्रियाक्षणस्य तावन्मात्रफलोत्पादने एव प्रक्षयादपरफलान्तरस्यानुत्पत्तिप्रसक्तेः, यदि च
विद्यमाना एकतन्तुप्रवेशक्रिया न फलोत्पादिका विनष्टा सुतरां न भवेत्, असत्त्वादनुत्पत्त्य-
वस्थावत्, न ह्यनुत्पन्नविनष्टयोरसत्त्वे कश्चिद्विशेषः । ततः प्रथमक्रियाक्षणः केनचिद्रूपेण 10
द्रव्यमुत्पादयति द्वितीयस्त्वसौ तदेवांशान्तरेणोत्पादयति, अन्यथा क्रियाक्षणान्तरस्य वैफल्य-
प्रसक्तेः, एकांशेनोत्पन्नं सदुत्तरक्रियाक्षणफलांशेन यद्यपूर्वमपूर्वं तदुत्पद्येत तदोत्पन्नं भवे-
न्नान्यथेति प्रथमतन्तुप्रवेशादारभ्यान्त्यतन्तुसंयोगावधि यावदुत्पद्यमानं प्रबन्धेन तद्रूप-
तयोत्पन्नमभिप्रेतनिष्ठारूपतया चोत्पत्स्यत इत्युत्पद्यमानमुत्पन्नमुत्पत्स्यमानञ्च भवति, एव-
मुत्पन्नमपि उत्पद्यमानमुत्पत्स्यमानञ्च भवति, तथोत्पत्स्यमानमपि उत्पद्यमानमुत्पन्नञ्चेत्येकैक- 15
मुत्पन्नादिकालत्रयेण यथा त्रैकाल्यं प्रतिपद्यते तथा विगच्छदादिकालत्रयेणाप्युत्पादादिरेकैकः
त्रैकाल्यं प्रतिपद्यते, तथाहि यथा यद्यदैवोत्पद्यते तत्तदैवोत्पन्नमुत्पत्स्यते च, यद्यदैवोत्पन्नं
तत्तदैवोत्पद्यते उत्पत्स्यते च, यद्यदैवोत्पत्स्यते तत्तदैवोत्पद्यते उत्पन्नञ्च । तथा तदेव तदैव
यदुत्पद्यते तत्तदैव विगतं विगच्छद्विगमिष्यच्च, तथा यदेव यदैवोत्पन्नं तदेव तदैव
विगतं विगच्छद्विगमिष्यच्च तथा यदेव यदैवोत्पत्स्यते तदेव तदैव विगतं विगच्छद्विगमि- 20
ष्यच्च, एवं विगमोऽपि त्रिकाल उत्पादादिना दर्शनीयः, तथा स्थित्यापि त्रिकाल एव
सप्रपञ्चः प्रदर्शनीयः, एवं स्थितिरपि उत्पादविनाशाभ्यां सप्रपञ्चाभ्यामेकैकाभ्यां त्रिकाला-
प्रदर्शनीयेति द्रव्यमन्योन्यात्मकतथाभूतकालत्रयात्मकोत्पादविनाशस्थित्यात्मकं प्रज्ञापयंस्त्रि-
कालविषयप्रादुर्भवद्धर्माधारतया तद्विशिनष्टि, अनेन प्रकारेण त्रिकालविषयं द्रव्यस्वरूपं प्रति-
पादितं भवति, अन्यथा द्रव्यस्याभावात् तद्वचनस्य मिथ्यात्वप्रसक्तिरिति भावः ॥ ३४ ॥ 25

नन्वर्थान्तरगमनलक्षणस्य विनाशस्यासम्भवाद्विभागजस्य चोत्पादस्य, तद्द्वयाभावे स्थि-
तेरप्यभावात् तत्त्रैकाल्यं दूरोत्सारितमेवेति मन्यमानान् वादिनः प्रति तदभ्युपगम प्रदर्शन
पूर्वकमाह—

दव्वंतरसंयोगाहि केचिदवियस्स बेंति उप्पायं ।
उप्पायत्थाकुसला विभागजायं ण इच्छंति ॥ ३५ ॥

द्रव्यान्तरसंयोगैः केचिद्द्रव्यस्य ब्रुवत उत्पादम् ।
उत्पादार्थाकुशला विभागजात नेच्छन्ति ॥ छाया ॥

5 द्रव्यान्तरेति, सजातीयद्रव्यान्तरादेव समवायिकारणात्तत्संयोगासमवायिकारणनिमित्तकारणादिसव्यपेक्षादवयवि कार्यद्रव्यं भिन्नं कारणद्रव्येभ्य उत्पद्यत इति द्रव्यस्योत्पादं केचन ब्रुवते, ते चोत्पादार्थानभिज्ञा विभागजातं नेच्छन्ति ॥ ३५ ॥

कुतः पुनर्विभागजोत्पादानभ्युपगमवादिन उत्पादार्थानभिज्ञा इत्यत्राह—

अणु दुअणुएहिं दव्वे आरद्धे तिअणुयंति ववएसो ।
10 तत्तो य पुण विभत्तो अणुत्ति जाओ अणू होइ ॥ ३६ ॥

अणुः द्व्यणुकाभ्यां द्रव्ये आरब्धे त्र्यणुकमिति व्यपदेशः ।
ततश्च पुनर्विभक्तः अणुरिति जातोऽणुर्भवति ॥ छाया ॥

अणुरिति, द्वाभ्यां परमाणुभ्यां कार्यद्रव्ये आरब्धे अणुरिति व्यपदेशः परमाणुद्वयारब्धस्य द्व्यणुकस्याणुपरिमाणत्वात्, त्रिभिश्चतुर्भिर्वा द्व्यणुकैरारब्धे त्र्यणुकमिति व्यपदेशः, अ-
15 न्यथोत्पत्तावुपलब्धिनिमित्तस्य महत्त्वस्याभावप्रसक्तेः । अत्र किल त्रिभिश्चतुर्भिर्वा प्रत्येकं परमाणुभिरारब्धमणुपरिमाणमेव कार्यमिति त्र्यादिपरमाणूनामारम्भकत्वे आरम्भवैयर्थ्यप्रसक्तिरिति द्वाभ्यां परमाणुभ्यां द्व्यणुकमारभ्यते, त्र्यणुकमपि न द्वाभ्यामणुभ्यामारभ्यते, कारणविशेषपरिमाणतोऽनुपभोग्यत्वप्रसक्तेः, यतो महत्त्वपरिमाणयुक्तं तदुपलब्धियोग्यं स्यात्, तथा चोपभोग्यं कारणबहुत्वमहत्त्वप्रचयजन्यञ्च महत्त्वम्, न च द्वित्रिपरमाण्वारब्धे कार्ये महत्त्वम्,
20 तत्र महत्परिमाणाभावात्, तेषामणुपरिमाणत्वात् प्रचयोऽप्यवयवाभावान्न सम्भवति तेषाम् । नापि द्वाभ्यामणुभ्यां कारणबहुत्वाभावात्, न प्रचयोऽपि प्रशिथिलावयवसंयोगाभावात्, उपलभ्यते च समानपरिमाणैस्त्रिभिः पिण्डैरारब्धे कार्ये महत्त्वं न द्वाभ्यामिति महत्परिमाणाभ्यां ताभ्यामेवारब्धे महत्त्वम्, न त्रिभिरल्पपरिमाणैरारब्ध इति समानसंख्यातुलापरिमाणाभ्यां तन्तुपिण्डाभ्यामारब्धे पटादिकार्ये प्रशिथिलावयवतन्तुसंयोगकृतं महत्त्वमुपलभ्य-
25 ते न तदितरत्रेति । नन्वेवं यदि कार्यारम्भस्तदा द्रव्याणि द्रव्यान्तरमारभन्ते द्वे बहूनि वा

१ क्वचित्कारणगतं बहुत्वं क्वचिन्महत्त्वं क्वचिच्च प्रचयः कार्यगते महत्त्वे कारणम्, तत्र प्रचयो नाम शिथिलाख्योऽवयव संयोगविशेष इति नैयायिकास्तदेतन्मत प्रथमं प्रदर्श्य नन्वेवमित्यादिना निराक्रियते ॥

समानजातीयानि इत्यभ्युपगमः परित्यज्यताम्, यतो न परमाणुद्व्यणुकादीनामपरित्यक्ताजन-
कावस्थानामनङ्गीकृतस्वकार्यजननस्वभावानाञ्च द्व्यणुकत्र्यणुकादिकार्यनिर्वर्त्तकत्वम्, अन्यथा
प्रागपि तत्कार्यप्रसङ्गात् । अथ न तेषामजनकावस्थात्यागतो जनकस्वभावान्तरोत्पत्तौ कार्य-
जनकत्वं किन्तु पूर्वस्वभावव्यवस्थितानामेव संयोगलक्षणसहकारिशक्तिसद्भावात् कार्य-
निर्वर्तकत्वं प्राक्तु तदभावान्न कार्योत्पत्तिः कारणानामविचलितस्वरूपत्वेऽपि । न च संयो- 5
गेन तेषामनतिशयो व्यावर्त्यते, अतिशयो वा कश्चिदुत्पद्यते, अभिन्नो वा भिन्नो वा संयोग-
स्यैवातिशयत्वात् । न च कथमन्यस्तेषां संयोगोऽतिशय इति वाच्यम्, अनन्यस्याप्यतिश-
यत्वायोगात्, न हि स एव तस्यातिशय इत्युपलब्धम्, तस्मात्तत्संयोगे सति कार्यमुपलभ्यते
तदभावे तु नोपलभ्यत इति संयोग एव कार्योत्पादने तेषामतिशय इति न तदुत्पत्तौ तेषां
स्वभावान्तरोत्पत्तिः संयोगाऽतिशयस्य तेभ्यो भिन्नत्वादिति मैवम्, यतः कार्योत्पत्तौ तेषां 10
संयोगोऽतिशयो भवतु, संयोगोत्पत्तौ तु तेषां कोऽतिशय इति वाच्यम्, न तावत् स एव
संयोगस्तस्याद्याप्यनुत्पत्तेः, नापि संयोगान्तरं तस्यानभ्युपगमात्, अभ्युपगमेऽपि तदुत्पत्ता-
वप्यपरसंयोगातिशयप्रकल्पनायामनवस्थाप्रसक्तेः । न च क्रियाऽतिशयः, तदुत्पत्तावपि पूर्वो-
क्तदोषप्रसङ्गात्, किञ्चादृष्टापेक्षात्माणुसंयोगात् परमाणुक्रियोत्पद्यत इत्यभ्युपगमादात्मपर-
माणुसंयोगोत्पत्तावप्यपरोऽतिशयो वाच्यः तत्र च तदेव दूषणम् । किञ्चासौ संयोगो द्व्यणुक- 15
निर्वर्त्तकः किं परमाण्वाश्रितः, उत तदन्याश्रितः किंवाऽनाश्रितः, प्रथमेऽपि तदुत्पत्तौ
यदि परमाणुरुत्पद्यते तदा संयोगवत्तस्य कार्यताप्रसङ्गः, यदि नोत्पद्यते तदा संयोग-
स्तदाश्रितो न स्यात्, समवायस्याभावात्, परमाणूनां संयोगं प्रत्यकारकत्वात्, तद्-
कारकत्वन्तु तत्र तस्य प्रागभावानिवृत्तेः, तदन्यगुणान्तरवत्, ततस्तेषां कार्यरूपतया
परिणतिरभ्युपगन्तव्या, अन्यथा तदाश्रितत्वं संयोगस्य न स्यात्, अन्याश्रितत्वेऽपि 20
पूर्वोक्तदोषप्रसङ्गः, अनाश्रितत्वे तु निर्हेतुकोत्पत्तिप्रसक्तिः । अथ संयोगस्यानुत्पादाङ्गी-
कारे तस्य सद्रूपत्वे नित्यताप्रसङ्गोऽकारणत्वात्, अथासद्रूपत्वं तर्हि कार्यानुदयः स्यात्,
तदभावे प्राग्वत् विशिष्टपरिणामोपेतकार्यद्रव्योत्पत्त्यभावात्, तथा च जगतोऽदृश्यता-
प्रसक्तिरिति संयोगैकत्वसंख्यापरिमाणमहत्त्वपरत्वाद्यनेकगुणानां तत्रोत्पत्तिरभ्युपेया कारण-
गुणपूर्वप्रक्रमेण कार्योत्पत्त्यभ्युपगमात्, इष्टमेवैतदिति चेन्न, आश्रयस्य वाच्यत्वात्, न च 25
कार्यमाश्रयः, तदुत्पत्तेः प्राक् तस्यासत्त्वात्, सत्त्वे वोत्पत्तिविरोधात्, न च निर्गुणमेव
कार्यं गुणोत्पत्तेः प्रागस्तीति वक्तव्यम्, गुणसम्बन्धवत्सत्तासम्बन्धस्याप्याद्यक्षणेऽभावेन
तत्सत्त्वासम्भवात् । न चोत्पत्तिकाल एव सत्तासम्बन्धः, रूपादिगुणसमवायाभाव-

१ उत्पन्नद्रव्यस्य क्षणं निर्गुणत्वनिष्क्रियत्ववत्सत्तासामान्यतायाः अपि दुर्वारत्वेति भावः ।

तस्तदाऽनुपलम्भे ततस्तत्सत्तासम्बन्धव्यवस्थापनासम्भवात्, ततो न कार्यं तदाश्रयः, नाप्य-
णुस्तदाश्रयः, तस्य कार्यद्रव्यभूतस्याप्याश्रयतया कार्यकार्यभूतगुणयोरेकाश्रयताप्राप्तेः, न चेष्टा-
पत्तिः, तयोः कुण्डबदरवदाश्रयाश्रयिभावेऽकार्यकारणभावप्रसङ्गात्, न वाऽयुतसिद्धयोस्तथा,
अयुतसिद्ध्याऽऽश्रयाश्रयिभावविरोधात्, तथाहि अपृथक्सिद्ध इत्येनन भेदनिषेधः प्रतिपा-
5 द्यते समवायाभावेऽन्यस्यार्थस्यात्रासम्भवात्, आधाराधेयभाव इत्यनेन चैकत्वनिषेधः क्रियते
इति कथमनयोरेकत्र सद्भावः। यदि च परमाणवः स्वरूपापरित्यागतः कार्यद्रव्यमारभन्ते
स्वात्मनोऽव्यतिरिक्तं तदा कार्यद्रव्यानुत्पत्तिप्रसक्तिः, न हि कार्यद्रव्ये परमाणुस्वरूपापरित्यागे
स्थूलत्वस्य सद्भावः, तस्य तदभावात्मकत्वात्, तस्मात् परमाणुरूपतापरित्यागेन मृद्द्रव्यं स्थूल-
कार्यस्वरूपमासादयति तद्रूपतापरित्यागेन च पुनरपि परमाणुरूपतामनुभवतीति वलय-
10 वत् पुद्गलद्रव्यपरिणतेरादिरन्तो वा न विद्यते इति न कार्यद्रव्यं कारणेभ्यो भिन्नम्, न चार्था-
न्तरभावगमनं विनाशोऽयुक्त इति तद्रूपपरित्यागोपादानात्मकस्थितिस्वभावस्य द्रव्यस्य
त्रैकाल्यं नानुपपन्नम्। यथा चैकत्वसंख्यासंयोगमहत्त्वापरत्वादिपर्यायैः परमाणूनामुत्पत्तेः
कार्यरूपाः परमाणवस्तथा बहुत्वसंख्याविभागाल्पपरिमाणपरत्वात्मकत्वेन प्रादुर्भावात् पर-
माणवः कार्यद्रव्यवत् तथोत्पन्नाश्चाभ्युपगन्तव्याः। कारणान्वयव्यतिरेकानुविधानोपलम्भस्य
15 कार्यताव्यवस्थानिबन्धनस्यात्रापि सद्भावात्, तदाह तस्मादिति, एकपरिमाणाद्द्रव्यात् विभक्तः
विभागात्मकत्वेनोत्पन्नः अणुरिति अणुर्जातो भवति, एतदवस्थायाः प्राक् तदसत्त्वात्, सत्त्वे
वेदानीमिव प्रागपि स्थूलरूपकार्याभावप्रसङ्गात्, इदानीं वा तद्रूपता तद्रूपाविशेषात् प्राक्तना-
वस्थायामिव स्यात्। एवं चतुर्विधकार्यद्रव्याभ्युपगमोऽसङ्गतः, न च य एव कार्यद्रव्यार-
म्भकाः परमाणवः त एव तद्द्रव्यविनाशोत्तरकालं स्वरूपेण व्यवस्थिताः, [२]कार्यद्रव्यप्रागभाव-
20 प्रध्वंसाभावयोरेकत्वविरोधात्, घटद्रव्यप्रागभावप्रध्वंसाभावमृत्पिण्डकपालवत्। न च प्राग-
भावप्रध्वंसाभावयोस्तुच्छरूपतया मृत्पिण्डकपालरूपत्वमसिद्धम्, तुच्छरूपाभावस्य प्रमाणा-
जनकत्वेन तदविषयत्वतो व्यवस्थापयितुमशक्यत्वात्। न च कपालसंयोगात् घटद्रव्यमुप-
जायते तद्विभागाच्च विनश्यतीति मृत्पिण्डस्य घटद्रव्यं प्रति समवायिकारणत्वमयुक्तमिति
वाच्यम्, अध्यक्षत एव मृत्पिण्डोपादानत्वेन तस्य प्रतीतेः अत एव घटस्य कपालसमवायि-
25 कारणत्वानुमानमध्यक्षबाधितकर्मनिर्देशानन्तरप्रयुक्तत्वेन कालात्ययापदिष्टम्। न चाल्प-
परिमाणतन्तुप्रभवं महत्परिमाणं पटकार्यमुपलब्धमिति घटादिकमपि तदल्पपरिमाणानेक-

---

२ यथा हि घटद्रव्यप्रागभावो मृत्पिण्डात्मको घटद्रव्यप्रध्वंसाभावश्च कपालात्मा, तयोरेकत्वं विरुद्धं तथैव परमाणोस्तादवस्थ्ये भाविकार्यद्रव्यप्रागभावात्मा भूतकार्यध्वंसात्मा स भवेत्, विरुद्धश्च तथाभ्युपगम इति परमाणोः कथञ्चिन्निवृत्तिरभ्युपेयेति भावः ॥

कारणप्रभवमिति वाच्यम् विपर्ययेणापि कल्पनायाः प्रवृत्तिप्रसङ्गात्, अध्यक्षबाधस्यात्रापि समानत्वात् । किञ्च परमाणूनां सर्वदैकं रूपमभ्युपगच्छन्नभावमेव तेषामभ्युपगच्छेत्, अकारकत्वप्रसङ्गात्, तच्च प्रागभावप्रध्वंसाभावविकलत्वेनानाधेयातिशयत्वाद्वियत्कुसुमवत्, तदसत्त्वे च कार्यद्रव्यस्याप्यभावः, अहेतोस्तस्यासत्त्वात् । तदभावे च परापरत्वादिप्रत्ययादेरयोगात् कालादेरप्यमूर्त्तद्रव्यस्याभाव इति सर्वाभावप्रसक्तिः ॥ ३६ ॥ 5

प्रस्तुतमेवाक्षेपद्वारेणोपसंहरति—

**बहुयाण एगसद्दे जइ संजोगाहि होइ उप्पाओ ।**
**णणु एगविभागम्मि वि जुज्जइ बहुयाण उप्पाओ ॥ ३७ ॥**

बहूनामेकशब्दो यदि संयोगैर्भवति उत्पादः ।
ननु एकविभागेऽपि युज्यते बहूनामुत्पादः ॥ छाया ॥ 10

**बहूनामिति,** द्व्यणुकादीनां संयोगे यदेकस्य त्र्यणुकादेः कार्यद्रव्यस्योत्पादो भवति, अन्यथैकाभिधानप्रत्ययव्यवहारायोगात्, न हि बहुषु एको घट उत्पन्न इत्यादिव्यवहारो युक्तः, नन्वित्यक्षमायाम्, एकस्य कार्यद्रव्यस्य विनाशेऽपि युज्यते एव बहूनां समानजातीयानां तत्कार्यद्रव्यविनाशात्मकानां प्रभूततया विभक्तानामुत्पाद इति, तथाहि घटविनाशाद्बहूनि कपालानि उत्पन्नानीत्यनेकाभिधानप्रत्ययव्यवहारो युक्तः, अन्यथा तदसम्भवात्, 15 ततः प्रत्येकं त्र्यात्मकास्त्रिकालाश्चोत्पादादयो व्यवस्थिता इत्यनन्तपर्यायात्मकमेकं द्रव्यम् ॥ ३७॥

नन्वनन्ते काले भवत्वनन्तपर्यायमेकं द्रव्यम्, एकसमये तु कथं तत्तदात्मकमवसीयते इत्यत्राह—

**एगसमयम्मि एगदवियस्स बहुयावि होंति उप्पाया ।**
**उप्पायसमा विगमा ठिईउ उस्सग्गओ णियमा ॥ ३८ ॥** 20

एकसमये एकद्रव्यस्य बहवोऽपि भवन्त्युत्पादाः ।
उत्पादसमा विगमाः स्थितिस्तु उत्सर्गतो नियमात् ॥छाया ॥

**एकसमय इति,** एकस्मिन् समये एकद्रव्यस्य बहव उत्पादा भवन्ति, उत्पादसमानसंख्या विगमा अपि तस्यैव तदैवोत्पद्यन्ते विनाशमन्तरेणोत्पादस्यासम्भवात् न हि पूर्वपर्यायाविनाशे उत्तरपर्यायो भवति, भावे वा सर्वस्य सर्वकार्यताप्रसक्तिः तदकार्यत्वं वा 25 कार्यान्तरस्येव स्यात् । स्थितिरपि सामान्यरूपतया तथैव नियता स्थितिरहितस्योत्पादस्याभावात्, भावे वा शशशृङ्गादेरप्युत्पत्तिप्रसङ्गात् ॥ ३८ ॥

एतदेव दृष्टान्तद्वारेण समर्थयति—

कायमणवयणकिरियारूवाइगईविसेसओ वावि ।
संजोयभेयओ जाणणाय दवियस्स उप्पाओ ॥ ३९ ॥

कायमनोवचनक्रियारूपादिगतिविशेषा वापि ।
5 संयोगभेदतो ज्ञातव्याश्च द्रव्यस्योत्पादाः ॥ छाया ॥

कायेति, यदैवानन्तप्रदेशिकाहारभावपरिणतपुद्गलोपयोगोपजातरसरुधिरादिपरिणतिवशाविर्भूतशिरोऽङ्गुल्याद्यङ्गोपाङ्गभावपरिणतस्थूलसूक्ष्मसूक्ष्मतरादिभेदभिन्नावयवात्मकस्य कायस्योत्पत्तिस्तदैवानन्तानन्तपरमाणूपचितमनोवर्गणापरिणतिं प्रतिलभ्य मनउत्पादोऽपि, तदैव वचनस्यापि कायोत्सृष्टतरवर्गणोत्पत्तिप्रतिलब्धवृत्तिरुत्पादः, तदैव च कायात्मनोरन्योन्यानुप्र-10 वेशाद्विषमीकृतासंख्यातात्मप्रदेशे कायक्रियोत्पत्तिः, तदैव च रूपादीनामपि प्रतिक्षणोत्पत्तिविनश्वराणामुत्पत्तिः, तदैव च मिथ्यात्वाविरतिप्रमादकषायादिपरिणतिसमुत्पादितकर्मबन्धनिमित्ताऽऽगामिगतिविशेषाणामप्युत्पत्तिः, तदैव चोत्सृज्यमानोपादीयमानानन्तानन्तपरमाण्वापादिततत्प्रमाणसंयोगविभागानामुत्पत्तिः। यद्वा यदैव शरीरादेर्द्रव्यस्योत्पत्तिस्तदैव त्रैलोक्यान्तर्गतसमस्तद्रव्यैः सह साक्षात् पारम्पर्येण वा सम्बन्धानामुत्पत्तिः सर्वद्रव्यव्याप्तिव्यव-15 स्थिताकाशधर्माधर्मादिद्रव्यसम्बन्धात्, तदैव च भाविस्वपर्यायपरज्ञानविषयत्वादीनाञ्चोत्पादनशक्तीनामप्युत्पादः शिरोग्रीवाचञ्चुनेत्रपिच्छोदरचरणाद्यनेकावयवान्तर्भावकमयूराण्डकरसशक्तीनामिव, अन्यथा तत्र तेषामुत्तरकालमप्यनुत्पत्तिप्रसङ्गात्। उत्पादविनाशस्थित्यात्मकाश्च प्रतिक्षणं भावाः शीतोष्णसम्पर्कादिवशादवान्तरसूक्ष्मतरतमादिभेदेन तथैव स्वपरापेक्षया युगपत् क्रमेण चोपलब्धेः, न च तरतमादिभेदेन नवपुराणतया क्रमेणोपलब्धिः प्रतिक्षणं 20 तथोत्पत्तिमन्तरेण सम्भवति। न चास्मदाद्यध्यक्षं निरवशेषधर्मात्मकवस्तुग्राहकम्, येनानन्तधर्माणामेकदा वस्तुन्यप्रतिपत्तेरभाव इत्युच्यते, अनुमानतः प्रतिक्षणमनन्तधर्मात्मकस्य तस्य प्रदर्शितन्यायेन प्रतिपत्तेः, सकलत्रैलोक्यव्यावृत्तस्य च वस्तुनोऽध्यक्षेण ग्रहणे तद्व्यावृत्तीनां पारमार्थिकतद्धर्मरूपतया कथं नानन्तधर्माणां वस्तुन्यध्यक्षेण ग्रहणम्, अन्यथा तस्य तद्व्यावृत्तताऽयोगात् ॥ ३९ ॥

25 इति तपोगच्छनभोमणिश्रीमद्विजयानंदसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपाने उत्पादादिविशेषनिरूपणं नाम त्रिंशं सोपानम् ॥



# हेत्वहेतुवादस्वरूपम् ।

इदानीं विदितनयत्वाद्विशिष्टप्रज्ञः शिष्यो विगृह्य कथनयोग्यः सम्पन्न इति विग्रह-कथनोपदेशमाह—

दुविहो धम्मावाओ अहेउवाओ य हेउवाओ य ।
तत्थ उ अहेउवाओ भवियाऽभवियादओ भावा ॥ ४० ॥ 5

द्विविधो धर्माऽऽवादोऽहेतुवादश्च हेतुवादश्च ।
तत्र त्वहेतुवादो भव्याभव्यादयो भावाः ॥ छाया ॥

द्विविध इति, अथवा प्रत्यक्षपरोक्षरूप आत्मन उपयोगः संक्षेपेण द्विविधः, प्रत्यक्षोपयोगोऽवधिमनःपर्यवकेवलभेदेन त्रिविधः, तत्र केवलोपयोगः सकलविषयः प्रागुक्तः, इतरौ चासकलविषयौ अस्मदादिभिरागमगम्यौ । मतिश्रुतभेदेन परोक्षोपयोगोऽपि द्विविधः, 10 तत्राक्षलिङ्गप्रभवमत्युपयोगस्य स्वरूपमुक्तम्, श्रुतोपयोगस्य त्वाचार्यस्तद्धेतुभूतहेत्वहेतुवाद-भेदभिन्नागमप्रतिपादनद्वारेण स्वरूपमाह द्विविध इति, वस्तुधर्माणामस्तित्वादीनां आसमन्ताद्वादः प्रतिपादक आगमोऽहेतुहेतुवादभेदेन द्वैविध्यं प्रतिपद्यते, प्रमाणान्तरानवगत-वस्तुप्रतिपादक आगमोऽहेतुवादः, तद्विपरीतस्त्वसौ हेतुवादः हेतोरभिधानात्, यस्तु वस्तुस्वरूपप्रतिपादकत्वेऽपि तद्विपरीतोऽसावहेतुवादो दृष्टिवादात्[1] प्रायेणान्यः । तत्र त्वहेतु- 15 वादो भव्याभव्यस्वरूपप्रतिपादक आगमः, तद्विभागप्रतिपादनेऽध्यक्षादेः प्रमाणान्तरस्या-प्रवृत्तेः, न ह्ययं भव्योऽयन्त्वभव्य इत्यत्रागममन्तरेण प्रमाणान्तरप्रवृत्तिसम्भवोऽस्मदाद्य-पेक्षया ॥ ननु तद्विभागप्रतिपादकं वचो यथार्थमर्हद्वचनत्वात्, अनेकान्तात्मकवस्तुप्रतिपादकवचनवदित्यनुमानात्तद्विभागप्रतिपत्तौ कथं न तस्यानुमानविषयता, न, एवमप्यागमादेव तद्विभागप्रतिपत्तेः, तद्व्यतिरेकेण प्रमाणान्तरस्य तत्प्रतिपत्तिनिबन्धनस्याभावात् । अर्हदाग- 20 मस्य च प्रधानार्थसंवादनिबन्धनतत्प्रणीतत्वनिश्चयेऽनुमानतोऽतीन्द्रियार्थविषये प्रामाण्यं निश्चीयत इत्यभ्युपगम्यत एव । आगमनिरपेक्षस्य तु प्रमाणान्तरस्यास्मदादेस्तत्र प्रवृत्तिर्न विद्यत इत्येतावताऽहेतुवादत्वमेतद्विषयागमस्योच्यत इति ॥ ४० ॥

वचनव्यापारं केवलमपेक्ष्यायं क्रमः, यदा तु ज्ञानदर्शनचारित्रत्रितये यथावदनुष्ठान-प्रवणः तद्विकलश्च प्रतीयते तदाऽनुमानगम्योऽपि तद्विभागो भवति, यथा भव्योऽभव्यो वायं 25

१ दृष्टयो दर्शनानि नया वा, यत्रामी अवतरन्त्यसौ दृष्टिवादः सर्वभावप्ररूपणपरः सर्वोऽयं व्यवच्छिन्न-प्रायोऽपि परिकर्मसूत्रपूर्वगतानुयोगचूलिकाभेदेन पञ्चविधः ॥

पुरुषः, सम्यग्ज्ञानादिपरिपूर्णापरिपूर्णत्वाभ्याम्, लोकप्रसिद्धभव्याभव्यपुरुषवदिति । अहेतुवादागमावगते वा धर्मिणि भव्याभव्यस्वरूपे तदविपरीतनिर्णयफलो हेतुवादः प्रवर्त्तते, योऽयमागमे भव्यादिरभिहितः स तथैव यथोक्तहेतुसद्भावादित्याह—

भविओ सम्मद्दंसणणाणचरित्तपडिवत्तिसंपन्नो ।
5 णियमा दुक्खंतकडो त्ति लक्खणं हेउवायस्स ॥ ४१ ॥

भव्यः सम्यग्दर्शनज्ञानचारित्रप्रतिपत्तिसम्पन्नः ।
नियमाद्दुःखान्तकर इति लक्षणं हेतुवादस्य ॥ छाया ॥

भव्य इति, भव्योऽयं सम्यग्दर्शनज्ञानचारित्रप्रतिपत्तिसम्पूर्णत्वात्, उक्तपुरुषवत्, तत्परिपूर्णत्वादेव नियमात्संसारदुःखान्तं करिष्यति कर्मव्याधेरात्यंतिकं विनाशमनुभविष्यति 10 तन्निबन्धनमिथ्यात्वादिप्रतिपक्षाभ्याससात्मीभावात्, व्याधिनिदानप्रतिकूलाचरणप्रवृत्ततथाविधातुरवत् । यः पुनर्न तत्प्रतिपक्षाभ्यासमसात्म्यवात् नासौ दुःखान्तकृद्भविष्यति, तन्निदानानुष्ठानप्रवृत्ततथाविधातुरवदिति हेतुवादस्य लक्षणम्, हेतुवादश्च प्रायो दृष्टिवादः, तस्य द्रव्यानुयोगत्वात् ' सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ' [तत्त्वार्थ सू० १–१] इत्यादेरनुमानादिगम्यस्यार्थस्य तत्र प्रतिपादनात्, यथा चात्रानुमानादिगम्यता तथा गन्धहस्ति- 15 प्रभृतिभिर्विक्रान्तमिति नेह प्रदर्श्यते ॥ ४१ ॥

' जीवाजीवाश्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम् ' [ तत्त्वार्थ सू० १–४ ] इत्युभयवादागमप्रतिपाद्यान् भावांस्तथैवासङ्कीर्णरूपान् प्रतिपादयन् सैद्धान्तिकः पुरुषः, इतरस्तु- तद्विराधक इत्याह—

जो हेउवायपक्खम्मि हेउओ आगमे य आगमिओ ।
20 सो ससमयपण्णवओ सिद्धंतविराहओ अन्नो ॥ ४२ ॥

यो हेतुवादपक्षे हेतुत आगमे चागमतः ।
स स्वसमयप्रज्ञापकः सिद्धान्तविराधकोऽन्यः ॥ छाया ॥

य इति, यो हेतुवादागमविषयमर्थं हेतुवादागमेन तद्विपरीतागमविषयञ्चार्थमागममात्रेण वक्ता प्रदर्शयति स स्वसिद्धान्तस्य द्वादशाङ्गस्य प्रतिपादनकुशलः, अन्यथाप्रतिपादयंश्च तदर्थस्य 25 प्रतिपादयितुमशक्यत्वात्तत्प्रतिपादके वचनेऽनास्थादिदोषमुत्पादयन् सिद्धान्तविराधको भवति, सर्वज्ञप्रणीतागमस्य निस्सारताप्रदर्शनात्तत्प्रत्यनीको भवतीति यावत् । तथाहि पृथिव्यादेर्मनुष्यपर्यन्तस्य षड्विधजीवनिकायस्य जीवत्वमागमेनानुमानादिना च प्रमाणेन सिद्धं तथैव प्रतिपादयन् स्वसमयप्रज्ञापकः, अन्यथा तद्विराधकः । यतः प्रत्यक्षचेतने त्रसनिकाये चैत-

न्यलक्षणं जीवत्वं स्वसंवेदनाध्यक्षतः स्वात्मनि प्रतीयते परत्र त्वनुमानतः । वनस्पतिपर्यन्तेषु पृथिव्यादिषु स्थावरेषु अनुमानतश्चैतन्यप्रतिपत्तिः, तथाहि वनस्पतयश्चेतनाः, वृक्षायुर्वेदाभिहितप्रतिनियतकालायुष्कविशिष्टौषधप्रयोगसंपादितवृद्धिहानिक्षतभग्नसंरोहणप्रतिनियतवृद्धिषड्भाव[1]विकारोत्पादनाशावस्थानियतविशिष्टशरीरस्निग्धत्वविशिष्टदौहृदबालकुमारवृद्धावस्था— प्रतिनियतविशिष्टरसवीर्यविपाकप्रतिनियतप्रदेशाहारग्रहणादिमत्त्वान्यथानुपपत्तेः, विशिष्टस्त्रीशरीरवदित्याद्यनुमानं भाष्यकृत्प्रभृतिभिर्विस्तरतः प्रतिपादितं तच्चैतन्यप्रसाधकमित्यनुमानतस्तेषां चैतन्यमात्रं सिद्ध्यति, साधारणप्रत्येकशरीरत्वादिकस्तु भेदो 'गूढसिरसन्धिपव्वं समभंगमहीरगं च छिण्णरुहं । साहारणं सरीरं तव्विवरीयं च पत्तेयं ' [जीवविचार०गा०१२] इत्याद्यागमप्रतिपाद्य एव । जीवलक्षणव्यतिरिक्तलक्षणास्त्वजीवा धर्माधर्माकाशकालपुद्गलभेदेन पञ्चविधाः, तत्र पुद्गलास्तिकायव्यतिरिक्तानां स्वतो मूर्तिमद्द्रव्यसम्बन्धमन्तरेणात्मद्रव्यवदमूर्त्तत्वादनुमानप्रत्ययावसेयता, तथाहि गतिस्थित्यवगाहलक्षणं पुद्गलास्तिकायादिकार्यं विशिष्टकारणप्रभवं विशिष्टकार्यत्वात् शाल्यङ्कुरादिकार्यवत्, यश्चासौ कारणविशेषः स धर्माधर्माकाशलक्षणो यथासंख्यमवसेयः । कालस्तु विशिष्टपरापरप्रत्ययादिलिङ्गानुमेयः, पुद्गलास्तिकायस्तु प्रत्यक्षानुमानलक्षणप्रमाणद्वयगम्यः, यस्तेषां धर्मादीनामसंख्येयप्रदेशात्मकत्वादिको विशेषः तत्प्रदेशानाञ्च सूक्ष्मसूक्ष्मतरत्वादिको विभागः स 'कालो य होइ सुहुमो ' इत्याद्यागमप्रतिपाद्य एव, नागमनिरपेक्षयुक्त्यवसेयः । एवमाश्रवादिष्वपि तत्त्वेषु युक्त्यागमगम्येषु युक्तिगम्यमंशं युक्तित एव आगमगम्यन्तु केवलागमत एव प्रतिपादयन् स्वसमयप्रज्ञापकः, इतरस्तु तद्विराधक इति प्रज्ञापकलक्षणमत्रगन्तव्यम् ॥ ४२ ॥

यो हेतुसाध्यमर्थं हेतुना आगमसिद्धञ्चागमेन साधयति तस्य नयवादः परिशुद्धः, नान्यस्येत्याह—यद्वा वस्तुधर्मप्रतिपादकोऽहेतुहेतुवादप्रभेद आगमो वाक्यनयरूपः परिशुद्धेतरभेदेन द्विरूपतां प्रतिपद्यत इत्याह—

**परिसुद्धो नयवाओ आगमेत्तत्थसाहओ होइ ।**
**सो चेव दुण्णिगिण्णो दोण्णि वि पक्खे विधम्मेइ ॥ ४३ ॥**

परिशुद्धो नयवाद आगममात्रार्थसाधको भवति ।
स एव दुर्निगीर्णो द्वावपि पक्षौ विधर्मयति ॥ छाया ॥

**परिशुद्ध इति,** समन्ताच्छुद्धो नयवादो यदा विवक्षिताविवक्षितानन्तरूपात्मकवस्तुप्र-

---

[1] अस्ति जायते विपरिणमते वर्द्धते विनश्यतीति षड्भावविकाराः ॥

तिपादकः प्रवर्त्तते स्वाश्रितत्वमित्यादिकं तदा भवति, प्रमाणपरिशुद्धागमार्थमात्रस्य न्यूनाधि-
कव्यवच्छेदेन प्रतिपादनात्, अधिकस्यासम्भवेन न्यूनस्य च नयानामसर्वार्थत्वप्रसङ्गतोऽ-
र्थस्य परिशुद्धागमविषयत्वायोगात् । स एव नयवाद इतरनिरपेक्षैकरूपप्रतिपादकत्वेन यदा
दुर्निक्षिप्तः–प्रमाणविरुद्धार्थप्रतिपादकत्वेनाऽवतारितस्तदा द्वितीयधर्मनिरपेक्षस्य प्रतिपाद्यध-
5 र्मस्याप्यभावतोऽप्रतिपादनादपरिशुद्धो भवति, प्रमाणविरुद्धस्य तथा तदर्थस्य व्यवस्थापयि-
तुमशक्यत्वात् ॥ ४३ ॥

अपरिशुद्धश्च नयवादः परसमयः स कियद्भेदो भवतीत्यत्राह—

**जावइया वयणवहा तावइया चेव होंति णयवाया ।**
**जावइया णयवाया तावइया चेव परसमया ॥ ४४ ॥**

10 यावन्तो वचनपथास्तावन्त एव भवन्ति नयवादाः ।
यावन्तो नयवादास्तावन्त एव परसमयाः ॥ छाया ॥

**यावन्त** इति, अनेकान्तात्मकस्य वस्तुन एकदेशस्य यदन्यनिरपेक्षस्यावधारणं अपरि-
शुद्धो नयस्तावन्मात्रार्थस्य वाचकानां शब्दानां यावन्तो मार्गा हेतवो नयास्तावन्त एव
भवन्ति नयवादास्तत्प्रतिपादकाः शब्दाः । यावन्तो नयवादास्तावन्त एव परसमयाः भवन्ति
15 स्वेच्छाप्रकल्पितनिबन्धनत्वात् परसमयानां परिमितिर्न विद्यते । ननु यद्यपरिमिताः पर-
समयाः कथं तन्निबन्धनभूतानां नयानां संख्यानियमः 'नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दसम-
भिरूढैवम्भूता नयाः' [ तत्त्वार्थ सू० १–३३ ] इति श्रूयते, न, स्थूलतस्तच्छ्रुतेः, अवा-
न्तरभेदेन तु तेषामपरिमितत्वमेव स्वकल्पनाशिल्पिघटितविकल्पानामनियतत्वात्, तदुत्थ-
प्रवादानामपि तत्संख्यापरिमाणत्वात् ॥ ४४ ॥

20 ननु कं नयमाश्रित्य कः परसमयः प्रवृत्तः, को वा कस्य विषय इत्यत्राह—

**जं काविलं दरिसणं एयं दव्वट्ठियस्स वत्तव्वम् ।**
**सुद्धोअणतणअस्स उ परिसुद्धो पज्जवविअप्पो ॥ ४५ ॥**

यत् कापिलं दर्शनं एतद्द्रव्यार्थिकस्य वक्तव्यम् ।
शुद्धोदनतनयस्य तु परिशुद्धः पर्यवविकल्पः ॥ छाया ॥

25 **यदिति**, यत्कापिलं दर्शनं सांख्यमेतद्द्रव्यास्तिकनयस्य वक्तव्यं तद्विषयविषयम्, तदु-
त्थापितश्चेति भावः, शौद्धोदनेस्तु परिशुद्धः पर्यायविशेष एव वक्तव्यः परिशुद्धपर्यायास्तिक-

नयविशेषविषयं तदुत्थापितश्च सौगतमतमित्यभिप्रायः, मिथ्यास्वरूपनयप्रभवत्वात्तनयो-मिथ्यात्वं प्राक् प्रदर्शितमेव ॥ ४५ ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजय-
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
लब्धिसूरिणा सङ्कलितस्य सम्मतितत्त्वसोपानस्य हेत्वहेतु- 5
वादस्वरूपव्यावर्णनं नामैकत्रिंशं सोपानम् ॥

## अथ कणादोक्तज्ञेयनिरसनम् ।

ननु भवतु परस्परनिरपेक्षैकैकनयावलम्बिनोः सांख्यसौगतमतयोर्मिथ्यात्वम्, कणभुङ्-मतस्य द्रव्यार्थिकपर्यायार्थिकनयद्वयावलम्बिनः कथं मिथ्यात्वमित्यत्राह— 10

**दोहिवि णएहि णीअं सत्थमुलूएण तहवि मिच्छत्तं ।**
**जं सविसअप्पहाणत्तणेण अण्णोण्णनिरवेक्खा ॥ ४६ ॥**

द्वाभ्यामपि नयाभ्यां नीतं शास्त्रमुलूकेन तथापि मिथ्यात्वम् ।
यत् स्वविषयप्रधानत्वेन अन्योन्यनिरपेक्षात् ॥ छाया ॥

द्वाभ्यामिति, द्रव्यार्थिकपर्यायार्थिकनयाभ्यामुलूकेन वैशेषिकशास्त्रकर्त्रा प्रणीतं शास्त्रं 15 द्रव्यगुणादिपदार्थषट्कस्य नित्यानित्यैकान्तरूपतया प्रतिपादनान्मिथ्यात्वं तत्प्रदर्शितपदार्थषट्कस्य प्रमाणबाधितत्वात्, यतः स्वविषयप्रधानताऽन्योन्यनिरपेक्षोभयनयाश्रितं तत्, अन्योन्यनिरपेक्षनयाश्रितत्वस्य मिथ्यात्वादिनाऽविनाभूतत्वात् । **तथाहि तन्मतं** द्रव्यगुणकर्मसामान्यविशेषसमवायाख्याः षडेव पदार्थाः न्यूनाधिकप्रतिपादकप्रमाणाभावे परस्परविविक्तस्वरूपषट्पदार्थव्यवस्थापकप्रमाणविषयत्वात्, उभयाभिमतघटादिषट्पदार्थवत्। पृथिव्यप्तेजोवाय्वा- 20 काशकालदिगात्ममनांसि नव द्रव्याणि, आद्यं चतुर्द्रव्यं नित्यानित्यभेदेन प्रत्येकं द्विविधम्, नित्यं परमाणुस्वरूपं पृथिव्यादि, द्व्यणुकादिरूपमनित्यम्, आकाशादिकं नित्यमेव, अनुत्पत्तिमत्त्वात् । रूपादयश्चतुर्विंशतिर्गुणाः, उत्क्षेपणादीनि पञ्च कर्माणि, परापरभेदेन द्विविधं सामान्यमनुगतज्ञानकारणम् । नित्यद्रव्यवृत्तयोऽन्त्या विशेषा अत्यन्तव्यावृत्तिबुद्धिहेतवः । अयुतसिद्धानामाधार्याधारभूतानामिहेति प्रत्ययहेतुर्यः सम्बन्धः स समवाय एको व्याप- 25 कश्च, गुणा अपि केचिन्नित्या एव केचिदनित्या एव, कर्मानित्यमेव, सामान्यविशेषसमवायास्तु नित्या एवेति **तदसङ्गतम्**, पृथिव्यादिपरमाणुचतुष्टयस्यैकान्ताक्षणिकस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधतस्तस्मात्तल्लक्षणसत्त्वव्यावृत्त्याऽसत्त्वात् । तेषां जनकैकस्वभावत्वेऽविकलकार-

णतया समानोत्पादानेकाङ्कुराणामिव सकलकार्याणां सकृदेवोत्पत्तिप्रसङ्गाच्च, अन्यथा विशेषाभावात् सर्वदाऽनुत्पत्तिप्रसङ्गः स्यात् । न च समवायिकारणभूतसंयोगादेरपेक्षणीयस्यासन्निधेरविकलकारणत्वमसिद्धमिति वाच्यम्, अणूनां नित्यानां संयोगादिना अनाधेयातिशयानां तदपेक्षाऽसम्भवात, न च तनुकरणादीनां कार्याणां सकृत् प्रादुर्भावो दृश्यते, अतः
5 क्रमवत्कार्यकर्तृत्वात् क्रमवदङ्कुरादिनिर्वर्तकबीजादीनामिव परमाणूनामनित्यत्वमेव स्यात् । न च परमाणूत्पादकाभिमतं न सद्धर्मोपेतं सत्त्वप्रतिपादकप्रमाणाविषयत्वात्, शशशृङ्गवदित्यनुमानान्नित्यत्वं तेषामिति वाच्यम्, असिद्धत्वात्, कुविन्दादेरणूत्पादककारणस्य सत्त्वप्रतिपादकप्रमाणविषयत्वात्, यथा च पटादयः परमाण्वात्मकाः कुविन्दोत्पाद्यास्तथाग्रे वक्ष्यते। अनैकान्तिकोऽपि हेतुः, देशकालस्वभावविप्रकृष्टानां भावानां सदुपलम्भकप्रमाणनिवृत्तावपि
10 सत्त्वाविरोधात् । न च यत एव प्रमाणात् परमाणवः प्रसिद्धाः तत एव नित्यत्वधर्मोपेता अपि ते इति तद्ग्राहकप्रमाणबाधितमनित्यत्वं तेषां नातोऽनित्यत्वानुमानेन प्रकृतप्रतिज्ञा बाधिता, तेषां च प्रमाणतोऽप्रसिद्धौ आश्रयासिद्धतया अनित्यत्वानुमानानुत्थानादिति वाच्यम्, अनित्यत्वधर्मोपेतस्यैव सर्वस्य सर्वप्रमाणविषयत्वात, अन्यथाभूतस्य प्रमाणाजनकत्वेन तद्विषयत्वानुपपत्तेः, नित्यस्य चाकारणत्वान्नातश्चतुःसंख्यं परमाण्वात्मकं नित्यद्रव्यं सम्भ-
15 वति । नापि तदारब्धमवयविद्रव्यं द्व्यणुकादिकं सम्भवति, गुणावयवभिन्नस्य तस्यानुपलब्धेः, न हि शुक्लादिगुणेभ्यस्तन्त्वाद्यवयवेभ्यश्च भिन्नं पटादिद्रव्यं चक्षुरादिज्ञानेऽवभासते, परमाणूनामेव विशिष्टाकारतयोत्पन्नानां प्रतिभासविषयतया गुणावयवार्थान्तरभूतो दृश्यत्वेनाभिमतो गुण्यवयवी तत्रैव देशे नास्ति, उपलब्धिलक्षणप्राप्तत्वे सति तत्रानुपलम्भात, यथा क्वचित प्रदेशेऽनुपलम्भविषयो घटादिरित्यनुमानेन तदभावसिद्धेः, महत्यनेकद्रव्यवत्त्वाद्रूपा-
20 च्चोपलब्धिरिति वचनात्तयोर्दृश्यत्वेनाभ्युपगमान्न हेतोर्विशेषणमसिद्धम् । अथ गुणव्यतिरिक्तो गुणी उपलभ्यत एव, तद्रूपाग्रहणेऽपि मन्दमन्दप्रकाशे बलाकादीनामुपलम्भात्[1], स्वगतशुक्लगुणाग्रहणेऽपि च सन्निहितोपधानावस्थायां[2] स्फटिकोपलो गृह्यत एव, तथाऽऽप्रपदीनकञ्चुकावच्छन्नशरीरः पुमांस्तद्गतश्यामादिरूपाप्रतिभासेऽपि पुमानिति प्रत्ययोत्पत्तेः प्रतिभात्येव, एवं यद्यद्व्यवच्छेद्यत्वेन प्रतीयते तत्तो भिन्नम्, यथा देवदत्तादश्वः, गुणिव्यवच्छे-
25 द्यत्वेन नीलोत्पलस्य रूपादयः प्रतीयन्ते च, एवं पृथिव्यप्तेजोवायवो द्रव्याणि रूपरसगन्धस्पर्शेभ्यो भिन्नानि, एकवचनबहुवचनविषयत्वात, यथा चन्द्रो नक्षत्राणीति, तथा च पृथिवीत्येकवचनम्, रूपरसगन्धस्पर्शा इति बहुवचनमुपलभ्यत इत्यनुमानतोऽपि तयोर्भेदः ।

१ तदीयरूपबलाकयोर्यद्यभेदः स्यात्तर्हि बलाकोपलम्भे तदीयस्वाभाविकरूपोलम्भोऽपि स्यान्न चोपलभ्यते तस्मात्तयोर्भेद इति भाव. । २ जपाकुसुमसन्निधान इत्यर्थः ॥

तथा पटस्तन्तुभ्यो भिन्नः, भिन्नकर्तृकत्वात्, घटादिवत्, भिन्नशक्तित्वाद्विषागदवत्, पूर्वोत्तरकालभावित्वात् पितापुत्रवत्, विभिन्नपरिमाणत्वाद्वा कुवलबिल्ववदिति प्रमाणेनावयवावयविनोरपि भेदः सिद्धः, विरुद्धधर्माध्यासनिबन्धनो हि परत्रापि भावानां भेदः स चात्राप्यस्तीति कथं न भेदः, यदि चावयवावयविनोर्भेदो न भवेन्न भवेत् स्थूलप्रतिभासः, परमाणूनां सूक्ष्मत्वात् । न चान्यथाभूतः प्रतिभासोऽन्यादृगर्थव्यवस्थापकोऽस्ति 5 प्रसङ्गात्, न च स्थूलाभावे परमाणुरिति व्यपदेशोऽपि संम्भवी, स्थूलापेक्षत्वादणुत्वस्येति चेन्न, स्वगतगुणानुपलम्भे बलाकाद्युपलम्भस्य भ्रान्ततया निर्विषयत्वात्, बलाकादयो हि शुक्ला सन्तः श्यामादिरूपतया तदोपलभ्यन्ते, न च तेषां तद्रूपं तात्त्विकम्, न च तदा श्यामादिरूपादन्यो बलाकादिस्वभाव उपलभ्यते, श्यामादिरूपस्यैवोपलम्भात ,न चातद्रूपा अपि बलाकादयः श्यामादिरूपेणोपलभ्यन्ते, यत आकारवशेन प्रतिनियतार्थता ज्ञानस्य व्यवस्था- 10 प्यते, अन्याकारस्यापि तस्यान्यार्थतायां रूपज्ञानस्यापि रसविषयताप्रसक्तिरविशेषात् । कञ्चुकावच्छन्ने च पुंसि पुमानिति ज्ञानमवयविव्यवस्थापकतयोपन्यस्तं नाध्यक्षरूपम्, शब्दानुविद्धत्वादस्पष्टाकारत्वाच्च, किन्तु रूपादिसंहतिमात्रलक्षणपुरुषविषयमनुमानमेतत् । रूपादिप्रचयात्मकपुरुषहेतुको हि कञ्चुकसन्निवेश उपलभ्यमानः स्वकारणमनुमापयति, धूम इवाग्निम् । षष्ठीवचनभेदादेरपि स्वेच्छामात्रभाविनो न बाह्यवस्तुगतभेदाऽव्यभिचारित्वं येन ततो 15 गुणगुणिभेदसिद्धिर्भवेत । तेन यद्यद्भ्यवच्छिन्नमित्यादिप्रयोगानुपपत्तिः, स्वस्य भावः, षण्णां पदार्थानामस्तित्वं दाराः सिकता इत्यादौ वस्तुगतभेदमन्तरेण षष्ठ्यादेरभावाङ्गीकारे षष्ठ्यादेर्वृत्तिर्न स्यात्, भावादेर्व्यतिरिक्तस्य तन्निबन्धनस्याभावात । न च षण्णामस्तित्वं सदुपलम्भकप्रमाणविषयत्वलक्षणं धर्मान्तरमिति वाच्यम्, षट्पदार्थाभ्युपगमभङ्गप्रसङ्गात् । न च षट्पदार्थभिन्नानामपि धर्माणामभ्युपगमान्न दोष इति वक्तव्यम्, तैस्तेषां सम्बन्धानुपपत्त्या 20 धर्मधर्मिभावायोगात्, अन्यथातिप्रसङ्गात् । न च संयोगसम्बन्धोऽत्र सम्भवति, तस्य गुणत्वेन द्रव्येष्वेव भावात्, नापि समवायः, सत्तावत्तस्य सर्वत्रैकत्वाभ्युपगमेन तस्य सम्बन्धान्तरापेक्षायामनवस्थानात्, समवायेन सह समवायसम्बन्धे द्वितीयसमवायाङ्गीकारप्रसङ्गात्त । न च षड्भिः पदार्थैस्सह धर्माणामुत्पत्तेस्तेषां त इति व्यपदेशो भविष्यतीति वाच्यम्, कुण्डादिसम्बन्धिनां बदरादीनामपि तथाप्रसङ्गेन संयोगादिसम्बन्धान्तरकल्पनानर्थक्यात् । षण्णां पदा- 25 र्थानां धर्मान्तरभूतास्तित्वस्याङ्गीकारेऽपि तत्रापरास्तित्वाद्यभावेऽपि तदस्तित्वस्यास्तित्वप्रमेयत्वाभिधेयत्वानीति षष्ठ्यादिप्रवृत्तिर्दुर्वारैव, तत्राप्यपरास्तित्वादिकल्पनेऽनवस्था, इष्टापत्तौ च सर्वेषामप्युत्तरोत्तरधर्माधारतया धर्मित्वप्रसक्त्या षडेव धर्मिणः इत्येतस्यानुपपत्तिः । न च धर्मिरूपाणामेव षट्केनाभिधानान्न दोष इति साम्प्रतम्, धर्मरूपाणामपि गुणादीनामनिर्देशप्रस-

ङ्गात्। भिन्नकर्तृत्वानुमानमप्यसङ्गतम्, तथाहि किमत्र साध्यते प्राक्तनावस्थेभ्योऽप्राप्तपटव्य-
पदेशेभ्यस्तन्तुभ्यः पटस्य भेदः, किंवा पटावस्थायां ये तन्तवस्तेभ्यः पटस्य भेदः, नाद्यः
सर्वभावानां क्षणिकत्वेन तद्विलक्षणपटाख्यपदार्थानुत्पादेऽपि प्रतिक्षणं भेदेन सिद्धसाधनात्।
न द्वितीयः, हेतूनामसिद्धत्वात्, न हि तदवस्थाभावितन्तुभ्यः पटस्य भेदाप्रसिद्धौ भिन्नकर्तृ-
5 कत्वादयो धर्माः सिद्ध्यन्ति, नास्ति तत्सिद्धिः सम्प्रत्येव तत्सिद्ध्यर्थं हेतूपन्यासात्। न च
तन्तवः पट इति संज्ञाभेदाद्भेदसिद्धिः, प्रयोजनान्तरवशेनापि संज्ञान्तरस्य सङ्केतनात्।
योषित्कर्तृकास्तंतवो हि शीतापनोदनाद्यर्थासमर्थास्तन्तुव्यपदेशभाजः, कुविन्दकर्तृका विशि-
ष्टावस्थाप्राप्ताः प्रावरणाद्यर्थक्रियासमर्थाः पटव्यपदेशविषयाः, तदर्थक्रियाप्रतिपादनाय व्यवहा-
रिभिस्तथा तत्र सङ्केतकरणात्, अन्यथा गौरवाशक्तिवैफल्यप्रसङ्गात्। यदि हि यावन्तो भावा
10 विवक्षितैककार्यनिर्वर्त्तनसमर्थास्तेषु तावन्तः शब्दा निवेश्यन्ते तदा गौरवदोषः, न चैषाम-
साधारणं रूपं निर्देष्टुं शक्यमित्यशक्तिदोषः, उत्प्रेक्षितसामान्याकारेण निर्देशे वरं पट इत्ये-
कयैव श्रुत्या प्रतिपादनं कृतमिति न किञ्चित फलमस्य प्रत्येकं पृथगभिधानप्रयासस्य पश्याम
इति वैफल्यदोषः। सामस्त्येन त्वभिधाने सति व्यवहारलाघवादिर्गुण इत्येकार्थक्रियाकारिषु
अनेकेषु एकशब्दसङ्केत उपपन्नः, सकलवस्तुविवक्षायां जगत्त्रिभुवनविश्वादिशब्दवत्, एव-
15 मेकवचनादिकं साङ्केतिकं व्यवहारलाघवार्थमुपादीयमानं न वास्तवं तयोर्भेदं प्रसाधयति, विशि-
ष्टावस्थाप्राप्तानां चाणूनामिन्द्रियग्राह्यत्वादतीन्द्रियत्वमसिद्धमिति नावयव्यभावे प्रतिभास-
विरतिप्रसक्तिर्दूषणम्, न हि सर्वदैवेन्द्रियातिक्रान्तस्वरूपाः परमाणवः क्षणिकवादिभिरभ्युप-
गम्यन्ते, तेषां सर्वदैकस्वभावताविरहात्, ततः परस्पराविनिर्भागवर्त्तितया सहकारिवशादु-
त्पन्नाः परमाणव एवाध्यक्षविषयतामुपयान्तीत्यभ्युपगन्तव्यम्, अन्यथा विजातीयानां द्रव्या-
20 नारम्भकत्वात् पावकतप्तोपलहेमसूतादेरुपलम्भो न स्यात्, न च तत्र संयोगस्योपलभ्यता,
अदृष्टाश्रयस्य तस्यापि उपलम्भाविषयत्वात् वाय्वाकाशसंयोगवत्। न च पौर्वापर्यादिदिग्भेदेन
व्यवस्थिताः परमाणवः, न च ते तद्रूपेणोपलभ्यन्त इति कथमध्यक्षतैषामिति वाच्यम्,
सर्वाकाराननुभवेऽपि यत्रैवांशेऽभ्यासादिकारणसद्भावान्निश्चयस्तत्रैवाध्यक्षविषयताव्यवस्थाप-
नात्, अन्यत्र तु गृहीतस्यापि व्यवहारायोग्यत्वेन निश्चयानुत्पत्तेरगृहीतकल्पत्वात्। न
25 चावयव्यभावे बहुषु परमाणुषु एकः पट इत्यक्षव्यापारेण कथं प्रत्यय इति शङ्क्यम्, अनेक-
सूक्ष्मतरपदार्थसंवेदनत एक इति विभ्रमोत्पत्तेः, प्रदीपादौ नैरन्तर्योत्पन्नसदृशापरापरज्वालादि-
पदार्थसंवेदनेऽपि एकत्वविभ्रमवत्। भेदेनानुपलक्ष्यमाणाः परमाणवः कथमध्यक्षा इति चेन्न,
विवेकेनानवधार्यमाणस्यानध्यक्षत्वे प्रदीपादौ पूर्वापरविभागेनानुपलक्ष्यमाणेऽनध्यक्षताप्रसक्तेः,
अवयवविवेकेन वाऽगृह्यमाणोऽपि कथमवयवी तथाप्रत्यक्षत्वेनेष्टः। किञ्च नीलादि निर्भासे-

ऽपि नीलादेर्यदि न परमाणवः प्रतिभान्ति तदा नीलादिज्ञानं बहिरर्थवादिना नैवाविषयमिष्टव्यम्, अन्यथा विज्ञानमात्रताप्रसक्तेः सविषयश्चेत् स्थूलतयाऽवभासनो नीलादिविषयः एको वा स्यादनेको वा, एकोऽपि भवन्मतेनावयवैरारब्धो वा भवेदनारब्धो वा, न तावदुभयात्माप्ययं नीलादिरेको युक्तः, स्थूलस्यैकस्वभावत्वविरोधात् । यदि हि स्थूलमेकं स्यात्तदेकदेशपिधाने स्यात्सर्वस्य पिधानम्, एकदेशरागे च सर्वस्य रागः प्रसज्येत, पिहितापिहितयोरक्तारक्तयोश्च भवन्मतेनाभेदात्, न चैकस्य परस्परविरुद्धधर्माध्यासो युक्तः, अतिप्रसङ्गात्, अन्यथा विश्वमेकं द्रव्यं स्यात्, ततश्च सहोत्पादादिप्रसङ्गः, न चैकदेशपिधाने सर्वं पिहितमीक्ष्यते इति प्रत्यक्षविरोधः, तथाऽनुमानविरोधोऽपि, यद्धि परस्परविरुद्धधर्माध्यासितं न तदेकं, यथा गोमहिषम्, उपलभ्यमानानुपलभ्यमानरूपं पिहितादिरूपेण च विरुद्धधर्माध्यासितं स्थूलमिति व्यापकविरुद्धोपलब्धिः, सर्वस्यैकत्वप्रसङ्गो विपर्यये बाधकं प्रमाणम् । न भेदाभावात्सर्वशब्दप्रयोगो नोपपद्यते, सर्वशब्दो ह्यनेकार्थविषयः, न चावयवी नानात्मा तत्र कथं सर्वशब्दप्रयोगो येनैकदेशावरणे सर्वावरणप्रसक्तिरुच्येतेति वाच्यम्, लोकप्रसिद्धानां वस्त्रादिभावानामेव भवताऽवयविकल्पनात्, लोके च तत्र सर्वं वस्त्रं रक्तमित्येवं सर्वशब्दप्रयोगात् । यदर्थविवक्षायां रक्तादिशब्दप्रयोगो लोके तस्यामेवास्माभिरपि तत्प्रतीतिमनुसृत्य भवतां विरोधप्रतिपादनाय सर्वादिशब्दप्रयोगः क्रियत इति कथमस्यानुपपत्तिः । किञ्च स्थूलस्यैकत्वमभ्युपगच्छतो भवत एवायं दोषो नास्माकम्, तदनभ्युपगमात् । न च पटकारणेषु तन्तुषु उपचारतः पटाभिधानप्रवृत्तेः सर्वादिशब्दप्रयोगानुपपत्तिर्दोषः परस्यापि न भविष्यतीति वक्तव्यम्, एवं सति सर्वदैव बहुवचनप्रयोगापत्तेः, न हि भवदभ्युपगमेन बहुष्वेकवचनमुपपत्तिमत् । न चावयविगतां संख्यामादाय पटादिशब्दस्तदवयवेषु तन्त्वादिषु अपरित्यक्तात्माभिधेयगतलिङ्गादिर्वर्तत इति वाच्यम्, अस्य व्यपदेशस्य गौणत्वे स्खलद्रूपतयाऽगौणाद्भेदप्रसक्तेः, न चासावस्ति तथाहि रक्तं सर्वं वस्त्रमित्यत्र नैवं बुद्धिर्न रक्तं वस्त्रं किन्तु तत्कारणभूतास्तन्तव इति । किञ्च भेदेनोपलब्धयोर्गोवाहीकयोर्मुख्योपचरितविषयता सम्भवति, न चावयवावयविनोः कदाचिद्भेदेनोपलब्धिरिति नात्रोपचरितशब्दप्रयोगो युक्तः । वस्त्रस्य रागः कुंकुमादिद्रव्यसंयोग उच्यते, स चाव्याप्यवृत्तिः, तदेकत्र रक्ते न सर्वस्य रागः, न च शरीरादेरेकदेशावरणे सर्वस्यावरणं युक्तमिति चेन्न, पटादिनिरंशैकद्रव्यस्य कुंकुमादिनाऽव्याप्तस्वरूपावस्थानाङ्गीकारे व्याप्ताव्याप्तयोर्विरोधे-

१ अत्र प्रतिषेध्यमेकत्वं तद्व्यापको विरुद्धधर्माध्यासाभावः तद्विरुद्धो विरुद्धधर्माध्यासस्तस्य स्थूले उपलब्धिरित्यर्थः ।

नैकस्वभावत्वायोगाद्भेदप्रसङ्गात्, न चैकस्य पृथुतरदेशावस्थानं युक्तं निरंशत्वात्, अन्यथा हि
सर्वेषामेवोदकजन्तुहस्त्यादीनामेकत्वेनाविशेषात् स्थूलसूक्ष्मादिभेदो न भवेत् । न चासौ
विशेषोऽल्पबह्ववयवारम्भादिकृतः, तथाभेदेऽप्यवयविनां निरंशतया परस्परं विशेषाभावात्,
अवयवाल्पबहुत्वग्रहणकृते च स्थूलादिव्यवहारेऽवयवमात्रमेवाभ्युपगतं दृश्यत्वेन स्यात्,
5 स्थूलादिव्यतिरेकेणान्यस्यादृश्यमानत्वात् । अवयवाल्पबहुत्वकृते च तथाभेदेऽवयवा एव
तथा तथोत्पद्यमाना अल्पबहुतराः स्थूलसूक्ष्मादिव्यवस्थानिबन्धनं भविष्यंतीति किं तदारब्धा-
वयविकल्पनया, तस्य कदाचिदप्यदृष्टसामर्थ्यत्वात् । किञ्चाव्याप्यवृत्तिः संयोग इत्यस्य यदि सर्वं
द्रव्यं न व्याप्नोति इत्ययमर्थस्तदा द्रव्यस्य सर्वशब्दाविषयत्वाभ्युगपमादयुक्तः, अथ तदेक-
देशवृत्तिरिति तन्न तस्यैकदेशासम्भवात । न च तदारम्भकेऽवयवे वर्तत इत्यर्थो युक्तः, तदा-
10 रम्भकस्याप्यवयवित्वात । अथाणुरूपस्तदाणूनामतीन्द्रियत्वात् तदाश्रितः संयोगोऽप्यतीन्द्रिय
एवेति रक्तोपलम्भो न भवेत् । न च यथाऽङ्गुलिरूपस्याऽऽश्रयोपलब्धावेवोपलब्धिर्न तथा
संयोगस्याश्रयोपलब्धावेवोपलब्धिरित्यव्याप्यवृत्तिरिति वक्तव्यम, संयोगस्याप्याश्रयानुपलब्धा-
वप्यनुपलब्धेः, अन्यथा घटपिशाचसंयोगस्याप्युपलब्धिः स्यात, न चान्यः सयोगोपलम्भो-
पाय आश्रयोपलम्भात्समस्ति तस्मान्नैकरूपं द्रव्यम्, अनेकरूपमपि अणुसञ्चयात्मकमेव
15 सामर्थ्यात् सिद्धम, विद्यमानावयवस्यैकत्वायोगात, ततः पटादीनां परमाणुरूपत्वान्नीलादिः
परमाणूनामाकारः, स्थूलरूपस्यैकस्यापरस्य विषयस्याभावात, परमाणुरिति व्यपदेशः स्थूल-
स्यैकस्याभावेऽपि कल्पितस्थूलापेक्षया सम्भवति, ततो न स्थूलमेकं द्रव्यमवयवानारब्धमपि
घटते, तदारब्धन्तु सुतरामसम्भवि । तथा च यदनेकं न तदेकद्रव्यानुगतम, यथा घट-
कुड्यादयः, अनेके च तन्त्वादय इति व्यापकविरुद्धोपलब्धिः, यद्वा यदेकं न तदनेकद्रव्या-
20 श्रितम्, यथैकपरमाणुः, एकञ्चावयविसंज्ञितं द्रव्यमिति व्यापकविरुद्धोपलब्धिप्रयोगः
प्रसङ्गसाधनरूपः, प्रयोगद्वयेऽप्यवयविनोऽवयवेषु वृत्त्यनुपपत्तिर्विपर्यये बाधकं प्रमाणम्, वृत्ति-
र्हि किमेकावयवक्रोडीकृतेन स्वभावेनावयवान्तरेऽवयविनः स्यात्, किं वा स्वभावान्तरेण,
न प्रथमः, एकावयवक्रोडीकृतस्वभावेनान्यत्र वर्त्तितुमशक्तेः, शक्तौ वा तस्य तत्रावयवे सर्वा-
त्मना वृत्त्यनुपपत्तिः, अपरस्वभावाभावादन्यावयववृत्तिस्वभावासम्भवात्, संभवे वा एकत्वहा-
25 निप्रसक्तेः, यदेकक्रोडीकृतं न तत्तदैवान्यत्र वर्त्तते, यथैकभाजनक्रोडीकृतमाम्रादि, एकावय-
वक्रोडीकृतञ्चावयविस्वरूपमिति व्यापकविरुद्धोपलब्धिः, एकावयवसम्बद्धस्वभावस्यातद्देशा-
वयवान्तरसम्बद्धस्वभावताऽभ्युपगमे तदवयवानामेकदेशताप्रसक्तिर्विपर्यये बाधकं प्रमाणम् ।
न द्वितीयः, एकस्यानेकवृत्तित्वासम्भवात, स्वभावभेदात्मकत्वाद्वस्तुभेदस्य, अन्यथा तदयो-
गात् । किञ्च प्रत्येकमवयवेषु सर्वात्मनाऽवयविनो वृत्तौ यावन्तोऽवयवास्तावन्त एवावयविनः

स्युः, विना स्वभावभेदं तावत्स्ववयवेषु प्रत्येकं सर्वात्मना वृत्त्यनुपपत्तेः, एवञ्च युगपदनेक-
कुण्डादिव्यवस्थितबिल्वादिवदनेकावयव्युपलब्धिः स्यात् । एकदेशेन वर्त्तमाने त्वनवस्था
तेष्वप्यवयवेषु वृत्तौ अपरैकदेशवृत्तिकल्पनाप्रसङ्गात्, यदि तु यैरेकदेशैरवयवी अवयवेषु
वर्त्तते ते तस्य स्वात्मभूता इति नानवस्थेत्युच्यते तर्हि पाण्यादयोऽप्यवयवास्तस्य स्वात्मभूताः
किं नाभ्युपगम्यन्ते, तथाभ्युपगमे चापरावयविप्रकल्पना न स्यात्, तस्यावयवप्रचयात्मक- 5
त्वात् । ननु किमिदं कार्त्स्न्यैकदेशाभ्यां वृत्तिविकल्पानुपपत्तिः स्वतंत्रसाधनं प्रसङ्गमाधनं
वा, तत्रोभयमपि अवयव्युपलब्धौ सत्यां प्रवर्त्तेत, अन्यथाऽऽश्रयासिद्धता स्यात् । न वा
कार्त्स्न्यैकदेशाभ्यां वृत्तिः क्वचन लक्षिता, यस्या असम्भवात् अवयव्यादेर्द्रव्यासत्त्वं भवेत्,
उभयविधवृत्तिप्रतिषेधेऽपि प्रकारान्तरेण वृत्तिः कुतो न स्यात्, इह तन्तुष्विदं वस्त्रादीत्येवं-
भूतात् प्रत्यक्षात्समवायलक्षणवृत्तेरवयविनः सिद्धेः, स च समवायस्सर्वत्रैकत्वान्निरवयवत्वाच्च 10
न कृत्स्नैकदेशशब्दविषयः, मैवम्, प्रसङ्गसाधनाभिधानात्, तच्च व्याप्यव्यापकभावसिद्धौ
व्याप्याभ्युपगमो व्यापकाभ्युपगमनान्तरीयकः, व्यापकनिवृत्तिर्वा व्याप्यनिवृत्त्यविनाभावि-
नीत्येतत्प्रदर्शनफलं प्रवर्त्तत एव, व्याप्यव्यापकभावसिद्धिश्चात्र लोकप्रसिद्धैव भवताप्यभ्युप-
गमनीया, लोकश्च कस्यचित् सर्वात्मना वृत्तिं श्रीफलस्य कुण्डादौ, कचिच्च कस्यचिदेकदेशेन
यथानेकपीठाधिष्ठितचैत्रादेरभ्युपगच्छति, यत्र प्रकारद्वयं वृत्तेर्व्यावृत्तं तत्र वृत्तेरभाव एव 15
कथं न व्याप्तिसिद्धिर्येनात्र प्रसङ्गसाधनस्यावकाशो न स्यात्, निरस्ता च प्रागनेकस्मि-
न्नेकस्य वृत्तिः, इह तन्तुष्विदं वस्त्रादीत्येवं भूतं प्रत्यक्षमपि न लोके प्रवर्त्तते, किन्तु इह गवि
शृङ्गं पटे तन्तव इत्येवमेव विकल्पिका बुद्धिः । नाप्यध्यक्षचेतसि तन्त्वादिसमवेतं तद्व्यति-
रेकिवस्त्रादिरूपं प्रतिभासते, न च विवेकेनाप्रतिभासिते सतीदमिह वर्त्तत इति धीर्भवेत्, न
हि कुण्डादौ विवेकिनामप्रतिभासमाने पयसि भवति सलिलमिहेति प्रत्ययः, किञ्च बदरादेः 20
कुण्डादौ सर्वात्मना स्तम्भादौ वंशादेरेकदेशेन वृत्तेरुपलक्षणात् कार्त्स्न्यैकदेशाभ्यां वृत्तेर्नानु-
पलक्षणं क्वचित् । कृत्स्नमिति चैकस्याशेषाभिधानम्, एकदेश इति चानेकत्वे सति कस्य-
चिदभिधानम्, तयोः कृत्स्नः पटः कुण्डे वर्त्तते, एकदेशेन वा इत्येवं पटादिषु प्रवृत्तिदर्शना-
त्तावयविन्यनुपपन्नावित्यभिधानमपि न सङ्गतम्, न चेयमुपचरिता, अस्खलद्वृत्तित्वात्, त-
स्मान्न नित्यानित्यरूपपृथिव्यादिचतुःसंख्यं द्रव्यं युक्त्युपपन्नम् । आकाशाख्यनित्यैकद्रव्यप्रसिद्धये 25
शब्दं गुणत्वाल्लिङ्गत्वेन प्रतिपादयन्ति, उत्पत्तिमत्त्वे सति विनाशित्वाद्घटादिवच्छब्दः कचि-
दाश्रित इति, तत्राश्रितत्वमात्रसाधने सिद्धसाध्यता, कारणप्रतिबद्धात्मतया कार्यस्य तदाश्रि-
तत्वाभ्युपगमात्, एकनित्यामूर्त्तविभुद्रव्यसमवेतत्वेन शब्दानामाश्रितत्वसाधने तथाभूतसा-
ध्यान्वितहेतोर्दृष्टान्तेऽभावादनैकान्तिकता, प्रतिज्ञायाश्चानुमानविरोधित्वम्, यदि हि नित्यै-

कव्यापिनभोद्रव्यसमवेताः शब्दा भवेयुस्तदैकदोत्पन्नानेकशब्दवदन्यकाला अपि ते सदैव
स्युरविकलकारणत्वादेकाश्रयत्वाच्च, न च सहकार्यपेक्षा नित्यस्य सम्भवति । नापि समवायि-
त्वमनुपकारिणो युक्तम्, अतिप्रसङ्गात्, ततोऽक्रमभावित्वप्रसङ्गो व्यवस्थितः । तत्कारणस्य
नित्यत्वे व्यापित्वे च शब्दानां सर्वपुरुषैर्ग्रहणप्रसङ्गः, आकाशात्मकं हि श्रोत्रं तदेकमेवेति
5 तत्प्राप्तानां सर्वेषामपि श्रवणं स्यात् । न हि निरवयवाकाशे इदमात्मीयं श्रोत्रमिदञ्च परकीय-
मिति विभागः सम्भवति, न च यदीयधर्माधर्माभिसंस्कृतकर्णशष्कुल्यवरुद्धं नभस्तत्तस्य श्रो-
त्रमिति विभागो युज्यते, अनंशत्वान्नभसः, पारमार्थिकविभागनिष्पाद्यफलस्य परिकल्पितावय-
वविभागेन निर्वर्तयितुमयोग्यत्वाच्च, अतिप्रसङ्गात्, अन्यथा मलयजरसादिकमपि पावक-
प्रकल्पनया प्लोषादिकार्यं विदध्यात् । किञ्चानलकर्णशष्कुल्यादयोऽपि समानदेशाः स्युरभिन्नै-
10 कनभःसंसर्गित्वात्, येन ह्येको वियत्स्वभावेन संयुक्तः तेनैवापरोऽपीति सोऽपि तद्देशभावी
स्यात्, तत्संयुक्तस्वभाववियत्संसर्गित्वात्तद्देशावस्थितानलवत्, अत एव शब्दानामप्येकदेशत्वा-
देकोपलम्भे सर्वोपलब्धिश्च स्यात्, दूरासन्नाद्यवस्थायिता तु भावानां प्रतीतिगोचरा विरोधिनी
च भवेदिति न नित्यैकव्याप्याकाशसिद्धिः । तथा परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्र-
प्रत्ययलिङ्गः कालो द्रव्यान्तरम्, तथाहि परः पिता, अपरः पुत्रः, युगपत्, चिरं क्षिप्रं क्रि-
15 यते कृतं करिष्यते इति यत् परापरादिज्ञानं तदादित्यादिक्रियाद्रव्यव्यतिरिक्तपदार्थनिब-
न्धनम्, तत्प्रत्ययविलक्षणत्वात्, घटादिप्रत्ययवत्, योऽस्य हेतुः पारिशेष्यात्स काल इति,
आकाशवदेवास्य विभुनित्यैकत्वादयो धर्माः । दिगपि एकादिधर्मोपेतं द्रव्यं प्रमाणतः सिद्धम्,
तथाहि मूर्तेष्वेव द्रव्येषु मूर्तं द्रव्यमवधिं कृत्वा इदमस्मात् पूर्वेण दक्षिणेन पश्चिमेन उत्तरे-
णेत्यादि दशप्रत्यया यतो भवन्ति सा दिगिति, न ह्येते प्रत्यया आकस्मिका न परस्परापेक्ष-
20 मूर्तद्रव्यनिमित्ताः, इतरेतराश्रयत्वेनोभयप्रत्ययाभावप्रसक्तेः, ततोऽन्यनिमित्तोत्पाद्यत्वासम्भ-
वादेते दिशो लिङ्गभूताः, एतस्या एकत्वेऽपि प्राच्यादिभेदेन नानात्वं कार्यविशेषाद्व्यवस्थि-
तम्, प्रयोगश्चात्र यदेतत् पूर्वापरादिज्ञानं तन्मूर्तद्रव्यव्यतिरिक्तपदार्थनिबन्धनम्, तत्प्रत्यय-
विलक्षणत्वात् सुखादिज्ञानवदिति, आकाशवदेवास्य नित्यत्वादिधर्मा इति, तदपि न सम्यक्,
सामान्येन साधने सिद्धसाध्यताया विशेषसाधने हेतोरन्वयाद्यसिद्धेः प्रतिज्ञाया अनुमान-
25 बाधितत्वस्य दुर्वारत्वात्, तथाहि पूर्वापरोत्पन्नपदार्थविषयपूर्वापरशब्दसङ्केतवशोद्भूतसंस्कार-
निबन्धनत्वात् प्रकृतप्रत्ययस्य कारणमात्रे साध्ये कथं न सिद्धसाध्यता, विशेषे च कथं ना-
न्वयासिद्धिः, अनुमानबाधा च पूर्ववद्भावनीया, अत एव नेतरेतराश्रयदोषोऽपि पूर्वपक्षोदितः,
विशिष्टपदार्थसङ्केतप्रभवत्वादस्य प्रत्ययस्य । किञ्च निरंशैकादि कालाख्यपदार्थनिमित्तत्वं परा-
परादिप्रत्ययस्य साधयितुमभ्युपगतम्, तच्चायुक्तम्, स्वाकारानुकारिप्रत्ययजनकस्य तद्विष-

त्वात्, निरंशस्य च पौर्वापर्यादिदिग्विभागाभावतस्तथाभूतप्रत्ययोत्पादकत्वासम्भवात्, तथाभूतप्रत्ययाद्विपरीतार्थसिद्धेरिष्टविपर्ययसाधनाद्विरुद्धश्चैवं हेतुः स्यात्, अथ बाह्याध्यात्मिकभावपौर्वापर्यनिबन्धनस्य दिक्कालयोः पौर्वापर्यव्यपदेशस्य भावान्न हेतोर्विरुद्धता, न, तथासति दिक्कालकल्पनावैयर्थ्यात्, तत्साध्याभिमतकार्यस्य बाह्याध्यात्मिकैः सम्बन्धिभिरेव निर्वर्तितत्वात्, तथाहि दिक् पूर्वापरादिव्यवस्थाहेतुरिष्यते कालश्च पूर्वापरक्षणलवनिमेषकलामुहूर्तप्रहरदिवसाहोरात्रपक्षमासर्त्वयनसंवत्सरादिप्रत्ययप्रसवनिमित्तोऽभ्युपगतः, अयं च स्वरूपभेदः स्वात्मनि तयोः समस्तोऽप्यसम्भवी, तत्सम्बन्धिषु पुनर्भावेषु विद्यमानस्तत्र प्रत्ययहेतुरिति व्यर्था तत्प्रकल्पना। अथ तत्सम्बन्धिष्वयं भेदोऽपरक्रियादिभेदनिमित्तस्तर्हि तत्राप्येवमित्यनवस्थाप्रसक्तिः, अथ पदार्थेषु पूर्वापरभेदः कालनिमित्तः, ननु कालेऽप्यसौ न स्वत इतीपरकालनिमित्तो यद्यभ्युपगम्यते तदाऽनवस्था। अथ पदार्थभेदनिमित्तः तदेतरेतराश्रयत्वप्रसङ्गः, अथ तत्र स्वत एवायं भेदः, पदार्थेष्वपि स्वत एवायं किं नाभ्युपगम्यते ततश्च पुनरपि दिक्कालप्रकल्पनं व्यर्थमिति। विभुत्वादिधर्मोपेतमात्मद्रव्यं पूर्वमेव प्रतिषिद्धम्। मनोद्रव्यस्य तु युगपज्ज्ञानानुत्पत्तिर्लिङ्गमुक्तम्, तत्रापि कारणमात्रे साध्ये चक्षुरादिभिन्नमनस्कारादेः कारणत्वाभ्युपगमेन सिद्धसाध्यता:, नित्यैकमनःसाधनेऽनन्वयदोषः, प्रतिज्ञाया अनुमानबाधा, इष्टविपर्ययसाधनात् विरुद्धश्च हेतुरिति दोषाः पूर्ववद्वाच्याः, चक्षुरादिव्यतिरिक्तानित्यकारणसापेक्षत्वस्य साधनाद्विरुद्धता प्रकटैव, अन्यथा नित्यकारणत्वे चेत्सामविकलकारणत्वाक्रमोत्पत्तिर्विरुद्धैव भवेत्, तस्मान्न पृथिव्यादिद्रव्यनवकस्य प्रमाणतः सिद्धिः। द्रव्याभावादेव तदाश्रितत्वेनाभ्युपगता गुणादिविशेषपर्यन्ता असन्त एव, आश्रयाभावे तदाश्रितानां तत्परतंत्रतयाऽवस्थानासम्भवात्, ततो द्रव्यनिषेधादेवाशेषपदार्थनिषेधसिद्धावपि विशेषतो गुणादिप्रतिषेधः क्रियते, परदर्शनस्य सर्वथाऽयुक्तत्वप्रदर्शनावश्यकत्वात्। तत्र रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिर्गुणाः, तत्र रूपं चक्षुर्ग्राह्यं पृथिव्युदकज्वलनवृत्ति, रसो रसनेन्द्रियग्राह्यः पृथिव्युदकवृत्तिः, गन्धो घ्राणग्राह्यः पृथिवीवृत्तिः, स्पर्शस्त्वगिन्द्रियग्राह्यः पृथिव्युदकज्वलनपवनवृत्तिरिति तन्न, यतः महति द्रव्ये यद्येकमेवानवयवं नीलादीष्यते तदा सूक्ष्मेणापि कुञ्चिकादिविवरवर्तिना प्रदीपाद्यालोकेनापवरकादिस्थितपृथुतरघटादिद्रव्यसमवेतस्य नीलादिरूपस्याभिव्यक्तौ सकलस्यैव यावद्द्रव्यवर्तिनोरभिव्यक्तिरुपलब्धिश्च प्राप्नोति निरवयवत्वात्, न ह्येकस्या अवयवाः सन्ति येनैकदेशाभिव्यक्तिर्भवेत्। एवं गन्धरसस्पर्शानामपि तदाधारैकदेशस्थानामभिव्यक्तौ यावद्द्रव्यभाविनामुपलब्धिप्रसङ्गः। अथ भवत्येव सकलस्य नीलादेरुपलब्धिरिति चेन्न तदा हि रन्ध्रालोकेन नीलादेरणुशो भेदेऽङ्गी-

क्रियमाणे पृथिव्यादिपरमाणुद्रव्यवदणुपरिमाणयोगित्वेन गुणवत्त्वाद्रव्यरूपतैव स्यात्, न गुणत्वम्, एवम्भूतानामणूनां भिन्नानां गुण इति संज्ञाकरणे न नाम्नि विवादः, न चाणुत्वेऽप्याश्रितत्वाद्गुणत्वं युक्तम्, सदसतोराश्रयानुपपत्तेरतिप्रसङ्गाच्च, अवयविद्रव्यस्यापि अवयवद्रव्याश्रितत्वापत्तेः। संख्या चैकत्वादिव्यवहारहेतुरेकत्वादिस्वरूपा। सा एकद्रव्या 5 चानेकद्रव्या च, तत्रैकसंख्या एकद्रव्या सलिलादिपरमाण्वादिगतरूपादीनामिव नित्यानित्यत्वनिष्पत्तिरूपा अनेकद्रव्या द्वित्वादिसंख्या, अनेकविषयबुद्धिसहितेभ्य एकत्वेभ्यो निष्पन्ना, तस्या अपेक्षाबुद्धिविनाशाद्विनाशः क्वचिदाश्रयविनाशात्, इयं द्विविधापि संख्या प्रत्यक्षत एव सिद्धेति परमतम्, तन्न, एकत्वादिसंज्ञाविषयपदार्थव्यतिरेकेणोपलब्धिलक्षणप्राप्तायाः संख्यायाः शशविषाणवदनुपलब्धेरसत्त्वात्, न चोपलब्धिलक्षणप्राप्तत्वमसिद्धम्, तस्या दृश्य-10 त्वेनाभ्युपगमात्। यथा चैकं ज्ञानं द्वे ज्ञाने इत्यादिबुद्धिः संख्यामन्तरेणापि निर्वाहस्तथैको घट इत्यादिबुद्धेरपि असहायादिषु घटादिषु स्वेच्छाकल्पितैकत्वादिशब्दसंकेतविहितमनस्कारप्रभवत्वाद्विशेषबुद्धितोऽपि न संख्यासिद्धिः, न हि ज्ञानादौ गुणत्वात्संख्याऽस्ति तस्याद्रव्यत्वात् संख्यायाश्च गुणत्वेन द्रव्याश्रितत्वादतो न दृष्टान्तसिद्धिः। न च ज्ञानादौ एकत्वादिज्ञानमुपचरितम्, अस्खलद्वृत्तित्वात्, द्रव्यसमवेतादेकत्वादेरेकार्थसमवायित्वादेतज्ज्ञानं गुणादौ 15 भविष्यतीति चेन्न, एकस्मिन् द्रव्ये रूपादयो बहवो गुणा इति ज्ञानानुदयप्रसङ्गात्, आश्रये द्रव्ये बहुत्वसंख्याया अभावात्, एकार्थसमवायादेर्जायमानप्रत्ययस्य गौणतापत्त्या माणवकेऽनलप्रत्ययवत्स्खलितताप्रसङ्गाच्च। न च गजतुरगादौ संख्याप्रत्ययो गजादिव्यतिरिक्तनिबन्धनो गजादिविलक्षणप्रत्ययत्वात्, नीलपटप्रत्ययवदिति संख्यासिद्धिरिति वाच्यम्, निमित्तमात्रसाधने इच्छारचितसंकेतमनस्कारादिनिमित्ताभ्युपगमेन सिद्धसाधनात्, एतद्व्यतिरि-20 क्तनिमित्तसाधने बुद्ध्यादावनैकान्तिकत्वात्, तत्रैकादिबुद्धेर्विलक्षणत्वेऽपि संख्यानिबन्धनत्वाभावात्। अनेकद्रव्या द्वित्वादिसंख्यापि संकेताभोगमात्रेणोपपद्यते, एवं सति अदृष्टसामर्थ्यस्य हेतुत्वं न कल्पितं स्यात्, अन्यथाऽपेक्षाबुद्धेरदृष्टसामर्थ्यायाः तद्धेतुत्वेऽन्यस्यापि तद्धेतुताप्रसङ्गेनानवस्था भवेत्। तथा द्वित्वादिसंख्याया एकस्या अनेकवृत्तित्वासम्भवः एकस्यानेकवृत्तेः प्रतिषिद्धत्वात्। परिमाणव्यवहारकारणं महदणुदीर्घह्रस्वभेदं नित्यानित्यविभागं 25 रूपादिप्रत्ययविलक्षणबुद्धिग्राह्यतया रूपादिभ्योऽर्थान्तरत्वेन सिद्धं परिमाणं परो मन्यते, तन्न रूपादिविषयेन्द्रियबुद्धिलक्षणप्रत्यक्षप्रत्ययग्राह्यत्वाद्रूपादिभ्यस्तस्यार्थान्तरत्वेन साधने हेतु-

१ यथा वाहीको गौरिति प्रत्ययः स्खलति गौरिव गौर्न तु गौरेव सास्नाद्यभावादिति, न तथा स्खलति एकमिवैकं ज्ञानादि न त्वेकमेवेति, किं तर्हि यादृशी घटादिष्वस्खलिता बुद्धिर्भवति तादृशी ज्ञानादिष्वपीति भावः ॥

रसिद्धः, तथाऽव्यवस्थितरूपादिपदार्थव्यतिरेकेण महदादिपरिमाणस्याध्यक्षप्रत्ययग्राह्यत्वेना-
संवेदनात्, अथाणुमहदादीत्येवं या विकल्पिका बुद्धिः सा रूपादिप्रत्ययविलक्षणबुद्धिपदे-
नाभिप्रेतेति चेन्न, हेतोर्विपक्षे बाधकप्रमाणाभावेनानैकान्तिकत्वात्, न ह्यस्याः परमार्थतः
किञ्चिदपि ग्राह्यमस्ति कल्पनाबुद्धित्वात्, केवलं तेष्वेव रूपादिषु एकदिङ्मुखादिप्रवृत्तेषु
दृष्टेषु तद्विलक्षणरूपादिभेदप्रतिपादनाय कृतसमयानुरोधान्महदित्यध्यवस्यन्ती बुद्धिर्जायते 5
नातो वस्तुव्यवस्था, न च रूपादिव्यतिरिक्तं ग्राह्यमप्यस्तीत्यसिद्धतापि हेतोः, प्रतिज्ञायाश्च
प्रत्यक्षबाधा, प्रत्यक्षत्वेनेष्टस्य महदादे रूपादिव्यतिरेकेणानुपलब्धेः । ततो दृष्टे स्पृष्टे वा रूपा-
दिके एकदिङ्मुखप्रवृत्ते भूयसि अतद्रूपपरावृत्ते दीर्घमिति व्यवहारः प्रवर्त्तते परिमाणाभा-
वेऽपि, तदपेक्षया चाल्पीयसि रूपादौ समुत्पन्ने ह्रस्वमिति, एवं महदादावपि योज्यम्, एका-
नेकविकल्पाभ्यां रूपादिवत् महदाद्यनुपपत्तेश्चाभावः । अविद्यमानेऽपि महादादौ भवत्प्रक- 10
ल्पिते प्रासादमालादिषु महदादिप्रत्ययप्रादुर्भूतिरनुभूयते । न च यत्रैव प्रासादादिषु माला-
ख्यो गुणः समवेतस्तत्र महत्त्वादिकमपीति एकार्थसमवायबलान्महतीत्येवं तन्मालादि व्य-
पदिश्यत इति वाच्यम्, प्रासादस्यावयवित्वेनानभ्युपगमात्, विजातीयानां द्रव्यानारम्भ-
कत्वात्, किं तु स संयोगात्मको गुणः, स च न परिमाणवान्, निर्गुणत्वाद्गुणानाम्,
ततो मालाख्यस्य गुणस्य प्रासादादिष्वभावात् प्रासादमाले इत्ययमेव प्रत्ययस्तावदयुक्तो दूरतो 15
महती ह्रस्वा वा सेति प्रत्ययव्यपदेशः, मालायाः संख्यात्वेन प्रासादादीनां संयोगत्वेन
महत्त्वादेश्च परिमाणत्वेन परैरभ्युपगमात्, तस्मान्न परिमाणं रूपादिषु पृथग् गुण इति
स्थितम् । इदमस्मात् पृथगिति यद्वशात्संयुक्तमपि द्रव्यमपोद्ध्रियते तदपोद्धारकारणं पृथक्त्वं
नाम गुणो घटादिभ्योऽर्थान्तरं तत्प्रत्ययविलक्षणबुद्धिग्राह्यत्वादिति काणादाः, तन्न रूपादिभ्यो-
विवेकेनार्थान्तरभूतस्य तस्य प्रत्यक्षबुद्धावप्रतिभासनाद्धेतोरसिद्धेः, अत एव च तस्योपलब्धि- 20
लक्षणप्राप्तत्वेनाभिमतस्यानुपलम्भादसत्त्वमेव, न च पृथगिति विकल्पबुद्धिबलेन तस्य सिद्धिः,
तत्प्रत्ययस्य सजातीयविजातीयव्यावृत्तरूपाद्यनुभवनिबन्धनत्वात्, व्यावृत्तता च भावानां
स्वस्वभावव्यवस्थितेः, अन्यथा स्वतोऽव्यावृत्तस्वरूपाणां पृथक्त्वादिवशादपि पृथग्भूतत्वा-
सिद्धेः । किञ्च सुखदुःखादिगुणेषु यथा परस्परव्यावृत्तात्मतया पृथगिति प्रत्ययविषयता
पृथक्त्वगुणाभावेऽपि तथा घटादिष्वपि भविष्यतीति हेतोरनैकान्तिकत्वम् । न चापि तेषु 25
भाक्तोऽयं प्रत्ययः, मुख्यप्रत्ययाविशिष्टत्वात् । पृथगित्यपोद्धारव्यवहारस्य स्वरूपविभिन्नप-
दार्थानिबन्धनत्वात् परोपन्यस्तानुमाने प्रतिज्ञाया अनुमानबाधा तथा च प्रयोगो ये परस्प-
रव्यावृत्तात्मानस्ते न स्वव्यतिरिक्तपृथक्त्वसमाश्रयाः, यथा सुखादयः, परस्परव्यावृत्तात्मा-
नश्च घटादय इति स्वभावहेतुः, एकस्यानेकवृत्त्यसंभवः सम्बन्धाभावः सुखादिषु तद्व्यवहा-

राभावप्रसङ्गश्च विपर्यये बाधकं प्रमाणम्, तस्मान्न पृथक्त्वं गुणः । अप्राप्तिपूर्विका प्राप्तिः संयोगः, प्राप्तिपूर्विका चाप्राप्तिर्विभागः । एतौ द्रव्येषु यथाक्रमं संयुक्तविभक्तप्रत्ययहेतू अन्यतरोभयकर्मजौ संयोगविभागजौ च यथाक्रमम् । द्रव्यविशेषणतया संयोगस्याध्यक्षतः प्रतीयमानत्वात्सद्व्यवहारविषयता, कश्चित् केनचित् संयुक्ते द्रव्ये आहरेत्युक्ते हि ययोरेव 5 द्रव्ययोः संयोगमुपलभ्यते ते एवाहरति न द्रव्यमात्रम्, अन्यथा हि यत्किञ्चिदाहरेत्, एतद्विपर्ययेण विभागसाधनेऽपि योज्यम्, तन्न युक्तम्, संयुक्तपदार्थादर्थान्तरभूतसंयोगस्य कदाचित् प्रतिपत्तुर्दर्शनपथानवतारात्, न हि संयोगदर्शनेन विशिष्टं द्रव्यमाहरति, किन्तु प्राग्भाविनीये सान्तरजातावस्थे ततो विशिष्टे निरन्तरावस्थे ये समुत्पन्ने वस्तुनी ते एव संयुक्तप्रत्ययविषये तच्छब्दवाच्ये च, अवस्थाविशेषे संयुक्तशब्दस्य सङ्केतितत्वात्, तथाविधे 10 वस्तुनी पश्यन्नाहरति, नान्ये, न हि शब्देनाबोधितेऽर्थे शब्दात् प्रवर्त्तते प्रेक्षावान् । संयोगविभागयोर्द्रव्यार्थान्तरभूतयोरभावेऽपि वस्त्वन्तरमेव तथा तथोत्पद्यमानं सान्तरमिदं वस्तु निरन्तरमिति च बुद्धिभेदनिबन्धनं भविष्यति न संयोगविभागयोस्तथाविधप्रत्ययविशेषात् सिद्धिः । यद्धि विच्छिन्नमुत्पन्नं वस्तु तत्सान्तरबुद्धेर्निमित्तं हिमवद्विन्ध्यादिवत् । अविच्छिन्नोत्पत्तिकञ्च निरन्तरबुद्धिविषयः, निरन्तरोपरचितदेवदत्तयज्ञदत्तगृहवत्, न हि गृहयोः परे-15 णापि संयोगगुणाश्रयत्वमभ्युपगम्यते, तयोः संयोगात्मकत्वेन गुणत्वात्, नापि हिमविन्ध्ययोर्विभागाश्रयत्वम्, प्राप्तपूर्वकाप्राप्तिलक्षणस्याभावात् । मिथ्याबुद्धिर्या दूरे धवखदिरादौ सान्तरे निरन्तरावसायिरूपा पर्वतशिखरासक्तबलाकादौ सान्तरत्वाध्यवसायिनी तथाविधा सर्वाऽपि न साधर्म्यग्रहणादुत्पद्यते, येन मुख्यपदार्थसिद्धिः स्यात्, तदन्तरेणापि इन्द्रियवैगुण्यमात्रादेवोत्पत्त्युपलब्धेः, अन्यगतचेतसः तैमिरिकस्य द्विचन्द्रादिविकल्पबुद्धि-20 वत् । विच्छिन्नाविच्छिन्नरूपतयोपजातस्य वस्तुनः प्रधानभूतस्य तद्बुद्धिनिबन्धनस्य सद्भावाच्च न तदर्थान्तरविलक्षणसंयोगविभागसिद्धिः । यदपि कुण्डली देवदत्त इति मतिरियमुपजायमाना किं निबंधना, न च पुरुषकुण्डलभावमात्रभाविनी, सर्वदा देवदत्तकुण्डलयोस्तस्या उदयप्रसङ्गात्, किञ्च यदेव केनचित् क्वचिदुपलब्धसत्त्वं तस्यैवान्यत्र विधिप्रतिषेधमुखेन लोकव्यवहारप्रवृत्तिर्दृष्टा, यदि तु संयोगो न स्यात् कथं विभागेनास्य चैत्रोऽकुण्डलः 25 कुण्डली वेत्येवं प्रतिषेधो विधिश्च भवेत्, चैत्रोऽकुण्डलीत्यनेन हि न कुण्डलं प्रतिषिध्यते, तस्य देशकालभेदेन सत्त्वाध्यासितमूर्तेः प्रतिषेद्धुमशक्यत्वात्, नापि चैत्रस्य, अत एव,

१ पक्षिशिखरयोः संयोगो विभागश्चान्यतरकर्मज, मेषद्वयसन्निपातः पृथग्भावश्चोभयकर्मजः, हस्तपुस्तकयोः संयोगाद्विभागाद्वा शरीरपुस्तकयोः संयोगो विभागो वा संयोगजसंयोगो विभागजविभागो वा उक्तं ॥

तस्माच्चैत्रस्य कुण्डलसंयोगः प्रतिषिध्यते, चैत्रः कुण्डलीत्यनेनापि संयोगस्यैवाप्रतीतस्य विधि-
रिति वास्तवः संयोगादिरस्त्येव यद्वशाद्विधाननिषेधप्रवृत्तिः, तथा संयोगाभावे बीजादयः
सर्वदैवाविशिष्टत्वात्स्वकार्यमङ्कुरादिकं विदध्युः, न चैवम्, सर्वदा तेषां कार्यानारम्भात्, अतो
बीजादयः स्वकार्यकरणे कारणान्तरसव्यपेक्षाः, मृत्पिण्डदण्डचक्रसूत्रादय इव घटादिकरणे,
योऽसावपेक्ष्यः स संयोग इति तदप्यसङ्गतम्, यथाहि चैत्रकुण्डलयोर्विशिष्टावस्थाप्राप्तौ 5
संयोगः प्रादुर्भवति न सर्वदा तथा चैत्रः कुण्डलीति मतिरपि तदवस्थाविशेषनिबन्धना कदाचि-
देव भविष्यति न सर्वदा तत्किमर्थान्तरभूतसंयोगकल्पनया, उपलभ्यस्वभावाया उक्तविशि-
ष्टावस्थायाश्चान्यत्रानुपलम्भतः प्रतिषेधोऽप्युपपद्यत इति संयोगिपदार्थभिन्नसंयोगाप्रतीत्या
न ततो विधिः प्रतिषेधो वा सम्भवति, सर्वभावानां प्रतिक्षणविशरारुतया च विशिष्टा-
वस्थाप्राप्तानां बीजादीनामङ्कुरादिजनकतया संयोगाभावे बीजादीनामविशिष्टत्वमसिद्धम्, तथा 10
बीजादीनां स्वकार्यजनने सापेक्षत्वसाधने सिद्धसाध्यता, अव्यवधानाद्यवस्थान्तरसापे-
क्षाणां बीजादीनामङ्कुरादिस्वकार्यनिर्वर्त्तनस्यास्माभिरभ्युपगमात्, संयोगाख्यपदार्थान्तरसा-
पेक्षत्वसाधने त्वनन्वयित्वं हेतोः। न चावस्थासापेक्षा एव बीजादयः स्वकार्यनिर्वर्त्तकाः
न तु संयोगापेक्षा इति कुतः सिद्धं येन सापेक्षत्वमात्रसाधने सिद्धसाध्यता भवेदिति
वाच्यम्, संयोगमात्रापेक्षायां प्रथमोपनिपातत एव क्षित्यादिभ्योऽङ्कुरादिकार्योदयप्रसङ्गात्, 15
पश्चाद्वदविकलकारणत्वात्, पश्चाद्वा न स्यात्, पूर्ववद्विकलकारणत्वात्, न वाऽनुपकारिणि
संयोगे बीजादेरपेक्षा युक्ता, अतिप्रसङ्गात्तस्मान्न संयोगविभागगुणद्वयसद्भावः। इदं परमिद-
मपरमिति ज्येष्ठकनिष्ठयोर्दूरासन्नैकदिक्कवस्तुनोर्यतोऽभिधानप्रत्ययौ भवतस्तद्यथाक्रमं कालिकं
परत्वमपरत्वं दैशिकं परत्वमपरत्वञ्च सिद्धम्, स च प्रत्ययो ज्येष्ठादिवस्त्वतिरिक्तनिबन्धनः
विलक्षणप्रत्ययत्वात्, ज्येष्ठकनिष्ठयोः कालकृतं परत्वमपरत्वञ्च, एकस्यां दिशि स्थितयोस्तद्दि- 20
क्कृतम्, एकस्यां दिशि काले च स्थितयोस्तत्प्रत्ययोत्पत्तेः, न तावदयं कालदिङ्मात्रनिबन्धन
इति मतं तदचारु, साध्यविपक्षे हेतोर्वृत्तेरनैकान्तिकत्वात्, असत्यपि परत्वापरत्वलक्षणे गुणे
नीलादौ क्रमेणोत्पादात् क्रमेण च व्यवस्थानात्, कालोपाधेर्दिगुपाधेश्च परं नीलमपरञ्चेति प्रत्य-
यस्योत्पत्तिदर्शनात्, तद्वत् पटादावपि भविष्यतीत्यर्थान्तरनिमित्तत्वमात्रसाधनेऽनैकान्तिकता
हेतोः, तस्य विपक्षवृत्तित्वात्, नित्यभूतदिक्कालनिमित्तकगुणविशेषनिमित्ततासाधने च हेतो- 25
रनन्वयित्वम्, परापरप्रत्ययः अर्थमात्रकृतक्रमोत्पादव्यवस्थानिबन्धनः परापरप्रत्ययत्वात्,
रूपादिषु परापरप्रत्ययवदित्यनुमानबाधिता च सा प्रतिज्ञा, रूपादिषु परापरप्रत्ययस्य
अस्खलद्वृत्तित्वाच्चौपचारिकत्वम्। नापि दिक्कालयोर्भवतः प्रदेशाः सन्ति यत्संयोगादपेक्षा-

बुद्धिसहितात् महत्त्वादेरुत्पत्तिः स्यात्, तयोरेकत्वेन निरवयवत्वात् । न चैवं संख्यादयो गुणा द्रव्याभाव्यतिरेकिणः, तेषां तद्व्यवच्छेदहेतुत्वात्, देवदत्तव्यवच्छेदकदण्डादिवदित्य-नुमानात्तेषां द्रव्याद्भेदः सिद्ध्यतीति वाच्यम्, संवृतिसतामवस्तुतया तत्त्वान्यत्वाभ्याम-वाच्यताया अभीष्टत्वेन सामान्यतोऽव्यतिरेकनिषेधमात्रसाधने सिद्धसाध्यताप्रसङ्गात् ।
5 न च प्रतिनियतधर्मयोगित्वाद्रूपरसादिवत्समूहसन्तानावस्थाविशेषास्तत्त्वान्यत्वाभ्यामवच-नीया न भवन्तीति वाच्यम्, तेषु पारमार्थिकनियतधर्मत्वासिद्धेः, तत्त्वतो निःस्वभावत्वाद्-म्बरपद्मवत् । प्रतिषेधद्वयेन प्रकृतार्थगतेर्यदि द्रव्याद्व्यतिरेकित्वं साध्यं तर्हि द्रव्यव्यतिरेकेण संख्यादेरनुपलम्भादाश्रयासिद्धो हेतुः, तदात्मनस्ततो भेदे तस्य निःस्वभावताप्रसक्तिश्चेति न द्रव्यव्यतिरेकित्वं कुतश्चित् प्रमाणादवसीयतेऽतो न तथा ते सद्व्यवहारविषयाः । बुद्ध्या-
10 दयस्तु प्रयत्नान्ता आत्माश्रितत्वेन तद्गुणा इष्टाः, ते चात्मनिषेधादेव निषिद्धाः, अमीषा-मुत्पत्तिकारणत्वेनात्मन आश्रयत्वे हि तेषां सर्वदोत्पत्तिप्रसङ्गः, अनाधेयातिशयस्य सहकार्य-पेक्षायोगात्, न वा नित्ये क्रमयौगपद्यव्याप्तकार्योत्पादनसामर्थ्यसम्भवः, नित्यस्य क्रम-यौगपद्याभ्यामर्थक्रियाविरोधस्योक्तत्वात् । नापि स्थितिहेतुतयाऽऽश्रयत्वमात्मनः, स्थितेः स्थातुरव्यतिरिच्यमानरूपत्वात्, तद्धेतुत्वे स्थातृहेतुत्वमेवोक्तं स्यात् तच्चानन्तरमेव निषिद्धम्।
15 न च परिनिष्ठितात्मरूपत्वात् स्थातुः कश्चिद्धेतुः सम्भवी, तत्र तस्याकिञ्चित्करत्वात् । व्यति-रेकेऽपि स्थितेः स्थातुस्तेन न किञ्चित्कृतमर्थान्तरभूतायाः स्थितेः करणात्, ततश्चाकिञ्चि-त्करः कथं तस्याश्रयो भवेत् । नापि तत्सम्बन्धिन्याः स्थितेः करणात्तस्यायमुपकारको युक्तः, तत्सम्बन्धित्वासिद्धेः । न च तस्य स्थितिं प्रति हेतुत्वमपि युक्तं नित्यस्य क्वचिदपि सामर्थ्या-नुपपत्तेः, किञ्च स्थाप्यमानो बुद्ध्यादिर्यदि स्वयमस्थितिस्वभावः कथं परेण स्थापयितुं शक्यः,
20 तत्स्वभावहानिप्रसङ्गात्, अथ स्थितिस्वभावः तथापि स्थापकोऽकिञ्चित्कर एव, स्वयमेव तत्स्वभावतया तस्य स्थितिसिद्धेः, किञ्च ये मूर्तास्तेषामधोगमनप्रतिबन्धकत्वेन भवेदाश्रय-कल्पना, बुद्ध्यादेस्त्वमूर्ततया नाधोगमनमस्तीति किं कुर्वाण आत्मादिस्तेषामाश्रयो भवेत् । अपि च नोत्पन्नानां बुद्ध्यादीनां कश्चिदाश्रयः, सतां निराशंसतयाऽऽश्रितत्वानुपपत्तेः, नाप्य-नुत्पन्नानां निरूपाख्यतया तेषां तत्त्वायोगात् । किञ्च बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तर-
25 मिति [ न्यायद० १-१-१५ ] वचनाद्बुद्धेर्ज्ञानरूपता परैरभ्युपगता, न च तस्याः स्व-संविदितत्वमभ्युपगतम्, बुद्ध्यन्तरग्राह्यताभ्युपगमात् । न च तथाभूतायास्तस्याः कर्मादिव-द्बुद्धित्वं युक्तम् । सुखदुःखेच्छाद्वेषप्रयत्नानामज्ञानरूपत्वे नात्मविशेषगुणताऽभ्युपगन्तुं युक्ता रूपादिवत्, ज्ञानरूपत्वे बुद्धेर्भेदेनाभिधानमसङ्गतमेव, कश्चिद्विशेषमुपादाय ज्ञानात्मकाना-मपि ततो भेदेनाभिधानेऽभिमानादीनामपि भेदेनाभिधानं कार्यमिति । गुरुत्वं पृथिव्युदक-

वृत्ति पतनक्रियानिबन्धनम्, द्रवत्वं पृथिव्युदकज्वलनवृत्ति स्यन्दनहेतुः, स्निग्धप्रत्ययहेतुः स्नेहस्त्वम्भसीत्यादिप्रक्रिया पृथिव्यादीनामाधारत्वनिषेधात् तद्गतरूपादिनिषेधाच्च निषिद्धैव, वेगभावनास्थितिस्थापकभेदः संस्कारः तत्र वेगो मूर्त्तिमद्द्रव्येषु प्रयत्नाभिधानविशेषापेक्षात् कर्मणो जायते नियतदिक्क्रियाप्रबन्धहेतुः स्पर्शद्रव्यसंयोगविरोधी च । भावना चात्मगुणो ज्ञानजो ज्ञानहेतुश्च दृष्टानुभूतश्रुतेष्वर्थेषु स्मृतिप्रत्यभिज्ञानकार्योन्नीयमानसद्भावः । मूर्तिमद्द्रव्यगुणः स्थितिस्थापकः स हि घनावयवसन्निवेशविशिष्टं कालान्तरस्थायिनं स्वमाश्रयं प्रयत्नेनान्यथाकृतं पूर्ववद्यथावस्थितं स्थापयतीति परमतम्, तदसत्, क्षणभङ्गसिद्धौ वेगाख्यसंस्कारकार्यस्य कर्मप्रबन्धस्यासिद्धेः, न ह्युत्पत्त्यनन्तरविनाशिनि भावे नियतदिक्क्रियाप्रबन्धस्य तद्धेतोश्च संस्कारस्योत्पत्तिः । न च स्वोपादानदेशपरिहारेणानन्तरदेशोत्पाद एव भावानां क्रियाप्रबन्ध इति वाच्यम्, ततो हि प्राक्तनस्वहेतव एव सेत्स्यन्ति न यथोक्तसंस्कारः, तेन सह कश्चिदप्यन्वयासिद्धेः । यदि च तथाविधसंस्कारादिष्वादीनामपतनं स्यात्तदा न कदाचिदपि ते पतेयुः सर्वदा पातप्रतिबन्धहेतोर्वेगस्यावस्थितत्वात्, एवञ्चाकाशप्रसर्पिणः शरस्याकस्माद्यदेतत्पतनमुपलभ्यते तत्कथमुपपद्यते, न च मूर्त्तिमतां सतां वाय्वादीनां संयोगादुपहतशक्तित्वाद्वेगस्य विनाशात् पतनमिति वक्तुं शक्यम्, अर्वागेव पतनप्रसङ्गात्, तद्विरोधिनो वायुसंयोगस्य सर्वत्रैव सत्त्वात् । न च तदानीं वेगो बलीयान्, पश्चात्तस्याबलीयस्त्वे हेत्वभावात्, न च तदानीं तदुत्पादककर्मणोऽभावाद्दुर्बल इति वाच्यम्, तस्याप्यभावे निमित्ताभावात् । भावनापि सामान्यतः स्मृत्यादिकार्यात्साध्यते यदि तदा सिद्धसाध्यता, पूर्वानुभवाहितसामर्थ्यलक्षणज्ञानात्मभूतायास्तस्याः स्मृतिहेतुत्वेनाभ्युपगमात्, यस्या वसनात्वेन प्रसिद्धिः । अथात्मगुणस्वरूपा भावना सिषाधयिषिता तदा न हेतोरन्वयित्वम्, तथाविधया सह स्मृत्यादीनामन्वयासिद्धेः, ये यदाश्रिता ते तस्याभावे नावस्थितिमश्नुवते यथा चित्रं कुड्याद्यभावे, आश्रितश्चात्मानं संस्कारः परमतेनेति व्यापकविरुद्धोपलब्धेः संस्कारस्यासत्त्वादनुमानबाधिता प्रतिज्ञा च, आत्मनः प्राङ्निषिद्धत्वात् । स्थितिस्थापकोऽप्यत्यन्तमसङ्गत एव, स्वयमस्थिरस्वभावस्य पदार्थस्यानेन स्थापयितुमशक्यत्वात्, क्षणादूर्ध्वं तस्याभावात्, स्थिरस्वभावस्य चाप्रच्युतस्थितरूपत्वात् स्थापकस्याकिञ्चित्करतैव । न च सर्वभावानां क्षणिकत्वेऽपि एकक्षणावस्थितौ प्रबन्धेनोत्तरकालमनुवृत्तौ तस्य सामर्थ्यमिति वाच्यम्, स्वरूपप्रतिलम्भलक्षणैव हि भावानां

---

१ वेगः क्रियाविशेषः स चात्मन्यपि वर्त्तते न च क्रियातोऽर्थान्तरं वेगः, वेगेन गच्छति शीघ्रं गच्छतीति पर्यायत्वात्, न च क्रियातः क्रियोत्पादेऽनुपरमः स्यादिति वाच्यम्, शब्दस्य शब्दान्तरारम्भकत्वेऽपि तदुपरमादिवास्या अप्युपरमसम्भवादित्यपि बोध्यम् ॥ २ अत्र प्रतिषेध्यावस्थितिप्राप्तिः, तद्व्यापक आश्रयसद्भावः, तद्विरुद्धस्याश्रयाभावस्योपलब्धिर्व्यापकविरुद्धोपलब्धिः ।

स्थितिरुच्यते, न तु प्रतिलब्धात्मसत्ताकानामुत्तरकालमात्मरूपसन्धानलक्षणा, स्वयं चला-
त्मन उत्तरकालावस्थानासम्भवात्, अवस्थाने वा कदाचिदप्यनिवृत्तिप्रसङ्गः, पूर्ववत् पश्चादप्य-
विशिष्टत्वात्, अतत्स्वभावप्रसङ्गाच्च। न च क्षणस्थितिप्रबन्धेऽपि स्थापकस्य सामर्थ्यसिद्धिः,
पूर्वपूर्वकारणसामर्थ्यकृतस्योत्तरोत्तरकार्यप्रसवस्य संस्कारमन्तरेणापि सिद्धेः । अक्षणिकस्य
5 त्वन्यथात्वासम्भवात्स्वत एव स्थितिरिति न तत्रापि स्थापकोपयोगः । कर्मफलदायी आत्म-
गुण आत्मनः संयोगजः स्वकार्यनाश्यो धर्माधर्मरूपतया भेदवानदृष्टाख्यो गुणः वैशेषिकैः
परोक्षलक्षण उपवर्णितः, सोऽपि तत्समवायिकारणस्यात्मनो मनसः तयोः संयोगस्य च नि-
मित्तासमवायिकारणत्वेनाभ्युपगतस्य निषिद्धत्वात्कारणाभावादेवासन् सिद्धः । शब्दस्त्वा-
काशगुणत्वेनाभिमतः सोऽपि पूर्वं निषिद्ध इति न चतुर्विंशतिरपि गुणाः प्रमाणोपपत्तिकाः ।
10 उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनलक्षणानि पञ्च कर्माणि, ऊर्ध्वाधःप्रदेशाभ्यां संयोगवि
भागकारणं कर्म उत्क्षेपणम्[1] । एतद्विपरीतसंयोगविभागकारणञ्च कर्मापक्षेपणम्, ऋजुद्रव्य-
स्य कुटिलत्वकारणं कर्माऽऽकुञ्चनम्, एतद्विपर्ययकारणं कर्म प्रसारणम्, अनियतदिग्देशैर्यत्सं-
योगविभागकारणं कर्म तद्गमनम्, पञ्चविधस्याप्यस्य मूर्त्तिमद्द्रव्यसंयोगविभागलक्षणकार्योप-
लम्भादनुमानतः इन्द्रियव्यापारेण गच्छतीत्यादिप्रतीत्युत्पत्तेरध्यक्षतश्च प्रसिद्धिरिति तन्न
15 युक्तम्, संयोगविभागलक्षणतत्कार्यस्य तयोर्निषिद्धत्वेनासिद्धत्वात्, नैरन्तर्योत्पादसान्तरतो-
त्पत्तिमात्रलक्षणौ संयोगविभागौ तत्कार्यतया यदि हेतुत्वेनेष्टौ तदानैकान्तिकता, तयोस्तथावि-
धकर्मणा काप्यन्वयासिद्धेः, साध्यविपर्ययेण हेतोर्व्याप्तेर्विरुद्धतापि, कारणमात्रास्तित्वे साध्ये
वाय्वादीनां तथाविधसंयोगविभागकारणत्वेनेष्टतया सिद्धसाध्यता च, कारणविशेषास्तित्वे
च साध्येऽनुमानबाधा प्रतिज्ञायाः, तथाहि पदार्थानां क्रिया भवन्ती क्षणिकानां भवेदक्षणि-
20 कानां वा, नाद्यः, तस्य जन्मदेशे एव च्युतेर्देशान्तरप्राप्त्यभावात् । यो यत्र देशे ध्वंसते न
तदन्यदेशमाक्रामति, यथा प्रदीपादिः, जन्मदेश एव च ध्वंसन्ते सर्वभावा इति व्यापकविरुद्धो-
पलब्धिः[2], न चास्य हेतोरसिद्धता, अन्यस्य क्षणिकत्वायोगात् । न च भावानां क्षणिकत्वेऽप्यु-
त्पत्तिकाल एव क्रिया भविष्यतीति वाच्यम्, क्षणमात्रभाविन एकस्य क्रियाकालविलम्बा-
सम्भवात्, पाश्चात्यदेशविश्लेषे पुरोवर्त्तिदेशश्लेषे च सति हि गन्ता भावो भवति नाकाशादिः,
25 क्षणिकत्वाच्च भावानां प्राक्तनदेशपरिहारेण न तेऽन्यदेशमाक्रमेयुः, सत्ताकाल एव ध्वंसवशीकृत-

१ शरीरावयवे तत्सम्बद्धे वा मूर्त्तिमद्द्रव्ये ऊर्ध्वदिग्भागविभराकाशप्रदेशैर्यः संयोगस्तद्धेतुः, अधोदिग-
वच्छेदेनाकाशप्रदेशैर्यो विभागस्तत्कारणञ्च कर्म उत्क्षेपणम् । अङ्गुल्याद्यग्रावयवाना तत्संयुक्ताकाशप्रदेशैर्विभा-
गानन्तरं मूलप्रदेशैः संयोगे सति येनाङ्गुल्यादि कुटिलो भवति तत्कर्माकुञ्चनमित्यर्थः ॥ २ अत्र प्रति-
षेध्यं तदन्यदेशाक्रमणं तद्व्यापक तत्र देशे ध्वंसाभाव. तद्विरुद्धस्य तत्र देशे ध्वंसस्योपलब्धिर्व्यापक-
विरुद्धोपलब्धि ॥

त्वात् । नाप्यक्षणिकस्यासौ युक्ता, तस्यैकरूपत्वेन सर्वदाऽविशिष्टत्वात्, न च प्रकृत्यैव तस्य गन्तृत्वात् क्रियावत्त्वम्, तथा सति सर्वदैकरूपतया कदाचिदपि निश्चलता न स्यात् । यद्य-गन्तृरूपताप्येषामङ्गीक्रियते तर्ह्याकाशवदेकरूपत्वादगन्तृत्वमेव स्यात्, एवञ्च गत्यवस्थाया-मप्यचलत्वप्रसङ्गः अपरित्यक्तागतिरूपत्वात् । उभयरूपत्वन्तु गन्तृत्वागन्तृत्वलक्षणविरुद्धध-र्माध्यासादेकत्वव्याहतिप्रसङ्गेन क्षणिकतापत्त्या न युक्तम्, एवं प्रत्यक्षबाधितमपि कर्म, 5 यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते न तत्प्रेक्षावता सदिति व्यवहर्त्तव्यम्, यथा कचित् प्रदेशविशेषेऽनुपलभ्यमानो घटः, नोपलभ्यते च विशिष्टरूपादिव्यतिरेकेण कर्मेति स्वभावा-नुपलब्धिः, न हि तथादेशान्तरावष्टम्भोत्पादितरूपादिव्यतिरेकेणेन्द्रियज्ञाने कर्म प्रतिभा-समानमुपलक्ष्यते, या चैवमुत्क्षेपणमवक्षेपणमिति जल्पानुषङ्गिणी बुद्धिरुपजायते सा साभि जल्पत्वान्न प्रत्यक्षम्, नाप्येषा कर्मपदार्थानुभवभाविनी, रूपादेरेव तथा तथोत्पद्यमानस्य 10 दर्शनात्, गतिव्यवहारस्तु लोके अपरापरनैरन्तर्योत्पत्तिमत्पदार्थोपलब्धेः स एवायं गच्छतीति-भ्रान्त्युत्पत्ते. प्रदीपादौ गमनव्यवहारवदुपपद्यते, अतो न व्यवहारमात्रादन्यथासिद्धाद्द्रव्य-व्यतिरिक्तकर्माभ्युपगमः श्रेयानिति स्थितम् । परापरभेदभिन्नं सामान्यमपि द्रव्यगुणकर्मा-त्मकपदार्थत्रयाश्रितत्वाभ्युपगमात्तन्निराकरणादेवापास्तम्, आश्रयाभावेऽपि सत्त्वेऽनाश्रितत्व-प्रसङ्गात्, तथापि सम्प्रति विशेषतः प्रतिषेधमार्गः प्रदर्श्यते, तत्र परं सामान्यं सत्ताख्यं 15 सर्वेष्वनुवृत्तिप्रत्ययकारणत्वात्सामान्यमेव, द्रव्यत्वादिलक्षणमपरन्तु स्वाश्रयेष्वनुवृत्तिप्रत्य यहेतुत्वात्सामान्यम्, स्वाश्रयस्य च विजातीयेभ्यो व्यावृत्तिप्रत्ययहेतुतया विशेषणात्सामा-न्यमपि सद्विशेषसंज्ञां लभते, सामान्यञ्चाक्षान्वयव्यतिरेकानुविधाय्यनुगताकारप्रत्ययग्रा-ह्यत्वादध्यक्षतः प्रसिद्धम्, तथा व्यावृत्तेषु खण्डमुण्डशाबलेयादिषु अनुगताकारप्रत्ययस्तद्व्य-तिरिक्तानुगताकारनिमित्तनिबन्धनः, व्यावृत्तेष्वनुगताकारप्रत्ययत्वात्, यथा चर्मचीरकम्ब- 20 लेषु नीलप्रत्ययः, तथाचायं शाबलेयादिषु गौर्गौरिति प्रत्यय इत्यनुमानेनापि तत्सिद्धम् । न चेयमनुगतमतिर्निर्निबन्धना, कादाचित्कत्वात्, नापि शाबलेयादिपिण्डनिबन्धना, तेषां व्या-वृत्तरूपत्वात्, पिण्डमात्रनिबन्धनत्वे च कर्कादावपि गौर्गौरिति प्रत्ययोत्पादप्रसङ्गादविशे-षात् । न च वाहदोहाद्यर्थक्रियानिबन्धनेष्वेव तथाप्रत्यय इति वाच्यम्, वत्सादौ तदनु-दयात्, महिष्यादावनुदयात्, अर्थक्रियाया अपि प्रतिव्यक्ति भेदेनानुगतमतिनिमित्तत्वास- 25 म्भवाच्चेति सामान्यनिमित्तता सिद्धिरिति परस्य मतं तदयुक्तम्, अक्षजे प्रत्यये शाबलेया-दिव्यतिरेकेणान्यानुगताकारस्य सामान्यस्याप्रतिभासनात्, न हि शाबलेयादिषु सूत्रकण्ठे गुण इवापरं सामान्यं केनचिल्लक्ष्यते, गौर्गौरिति विकल्पज्ञानेनापि त एव समानाकाराः

---

१ सूत्रकंठः खञ्जरीटे द्विजन्मनि कपोतके इति हैमः ॥

शाबलेयादयो बहिर्व्यवस्थिता अवसीयन्ते, अन्तश्च शब्दोल्लेखः, न पुनस्तद्भिन्नमपरं गोत्वम्, तस्मान्न निर्विकल्पकेन सविकल्पकेन वाऽध्यक्षेण सामान्यं व्यवस्थापयितुं शक्यम्, अनुमानतो निमित्तमात्रसिद्धावपि तत्किं सामान्यमन्यद्वेति न निश्चयो भवताम्। न च पिण्डानां विशेषप्रत्ययजननेऽन्वयव्यतिरेकाभ्यां सामर्थ्यं सिद्धमितीहापि सामान्यस्यानुगतमतेः
5 सामर्थ्यं निश्चीयत इति वाच्यम्, सामान्यस्य क्वचिदपि सामर्थ्यानवधारणात्, पिण्डसद्भावे ह्यनुगताकारं ज्ञानमुपलभ्यते तदभावे नेति वरमध्यक्षप्रत्ययावसेयानां तेषामेव तन्निमित्तता कल्पनीया। यदुक्तं पिण्डानामविशिष्टत्वात्तत्प्रत्ययानिमित्तत्वं तदसङ्गतम्, यथाहि पिण्डादिरूपतयाऽविशेषेऽपि तन्तूनामेव पटजननहेतुत्वं न कपालादीनां तथा शाबलेयादीनामेव गौर्गौरिति ज्ञानोत्पादने सामर्थ्यं न कर्कादीनाम्, किञ्च सामान्यस्य यदि मूर्त्तत्व-
10 मभ्युपगम्यते तर्हि घटादिवत्सामान्यं न स्यात्, अथामूर्त्तत्वं न रूपादिवत्सामान्यं स्यात्। तथा यद्यनंशं तदा परमाणुवत्सामान्यं न स्यात्, सांशत्वेऽपि न घटवत्सामान्यम्। अपि च पिण्डेभ्यः सामान्यस्य भेदे घटादिभ्यः पट इव भेदेनैवोपलभ्येत, सम्बन्धाभावाच्च गोर्गोत्वमिति व्यपदेशानुपपत्तिः, व्यक्तिभ्योऽभेदे चान्यत्राननुयायित्वान्न पिण्डस्वरूपवत् सामान्यरूपता, नापि भिन्नप्रतिभासविषयत्वाद्व्यक्तिभ्यस्तस्य भेदः, बुद्धिभेदस्य व्यक्तिनिमि-
15 त्तत्वस्योक्तत्वात्। किञ्च यदि सामान्यबुद्धिर्व्यक्तिभिन्नसामान्यनिमित्ता तदा व्यक्त्यग्रहणेऽपि भवेत्, गोपिण्डाग्रहणेऽश्वबुद्धिवत्, न च कदाचित्तथा भवति, ततो न व्यक्तिव्यतिरिक्तसामान्यसद्भावः। न चाधारप्रतिपत्तिमन्तरेणाधेयप्रतिपत्तेरभावात्तद्ग्रह एव तद्ग्रहो न तस्याभावात्तद्ग्रहः, अन्यथा कुण्डाद्याधारप्रतिपत्तिमन्तरेण बदराधेयस्याप्रतिपत्तेस्तस्याप्यभाव एव स्यादिति वाच्यम्, बदरादेः प्रतिनियताधारमन्तरेणापि स्वरूपेणोपलब्धेः, गोत्वादेस्तु प्रति-
20 नियतपिण्डोपलंभमन्तरेण स्वरूपेण कदाचनाप्यनुपलब्धेरभाव एव। यदि तस्यानाधारत्वं तदा न सामान्यं शशशृङ्गवत्, अथ तदाधारवत्, तदा कार्त्स्न्यैकदेशाभ्यां वृत्त्यनुपपत्तिरवयविवत्। अपि च अनुगताकारं ज्ञानं सामान्यमन्तरेणासम्भवीत्युच्यते परैः, तत्र किं यत्रानुगतं ज्ञानं तत्र सामान्यसम्भवः, उत यत्र सामान्यसम्भवस्तत्रानुगतं ज्ञानं प्रतिपाद्यते, नाद्यः, गोत्वादिसामान्येषु बहुषु सामान्यं सामान्यमिति प्रत्ययोत्पत्तेरपि अपरसामान्याभावात्, एवं
25 प्रागभावाद्यभावेष्वपि, न च सामान्यादावनुगतमतिर्गौणभूता, अस्खलद्वृत्तित्वेन तदसिद्धेः। न द्वितीयः, पाचकादिषु तदभावेऽप्यनुगतप्रत्ययोत्पत्तेः। न च पचनक्रियानिमित्तस्तत्प्रत्ययः, तस्याः प्रतिव्यक्ति भिन्नत्वात्, तत्सामान्यनिमित्तत्वे[1] प्रागेव तत्प्रत्ययप्रसूतिर्भवेत्, तस्य नित्यत्वात्, न चाभिव्यञ्जकक्रियाभावात् प्रागनभिव्यक्तं तदिति वाच्यम्, विनष्टस्याभिव्यञ्जकस्या

---

[1] पाचकत्वसामान्यनिमित्तत्व इत्यर्थः ॥

भिव्यञ्जकत्वायोगेन तत्क्रियाविनाशे पश्चात्तद्बुद्धिर्न स्यात् । न चैकदाऽभिव्यक्तं सर्वदैवाभिव्यक्तमिति पश्चात्तद्बुद्धिर्भविष्यतीति वाच्यम्, प्रागपि सामान्यस्याभिव्यक्तस्य सत्त्वेन तन्मतिप्रसङ्गात् । न च प्रागनभिव्यक्तः, अभिव्यक्तानभिव्यक्तभेदतोऽनेकत्वापत्तेः । अथ व्यक्तिप्रतिभाससमय[1] एव सामान्यप्रतिभास इति न ततः प्राक् पश्चाद्वाऽभिव्यक्तैकरूपस्यापि तस्य ग्रहणमिति चेत्तर्हि व्यक्तिप्रतिभासकालेऽपरप्रतिभासस्यासंवेदनादनुगतप्रतिभासस्य तदा व्यक्तिनिबन्धनत्वात्सामान्यस्याभाव एवेति प्राप्तम् । किञ्चोत्पद्यमानेन पिण्डेन सह सामान्यं किमन्यत आगत्य सम्बध्यते, उत पिण्डेन सहोत्पादात् किं वा पिण्डोत्पत्तेः प्रागेव तद्देशावस्थानात्, आद्ये प्राक्तनपिण्डपरित्यागेनागमने गोत्वपरित्यक्तस्य तस्यागोरूपताप्रसक्तिः, अपरित्यागेन चेत् तदपरित्यक्तप्राक्तनपिण्डस्य निरंशस्य रूपादेरिव गमनासम्भवः, न ह्यपरित्यक्तप्राक्तनाधारणामाधारान्तरसङ्क्रान्तिः क्वचिदप्युपलब्धा । न च प्राक्तनाधारापरित्यागेऽपि सर्पादेरिवाधारान्तरसङ्क्रान्तिस्सामान्यस्य भविष्यतीति वक्तव्यम्, सामान्यस्यामूर्तत्वाभ्युपगमात् । न च सर्पवत्पूर्वाधारापरित्यागेनाधारान्तरक्रोडीकरणे सामान्यरूपतया सदेशस्य घटवत्सामान्यरूपतानुपपत्तेः, न द्वितीयः, उत्पत्तिमत्त्वेन तस्यानित्यताप्रसक्तेः, अनित्यस्य च ज्वालादिवत्सामान्यरूपत्वायोगात् । न तृतीयः, निराधारस्य सामान्यस्य तत्रावस्थानासम्भवात्, सम्भवे वाऽऽकाशवत्सामान्यरूपताविरहात् । न च गमनादिधर्मविकलस्यापि सामान्यस्योत्पद्यमानपिण्डसम्बन्धो गौर्गौरित्यनुगतप्रत्ययात् प्रतीयत एवेति प्रमाणप्रतिपन्ने वस्तुनि विरोधाशुद्भावनमसङ्गतमेवेति वाच्यम्, गौर्गौरित्यनुगताकारप्रत्ययस्य प्रागभावादिष्वभावप्रत्ययवत्सामान्यसम्बन्धमन्तरेणापि सिद्धत्वात् । यदि च पिण्डभिन्नानुस्यूतैकसामान्याभ्युपगमस्तदा एकपिण्डोपलम्भे तस्याविभक्तत्वात् पिण्डान्तरालेऽप्युपलब्धिः स्यात्, न हि तस्यैकत्राभिव्यक्तस्यान्यत्रानभिव्यक्तरूपता, विरुद्धधर्माध्यासतो भेदप्रसङ्गात् । न चान्तराले संयुक्तसमवायसम्बन्धस्योपलम्भहेतोरभाव इति वक्तव्यम्, तत्र तत्सद्भावे प्रमाणाभावात्, अन्तराले हि सामान्यसद्भावस्य प्रमाणतः सिद्धौ तदग्रहणनिमित्तमुपपद्येतापि न च तत्र तत्सद्भावः सिद्धः । अपि च अक्षणिकैकव्यापकस्वभावत्वे सामान्यस्य येन स्वभावेनैकपिण्डवृत्तित्वं तस्य किं तेनैव स्वभावेन पिण्डान्तरवृत्तित्वं, उत स्वभावान्तरेण, न प्रथमः, सर्वपिण्डानामेकत्वप्रसङ्गात्, एकदेशकालस्वभावनियतपिण्डवृत्त्यभिन्नसामान्यस्वभावक्रोडीकृतत्वात्सर्वपिण्डानाम्, प्रतिनियतदेशकालस्वभावैकपिण्डवत् । न द्वितीयः, अनेकस्वभावसम्बन्धेन[2] सामान्यस्यानेकत्वप्रसङ्गात्, न चैकस्याप्यनेक-

---

१ पचनक्रियाविशिष्टपुरुषव्यक्तिप्रतिभाससमय इत्यर्थः ॥ २ यदनेकस्वभावसम्बन्धि तदनेकं दृष्टम् यथा घटपटादयः, अनेकस्वभावसम्बन्धि च भवद्भिः सामान्यमभ्युपगम्यतेऽतस्तेनाप्यनेकेन भाव्यमिति भावः ॥

वृत्तित्वं रूपादेरिव युक्तम्, अथ यथैकस्य रूपादेरेकवृत्तित्वं तथैवोपलम्भादभ्युपगम्यते तथैकस्य सामान्यस्यानेकवृत्तित्वमनेकत्रोपलम्भात् किं नाभ्युपगम्यते, अबाधितोपलम्भस्य भावरूपव्यवस्थानिबन्धनत्वादिति चेन्न, स्वरूपतोऽनेकवृत्तिव्यक्तिभिन्नैकसामान्यस्य कुत्रचित् प्रत्ययेऽप्रतिभासनात् । न देशव्याप्तिः कालव्याप्तिर्वा कस्यचिद्भावस्य केनचित् प्रमा-
5 णेन प्रतिपत्तुं शक्येति त्वसकृदावेदितम् । किञ्चानुगतप्रत्ययः पिण्डव्यतिरिक्तानुगतनिमित्तनिबन्धन इति प्रतिज्ञाऽनुमानबाधिता, साधयितुमिष्टस्य व्यक्तिभिन्नानुगतनिमित्तस्य तत्राप्रतिभासनात्, वर्णाकृत्यक्षराकारस्यैवार्थस्य तत्र प्रतिभासनाच्च तद्रूपविकलतया सामान्यस्य परैरभ्युपगमात् कथं तत्प्रतिभासे तस्य प्रतिभासः, अन्याकारस्य विज्ञानस्यान्यालम्बनत्वेऽतिप्रसङ्गात् । न च क्षणिकत्ववत् प्रतिभासमानमपि सामान्यं व्यक्तिभेदेन नोपलक्ष्यत
10 इति वक्तव्यम्, अनुपलक्षितस्य व्यक्तित्वभिन्नधीध्वनिनिमित्तत्वायोगात्, न हि विशेषणानुपलक्षणे विशेष्ये बुद्धिरुपजायते, दण्डानुपलक्षणे दण्डिबुद्धिवत् । किञ्चाविकल्पविज्ञानवादिनः प्रतिभानानुपलक्षणं युज्येतापि, सविकल्पकाध्यक्षवादिनो गृहीतानुपलक्षणमयुक्तम्, निश्चयानामुपलक्षणमन्तरेणापरग्रहणासम्भवात्, न हि निश्चयैरनिश्चितं गृहीतं नाम । किञ्चानुगतप्रत्ययस्यान्यनिमित्तत्वसिद्धावपि तस्यानुगतनित्यनिमित्तत्वेन साधने त्वसिद्धि-
15 रेव स्यात्, तथाहि अनुगताभिधानप्रत्ययाः क्रमवत्कारणप्रभवाः, क्रमेणोपजायमानत्वात्, प्रदीपज्वालाप्रभवक्रमभाविप्रत्ययवदिति विपर्ययसिद्धेः । यदि त्वक्रमसामान्यहेतुका एते अभविष्यन्न क्रमेणोत्पत्तिमासादयिष्यन्, अविकलकारणत्वात्, तथापि तद्धेतुकत्वे सर्वं सर्वहेतुकं स्यादिति प्रतिनियतकार्यकारणभावव्यवस्थाविलोपप्रसक्तिः । न चानुगतनिमित्ताभावेऽन्यस्य भावे प्रत्ययभेदकृता विषयभेदव्यवस्था न स्यादिति रूपादिप्रत्ययानामपि न स्ववि-
20 षयव्यवस्थापकत्वं भवेदिति वाच्यम्, अनुगतप्रत्ययस्याविष्टाभिलापत्वेन स्वलक्षणाविषयीकरणात्तद्व्यवस्थापकत्वायोगात्, यथासङ्केतं तत्तद्व्यावृत्तिमादायैकत्राप्यनेकविरुद्धधर्माध्यवसायिविकल्पप्रसूतेरविरोधात् । यदि चानुगतनिमित्तमन्तरेण नानुगतप्रत्ययो भवेत्तर्हि यदृच्छाजातेषु इच्छाविरचितरूपेषु भावेषु च कथं स भवेत् न हि तत्रापि सामान्यसद्भावः, व्यक्त्यभावे तदाश्रितस्य तस्याप्यभावात् । न च परेणापि केवलस्य सामान्यस्य ग्रहणमभ्यु-
25 पगम्यते, अभ्युपगमे वा सामान्यप्रत्ययस्य व्यक्त्यध्यवसायो न प्राप्नोति, व्यक्तेस्तदानीमभावाद्व्यक्तीनां सामान्यमिदमिति सम्बन्धश्च न स्यान्निमित्ताभावात् । तथाहि सम्बन्धस्य निमित्तं भवतः सामान्यस्य किं तद्व्यङ्ग्यत्वं भवेत्, तज्जन्यता वा तद्ग्रहणापेक्षग्रहणता वा, तत्र न तावद्व्यक्तिभिर्व्यङ्ग्यत्वात्सामान्य ताभिः सम्बद्धम्, परैरनुपकार्यस्य नित्यत्वात्

सामान्यस्याविशेषतो व्यङ्ग्यत्वानुपपत्तेः, यो हि यस्यानुपकार्यः स तस्य नाभिव्यङ्ग्यः, यथा हि सवान् विन्ध्यस्य, अनुपकार्यं च सामान्यं व्यक्तिभिरित्यनुपकार्यस्यापि व्यङ्ग्यत्वे सर्वः सर्वस्य व्यङ्ग्यः स्यादित्यतिप्रसङ्गः । न द्वितीयः, तस्य नित्यत्वाभ्युपगमात्, केवलस्यापि ग्रहणाभ्युपगमाच्च । नापि तृतीयः, परैरनाधेयातिशयस्य क्वचिदप्यपेक्षायोगात, अतो यदि तत् स्वविषयज्ञानोत्पादनसमर्थं तदा सर्वदैव तज्जनयेत्, अथासमर्थं न कदाचिदपि जनयेत्, सामर्थ्यासामर्थ्ययोस्तद्रूपयोः केनचिदन्यथा कर्त्तुमशक्यत्वात्, अन्यथा नित्यत्वं तस्य न स्यात् । अत एव तस्य व्यक्तिषु वृत्तिरप्यनुपपन्ना, तथाहि अस्य वृत्तिः किं स्थितिलक्षणा, उताभिव्यक्तिलक्षणा, स्थितिरपि किं स्वभावाप्रच्युतिः किं वाऽधोगतिप्रतिबन्धस्वरूपा, नाद्यः, सामान्यस्य नित्यतया स्वभावाप्रच्युतेः स्वतः सिद्धत्वात्, नापि द्वितीयः, अमूर्त्तसर्वगतत्वाभ्यां निष्क्रियतयाऽधोगमनासम्भवात् प्रतिबंधकवैयर्थ्यात् । न च स्वव्यक्तिषु समवाय एव स्थितिरभ्युपगन्तव्या, तस्यैव विचार्यमाणत्वात्, अपृथक्सिद्धानामाश्रयाश्रयिभावलक्षणो हि सम्बन्धः समवाय उच्यते, तत्राश्रितत्वं सामान्यस्य व्यक्तिप्रतिबद्धस्थितितया वा भवेत, तदभिव्यङ्ग्यतया वेति । न हि परस्परासङ्कीर्णात्मनामकिञ्चित्करोऽर्थान्तरं समवायो युक्तोऽतिप्रसङ्गात, योगे वा सर्वः सर्वस्य समवायः प्रसज्येत, व्यावृत्तस्वरूपान् हि भावान् संश्लेषयन् पदार्थः समवायः प्रकल्पितः, न चार्थान्तरसम्बन्धसद्भावेऽपि स्वात्मनि व्यवस्थिता भावाः परस्परस्वभावमन्वाविशन्ति, स्वरूपहानिप्रसङ्गात, तस्य चार्थान्तरस्याश्लेषकारिणः समवाय इति नामकरणेऽपि न काचित् क्षतिः । न च श्लेषकरणात् समवायरूपत्वं संश्लेषस्य, संश्लिष्यमाणपदार्थेभ्यो भिन्नस्य करणे तैस्तस्य सम्बन्धासिद्धेः, अभिन्नस्य करणे सामान्यादेः कार्यत्वेनानित्यत्वप्रसक्तेः तन्न सामान्यस्य व्यक्तिषु स्थितिर्वृत्तिः । नाप्यभिव्यक्तिलक्षणाऽसौ युक्ता, असौ हि तद्विषयज्ञानोत्पादनमेव स्यात्, न तु स्वभावपरिपोषलक्षणा, नित्यस्य स्वभावान्यथाकरणासम्भवात्, तथा च सामान्यस्य स्वतो यदि ज्ञानोत्पादनसामर्थ्यं तदाऽभिव्यक्तिकारणानि व्यर्थानि भवेयुः, यद्यसामर्थ्यं तदा परैरनाधेयविशेषत्वात्तदपेक्षा न युक्ता, परैराधेयविशेषत्वे चाङ्गीक्रियमाणे सत्यनित्यत्वप्रसङ्गः, ततश्च व्यक्तिवदेवासाधारणत्वान्न सामान्यं स्यात्, तेन सामान्यस्य व्यक्तिषु वृत्तिनिबन्धनाभावादवृत्तिः, तदेवं व्यवस्थितमसत् सामान्यं तत्साधकप्रमाणाभावात्, बाधकप्रमाणोपपत्तेश्चेति । नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः[१], परस्परमत्यन्तव्यावृत्तबुद्धिहेतुत्वात् स्वाश्रयमन्यतो विशेषयन्तीति विशेषा उच्यन्ते, तत्स-

१ परमाण्वाकाशकालदिगात्ममनःसु वृत्तेर्नित्यद्रव्यवृत्तयः, परमाणूनां जगद्विनाशारम्भकोटिभूतत्वात्, मुक्तात्मनां मुक्तमनसाञ्च संसारपर्यन्तरूपत्वादन्तत्वं तेषु भवा अन्त्या इति पदद्वयार्थः । विनाशारम्भरहितनित्यद्रव्येषु प्रतिद्रव्यमेकैकशो वर्त्तमाना अत्यन्तव्यावृत्तिबुद्धिहेतवो विशेषा इति केचित् ॥

द्भावप्रतिपादकं प्रमाणञ्च यथा ह्यस्मदादीनां गवादिषु आकृतिगुणक्रियाऽवयवसंयोगनिमित्तोऽ-
श्वादिबुद्धिव्यावृत्तः प्रत्ययो दृष्टः, तद्यथा गौः शुक्लः शीघ्रगतिः पीनककुदो महाघण्ट इति
यथाक्रमम्, तथाऽस्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्म-
मनःसु चान्यनिमित्तासम्भवाद्यद्बलात् प्रत्येकं विलक्षणोऽयमिति प्रत्ययव्यावृत्तिर्देशकालवि-
5 प्रकर्षदृष्टे च स एवायमिति प्रत्यभिज्ञानं यतो भवति ते योगिनां विशेषप्रत्ययोन्नीतसत्त्वा
अन्त्या विशेषाः सिद्धाः, ते च यथास्वं प्रत्येकमाश्रयमाश्रिताः योगिनां प्रत्यक्षत एव
सिद्धाः तदप्यचारु, नित्यद्रव्यवृत्तित्वान्त्यद्रव्यभावित्वस्वरूपलक्षणस्यासम्भवदोषग्रस्तत्वात्,
न हि नित्यं किञ्चिद्द्रव्यमस्ति, तस्य पूर्वमेव निरस्तत्वात्, तत्कथमेषां तद्वृत्तित्वं
सिद्ध्येत्। यदपि विशेषाणां सत्त्वं योगिनां विशेषप्रत्ययबलात्साध्यते तत्रानैकान्तिकता
10 हेतोः, तथाहि किमण्वादीनां स्वरूपं परस्परमसङ्कीर्णम्, उत मिश्रीभूतम्, आद्ये स्वत एवास-
ङ्कीर्णवस्तूपलम्भात्तेषु योगिनां परस्परवैलक्षण्यबुद्धिर्भविष्यतीति व्यर्था तत्प्रकल्पना, द्वितीये
तु परस्परमिश्रीभूतस्वभावेषु तेषु कथमिव विशेषपदार्थसन्निधानेऽपि योगिनां विलक्षणं ज्ञानम-
भ्रान्तमुत्पद्यते, भ्रान्तमेव तत्स्यात् अतस्मिंस्तथावृत्तत्वात्, ततश्च ते कथं योगिनः। किञ्च
विशेषपदार्थाभावे यदि विलक्षणबुद्धिर्न स्यात्तर्हि कथं विशेषेषु परस्परविलक्षणबुद्धिः स्यात्,
15 अपरविशेषाच्चेदनवस्थाप्रसङ्गः, नित्यद्रव्यवृत्तित्वाभ्युपगमहानिप्रसङ्गश्च, विशेषेष्वपि वृत्तेः।
अथ तेषां वैलक्षण्यमतिः स्वत उच्यते तर्हि परमाण्वादयोऽपि स्वत एव तद्धेतवो भविष्य-
न्तीति किं विशेषैः। अथानवस्थाप्रसङ्गेन विशेषेषु विशेषान्तराभावेऽप्युपचारतस्तद्बुद्धिर्भवतीति
चेन्न, तथाविधज्ञानवतामयोगित्वप्रसक्तेः, तद्बुद्धेर्विशेषा इवेति स्खलद्रूपतया प्रवृत्तौ अनि-
र्णयबुद्ध्यधिकरणत्वात्, तत्र विशेषा एवेत्यस्खलद्रूपज्ञानवत्त्वेऽपरविशेषरहितविशेषाणां पर-
20 माण्वादीनामिवाविशेषरूपतया ज्ञाने तस्य विपर्यस्तरूपत्वेन तज्ज्ञानवतां योगित्वासम्भवाच्च।
न च बाधकोपपत्तेर्विशेषेषु व्यावृत्तबुद्धिर्न त्वपरविशेषादिति वाच्यम्, परमाण्वादिष्वपि
भिन्नाभिन्नव्यावृत्तरूपकरणानुपपत्तेर्बाधकस्य सद्भावेन तत एव व्यावृत्तबुद्धिसम्भवात्। न
च यथा श्वमांसादेः स्वत एवाशुचित्वं तद्योगाच्च परेषाम्, यथा वा अतदात्मकेष्वपि अन्य-
निमित्तः प्रत्ययो भवति, यथा घटादिषु प्रदीपान्न तु प्रदीपेषु घटादिभ्यः, तथा विशे-
25 षेषु स्वत एव व्यावृत्तिप्रत्ययस्तद्योगात् परमाण्वादिष्विति वाच्यम्, भावानामशुचित्वस्य
कल्पनोपरचितत्वात्, यदेव कस्यचिच्छ्रोत्रियादेरशुचित्वेनाभाति तदेव कापालिकादेः शुचि-
त्वेन, न चैकस्यानेकविरुद्धधर्मसमावेशो युक्तः, एकत्वहानिप्रसङ्गात्। अशुचित्वस्य पारमा-
र्थिकत्वेऽपि नात्र दृष्टान्तस्तुल्यः, अशुचिद्रव्यसम्पर्केणान्नादिभावानां परित्यक्तशुचिस्वभावानां
परिगृहीताशुचिस्वभावतयोत्पादात्, परमाण्वादीनान्तु नित्यत्वेन परोपाधिकवैलक्षण्यासम्भ-

वात्, एवं प्रदीपदृष्टान्तोऽप्यसङ्गतः पटादीनां प्रदीपादिपदार्थान्तरोपाधिकस्य स्वरूपान्तरस्योत्पत्तेः प्रकृते च तदसम्भवात् । तथाऽनुमानबाधितश्च विशेषसद्भावाभ्युपगमः, तथाहि विवादाधिकरणेषु भावेषु विलक्षणप्रत्ययः तद्व्यतिरिक्तनिबन्धो न भवति, व्यावृत्तप्रत्ययत्वात्, विशेषेषु व्यावृत्तप्रत्ययवदिति, तन्न विशेषपदार्थसद्भावः, तत्साधकप्रमाणाभावात्, बाधकोपपत्तेश्च । अयुतसिद्धानामाधार्याधारभूतानामिहबुद्धिहेतुर्यः सम्बन्धः स समवायः 5
स चायमिह तन्तुषु पट इत्यादीहबुद्धिविशेषतो द्रव्यादिभ्योऽर्थान्तरत्वेनावगम्यते, यथाहि सत्ताद्रव्यत्वादीनां स्वाधारेष्वात्मानुरूपप्रत्ययकर्तृत्वात्स्वाश्रयादिभ्यः परस्परतश्चार्थान्तरभावस्तथा समवायस्यापि पञ्चसु पदार्थेषु इह तन्तुषु पट इह द्रव्ये गुणकर्मणी, इह द्रव्यगुणकर्मसु सत्ता, इह द्रव्ये द्रव्यत्वम्, इह गुणे गुणत्वम्, इह कर्मणि कर्मत्वम्, इह द्रव्येष्वन्त्या विशेषा इत्यादिप्रत्ययदर्शनात् पञ्चभ्यः पदार्थेभ्योऽर्थान्तरत्वं 10
गम्यते, यो येषु यदाकारविलक्षणः प्रत्ययः स तदर्थान्तरनिबन्धनः, यथा देवदत्ते दण्डीति प्रत्ययः, तथा चायं पञ्चसु पदार्थेष्विहप्रत्यय इति स्वभावहेतुः, निबन्धनमन्तरेण भवतो नित्यं सत्तादिप्रसङ्गो बाधकं प्रमाणम्, इत्थं वैशेषिकाणां मतेन समवायोऽनुमेयः, नैयायिकमतेन तु इहबुद्धिप्रत्यक्षगम्य एव, अक्षव्यापारानन्तरमिह तन्तुषु पट इत्यादिप्रत्ययोत्पत्तेः, स चायं समवायो न संयोगवद्भिन्नः किन्तु सर्वत्रैक एव तल्लिङ्गाविशेषाद्विशेष- 15
लिङ्गाभावाच्च, कारणानुपलम्भाच्च नित्य इति, तदेतन्मतं स्वसमयाहितवासनाप्रकल्पितमेव न हि लोके इह तन्तुषु पट इति बुद्धिरुत्पद्यमानत्वेन सिद्धेति धर्म्यसिद्धेराश्रयासिद्धो हेतुः, ययोर्हि भिन्नत्वमुपलक्षितं तयोरेवाधाराधेयभावे सतीह बुद्धिरुत्पद्यमाना लोके दृष्टा, यथेह कुण्डे दधीति, न च तन्तुपटयोर्भिन्नत्वमुपलक्षितमिति कथं तत्रेहबुद्धिर्भवेत्, न हि स्वेच्छावशात् किञ्चित्कार्यमुपकल्प्य तदनभ्युपगन्तारं परं प्रति तत्कारणपर्यनुयोगः कर्तुं युक्तः, 20
न वेच्छानां वस्तुस्वभावानुरोधः, स्वातंत्र्यवृत्तित्वादासाम्, नातो वस्तुसिद्धिरनवस्थाप्रसङ्गात् भवदुपकल्पितस्यैव वस्तुनः कैश्चिदन्यथाऽपि कल्पयितुं शक्यत्वात् । न वा लोके इह तन्तुषु पट इति धीः सिद्धा, किन्तु वृक्षे शाखा, पर्वते शिलेत्येवं विपर्ययेणैव लोके बुद्धेरुत्पाददर्शनात् । न चेयं समवायनिमित्ता किन्तु विवक्षितशाखाव्यतिरिक्तस्कन्धादिविशिष्टसमुदायनिबन्धनैव, एवमिह घटे रूपरसगन्धस्पर्शा इत्यादि बुद्धयोऽपि घटस्वभावत्वमेवैषामवगमयन्ति, बहुषु 25

---

१ सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य कारणत्वोपगमेन समवायाश्रयानां यावतां परमाण्वाकाशादीनामप्रत्यक्षतया समवायो न प्रत्यक्ष इति तेषामभिप्रायः, नैयायिकस्तु संयोगप्रत्यक्ष एव यावदाश्रयप्रत्यक्षस्य कारणतया समवायप्रत्यक्षे च तस्याहेतुत्वात्, विशिष्टबुद्धिविषयकिञ्चिदाश्रयप्रत्यक्षा तस्य प्रत्यक्षतेति स्वीकरोति इति भावः ॥

रूपादिषु साधारणशक्तिविशेषप्रतिपादनेच्छया तदन्यरूपादिव्यवच्छेदेन घटादिशब्दस्य सङ्केतः, रूपादिशब्दस्य तु प्रत्येकमसाधारणचक्षुर्ज्ञानादिकार्योत्पादनसामर्थ्यद्योतनाय समयकरणम्, अतो घटादिशब्दो न रूपादीन् भेदानाक्षिपति तत्सामानाधिकरण्याभावात् । रूपादिशब्दाश्च घटपटादिसर्वावस्थरूपादिवाचका इति रूपादिशब्देभ्यः केवलेभ्यो विशेषाप्रतीतेस्तत्प्रतिपादनाय
5 घटे रूपादय इत्येवमुभयपदप्रयोगः क्रियते, तथा च घटात्मकास्त इति रूपादयः पटादिव्यवच्छेदेन प्रतीयन्ते, घटशब्दोऽपि शुक्लनीलपीनचलनिश्चलादिसर्वावस्थं ब्रूतेऽतो न केवलाद्विशेषप्रतीतिर्घटे शुक्लं रूपमित्यभिधाने तु तदन्यरूपादिव्यवच्छेदेन प्रतिपत्तिर्भवति, अतस्तत्प्रयोगः । तस्मात्सङ्केतवशादिह घटे रूपादय इत्यादिज्ञानं तथाभूतपदार्थनिबन्धनं न तु समवायनिबन्धनम्, घटरूपादिसमवायानां परस्परं भेदस्योपलब्ध्यविषयत्वात्, तस्मात्
10 परोपन्यस्तो हेतुरनैकान्तिकः प्रतिज्ञा चोक्तन्यायेनानुमानबाधितेति कथं समवायसिद्धिः । किञ्च यद्येक एव समवायस्तर्हि कपालादिष्वपि पटादेः सद्भावप्रसङ्गः, यथाहि समवायबलेन तन्तुषु पट आश्रितस्तथैव तस्यैव समवायस्य कपालादौ सत्त्वेन तत्र पटोऽस्तीति बुद्धिः कुतो न भवेत्, समवायस्यैकत्वेन सर्वत्राविशेषात्, तथा च द्रव्यगुणकर्मणां द्रव्यत्वगुणत्वकर्मत्वादिविशेषणैः सम्बन्धस्यैकत्वात् पदार्थपञ्चकस्य विभागो न भवेत् ।
15 न च तस्यैकत्वेऽपि द्रव्येष्वेव द्रव्यत्वं गुणेष्वेव गुणत्वमिति प्रतिनियताधाराधेयनियमान्न पदार्थसङ्कर इति वाच्यम्, एवं तर्हि समवायस्य प्रतिपदार्थं भिन्नत्वापत्तिः स्यात् । न च कुण्डदध्नोः संयोगस्यैकत्वेऽपि यथाऽऽधाराधेयप्रतिनियमस्तथा तस्यैकत्वेऽपि व्यङ्ग्यव्यञ्जकशक्तिभेदात् आधाराधेयप्रतिनियमसम्भवेन न पदार्थपञ्चकस्य सङ्कीर्णता, समवायनिमित्तस्येहेति प्रत्ययस्य सर्वत्रैकरूपतया दर्शनादेकत्वसिद्धेः द्रव्यत्वादीनाञ्च प्रति-
20 नियताधारेष्वेव भावात्, प्रमाणनिबन्धनत्वाच्च प्रमेयव्यवस्थाया इति वाच्यम्, अस्माकं रूपत्वादीनां रूपादिष्वाधेयनियमसिद्धेः, भवताञ्चैकं समवायं सर्वत्राभ्युपगच्छतां स दुर्घट इत्यतिप्रसङ्गापादनस्यास्माभिः क्रियमाणत्वात् । द्रव्ये एव द्रव्यत्वादीनां यो नियम इष्यते स समवायबलादेव, तस्य च द्रव्यत्वादेर्यस्समवायः स एव गुणादिष्वप्यस्ति, गुणत्वजात्या तस्य सम्बद्धत्वादिति, तथा च कथं न पदार्थसङ्करप्रसङ्गः, द्रव्यत्वस्य यः समवायः स न
25 गुणादाविति चेत्तर्हि संयोगवत्प्रत्याधारं तस्य भेदः प्रसज्येत । स्वरूपतः समवायस्याभेदेऽपि द्रव्यत्वादीनां भेदाद्भेद इति चेत्समवायस्याभेदे कुतो द्रव्यत्वादीनां विशेषणानां भेदः, यदि स्वत एव तदाऽऽधेयतानियमोऽपि स्वत एव स्यात् किं समवायेन । द्रव्यत्वादीनां प्रतिनियताधारेष्वेव वृत्तेरन्यत्र तस्य व्यतिरेक इत्युक्तिरपि न युक्ता, अविकलनिमित्तसद्भावे कार्यस्याभावायोगादन्यथाऽनत्कार्यत्वप्रसङ्गात्, एवञ्च धियां व्यतिरेकायोगात्तद्वशादाधा-

राधेयभावनियमो न सङ्गच्छते, न च द्रव्य एव द्रव्यत्वमाश्रितमिति व्यपदेशाद्व्यङ्ग्यव्य-ञ्जकशक्तिप्रतिनियमाद्वा तन्नियमः, समवायबलेनैव तद्व्यवस्थापनीयतया तस्य सर्वत्राविशिष्ट-त्वात्, न हि ज्ञानोत्पादनयोग्यस्वभावोत्पादनाद्व्यङ्ग्यव्यञ्जकभाव इष्टः, नित्यानामपि सत्ता-दीनां समवायस्येष्टतया तदुत्पत्तेरयोगात् । दधिकुण्डसंयोगदृष्टान्तोऽप्यस्मात् प्रत्यसिद्ध एव संयोगस्य निषिद्धत्वात्, तत्सद्भावेऽपि चायं पर्यनुयोगस्तत्रापि तुल्यः । किञ्च नेहप्रत्यया- 5
त्समवायस्य सिद्धिरनैकान्तिकत्वात्, इह समवायिषु समवाय इतीहप्रत्ययस्यापरसमवाया-निबन्धनत्वात्, अन्यथाऽनवस्थाप्रसङ्गात् । अपि च कारणानुपलब्ध्या यदि नित्यः सम-वायः स्यात्तर्हि घटादीनामपि नित्यताप्रसङ्गः, घटादीनां समवायास्तित्वादेव स्वाधारेष्वव-स्थानात्समवायस्य नित्यत्वे तेषामप्यवस्थानात् । न च सत्यपि समवाये घटाद्यारम्भका-वयवानां विनाशाद्विभागाद्वा सहकारिकारणान्तराभावाद्विरोधिप्रत्ययोपनिपाताच्च न घटा- 10
दीनां नित्यतेति वाच्यम्, आरम्भककपालाद्यवयवानामपि स्वावयवेषु सर्वदा सद्भावेन कपालादेर्विनाशविभागानुपपत्तेः । तद्विनाशाद्यभ्युपगमे तु समवायविनाशस्यापि नैयत्यं भवेत् सम्बन्धिनिवृत्तौ सम्बन्धसद्भावस्य दुर्घटत्वात्, नष्टसंयोगिसंयोगवच्च नित्यः सम-वायः स्यात् । न च सर्वसम्बन्धिविनाशो न क्वचिदस्ति, अन्ततः परमाणूनां सत्त्वात्, यत्किञ्चित्सम्बन्धिविनाशे चापरसम्बन्धिनिबन्धनावस्थानं समवायस्य भविष्यतीति कथम- 15
नित्यतेति वाच्यम्, अनया रीत्या संयोगस्यापि नित्यत्वप्राप्तेः । न च संयोगस्य प्रति-संयोगिभेदादनित्यत्वम्, समवायस्तु इहप्रत्ययनिबन्धनोऽभिन्नत्वादेक एवेति वाच्यम्, यतो योऽयं घटस्य समवायस्तदवयवकपालेषु वृत्त्यात्मकः स एव तेषु विन-ष्टेषु सम्बन्ध्यन्तरेष्वस्ति, आहोस्विदन्य एव, प्रथमे प्रागवस्थावदप्रच्युतवृत्तित्वाद्घटाद-योऽवस्थिता एव स्युः, अन्यथा तेषामनवस्थितवृत्तित्वान्नावस्थितिः समवायस्य प्राप्नोति, 20
तस्य वृत्त्यात्मकत्वात्, अन्यथा तस्य तद्रूपत्वानुपपत्तेः, स्वतंत्रस्य तदनुपकारिणः वृत्तिः समवाय इति वा नामकरणे संज्ञामात्रमेव भवेत्, न वस्तुतथाभावः, तथा चाविनष्ट-सम्बन्ध्यवस्थायामपि घटादयो न समवायसद्भावबलात्स्वाश्रयवृत्ताः सिद्ध्येयुः, पश्चादिव परमार्थतो वृत्त्यभावात् । द्वितीयपक्षे तु संयोगादिवत्समवायबहुत्वं प्राप्नुयात्, तथा चाभ्यु-पगमहानिर्भवेत्, नित्यत्वे च समवायस्याङ्गीक्रियमाणे स्वकारणसमवायस्य स्वसत्तासमवा- 25
यस्य च जन्मशब्दवाच्यस्य सर्वदा सद्भावात् कार्यजन्मनि क्वचिदपि कारणानां साफल्यं न स्यात्, तथा चाध्यक्षादिविरोधः, तन्त्वादेः पटादिकार्यजनकत्वेनाध्यक्षादिना प्रतीतेः, सम-वायलक्षणस्य जन्मनो नित्यतया क्रमासम्भवाद्भावानां क्रमोत्पत्तिरुपलभ्यमाना विरुद्धा च

स्यात् । तथा जगदनुपकार्योपकारकभूतमिति शास्त्रप्रणयनमसङ्गतं भवेत्, तदेवं नित्यसमवायकल्पनमसमञ्जसमिति संक्षेपः ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानंदसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण त्रिजयलब्धिसूरिणा सङ्कलिते सम्मतितत्त्वसोपाने कणादोक्तज्ञेयनिरसनं नाम द्वात्रिंशं सोपानम् ॥



## सदाद्येकान्तवादभञ्जनम् ।

अन्योन्यनिरपेक्षनयाश्रितस्य मिथ्यात्वाविनाभूतत्वमेवाह—

**जे संतवायदोसे सक्कोलूया भणंति संखाणं ।**
**संखा य असव्वाए तेसिं सव्वे वि ते सच्चा ॥ ५० ॥**

यान् सद्वाददोषान् शाक्यौलूक्या भणन्ति सांख्यानाम् ।
सांख्याश्चासद्वादे तेषां सर्वेऽपि ते सत्याः ॥ छाया ॥

यानिति, द्रव्यास्तिकाभ्युपगतपदार्थाभ्युपगमे सांख्यानामेकान्तसद्वादपक्षे क्रियागुणव्यपदेशोपलब्ध्यादिलक्षणान् यान् दोषान् शाक्यौलूक्या वदन्ति, ते सर्वेऽपि तेषां सत्याः, ते च दोषा एवं सत्याः स्युः यद्यन्यनिरपेक्षनयाभ्युपगतपदार्थप्रतिपादकं तच्छास्त्रं स्यात्, कार्यावस्थातः प्रागपि तेषामेकान्तेन सत्त्वनिबन्धनत्वात्, अन्यथा कथंचित्सत्त्वेऽनेकान्तवादापत्तेर्दोषाभाव एव स्यात् । एवं सांख्या अप्यसत्कार्यवाददोषानसदकरणादीन् यान् वदन्ति ते सर्वे सत्या एव, एकान्तासति कारणव्यापारासम्भवात्, अन्यथा शशशृङ्गादेरपि कारणव्यापारादुत्पत्तिः स्यात् । अथ कारणावस्थायां न शशशृङ्गस्यासद्भावादनुत्पत्तिः किन्तु कारणाभावात्, घटादेस्त्वसतोऽपि कारणसद्भावादुत्पत्तिरिति चेन्न शशशृङ्गस्य हि कारणाभावस्तस्यात्यन्ताभावाद्वाच्यः तदभावश्च कारणाभावादित्यन्योन्याश्रयः स्यात् । किञ्च घटादीनां मृत्पिण्डावस्थायामसत्त्वे कुतः कारणसद्भावः, सति कारणव्यापारासम्भवात्, तत्र प्रागसत्त्वादेव कारणसद्भाव इति चेन्न, तत्र घटस्य सत्त्वे प्रागनवस्थायोगात्, असत्त्वे शशशृङ्गस्येव तदनुपपत्तेः । न च घटस्योत्पत्तिदर्शनात् प्राक् अभावो न शशशृङ्गस्येति वाच्यम्, अन्योन्याश्रयात्, घटस्य हि पूर्वमभावसिद्धावुत्पत्तिसिद्धिस्तस्याः सिद्धौ तत्सिद्धिर्नान्यथेति । न च कारणस्य कार्यशून्यतालक्षणप्रागभावः प्रागेव सिद्ध इति वाच्यम्, अकारणस्यापि कार्यशून्यतोपलम्भेन तत्सम्बन्धाद्घटस्य तत्कार्यतापसक्तेः, यस्य हि प्रागभावित्वं

तस्य कार्यता, तच्च कार्यशून्यं पदार्थान्तरं कारकाभिमतात् अन्यदपि च तत्प्रागभावस्वभावं प्राप्तं तत्सम्बन्धेन च घटादेः शशशृङ्गादिव्यवच्छेदेन कार्यताऽभ्युपगतेति सूत्रपिण्डकार्यताऽपि घटस्यैवं भवेत् । तदन्वयव्यतिरेकाभावान्न तत्कार्यतेति चेन्न, तस्य तत्रासत्त्वनिबन्धनत्वात् । न वा प्रागभावः प्रत्यक्षादिग्राह्यः, मृत्पिण्डस्वरूपमात्रस्यैव तत्र प्रतिभासनात् । न च कारणस्वरूपमेव प्रागभावो निर्विशेषणस्य स्वरूपमात्रस्य कार्येऽपि सद्भावात्तस्यापि प्रागभावरूपताप्रसक्तेः, अथ 5 कार्यान्तरापेक्षया तस्यापि प्रागभावरूपता कारणस्वभावाऽभ्युपगम्यत एव, न, कारणाभिमतापेक्षयापि तद्रूपताप्रसक्तेः । तथाप्रतीत्यभावान्न तद्रूपतेति चेन्न, अनपेक्षितवस्तुस्वरूपात् प्रतीतिमात्राद्वस्तुव्यवस्थाऽयोगात्, ततो मृत्पिण्डादिरूपतया वस्तु गृह्यतेऽध्यक्षादिना न पुनस्तद्व्यतिरिक्तकारणादिरूपतया, तस्य तत्राप्रतिभासनात्, प्रतिभासनेऽपि विशिष्टकार्यापेक्षया कारणत्वस्य प्रतिपत्तौ कार्यप्रतिभासमन्तरेण तत्कारणत्वस्याप्रतीतेः, असतः कार्यस्य तदानीमप्रतिभासनात् 10 प्रत्यक्षस्यासदर्थग्राहकत्वेन भ्रान्तताप्रसक्तेः तदा तत्कार्यस्य सत्त्वप्रसक्तिः स्यादिति कथमसति कारणव्यापारः प्रतीयेत, तन्न युक्तमसतः कार्यत्वम् ॥ नाप्यसत्कारणं कार्यम्, कारणस्य तदानीमभावे तस्य तत्कृतत्वायोगात्, क्षणिकस्य कारणस्य स्वभावमात्रव्यवस्थितेरन्यत्र व्यापारायोगात् । न च तदनन्तरं कार्यस्य भावात् प्राग्भावित्वमात्रमेव कारणस्य व्यापार इति वाच्यम्, सर्वभावेषु तत्पूर्वकालभावित्वस्य सत्त्वेन तत्कारणत्वा- 15 पत्तेः, तदनन्तरं विवक्षितकार्यस्योदयात् । न च सर्वभावक्षणाभावेऽपि तद्भावान्न तस्य तत्कार्यत्वमिति युक्तम्, विवक्षितक्षणाभाव एव विवक्षितकार्यसद्भावात्, सर्वत्र चाविशिष्टत्वात् । विशिष्टभावक्षणधर्मानुविधानात्तस्य तत्कार्यताव्यवस्थेति चेन्न, सर्वथा तद्धर्मानुविधाने तस्य कारणरूपतापत्तेः, तत्प्राक्कालभावितया तत्कार्यताव्यतिक्रमात्, कथञ्चित्तद्धर्मानुविधाने चानेकान्तवादापत्तेरसत्कारणं कार्यमित्यभ्युपगमव्याघातात्, सन्तानापेक्षया 20 कार्यकारणभावे तु तस्य पूर्वापरक्षणव्यतिरेकेण सद्भावे कार्यकारणरूपस्य तस्यैवार्थक्रियासामर्थ्यात् सत्त्वं स्यान्न तु क्षणानामर्थक्रियासामर्थ्यविरहात्, अव्यतिरेकेण च सद्भावे सैव कार्यकारणभावानुपपत्तिः । अथ सन्तानस्य क्षणसम्बन्धित्वात्तस्य कार्यकारणभावे क्षणानामपि स्यादिति चेन्न सन्तानक्षणयोर्भिन्नयोः कार्यकारणभावादन्यस्य सम्बन्धस्याभावेन सन्तानस्य निखिलक्षणानन्तरभावित्वेन सर्वसंतानताप्रसक्तिःस्यात्, किञ्च तस्यापि नित्यत्वे क्षण- 25 कार्यत्वे च सत्कार्यवादप्रसक्तिः, क्षणिकत्वे चान्वयाप्रसिद्धेस्तस्य तत्कार्यत्वाप्रसिद्धिः, व्यतिरेकश्च कार्यकारणभावनिबन्धनक्षणिकपक्षे न सम्भवतीति प्रतिपादितमेव । किञ्च क्षणिकभावाभ्युपगमवादिनो यदि भिन्नकार्योदयात्कारणस्य सत्त्वमभिमतं तदा तत्कार्यस्याप्यपरकार्योदयात् सत्त्वसिद्धिरित्यनवस्थापत्तेर्न कचित् सत्त्वव्यवस्था स्यादिति कुतस्तद्व्यवच्छेदेनासत् कार्य-

मिति व्यपदेशः, अथ ज्ञानलक्षणकार्यसद्भावाद्धेतोः सत्त्वव्यवस्थितिरिति चेज्ज्ञानस्यापि कथं ज्ञेयसत्ताव्यवस्थापकत्वम्, ज्ञेयकार्यत्वादिति चेन्न यतः किं तेनैव ज्ञानेन ज्ञेयकार्यता स्वात्मनः प्रतीयते उत ज्ञानान्तरेण, नाद्यः, तस्य प्रागसत्त्वाभ्युपगमादप्रवृत्तेः, समानकालत्वेऽपि ज्ञानस्य ज्ञेयकार्यत्वाभ्युपगमेऽविशेषतो वैपरीत्यप्रसङ्गः सव्येतरगोविषाणयोः समानकालयोरपि
5 कार्यकारणभावप्रसङ्गश्च । न द्वितीयः तस्यापि स्वप्रमेयकार्यावगतौ प्रागवृत्तितयाऽसामर्थ्यात्, तस्मान्न ज्ञानलक्षणमपि कार्यं क्षणिकैकान्तवादे हेतोः सत्तां व्यवस्थापयितुं समर्थम्, अध्यक्षं तु न पौर्वापर्ये प्रवर्त्तते, उक्तन्यायात्, नानुमानमपि, तस्य तत्पूर्वकत्वात् तन्नासत्कार्यवादः प्रमाणसङ्गतः ॥ सत्कार्यवादस्तु प्रागेव निरस्तः, तथापि किञ्चिदुच्यते, तत्र नित्यस्य कार्यकारित्वं तस्य व्यतिरेकाप्रसिद्ध्या कार्य्यकरणसामर्थ्याप्रसिद्धेरयुक्तम्, सर्वदेशकालव्यापिनो
10 नित्यस्य हि क्वचिदपि कार्यव्यापारविरहिणो न सामर्थ्यमवगन्तुं शक्यते । न च सर्वदेशाव्यापिनस्तस्य कार्यकारणसामर्थ्यम्, तथाप्रतीतिबलात्सर्वदेशाव्याप्तेरवगमे सर्वकालाव्याप्तेरपि तत एवाभ्युपगमप्रसङ्गात् । अभ्युपगम्यत एवेति चेन्न, कतिपयदेशकालव्याप्तेरप्यप्रतिपत्तेः, तथा च निरंशैकक्षणरूपता भावानां समायाता । न च तदेकान्तपक्षेऽपि कार्यजनकता, प्राङ्निरस्तत्वात्, न चैकान्तनित्यव्यापकत्वपक्षे प्रमाणप्रवृत्तिरित्यसकृत् प्रतिपादितम् । न चासति कार्ये
15 निर्विषयत्वात् कारणव्यापारासम्भवात्सत्येव तत्र तेषां व्यापारः, हेतूनां जडत्वेन दृष्ट्वा श्रुत्वा ज्ञात्वा वा कार्ये व्यापाराभावात् । न चादृश्यमानाजडेश्वरादिहेतुकमकृष्टोत्पत्तिकं भूरुहादि सम्भवति, तस्य निषिद्धत्वात् । न चासतः कार्यस्य विज्ञानं न ग्राहकम्, असत्यप्यक्षादिबुद्धेः प्रवृत्तेः, अन्यथा कथं कार्यार्थप्रतिपादिका चोदना भवेत् । किञ्च यदि सत्येव कार्ये कारणव्यापारस्तदोत्पन्नेऽपि घटादिकार्ये कारणव्यापारादनवरतं तदुत्पत्तिप्रसक्तिः,
20 तत्सत्त्वाविशेषात् । अभिव्यक्तिमात्रेण व्यापारविश्रामोऽपि न युक्तः, असत्यामभिव्यक्तौ कार्ये इव कारणव्यापारस्य स्वीकारायोगात्, स्वसमयविरोधादिति ॥ अथ विद्यमानात् कारणात् कार्यमिति सत्कार्यवादः, असतो हेतुत्वायोगात्, अन्यथा शशशृङ्गादितोऽपि पदार्थोत्पत्तिप्रसङ्गः, कार्यकालेऽत्यन्ताभावप्रागभावयोरसत्त्वेनाविशेषात्, मैवम्, प्राक्तनरूपापरित्यागे सतोऽपि कारणस्य प्राक्तनावस्थावत् कार्यं प्रतिहेतुत्वासम्भवात्, व्यापारसम्बन्धाद्धेतु-
25 तेति चेन्न, तद्व्यापारं प्रत्यप्यपरव्यापारवत्पदार्थस्य हेतुत्वे तत्रापि व्यापारस्यान्यतथाविधपदार्थहेतुकत्वादनवस्थापातात्, तथा चानन्तव्यापारपरम्पराया न पर्यवसानं यावत् कस्यचिदनवस्थानादसतः कारणात् कार्योत्पत्तिः स्यात्, न च कारणस्वरूपमेव व्यापारस्तत्काल एव च कार्यं नातोऽनवस्थेति वाच्यम्, कारणसमानकाले कार्योत्पत्तिप्रसङ्गेन सव्येतरगोविषाणवत् कार्यकारणभावानुपपत्तेः । कार्यकाले कारणस्याभावे चिरविनष्टादिव तत्कालविनाशि-

मोऽपि कार्यसद्भावो न भवेत् । किञ्च सतः कारणात् कार्योत्पत्तिमभ्युपगच्छतां बौद्धस्येव न कार्योत्पत्तिकाले कारणस्यासत्त्वं सिद्धम्, अविचलितरूपस्य च तस्य सद्भावेऽपि न कार्यसत्ता, विकलकारणत्वात् प्राग्वत्, अन्यथा पूर्वमपि तद्वत्ता स्यात्, अविकलकारणत्वात् इदानीमिव, तस्मान्नैकान्तसत्कार्यवादोऽसत्कार्यवादो वा युक्तः, अनेकदोषदुष्टत्वात् ॥ अथैकान्तेन सदसतोरजन्यत्वादजनकत्वाच्च कार्यकारणभावासम्भवात् सर्वशून्यतैवेति चेन्न, 5
कथञ्चित् सदसतोर्जन्यत्वाच्च, न चैकस्य सदसद्रूपत्वं विरुद्धम्, कथञ्चिद्भिन्ननिमित्तापेक्षस्य सदसत्त्वस्यैकदैकत्राबाधिताध्यक्षतः प्रतिपत्तेः, न चाध्यक्षतः प्रतिपन्ने वस्तुनि विरोधः, अन्यथैकचित्रपटज्ञाने चित्ररूपतायाः चित्रपटे च चित्रैकरूपस्य विरोधः स्यात्, तथा च शुक्लाद्यनेकप्रकारं पृथिव्या रूपमिति वैशेषिकस्य विरुद्धाभिधानं स्यात्, न च तदवयवानां शुक्लाद्यनेकरूपयोगित्वमवयविनि त्वेकमेव रूपमिति वाच्यम्, तदवयवानाम- 10
प्यवयवितयाऽनेकप्रकारैकरूपवत्त्वविरोधात् । न चैकैकावयवेष्वेकैकं शुक्लादिरूपमस्तीति वक्तव्यम्, यावत्परमाणुतत्तदवयवानामेकैकरूपतापत्त्या विभिन्नघटपटादिपदार्थेष्विव चित्रपटेऽपि नीलपीतशुक्लरूपा एते भावा इति प्रतिपत्तिः स्यात्, न तु चित्ररूपः पट इति, अवयवावयविनोरनन्यत्वात्, अवयवानामनेकरूपवत्त्वेऽप्यवयविनस्तथाभावाभावात्, तस्यापि विभिन्नानेकरूपवत्त्वे चित्रैकरूपप्रतिभासानुपपत्तिः, अनेकरूपसम्बन्धित्वस्यैव तत्र भावात्, 15
तथा च 'अविभुनि[1] द्रव्ये समानेन्द्रियग्राह्याणां विशेषगुणानामसम्भवादि'ति विरुद्धाभिधानं भवेत् । किञ्चैकत्र पटादौ नानारूपाणां सद्भावाभ्युपगमे तस्य व्याप्यवृत्तित्वं[2] अव्याप्यवृत्तित्वं वा, अव्याप्यवृत्तित्वे रूपादीनामाश्रयव्यापित्वाभिधानमसङ्गतं भवेत्, एकावयवसहितेऽवयविन्युपलभ्यमानेऽपरावयवानुपलब्धावपि अनेकरूपप्रतिपत्तिः स्यात्, सर्वरूपाणामाश्रयव्यापित्वात् । न च शुक्लादिवच्चित्ररूपं विलक्षणमेकमतो न दोष इति वाच्यम्, अनेका- 20
कारैकरूपस्य अविरुद्धत्वापत्तेः, चित्रैकरूपाभ्युपगमस्य चित्रतरत्वात् । प्रत्यक्षेण तथा प्रतीतेर्न विरोध इति चेत् सदसद्रूपैकरूपतया कार्यकारणरूपस्य वस्तुनः प्रतिपत्तौ कथं विरोधो भवेत् । न च चित्रपटादावपास्तशुक्लादिविशेषं रूपं विलक्षणमेकस्वभावं न तु नानाकारमिति वाच्यम्, चित्ररूपः पट इति प्रतिभासाभावप्रसक्तेः, असमानजातीयगुणानारम्भकत्ववादिनो

१ अविभुनि घटादौ चक्षुर्ग्राह्यो रूपादिविशेषगुणो नैकदा विद्यत इत्यर्थः, तस्मान्नैकदा पटे नानारूपसम्भवः, घटे चक्षुर्ग्राह्याणां रूपसंख्यापरिमाणादीनामेकदैव सत्त्वाद्विशेषगुणेति, तत्रैव रूपरसादेः सत्त्वात्समानेन्द्रियग्राह्याणामिति, समानता चेन्द्रियविभाजकोपाधिमत्तया । आत्मन्येकदैव मनोग्राह्याणां ज्ञानेच्छादिविशेषगुणानां सद्भावादविभुनीति ॥ २ अभावविशिष्टान्यत्वं व्याप्यवृत्तित्वम्, वै० स्वप्रतियोगित्वस्वसामानाधिकरण्योभयसम्बन्धेन ॥ 25

वैशेषिकस्य परस्परविरुद्धशुक्लादिनानारूपेभ्यश्चित्रैकरूपोत्पादासम्भवाच्च, शुक्लादिरूपाणां समानरूपारम्भकत्वोपलम्भात्। किञ्च शुक्लाच्छुक्लमित्यादिप्रतीतेः समानजातीयगुणारम्भकत्वमेव यदि कारणगुणानामित्यभ्युपगम्यते तर्हि कारणगतशुक्लादिरूपविशेषेभ्यः कार्येऽपास्ततद्विशेषस्य रूपमात्रस्य कथमुत्पत्तिर्भवेत्, तेभ्यस्तस्यासमानत्वात्। अथ तद्गतरूपमात्रेभ्यस्त-
5 द्रूपमात्रस्योत्पत्तेर्न दोष इति चेन्न शुक्लादिविशेषरूपव्यतिरेकेण रूपत्वादिसामान्यमपहाय रूपमात्रस्याभावात्, सामान्यस्य च नित्यत्वेनाजन्यत्वात्, न च रूपमात्रनिबन्धनः चित्ररूपः पट इति प्रतिभासो युक्तः, शुक्लादिप्रत्ययस्यापि तन्निबन्धनत्वेन शुक्लादिरूपविशेषस्याप्यभावप्रसक्तेः, न चावयवगतचित्ररूपात् पटे चित्रप्रतिभासः, अवयवेष्वपि तद्रूपासम्भवात्, न चान्यरूपस्यान्यत्र विशिष्टप्रतिपत्तिजनकत्वम्, पृथिवीगतचित्ररूपाद्वायौ चित्ररूपप्रतिपत्तिप्रसक्तेः।
10 यदि च रूपमात्रमेव तत्र स्यात् क्षितावनेकप्रकारं रूपमिति विरुध्यते, अनेकप्रकारं हि शुक्लत्वादिभेदभिन्नमुच्यते रूपमात्रञ्च शुक्लादिविशेषरहितं तस्य शुक्लादिविशेषेष्वनन्तर्भावात् कथं न विरोधः। न च नीलादिरूपैरेकरूपारंभादेकमेव पटे चित्रं रूपम्, यथाहि रूपस्य विशेषः शुक्लादिस्तथा चित्रमपि रूपविशेष एव चित्रशब्दवाच्य इति वक्तव्यम्, अनेकाकारस्यैकत्वे चित्रैकशब्दवाच्यत्वे वा सदसदनेकाकारानुगतस्यैकस्य कारणादिशब्दवा-
15 च्यत्वेनाभ्युपगमप्रसङ्गात्। यथा च बहूनां तन्त्वादिगतनीलादिरूपाणां पटगतैकचित्ररूपारम्भकत्वं दृष्टत्वादविरुद्धं तथानेकाकारस्यैकरूपत्वं वस्तुनो दृष्टत्वादेवाविरुद्धमभ्युपगन्तव्यम्, अत एवानेकरूपत्वाच्चित्ररूपस्य एकावयवसहितेऽवयविन्युपलभ्यमाने शेषावयवावरणे चित्रप्रतिभासाभाव उपपत्तिमान्। सर्वथा त्वेकरूपत्वे तत्रापि चित्रप्रतिभासः स्यात्, अवयविव्याप्त्या तद्रूपस्य वृत्तेः। न चावयवनानारूपोपलम्भसहकारीन्द्रियमवयविनि चित्रप्रतिभासं
20 जनयतीति तत्र सहकार्यभावाच्चित्रप्रतिभासानुत्पत्तिरिति वाच्यम्, अवयविनोऽप्यनुपलब्धिप्रसङ्गात्, न हि चाक्षुषप्रतिपत्त्याऽगृह्यमाणरूपस्यावयविनो वायोरिव ग्रहणं दृष्टम्, न च चित्ररूपव्यतिरेकेणापरं तत्र रूपमस्ति यतस्तत्प्रतिपत्त्या पटग्रहणं भवेत्। नाप्यवयवरूपोपलम्भोऽवयविरूपप्रतिपत्तावक्षसहकारी, तद्भावे वा तदवयवरूपोपलम्भोऽपि स्वावयवरूपोपलंभाक्षसहकारीति तमन्तरेण स न स्यादित्येवं पूर्वपूर्वावयवरूपोपलम्भापेक्षया परमाणुरूपो-
25 पलम्भाभावात्तज्जन्यद्व्यणुकाद्यवयविरूपोपलंभासम्भवान्न क्वचिदपि रूपोपलब्धिः स्यात्, तदभावे च नावयव्युपलब्धिरिति तदाश्रितपदार्थानामप्युपलम्भाभावात् सर्वप्रतिभासाभावः स्यात्। तत एकानेकस्वभावं चित्रपटरूपवद्वस्तु परेणाप्यभ्युपगन्तव्यमेव। बौद्धेनापि चित्रपटप्रतिभासस्यैकानेकरूपतामभ्युपगच्छता एकानेकरूपं वस्त्वभ्युपगतमेव। अथ प्रतिभासोऽप्येकानेकरूपो नाभ्युपगम्यते तर्हि सर्वथा प्रतिभासाभावः स्यादिति असकृदावेदितम्। तत

एकान्ततोऽसति कार्ये न कारणव्यापारस्तेनाभ्युपगन्तव्यः असति तत्र तदभावात्, नापि सति, मृत्पिण्डे तस्य तमन्तरेणापि ततः प्रागेव निष्पन्नत्वात्। न च मृत्पिण्डे कारकव्यापारः अन्यत्र पृथुबुध्नोदराद्याकारस्तत्फलम्, अन्यत्र व्यापारेऽन्यत्र फलासम्भवात्, स एव मृत्पिण्डः कारकव्यापारात् पृथुबुध्नोदराद्याकारतां प्रतिपद्यत इति कारकव्यापारफलयोरेक-विषयत्वे अनेकान्तवादसिद्धिः, तस्माद्द्रव्यास्तिकपर्यायास्तिकाभ्यां केवलाभ्यां सहिताभ्याम-न्योन्यनिरपेक्षाभ्यां व्यवस्थापितं वस्तु असत्यमिति तत्प्रतिपादकं शास्त्रं सर्वं मिथ्येति व्यवस्थितम् ॥ ५० ॥ 5

अमुमेवार्थमन्वयव्यतिरेकाभ्यां द्रढीकर्त्तुमाह—

ते उ भयणोवणीया सम्मद्दंसणमणुत्तरं होंति ।
जं भवदुक्खविमोक्खं दो वि न पूरेंति पाडिक्कं ॥ ५१ ॥ 10

तौ तु भजनोपनीतौ सम्यग्दर्शनमनुत्तरं भवत ।
यस्माद्भवदुःखविमोक्षं द्वावपि न पूरयतः प्रत्येकम् ॥ छाया ॥

ताविति, द्रव्यपर्यायास्तिकनयौ भजनया परस्परस्वभावाविनाभूततया सदसद्रूपैकान्त-व्यवच्छेदेन तदात्मकैककार्यकारणादिवस्तुप्रतिपादकत्वेन उपयोजितौ यदा भवतस्तदानुत्तरं सम्यग्दर्शनं भवतः परस्पराविनिर्भोगवर्तिद्रव्यपर्यायात्मकैकवस्तुतत्त्वविषयकन्यात्मकाबा- 15 धितावबोधस्वभावत्वात् । यदा त्वन्योन्यनिरपेक्षद्रव्यपर्यायप्रतिपादनत्वेनोपनीतौ भवतो न तदा सम्यक्त्वं प्रतिपद्येते तस्मात् संसारभाविजन्मादिदुःखविमोक्षं तौ द्वावपि प्रत्येकं न विधत्तः मिथ्याज्ञानात् सम्यक्क्रियानङ्गतया आत्यन्तिकभवोपद्रवान्निवृत्त्यसिद्धेः तद्विपर्यय-कारणत्वात् । ततः कारणात् कार्यं कथञ्चिदनन्यत् अत एव तदतद्रूपतया सच्चासच्चेति ॥५१॥

अमुमेवार्थमुपसंहरति— 20

नत्थि पुढवीविसिट्ठो घडो त्ति जं तेण जुज्जइ अणण्णो ।
जं पुण घडो त्ति पुव्वं ण आसि पुढवी तओ अण्णो ॥ ५२ ॥

नास्ति पृथिवीविशिष्टो घट इति यत्तेन युज्यतेऽनन्यः ।
यत् पुनः घट इति पूर्वं नासीत् पृथिवी ततोऽन्यः ॥ छाया ॥

नास्तीति, सद्द्रव्यमृत्पृथिवीत्वादिभ्यो भिन्नो नास्ति घटः, सदादिव्यतिरिक्तस्वभाव- 25 तया तस्यानुपलम्भात्, यदि सत्त्वादिधर्माणां घटादेकान्ततो भेदः तेभ्योऽपि घटो भिन्नो न तदा घटस्य सदादित्वं स्यात्, स्वतोऽसदादेरन्यधर्मयोगेऽपि शशशृङ्गादेरिव तथात्वा-

योगात्, सदादेरपि घटाद्याकारादत्यन्तभेदे निराकारतया अत्यन्ताभावस्येवोपलम्भविषयत्वायोगात्, ज्ञेयत्वप्रमेयत्वादिधर्माणामपि सदादिधर्मेभ्यो भेदेऽसत्त्वम्, सदादेश्च तेभ्यो भेदेऽज्ञेयत्वादसत्त्वमेव, ततः सदादिरूपतयोपलभ्यमानत्वाद्धटस्य तेभ्योऽभिन्नताऽभ्युपगन्तव्या, प्रमेयव्यवस्थितेः प्रमाणनिबन्धनत्वात् । यत् पुनः पृथुबुध्नोदराद्याकारतया पूर्वं सदादिर्नासीत् ततोऽसौ तेभ्योऽन्यः, घटादिरूपतया पूर्वं सदादेरनुपलम्भात्, प्रागपि तद्रूपस्य सदादौ सत्त्वेऽनुपलम्भायोगात्, दृश्यानुपलम्भस्य चाभावाव्यभिचारित्वात्, तदतद्रूपतायाश्च विरोधाभावात्, प्रतीयमानायां तदयोगात्, अबाधितप्रत्ययस्य च मिथ्यात्वासम्भवात् ॥ ५२ ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलिते सम्मतितत्त्वसोपाने सदाद्येकान्तवादभञ्जनं नाम त्रयस्त्रिंशं सोपानम् ॥



## कालाद्येकान्तवादभञ्जनम् ।

सदाद्येकान्तवादवत् कालाद्येकान्तवादेऽपि मिथ्यात्वमेवेत्याह —

**कालो सहाव णियई पुव्वकयं पुरिसकारणेगंता ।**
**मिच्छत्तं ते चेव उ समासओ होंति सम्मत्तं ॥ ५३ ॥**

कालः स्वभावनियती पूर्वकृतं पुरुषकारणैकान्ताः ।
मिथ्यात्वं त एव तु समासतो भवन्ति सम्यक्त्वम् ॥ छाया ॥

**काल इति ।** कालस्वभावनियतिपूर्वकृतपुरुषकारणरूपा एकान्ताः सर्वेऽप्येकका मिथ्यात्वम्, त एव समुदिताः परस्पराजहद्वृत्तयः सम्यक्त्वरूपतां प्रतिपद्यन्त इत्यर्थः ।

तत्र काल एव एकान्तेन जगतः कारणम्, सर्वस्य हि शीतोष्णवर्षवनस्पतिपुरुषादेर्जगतः उत्पत्तिस्थितिविनाशेषु ग्रहोपरागयुतियुद्धोदयास्तमयगतिगमनागमनादौ च कालः कारणम्, तं विनाऽन्यकारणत्वेनाभिमतभावसद्भावेऽपि सर्वस्यास्याभावात्, तत्सद्भावे च भावात्, तदुक्तम् 'कालः पचति भूतानि कालः संहरति प्रजाः । कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः' [ महाभार० आदिप० अ० १, श्लो० २७३ ] इति कालवादिनः प्राहुः, असदेतत्, तत्सद्भावेऽपि कदाचिद्वृष्ट्यादेरदर्शनात् । न च कालविशेषाभावान्न तदभवनमिति वाच्यम्, नित्यैकरूपस्य तस्य विशेषाभावात्, विशेषे वा तज्जननाजननस्वभाव-

प्रसङ्गतो नित्यत्वव्याहतेः, स्वभावभेदतो भेदात् । न वा ग्रहमण्डलादिकृतो वर्षादेर्विशेष इति वक्तव्यम्, तस्याप्यहेतुकतयाऽभावात्, न च कालो हेतुरन्योऽन्याश्रयात्, कालभेदे सति वर्षादिभेदहेतोर्ग्रहमण्डलादेर्भेदः, तद्भेदाच्च कालभेद इति । अन्यकारणकृते वर्षादिभेदेऽभ्युपगम्यमाने कालस्यैव कारणत्वमित्यभ्युपगमभङ्गः, अन्यतः कुतश्चित्कालभेदे चानित्यत्वमेव तस्य स्यात्, तत्र चोत्पादस्थितिविनाशेषु यद्यपरः कालः कारणं तदा तत्रापि स एव पर्यनुयोग 5 इत्यनवस्थानान्न वर्षादिकार्योत्पत्तिः स्यात्, न चैकस्य कारणत्वं युक्तम्, क्रमयौगपद्याभ्यां तद्विरोधात्, तन्न काल एवैकः कारणं जगतः । अपरे तु स्वभावत एव भावा जायन्त इति वर्णयन्ति, अत्र यदि स्वभावकारणत्वे भावस्य तदा स्वात्मनि क्रियाविरोधो दोषः स्यात्, अनुत्पन्नानां स्वभावस्यैवाभावात्, उत्पन्नानां स्वभावसम्भवेऽपि पूर्वं तदभावादेव भावस्योत्पत्तेर्न तत्र स्वभावः कारणं भवेत् । अथ[1] कारणमन्तरेण स्वपरकारणनिमित्तजन्मनिरपेक्ष- 10 तया सर्वहेतुनिराशंसस्वभावा भावा भवन्ति, युक्तिश्चात्र यदुपलब्धिलक्षणप्राप्तं सदनुपलभ्यमानसत्ताकं तत् प्रेक्षावतामसद्व्यवहारविषयः, यथा शशविषाणम्, अनुपलभ्यमानसत्ताकञ्च भावानां कारणमिति स्वभावानुपलब्धिः, न चायमसिद्धो हेतुः, कण्टकतैक्ष्ण्यादेर्निमित्तभूतस्य कस्यचिदध्यक्षादिनाऽसंवेदनात् । अथ कारणानुपलम्भाद्बाह्यानां भावानामहेतुकत्वसिद्धावपि कथमाध्यात्मिकानां तत्सिद्धिरिति चेदुच्यते, यत्कादाचित्कं तदहेतुकम् यथा 15 कण्टकतैक्ष्ण्यादि, कादाचित्कञ्च सुखादिकमिति स्वभावहेतुः, न चापि यस्य सदसद्भावयोर्यस्य सदसद्भावौ नियमेन भवतस्तत्तस्य कारणमिति युक्तम्, व्यभिचारात् स्पर्शे[2] सति भवतोऽसत्यभवतोऽपि चक्षुर्विज्ञानस्य तदकारणकत्वात् तस्मात्कार्यकारणभावस्य व्यभिचारित्वाद्भावानां जन्म सर्वनिराशंसमिति सिद्धम्, अत्रोच्यते, न कण्टकतैक्ष्ण्यादेरपि निर्हेतुकत्वं सिद्धम्, प्रत्यक्षानुपलम्भाभ्यां हि बीजादिकं तत्कारणत्वेन निश्चितम्, यस्मिन् 20 सत्येव यस्य जन्म यस्य च विकाराद्यस्य विकारस्तत्तस्य कारणमुच्यते, उच्छूनादिविशिष्टावस्थाप्राप्तञ्च कण्टकतैक्ष्ण्यादिनिरूपितान्वयव्यतिरेकवद्बीजादिकं प्रत्यक्षानुपलम्भाभ्यां कारणतया निश्चितमिति अनुपलभ्यमानसत्ताकं कारणमित्यसिद्धो हेतुः । कार्यकारणभावलक्षणं स्पर्शादौ व्यभिचारीत्यप्यसिद्धम्, स्पर्शस्यापि रूपहेतुतया चक्षुर्विज्ञानेऽपि कारणतयेष्टत्वात्, तमन्तरेण विशिष्टावस्थस्य रूपस्यैवासम्भवात् । नापि यस्याभावे यन्न भव- 25

१ अत्र स्वभाववादेन वादद्वयमभिप्रेतं स्वत एव भावा जायन्ते इत्येको वादः, अपरस्तु न स्वतो नापि परतो भावा जायन्ते किन्तु स्वपरकारणनिरपेक्षं भावानां जन्मेति, यदीत्यादिग्रन्थेनाद्यवादनिरासः कृतः, द्वितीयवादं सम्प्रत्याह अथेति, अत्र पक्षे स्वभावोऽपि न कारणम् पूर्ववादे तु तत्कारणमिति बोध्यम् । २ स्पर्श इति भूतान्युच्यन्ते, तानि चोपादायोपादाय रूपं वर्त्तते, ततश्चक्षुर्विज्ञानं प्रति स्पर्शस्य निमित्तभावोऽस्त्येव, केवलं साक्षात् पारम्पर्यकृतो विशेषः इति बौद्धाः ॥

तीति व्यतिरेकमात्रं कार्यकारणभावनिश्चयनिमित्तम्, किन्तु येषु समर्थेषु हेतुषु सत्सु तदन्त-
र्गतस्यान्यतमस्य कस्यचिदभावे तदभवत् तत्कारणं तदिति व्यवस्थाप्यते, अन्यथा मातृवि-
वाहोचितपारशीकदेशप्रभवस्य पिण्डखर्जूरस्य मातृविवाहाभावे सत्यभावप्रसङ्गो भवेत् । न
चैवम्भूतव्यतिरेकस्य स्पर्शेन व्यभिचारोऽस्ति, रूपादिसन्निधानमुपदर्श्य तन्मध्यपातिस्पर्शा-
5 भावाच्चक्षुर्विज्ञानाभावस्य प्रदर्शयितुमशक्यत्वात्, तस्मान्नास्ति कार्यकारणभावलक्षणस्य व्यभि-
चारः । नापि केवलं बीजादिरेव भावकारणं किन्तु देशकालादिरपि, अन्यथा प्रतिनियत-
देशकालता तेषामुपलम्भगोचरचारिणी न स्यात्, उपलभ्यते च राजीवादीनामुपलादिदेशपरि-
हारेण सलिलादावेव वृत्तिः, शिशिरादिसमयपरिहारेण च निदाघादिसमये वृत्तिः, देश-
कालनिरपेक्षत्वे तु सर्वत्र देशे काले च ते भवेयुः, प्रतिनियतदेशादौ वर्त्तमानत्वाच्च तत्सापेक्षा
10 भवन्तीति निश्चीयते । निरभिप्रायाणां कथमपेक्षेति चेत्तदन्यदेशादिपरिहारेण नियतदेशादौ
वृत्तिरेवापेक्षेत्युच्यते न त्वभिप्रायात्मिका । अत एव तत्कार्यता तेषाम्, अपेक्षालक्षणत्वात्तत्कार्य-
त्वस्य, तथावृत्तिश्चाध्यक्षत एव सिद्धेति कथं न तत्कार्यतावगतिः, यदपि सुखादीनामहेतुक-
त्वसाधनाय कादाचित्कं साधनमुक्तं तत्साध्यविपरीतस्यैव साधनाद्विरुद्धम्, अनपेक्षस्याहेतोः
कादाचित्कत्वानुपपत्तेः । साध्यविकलश्च दृष्टान्तः, अहेतुकत्वस्य तत्राप्यभावात्, प्रत्यक्षानुपल-
15 म्भाभ्यां हेतुत्वनिश्चयात प्रत्यक्षविरुद्धापि प्रतिज्ञा । अनुपलभ्यमानसत्ताकत्वहेतोः सिद्धावपि
यद्यनुपलम्भमात्रं हेतुस्तदाऽनैकान्तिकः, प्रमाणाभावात कारणसत्ताऽभावासिद्धेः । व्यापकस्य
स्वभावस्य कारणस्य वा निवृत्तौ सत्यामेव व्याप्यस्य कार्यस्य वा निवर्त्तनात, न हि प्रमाणमर्थ-
सत्ताया व्यापकं वृक्षत्ववन्निंशपायाः, अभिन्नस्यैव व्यापकत्वात् । न च प्रमाणार्थसत्तयोरभेदो
भिन्नप्रतिभासत्वात । नापि प्रमाणमर्थस्य कारणम्, देशकालस्वभावविप्रकृष्टानामर्थानां प्रमाणे-
20 नाविषयीकृतानामपि सत्त्वस्याविरोधेन व्यभिचारात । न हि तदन्तरेणापि भवन् प्रति तत्का-
रणमतिप्रसङ्गात, कारणत्वाभ्युपगमे वा स्वपक्षपरित्यागो भवेत, न वा प्रमाणात् प्रमेय-
मुत्पद्यते, अर्थादेव विषयभूतात् प्रमाणस्योद्भवात् । अप्रतिबद्धप्रमाणाच्च नार्थसत्ता नि
वर्तते, अन्यथाऽश्वनिवृत्तौ गोरपि निवृत्तिः स्यात । किञ्चानुपलम्भोऽपि हेतुः किं सर्वस्य,
स्वस्य वा, न प्रथमः सर्वानुपलम्भस्यार्वाग्दर्शनेन निश्चेतुमशक्यत्वात् न ह्यर्वाग्दृशा मयूरचन्द्र-
25 कादीनां सर्वैः पुरुषैरदृष्टं कारणं नोपलभ्यत इति निश्चेतुं शक्यम् । न द्वितीयः, खल-
बिलाद्यन्तर्गतस्य बीजादेः स्वोपलम्भनिवृत्तावपि सत्ताया अनिवृत्तेर्हेतोरनैकान्तिकत्वात्
एवञ्चोक्तम्, 'न हेतुरस्तीति वदन् सहेतुकं ननु प्रतिज्ञां स्वयमेव बाधते । अथापि हेतुप्रण-
यालसो भवेत प्रतिज्ञया केवलयास्य किं भवेत' इति । तस्मान्न स्वभावैकान्तवादाभ्युपगमो

१ स्वातिरिक्तयावत्कारणसद्भावे सत्यपि यदभावात् कार्याभावस्तत्तस्य कारणमित्यर्थः ॥

युक्तिसङ्गतः । अथ सर्वस्य वस्तुनः प्रतिनियतरूपेण भावात्तत्र नियतिरेव कारणम्, तीक्ष्ण-शस्त्राद्युपघातेऽपि मरणयोग्यनियत्यभावे जीवनदर्शनात्, तथाविधनियतिसद्भावे तु शस्त्राद्यु-पघातमन्तरेणापि मृत्योरुपलम्भात्, नहि नियतिं विना स्वभावः कालो वा कश्चिद्धेतुः कण्टकादीनामपि नियत्यैव तीक्ष्णादिनियतरूपेणोपजायमानत्वात्, कालोऽपि शीतादेर्भावस्य तथाविधनियत्यैव तदा तदा तत्र तत्र तथा तथा निर्वर्त्तकः, तथा चोक्तम् ' प्राप्तव्यो 5 नियतिबलाश्रयेण योऽर्थः सोऽवश्यं भवति नृणां शुभोऽशुभो वा । भूतानां महति कृतेऽपि हि प्रयत्ने नाभाव्यं भवति न भाविनोऽस्ति नाशः ' इति केचित्, तन्न, शास्त्रोपदेशव्यर्थ-तापत्तेः, तदन्तरेणाप्यर्थेषु नियतिकृतत्वबुद्धेर्नियत्यैव भावात्, दृष्टादृष्टफलशास्त्रप्रतिपादितशु-भाशुभक्रियाफलनियमाभावश्च । अथ तथैव नियतिः कारणमिति नायं दोषः, न, नियतेरे-कस्वभावत्वाभ्युपगमे विसंवादाविसंवादादिभेदाभावप्रसक्तेः, अनियमेन नियतेः कारणत्वा- 10 दयमदोष इति चेन्न, अनियमे कारणाभावान्न नियतिरेव कारणम्, नियतेर्नित्यत्वे कारणत्वा-योगात्, अनित्यत्वेऽपि तदयोग एव । किञ्च नियतेरनित्यत्वे कार्यत्वम्, कार्यञ्च कारणादु-त्पत्तिमदिति तदुत्पत्तौ कारणं वाच्यम्, न च नियतिरेव कारणम्, तत्रापि पूर्ववत् पर्यनु-योगानिवृत्तेः । न च नियतिरात्मानमुत्पादयितुं समर्था, स्वात्मनि क्रियाविरोधात् । न च कालादिकं नियतेः कारणम्, तस्य निषिद्धत्वात् । न चाहेतुका सा युक्ता, नियतरूपतानु- 15 पपत्तेः, न च स्वतोऽनियताऽन्यभावनियतत्वकारणम्, शशशृङ्गादेस्तद्रूपतानुपलम्भात्, तन्न नियतिरपि प्रतिनियतभावोत्पत्तिहेतुः । अथ जन्मान्तरोपात्तमिष्टानिष्टफलदं कर्म सर्वजग-द्वैचित्र्यकारणमिति कर्मवादिनः । तथा चाहुः ' यथा यथा पूर्वकृतस्य कर्मणः फलं निधान-स्थमिवावतिष्ठते । तथा तथा तत्प्रतिपादनोद्यता प्रदीपहस्तेव मतिः प्रवर्त्तते ॥ ' इति, तथा च 'स्वकर्मणा युक्त एव सर्वो ह्युत्पद्यते नरः । स तथाऽऽकृष्यते तेन न यथा स्वयमिच्छति ' 20 इति, तथाहि समानमीहमानानां समानदेशकालकुलाकारादिमतामर्थप्राप्त्यप्राप्ती नानिमित्ते युक्ते, अनिमित्तस्य प्रतिनियमायोगात् । न च परिदृश्यमानकारणप्रभवे इति वाच्यम्, तस्य समानतयोपलम्भात्, न चैकरूपात् कारणात् कार्यभेदः, तस्याहेतुकत्वप्रसक्तेः, अहे-तुकत्वे च तस्य कार्यस्यापि तद्रूपतापत्तेः, भेदाभेदव्यतिरिक्तस्य तस्यासत्त्वात्, ततो यन्नि-मित्ते एते तद् दृष्टकारणव्यतिरिक्तमदृष्टं कारणं कर्मेति, असदेतत्, कुलालादेर्घटादिकारण- 25 त्वेनाध्यक्षतः प्रतीयमानस्य परिहारेणापरादृष्टपरिकल्पनायां तत्परिहारेणापरापरादृष्टकारण-कल्पनयाऽनवस्थाप्रसङ्गतः क्वचिदपि कारणप्रतिनियमानुपपत्तेः । न च स्वतन्त्रं कर्म जगद्वैचि-त्र्यकारणमुपपद्यते, तस्य कर्त्रधीनत्वात्, न चैकस्वभावात्ततो जगद्वैचित्र्यमुपपत्तिमत्, कार-णवैचित्र्यमन्तरेण कार्यवैचित्र्यायोगात्, वैचित्र्ये च तदेककार्यताप्रच्युतेः, अनेकस्वभावत्वे

च कर्मणः नाममात्रनिबन्धनैव विप्रतिपत्तिः, पुरुषकालस्वभावादेरपि जगद्वैचित्र्यकारणत्वे-
नार्थतोऽभ्युपगमात्, न च चेतनवताऽनधिष्ठितमचेतनत्वाद्वास्यादिवत् कर्म प्रवर्त्तते । अथ
तदधिष्ठायकः पुरुषोऽभ्युपगम्यते न तर्हि कर्मैकान्तवादः, पुरुषस्यापि तदधिष्ठायकत्वेन जग-
द्वैचित्र्यकारणत्वोपपत्तेः, न च केवलं किञ्चिद्वस्तु नित्यमनित्यं वा कार्यकृत्सम्भवतीत्यसकृद-
5 वेदितम्, तस्मात् कर्मैकान्तवादोऽपि युक्तिसङ्गतः । अन्ये त्वाहुः पुरुष एवैकः सकलजग-
त्स्थितिसृष्टिविनाशहेतुः, प्रलयेऽप्यलुप्तज्ञानातिशयशक्तिरिति, तथा चोक्तम् 'ऊर्णनाभ इवां-
शूनां चन्द्रकान्त इवाम्भसाम् । प्ररोहाणामिव प्लक्षः स हेतुः सर्वजन्मिनां ॥' इति, तथा
'पुरुष एवैतत्सर्वं यद्भूतं यच्च भाव्यम्' इत्यादि । ऊर्णनाभोऽत्र मर्कटको व्याख्यातः । अत्र
सकललोकस्थितिसर्गप्रलयहेतुता ईश्वरस्येव पुरुषवादिभिः पुरुषस्येष्टा, अत्र च विशेषः, ईश्वरः
10 समवाय्याद्यपरकारणसव्यपेक्षो जगन्निर्वर्त्तयति, अयन्तु केवल एवेति, तन्न, ईश्वरस्येवा-
स्यापि जगद्धेतुताया असङ्गतेः, तथाहि 'पुरुषो जन्मिनां हेतुर्नोत्पत्तिविकलत्वतः । गगना-
म्भोजवत्सर्वमन्यथा युगपद्भवेत् ॥' इति, किमर्थमयं पुरुषो जगद्रचनाव्यापारमीदृशं करोति,
प्रेक्षापूर्वकारिप्रवृत्तिर्हि प्रयोजनवत्तया व्याप्ता, यद्यन्येनेश्वरादिना प्रयुक्तोऽनिच्छन्नपि करोति
तदाऽस्य स्वातन्त्र्यमभ्युपगतं विरुद्धं स्यात्, अथ कृपया परानुग्रहार्थं करोति नारकादिदुःखि-
15 तसत्त्वनिर्माणानुपपत्तिः न च तत्कर्मप्रक्षयार्थं दुःखितसत्त्वनिर्माणे प्रवृत्तिः, तत्कर्मणोऽपि
तत्कृतत्वेन तत्प्रक्षयार्थं तन्निर्माणप्रवृत्तौ अप्रेक्षापूर्वकारितापत्तेः । न वा सर्गात् प्रागनुकम्प्यं
सत्त्वमस्तीति निरालम्बनाया अनुकम्पाया अयोगात्, नातोऽपि जगत्करणे प्रवृत्तिर्युक्ता ।
अनुकम्पातः प्रवृत्तौ च न सुखिसत्त्वप्रक्षयार्थं तत्प्रवृत्तिर्युक्तेति देवादीनां प्रलयानुपपत्ति-
र्भवेत् । अनुकम्प्यानां धर्माधर्मापेक्षया सुखदुःखलोकमर्जने स्वातंत्र्यहानिस्तस्य भवेत्,
20 समर्थस्य हि न काचिदपेक्षा, तथापि कृपालुतया दुःखप्रदे कर्मण्यवधीरणमेव युक्तम्,
न हि कृपालवः परदुःखहेतुमेवान्विच्छन्ति तेषां परदुःखवियोगेच्छयैव सर्वदा प्रवृत्तेः ।
न च क्रीडयाऽपि तत्र तस्य प्रवृत्तिः, क्रीडोत्पादेऽपि तदुपायभूतस्य सर्गस्थितिप्रलयात्मकस्या-
पेक्षणादस्वातंत्र्योपपत्तेः, क्रीडोपायोत्पादने यदि तस्य शक्तिः स्यात्तदा युगपदेव कुर्यात्,
यदि नादौ शक्तिः, तदा क्रमेणापि न कुर्यात्, अशक्तावस्थाऽविशेषात् । एकत्रैकस्य शक्ता-
25 शक्तत्वलक्षणविरुद्धधर्मद्वयायोगात् । न च क्रीडार्था न प्रवृत्तिः किन्तु स्वभावतः यथा महा-
भूतानां पृथिव्यादीनां स्वकार्येषु प्रवृत्तिरिति युक्तम्, एवं हि तद्व्यापारमात्रभाविनामशेष-
भावानां युगपद्भावो भवेदविकलकारणत्वात्, समर्थस्य सहकार्यपेक्षायोगात् पुरुषस्य केवल-
स्यैव जगत्कारणत्वेनाभ्युपगमाच्च, पृथिव्यादीनान्तु स्वहेतुबलायातापरापरस्वभावसद्भावात्तदु-
त्पाद्यकार्यस्य न युगपदुत्पत्त्यादिदोषः सम्भवी । न च यथोर्णनाभः स्वभावतः प्रवृत्तोऽपि

न स्वकार्याणि युगपन्निर्वर्त्तयति तथा पुरुषोऽपीति वक्तव्यम्, स्वभावतस्तस्याप्रवृत्तेः प्राणि-
भक्षणलाम्पट्येन हि तस्य प्रवृत्तिः न ह्यसौ नित्यैकस्वभावः, अपि तु स्वहेतुबलभावि
कादाचित्कापरापरशक्तिमानिति तद्भाविनः कार्यस्य क्रमप्रवृत्तिरुपपन्नैव । न चाबुद्धिपूर्वक-
मेवासौ जगन्निर्वर्त्तने प्रवर्त्तते न त्वनुकम्पादित इति युक्तम्, प्राकृतपुरुषादप्यत्यन्तानभिज्ञ-
तया प्रेक्षापूर्वकारिणामनवधेयवचनताप्रसक्तेः, तस्मान्न कालाद्येकान्ताः प्रमाणतः सम्भवन्ति, 5
अतस्तद्वादो मिथ्यावाद इति स्थितम् । त एवान्योन्यसव्यपेक्षा नित्याद्येकान्तव्यपोहेनैकानेक-
स्वभावाः कार्यनिर्वर्त्तनपटवः प्रमाणविषयतया परमार्थसन्त इति तत्प्रतिपादकस्य शास्त्र-
स्यापि सम्यक्त्वमिति तद्वादः सम्यग्वादतया व्यवस्थितः ॥ ५३ ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानंदसूरीश्वरपट्टालङ्कारश्रीमद्विजय-
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय- 10
लब्धिसूरिणा सङ्कलिते सम्मतितत्त्वसोपाने कालाद्येका-
न्तवादिभंजनं नाम चतुस्त्रिंश सोपानम् ॥

## अथात्मनो मिथ्यात्वस्थानवर्णनम् ॥

यथैते कालाद्येकान्ता मिथ्यात्वमनुभवन्ति स्याद्वादोपग्रहात्तु त एव सम्यक्त्वं प्रतिपद्यन्ते 15
तथाऽऽत्मापि एकान्तनित्यानित्यत्वादिधर्माध्यासितो मिथ्यात्वमनेकान्तरूपतया त्वभ्युपगम्य-
मानः सम्यक्त्वं प्रतिपद्यत इत्याह—

**णत्थि ण णिच्चो ण कुणइ कयं ण वेएइ णत्थि णिव्वाणं ।**
**णत्थि य मोक्खोवाओ छम्मिच्छत्तस्स ठाणाइं ॥ ५४ ।**

नास्ति न नित्यो न करोति कृतं न वेदयते नास्ति निर्वाणम् । 20
नास्ति च मोक्षोपायः षण्मिथ्यात्वस्य स्थानानि ॥ छाया ॥

नास्तीति । एकान्तत आत्मा नास्तीति बृहस्पतिमतानुसारी, अस्त्यात्मा किन्तु प्रति-
क्षणविशरारुतया चित्तसन्ततेर्न नित्य इति बौद्धाः । अस्त्यात्मा नित्यो भोक्ता न तु करोतीति
सांख्याः, त एवं प्राहुर्न कर्त्ताऽसौ भोक्ता, प्रकृतिवत् कर्त्तुर्भोक्तृत्वानुपपत्तेः । यद्वा येन कृतं
कर्म नासौ तद्भुङ्क्ते क्षणिकत्वाच्चित्तसंततेरिति बौद्धाः, क्षणिकत्वाच्चित्तसन्ततेः कृतं न वेदयते 25
इति बौद्ध एवाह । कर्त्ता भोक्ता चात्मा किन्तु न मुच्यतेऽसौ चेतनत्वादभव्यवत्,
रागादीनामात्मस्वरूपाव्यतिरेकात् तदक्षये तेषामप्यक्षयाविति याज्ञिकाः । निर्हेतुक एवासौ
मुच्यते तत्स्वभावताव्यतिरेकेणापरस्य तत्रोपायस्याभावादिति मण्डली प्राह । एतानि

षड् मिथ्यात्वस्य स्थानानि, षण्णामप्येषां पक्षाणां मिथ्यात्वाधारतया व्यवस्थितेः, तथाहि एतानि नास्तित्वादिविशेषणानि साध्यधर्मिविशेषणतयोपादीयमानानि किं प्रतिपक्षव्युदासेनोपादीयन्ते, आहोस्विन् कथञ्चित्तत्सङ्ग्रहेण, प्रथमपक्षे प्रत्यक्षविरोधः, स्वसंवेदनाध्यक्षतश्चैतन्यस्यात्मरूपस्य प्रतीतेः, कथञ्चित्तस्य परिणामिनित्यताप्रतीतेः, शरीरादिव्यापारतः 5 कर्तृत्वोपलब्धेः, स्वव्यापारनिर्वर्तितभक्तरूपादिभोक्तृत्वसंवेदनान्, पुद्गललक्षणविलक्षणतया रागादिविविक्ततया च शमसुखरसावस्थायां कथञ्चित्तस्योपलब्धेः, स्वोत्कर्षतरतमादिभावतो रागाद्यपचयतरतमभावविधायिसम्यग्ज्ञानदर्शनादेरुपलम्भाच्च । अनुमानतोऽपि विरोधः तथाभूतज्ञानकार्यान्यथानुपपत्तितश्चैतन्यलक्षणस्यात्मनः सिद्धिःघटादिवत् रूपादिगुणतः, ज्ञानस्वरूपगुणोपलम्भात् कथञ्चित्तदभिन्नस्यात्मलक्षणगुणिनः सिद्धेरिति कथं नानुमानविरोधः, 10 इतरधर्मनिरपेक्षधर्मलक्षणस्य विशेषणस्य तदाधारभूतस्य विशेष्यस्य चाप्रसिद्धेः अप्रसिद्धविशेषणविशेष्योभयदोषैर्दुष्टश्च पक्षः । आत्मा इति वचनेन तत्सत्ताभिधानं नास्तीत्यनेन च तत्प्रतिषेधाभिधानमिति पदयोः प्रतिज्ञावाक्ये व्याघातो लोकविरोधश्च, तथाभूतविशेषणविशिष्टतया धर्मिणो लोकेन व्यवह्रियमाणत्वात्, स्ववचनविरोधश्च तत्प्रतिपादकवचनस्येतरधर्मसापेक्षतया प्रवृत्तेः । हेतुरपीतरनिरपेक्षैकधर्मरूपोऽसिद्धः तथाभूतस्य तस्य क्वचिदनुप- 15 लब्धेः सर्वत्र तद्विपरीत एव भावात् विरुद्धश्च । दृष्टान्तश्च साध्यसाधनधर्मविकलः, तथाभूतसाध्यसाधनधर्माधिकरणतया कस्यचिद्धर्मिणोऽप्रसिद्धेः, तन्न प्रथमः पक्षः । नापि द्वितीयः, स्वाभ्युपगमविरोधप्रसङ्गात्, साधनवैफल्यापत्तेश्च, तथाभूतस्यानेकान्तरूपतयाऽस्माभिरप्यभ्युपगमात् । तस्माद्व्यवस्थितमेतदेकान्तरूपतया षडप्येतानि मिथ्यात्वस्य स्थानानीति ॥ ५४ ॥

नैतान्येव स्थानानि किन्तूक्तवैपरीत्येनाप्येकान्तवादे तथैवेत्याह—

20 **अत्थि अविणासधम्मो करेइ वेएइ अत्थि णिव्वाणं ।**
**अत्थि य मोक्खोवाओ छम्मिच्छत्तस्स ठाणाइं ॥ ५५ ॥**

अस्त्यविनाशधर्मा करोति वेदयतेऽस्ति निर्वाणम् ।
अस्ति च मोक्षोपायः षण्मिथ्यात्वस्य स्थानानि ॥ छाया ॥

अस्तीति, अस्त्यात्मेति पक्षः नैयायिकादेर्वादिनः, स चाविनाशधर्मेत्येषः कपिलमता- 25 नुसारिणः । कर्तृभोक्तृस्वभावोऽसाविति जैमिनेर्मतम् । तथाभूत एवासौ जडस्वरूप इत्यक्षपादकणभुङ्मतानुसारिणः । अस्ति निर्वाणमस्ति च मोक्षोपाय इति नास्तिकयाज्ञिकव्यतिरिक्ताः पाखण्डिनः । एते चाभ्युपगमा एकान्ताभ्युपगमत्वान्मिथ्यात्वस्थानानि, एवमपि पूर्ववद्विकल्पद्वयेऽपि तद्दोषानतिवृत्तेः एकान्तेन तदस्तित्वादेरध्यक्षानुमानाभ्यामप्रतीतेः तथाभ्युपगमे

च स्यास्तित्वेनैवान्यभावास्तित्वेनापि तस्य भावात् सर्वभावसङ्कीर्णताप्रसक्तेः, स्वस्वरूपाव्यवस्थितेः खपुष्पवत् असत्त्वमेव स्यात् । हेतुदृष्टान्तदोषाश्च पूर्ववदत्रापि वाच्याः । 'छस्सम्मत्तस्स ठाणाइं' इति पाठे तु इतरधर्मापरिहारेण प्रवर्त्तमाना एते षट्पक्षाः सम्यक्त्वं प्रतिपद्यन्त इति व्याख्येयम् । न च स्यादस्त्यात्मा स्यान्नित्य इत्यादिप्रतिज्ञावाक्यमध्यक्षादिना प्रमाणेन बाध्यते, स्वपरभावाभावोभयात्मकभावावभासकाध्यक्षादिप्रमाणव्यतिरेकेणान्यथाभूतस्याध्यक्षादेरप्रतीतेः, 5 तेनानुमानाभ्युपगमस्ववचनलोकव्यवहारविरोधोऽपि न प्रतिज्ञायाः, अध्यक्षादिप्रमाणावसेये सदसदात्मके वस्तुनि कस्यचिद्विरोधस्यासम्भवात्, न चाप्रसिद्धविशेषणः पक्षः, लौकिकपरीक्षकाणां तथाभूतविशेषणस्याविप्रतिपत्त्या सर्वत्र प्रतीतेः, अन्यथा विशेषणव्यवहारस्योच्छेदप्रसङ्गात्, अन्यथाभूतस्य तस्य क्वचिदप्यसम्भवात्, तथाभूतविशेषणात्मकस्य धर्मिणः सर्वत्र प्रतीतेर्नाप्रसिद्धविशेष्यता दोषः । नाप्यप्रसिद्धोभयता दूषणम्, तथाभूतद्वयव्यतिरेकेणान्यस्यासत्त्वेन प्रमाणाविषयत्वात् । हेतुरपि नाप्रसिद्धः, तत्र तस्य सत्त्वप्रतीतेः, विपक्षे सत्त्वासम्भवान्नापि विरुद्धोऽनैकान्तिकत्वं वा । दृष्टान्तदोषा अपि साध्यादिविकलत्वादयो नात्र सम्भविनः, असिद्धत्वादिदोषवत्येव साधने तेषां भावात् । न चानुमानतोऽनेकान्तात्मकं वस्तु तद्वादिभिः प्रतीयते, अध्यक्षसिद्धत्वात्, यस्तु प्रतिपन्नेऽपि ततस्तस्मिन् विप्रतिपद्यते तं प्रति तत्प्रसिद्धेनैव न्यायेनानुमानोपन्यासेन विप्रतिपत्तिनिराकरणमात्रमेव विधीयत इति नाप्रसिद्धविशेषणत्वादेर्दोषस्यावकाशः । प्रतिक्षणपरिणामपरभागादीनान्तु उत्तरविकारार्वाग्दर्शनान्यथानुपपत्त्यानुमाने नाध्यक्षादिबाधा, अस्मदाद्यध्यक्षस्य सर्वात्मना वस्तुग्रहणासामर्थ्यात्, स्फटिकादौ चार्वाग्भागपरभागयोरध्यक्षत एवैकदा प्रतिपन्नेर्न तस्यानुमानम् । न च स्थैर्यग्राह्यध्यक्षं प्रतिक्षणपरिणामानुमानेन विरुद्ध्यते, अस्य तदनुग्राहकत्वात्, कथंचित् प्रतिक्षणपरिणामस्य तत्प्रतीतस्यैवानुमानतोऽपि निश्चयात् ॥ ५५ ॥ 20

इति तपोगच्छनभोमणिश्रीमद्विजयानंदसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलिते सम्मतितत्त्वसोपाने आत्मनो मिथ्यात्वस्थानवर्णनं नाम पञ्चत्रिंशं सोपानम् ॥



25

# अथ हेत्वाभासविमर्शनम् ।

अनेकान्तव्यवच्छेदेन एकान्तावधारितधर्माधिकरणत्वेन धर्मिणं साधयन्नेकान्तवादी न साधर्म्यतः साधयितुं प्रभुर्नापि वैधर्म्यत इत्याह—

**साहम्मउव्व अत्थं साहेज्ज परो विहम्मओ वावि ।**
**अण्णोण्णं पडिकुट्ठा दोण्णवि एए असव्वाया ॥ ५६ ॥**

साधर्म्यतो वार्थं साधयेत् परो वैधर्म्यतो वापि ।
अन्योन्यं प्रतिकुष्टौ द्वावप्येतावसद्वादौ ॥ छाया ॥

5 **साधर्म्यत इति,** परो वैशेषिकादिः साधर्म्यतोऽर्थं साधयेत्, अन्वयिहेतुप्रदर्शनात्सा-ध्यधर्मिणि विवक्षितं साध्यं यदि साधयेत् तदा तत्पुत्रत्वादेरपि गमकत्वं स्यात्, अन्वयमात्र-स्य तत्रापि भावात्, अथ वैधर्म्यात् व्यतिरेकिहेतोर्यदि प्रकृतं साध्यं साधयेत्, वाशब्दस्य समुच्चयार्थत्वादुभाभ्यां वा तथापि तत्पुत्रत्वादेरेव गमकत्वप्रसक्तिः, श्यामत्वाभावे तत्पुत्र-त्वादेरन्यत्र गौरपुरुषेऽभावात्, उभाभ्यामपि तत्साधनेऽत एव साध्यप्रसक्तिः स्यात्,
10 तथा सामान्यं नैकान्तवाद्युपन्यस्तहेतोः साधयितुं शक्यम्, केवलस्य तस्यासम्भवात्, अर्थक्रियाकारित्वविकलत्वाच्च, न विशेषः, तस्याननुयायित्वात्, नाप्युभयम्, उभयदोषा-नतिवृत्तेः, न वाऽनुभयम्, तस्यासतो हेत्वव्यापकत्वेन साध्यत्वायोगात्, तस्मात् परस्पर-प्रतिक्षिप्तौ द्वावप्येतौ सामान्यविशेषैकान्तौ असद्वादौ, इतरविनिर्मुक्तस्यैकस्य शशशृंगादेरिव साधयितुमशक्यत्वादिति । ननु तत्पुत्रत्वादेर्न साध्यसाधकता कालात्ययापदिष्टत्वादिदोषसद्भा-
15 वात्, न, असिद्धविरुद्धानैकान्तिकहेत्वाभासं विनान्यहेत्वाभासासम्भवात्, न च त्रैलक्षण्य-योगिनोऽसिद्धत्वादिहेत्वाभासता कृतकत्वादेरिवाऽनित्यत्वसाधने सम्भवति, अस्ति च भवदभि-प्रायेण त्रैरूप्यं प्रकृते हेतौ । ननु त्रैरूप्यवादिनां स्यादयं दोषः पञ्चलक्षणहेतुवादिनान्तु प्रक-रणसमादेर्हेत्वाभासत्वात्त्रैलक्षण्यसद्भावेऽपि असत्प्रतिपक्षत्वादेरसम्भवेन हेत्वाभासत्वसम्भ-वात्, यस्माद्धि प्रकरणचिन्ता स प्रकरणसमः, पक्षप्रतिपक्षौ प्रकरणम्, तस्य संशयात् प्रभृति
20 आनिश्चयादालोचनास्वभावा चिन्ता यतो भवति स एव तन्निश्चयार्थं प्रयुक्तः प्रकरणसमः, तथाहि अनित्यः शब्दो नित्यधर्मानुपलब्धेः, अनुपलभ्यमाननित्यधर्मकं घटादि अनित्यं दृष्टम्, यत्पुनर्नित्यं न तदनुपलभ्यमाननित्यधर्मकम्, यथाऽऽत्मादि, एवं चिन्तासम्बन्धि-पुरुषेण तत्त्वानुपलब्धेरेकदेशभूताया अन्यतरानुपलब्धेरनित्यत्वसिद्धौ साधनत्वेनोपन्यासे सति द्वितीयश्चिन्तासम्बन्धी पुरुष आह, एवमनित्यत्वं साध्यते चेत्तर्हि नित्यः शब्दोऽनित्यधर्मानु-
25 पलब्धेः, अनुपलभ्यमानानित्यधर्मकं नित्यं दृष्टं यथा आत्मादि, यत्तु न नित्यं तन्नानुपल-भ्यमानानित्यधर्मकं यथा घटादीति नित्यतासिद्धिरपि भवेदित्येवमन्यतरानुपलब्धेरुभय-पक्षसाधारणत्वात् प्रकरणानतिवृत्तेः हेत्वाभासत्वम् । न च निश्चितयोरेव पक्षप्रतिपक्षपरिग्र-हेऽधिकारात् कथं चिन्तायुक्त एवं साधनोपन्यासं विदध्यादिति वक्तव्यम्, अन्यदा सन्देहेऽपि यदा चिन्तासम्बन्धी पुरुषः स्वहेतोः पक्षधर्मान्वयव्यतिरेकानवगच्छन् स्वसाध्यं निश्चिनोति

तदैवान्येन स्वसाध्यसाधनाय हेतोरभिधानात्। न चोभयवृत्तिर्हेतुरनैकान्तिकः, तथा च नित्य-
त्वानित्यत्वैकान्तविपर्ययेणाप्यस्या अन्यतरानुपलब्धेः प्रवृत्तेरनैकान्तिकता भवेन्न प्रकरणसम इति
वाच्यम्, यत्र हि पक्षसपक्षविपक्षाणां तुल्यो धर्मो हेतुत्वेनोपादीयते तत्र संशयहेतुतासाधा-
रणत्वेन तस्य विरुद्धविशेषानुस्मारकत्वात्, न तु प्रकृत एवंविधः, यतो नित्यधर्मानुपलब्धेर-
नित्य एव भावः, न नित्ये, एवमनित्यधर्मानुपलब्धेर्नित्य एव भावो नानित्ये, एवञ्चैकत्र साध्ये 5
विपक्षव्यावृत्तेः प्रकरणसमता नानैकान्तिकता, पक्षद्वयवृत्तितया तस्याभावात्। ननु यद्ययं
पक्षद्वये वर्त्तते तदा साधारणानैकान्तिकः, अथ न प्रवर्त्तते कथमयं पक्षद्वयसाधकःस्यात्,
अतद्वृत्तेरतत्साधकत्वान्मैवम्, पक्षद्वये प्रकृतस्य वृत्त्यभ्युपगमात्, तथाहि साधनकालेऽनित्य-
पक्ष एव नित्यधर्मानुपलब्धिर्वर्त्तते न नित्ये, यदापि नित्यत्वं साध्यं तदापि नित्यपक्ष एवा-
नित्यधर्मानुपलब्धिर्वर्तते नानित्ये, ततश्च सपक्ष एव प्रकरणसमस्य वृत्तिः, सपक्षविपक्षयोश्चा- 10
नैकान्तिकस्य साध्यापेक्षया च पक्षसपक्षविपक्षाणां व्यवहारः नान्यथा, तेन साध्यद्वयवृत्ति-
रुभयसाध्यसपक्षवृत्तिश्च प्रकरणसमः, न तु कदाचित् साध्यापेक्षया विपक्षवृत्तिः, अनैका-
न्तिकस्तु विपक्षवृत्तिरपीत्यस्मादस्य भेदः। न च रूपत्रययोगेऽप्यस्य हेतुत्वम्, सप्रति-
पक्षत्वात्, यस्य तु मते प्रतिबन्धपरिसमाप्ती रूपत्रययोगे तेन प्रकरणसमस्य नाहेतुत्वमुपद-
र्शयितुं शक्यम्। न चास्य कालात्ययापदिष्टत्वम्, अबाधितविषयत्वात्, ययोर्हि प्रकरण- 15
चिन्ता तयोरयं हेतुः, न च तौ सन्दिग्धत्वाद्बाधामस्योपदर्शयितुं क्षमौ। न च हेतुद्वयस-
न्निपातादेकत्र धर्मिणि संशयोत्पत्तेस्तज्जनकत्वेनास्यानैकान्तिकता, संशयहेतुत्वेनानैन्तिकत्वा-
भावात्, इन्द्रियसन्निकर्षादेरपि तथात्वापत्तेः, मैवम्, असिद्धादिव्यतिरेकेणान्यस्य प्रक-
रणसमादेर्हेत्वाभासत्वायोगात्। यच्चोदाहरणं तत्र प्रदर्शितं तद्यद्यनुपलभ्यमाननित्यधर्मक-
त्वं न शब्दे सिद्धं तर्ह्यसिद्धमेव, पक्षवृत्तित्वस्यासिद्धेः, यदि सिद्धं तदा तद्यदिसाध्यधर्मिणि 20
तर्हि साध्यवत्येव धर्मिणि तस्य सद्भावसिद्धेः कथमगमकता, न हि साध्यधर्ममन्त-
रेण धर्मिण्यभवनं विहायान्यद्धेतोरविनाभावित्वम्, तच्चेदस्ति कथं न गमकता, तस्या
अविनाभावनिबन्धनत्वात्। अथ साध्यधर्मविकले तत् सिद्धं तदा विरुद्ध एव हेतुः, विपक्ष
एव वर्त्तमानत्वात्। अथ सन्दिग्धसाध्यधर्मवति वर्तते तदाऽनैकान्तिकः, सन्दिग्धविपक्षव्या-
वृत्तिकत्वात्। ननु साध्यधर्मिव्यतिरिक्ते धर्म्यन्तरे यस्य साध्याभाव एव दर्शनं स विरुद्धः, 25
यस्य च तदभावेऽप्यसावनैकान्तिकः, न हि धर्मिण एव विपक्षता, तस्य हि विपक्षत्वे सर्वस्य
हेतोरहेतुताप्रसङ्गो यतः साध्यसिद्धेः प्राक् साध्यधर्मी सर्वदा सन्दिग्ध एव साध्यधर्मसदस-
त्त्वाश्रयत्वात्, अन्यथा साध्याभावे निश्चिते तन्निश्चायकप्रमाणेन बाधितत्वाद्धेतोरप्रवृत्तिरेव
स्यात्, प्रत्यक्षादिप्रमाणेन च साध्यधर्मयुक्ततया धर्मिणो निश्चये हेतोर्वैयर्थ्यप्रसक्तिः,

प्रत्यक्षादित एव हेतुसाध्यस्य सिद्धेः, तस्मात् सन्दिग्धसाध्यधर्मा धर्मी हेतोराश्रयत्वेन एष्टव्य इति, यदि तु तत्र वर्त्तमानो हेतुरनैकान्तिको भवेत्तर्हि धूमादिरपि स्यात्, सन्दिग्धव्यतिरेकित्वात्, यथा च विपक्षवृत्तित्वेन निश्चितो न गमकस्तथा यदि संदिग्धव्यतिरेक्यपि तर्ह्यनुमानप्रामाण्यं परित्यक्तमेव भवेत्, तस्मादनुमेयव्यतिरिक्ते साध्यधर्मतदभाववति 5 वर्त्तमानो हेतुरनैकान्तिकः, साध्याभाववत्येव वर्त्तमानः पक्षधर्मत्वे सति विरुद्ध इत्यभ्युपगन्तव्यम् । यश्च विपक्षाद्व्यावृत्तः सपक्षे चानुगतः पक्षधर्मः स स्वसाध्यं गमयति, प्रकृतस्य विपक्षव्यावृत्तत्वेऽपि न स्वसाध्यसाधकत्वं प्रतिबन्धस्य स्वसाध्येनानिश्चयात्, तदनिश्चयश्च न विपक्षवृत्तित्वेन, किन्तु प्रकरणसमत्वेन, एकशाखाप्रभवत्वादेस्तु कालात्ययापदिष्टत्वेनेति चेत्, नैवम् धर्मिव्यतिरिक्तधर्म्यन्तरे स्वसाध्येन हेतोः प्रतिबन्धाभ्युपगमे 10 धर्मिणि प्रकृते उपादीयमानेनापि हेतुना साध्यासिद्धेः साध्यधर्मिणि साध्यमन्तरेणापि हेतोः सद्भावाभ्युपगमात्, तद्व्यतिरिक्तधर्म्यन्तर एव साध्येन तस्य प्रतिबन्धग्रहणात्, न ह्यन्यत्र स्वसाध्यप्रतिबद्धत्वेन निश्चतोऽन्यत्र साध्यं गमयत्यतिप्रसङ्गात् । न च साध्यधर्मिण्यपि साध्यधर्मान्वितत्वेन हेतोरन्वयप्रदर्शनकाल एव यदि निश्चयस्तदा पूर्वमेव तत्र साध्यधर्मस्य निश्चयात् पक्षधर्मताग्रहणं व्यर्थमिति वाच्यम्, यतः प्रतिबंधप्रसाध- 15 केन प्रमाणेन सर्वोपसंहारेण साधनधर्मः साध्यधर्माभावे क्वचिदपि न भवतीति सामान्येन प्रतिबन्धनिश्चये पक्षधर्मताग्रहणकाले यत्रैव धर्मिण्युपलभ्यते हेतुस्तत्रैव साध्यं निश्चाययतीति पक्षधर्मताग्रहणस्य विशेषविषयप्रतिपत्तिनिबन्धनत्वान्नानुमानस्य वैयर्थ्यम्, न हि विशिष्टधर्मिण्युपलभ्यमानो हेतुस्तद्गतसाध्यमन्तरेणोपपत्तिमान्, अन्यथा तस्य स्वसाध्यव्याप्तत्वायोगात् । न चैवं तत्र हेतूपलम्भेऽपि साध्यविषयेऽनिश्चयः येन संदिग्धव्यतिरेकिता 20 हेतोः भवेत्, निश्चितस्वसाध्याविनाभूतहेतूपलम्भस्यैव साध्यधर्मिणि साध्यप्रतिपत्तिरूपत्वात्, न हि तत्र तथाभूतहेतुनिश्चयादपरस्तस्य स्वसाध्यप्रतिपादनव्यापारः, अत एव निश्चितप्रतिबन्धैकहेतुसद्भावे धर्मिणि न विपरीतसाध्योपस्थापकस्य तल्लक्षणयोगिनो हेत्वन्तरस्य सद्भावः, तयोर्द्वयोरपि स्वसाध्याविनाभूतत्वात् नित्यानित्यत्वयोश्चैकत्रैकदा एकान्तवादिमते विरोधेनासम्भवात्, तद्व्यवस्थापकहेत्वोरपि असम्भवस्य न्यायप्राप्तत्वात्, सम्भवे वा 25 तयोः स्वसाध्याविनाभूतत्वात् नित्यानित्यत्वधर्मयुक्तत्वं धर्मिणः स्यादिति कुतः प्रकरणसम-

१ साध्याभावे सति क्वचिदपि साधनं न भवतीति तर्केण सर्वोपसंहारेण व्याप्तिः सामान्यतः प्रतिपन्ना, तथा निश्चये हेतुर्यत्रैव धर्मिण्युपलभ्यते तत्रैव साध्यं साधयतीति पक्षधर्मताग्रहणकाले तद्ग्रहणस्य विशेषप्रतिपत्तिनिबन्धनत्वान्नानुमानवैयर्थ्यम् । एवंविधपक्षधर्मताग्रहणस्यैव च साध्यधर्मिणि साध्यप्रतिपत्तिरूपत्वम्, तस्मान्न पक्षधर्मताग्रहणोत्तरकालं परामर्शस्ततोऽनुमितिरिति नैयायिकाभिप्रायो युक्तियुक्तः, तथाविधहेतुनिश्चयादन्यस्य साध्यविज्ञानजनकस्य व्यापारस्यानुपलम्भादिति भावः ॥

स्यागमकता, अथान्यतरस्यात्र स्वसाध्याविनाभावविकलता तर्हि तत एव तस्यागमकतेति किमसत्प्रतिपक्षतारूपप्रतिपादनप्रयासेन । किञ्च नित्यधर्मानुपलब्धेः प्रसज्यप्रतिषेधरूपत्वे तुच्छस्यानुपलब्धिमात्रस्य साध्यासाधकत्वम्, पर्युदासरूपत्वेऽनित्यधर्मोपलब्धिरेव हेतुरिति शब्दे तस्य सिद्धत्वे कथं नानित्यतासिद्धिः, चिन्तासम्बन्धिपुरुषप्रयुक्तत्वात्तस्य तत्रानिश्चितत्वे वादिनं प्रति सन्दिग्धासिद्धो हेतुः स्यात्, प्रतिवादिनस्तु स्वरूपासिद्ध एव तत्र 5 नित्यधर्मोपलब्धेस्तस्य सिद्धेः । न चोभयानुपलब्धिनिबन्धना यदा द्वयोरपि चिन्ता तदैकदेशोपलब्धेरन्यतरेण हेतुत्वेनोपादाने कथं चिन्तासम्बन्ध्येव द्वितीयस्तस्यासिद्धतां वक्तुं पारयतीति वाच्यम्, द्वितीयस्य संशयापन्नत्वेन तत्रासिद्धतोद्भावने सामर्थ्याभावे प्रथमोऽपि संशयितत्वादेव तस्य हेतुतामभिधातुं शक्तो न भवेत्, अन्यथा असिद्धतामप्यभिदध्यात्, भ्रान्तेरुभयत्राविशेषात्, यदुक्तं साधनकाले नित्यधर्मानुपलब्धिरनित्यपक्ष एव वर्त्तते न 10 विपक्ष इति तन्न सङ्गतम्, विपक्षतोऽस्यैकान्तेन व्यावृत्तौ पक्षधर्मत्वे च स्वसाध्यस्यैव साधकत्वात्, अन्योन्यव्यवच्छेदरूपाणामेकव्यवच्छेदेनापरत्र वृत्तिनिश्चये गत्यन्तराभावात्, न हि योऽनित्यपक्ष एव वर्त्तमानो निश्चितो वस्तुधर्मः स तन्न साधयतीति वक्तुं युक्तम्, अथ द्वितीयोऽपि वस्तुधर्मस्तत्र तथैव निश्चितः, न, परस्परविरुद्धधर्मयोस्तदविनाभूतयोर्वा धर्मिण्येकत्रायोगात्, योगे वा नित्यानित्यत्वयोः शब्दाख्ये धर्मिण्येकदा सद्भावादनेकान्तरूपवस्तु- 15 सद्भावोऽभ्युपगतः स्यात्, तदन्तरेण तद्धेत्वोः स्वसाध्याविनाभूतयोस्तत्रायोगात् । अथ द्वयोस्तुल्यबलयोरेकत्र प्रवृत्तौ परस्परविषयप्रतिबन्धान्न स्वसाध्यगमकत्वमिति चेन्न स्वसाध्याविनाभूतयोस्तयोर्धर्मिण्युपलब्धौ स्वसाध्यसाधकत्वावश्यम्भावेन परस्परविषयप्रतिबन्धासम्भवात्, तत्प्रतिबन्धो हि तयोस्तथाभूतयोस्तत्राप्रवृत्तिः सा च त्रैरूप्याभ्युपगमे विरोधादयुक्ता, भावाभावयोः परस्परपरिहारस्थितिलक्षणतया एकत्रायोगात्, अथात एवान्यतरस्य 20 हेतोर्बाधेति चेन्न, अनुमानस्यानुमानान्तरेण बाधायोगात्, तयोर्हि तुल्यबलत्वे एकस्य बाधकत्वमपरस्य च बाध्यत्वमिति विशेषानुपपत्तिः, पक्षधर्मत्वाभावादिरूपविशेषस्याभ्युपगमे तत एवैकस्य दुष्टत्वान्न किञ्चिदनुमानबाधया । तयोरतुल्यबलत्वे तस्य च पक्षधर्मत्वादिभावाभावकृतत्वेऽप्ययमेव दोषः, तस्यानुमानाबाधाजनितत्वन्त्वशक्यसिद्धम्, तस्यैव विचार्यमाणत्वात्, तथा च त्रैरूप्याद्द्वयोस्तुल्यत्वे एकस्य बाधकत्वमपरस्य बाध्यत्वमिति व्यवस्थापयितुमशक्यत्वान्नानुमानबाधाकृतमतुल्यबलत्वमिति न प्रकरणसमो हेत्वाभासः सम्भवति । 25 कालात्ययापदिष्टस्य तु लक्षणमसङ्गतमेव, न हि प्रमाणप्रसिद्धत्रैरूप्यसद्भावे हेतोर्विषयबाधा सम्भविनी, तयोर्विरोधात् । यतः साध्यसद्भाव एव हेतोर्धर्मिणि सद्भावस्त्रैरूप्यम्, तदभाव एव च तत्र सद्भावो बाधा, भावाभावयोश्चैकत्रैकस्य विरोधः । किञ्चाध्यक्षागमयोः कुतो

हेतुविषयबाधकत्वम्, स्वार्थासम्भवे तयोरभाव इति चेत्, हेतावपि सति त्रैरूप्ये तत्समान-
मित्यसावपि तयोर्विषये बाधकः स्यात्, दृश्यते हि चन्द्रार्कादिस्थैर्यग्राह्यध्यक्षं देशान्तरप्राप्ति-
लिङ्गप्रभवतद्गत्यनुमानेन बाध्यमानम्। अथ तत्स्थैर्यग्राह्यध्यक्षस्य तदाभासत्वाद्बाध्यत्वं तर्हि
एकशाखाप्रभवत्वानुमानस्यापि तदाभासत्वाद्बाध्यत्वमित्यभ्युपगन्तव्यम्। न चैवमस्त्विति
5 वक्तव्यम्, तस्य हि तदाभासत्वं किमध्यक्षबाध्यत्वात्, उत त्रैरूप्यवैकल्यात्, नाद्यः तदा-
भासत्वेऽध्यक्षबाध्यत्वं ततश्च तदाभासत्वमितीतरेतराश्रयदोषप्रसङ्गात्, एकासिद्धावन्यतरा-
प्रसिद्धेः। नापि द्वितीयः, त्रैरूप्यसद्भावस्य तत्र परेणाभ्युपगमात्, अनभ्युपगमे वा तत एव
तस्यागमकत्वोपपत्तेरध्यक्षबाधाभ्युपगमवैयर्थ्यम्। न चाबाधितविषयत्वं हेतुलक्षणमुपपन्नम्,
त्रैरूप्यवन्निश्चितस्यैव तस्य गमकत्वाङ्गतोपपत्तेः न च तस्य निश्चयः सम्भवति, स्वसम्बन्धिनोऽ
10 बाधितत्वनिश्चयस्य तत्कालभाविनोऽसम्यगनुमानेऽपि सद्भावात्, उत्तरकालभाविनोऽसि-
द्धत्वात्, सर्वसम्बन्धिनस्मादात्विकस्योत्तरकालभाविनश्चासिद्धत्वात्, न ह्यर्वाग्दृशा सर्वत्र
सर्वदा सर्वेषामत्र बाधकस्याभाव इति निश्चेतुं शक्यम्, तन्निश्चयनिबन्धनस्यासत्त्वात्, नानु-
पलम्भस्तन्निबन्धनः, सर्वसम्बन्धिनस्तस्यासिद्धत्वात्, आत्मसम्बन्धिनोऽनैकान्तिकत्वात्,
न संवादस्तन्निबन्धनः, प्रागनुमानप्रवृत्तेस्तस्यासिद्धेः उत्तरकालं तत्सिद्ध्यभ्युपगमेऽन्योन्या-
15 श्रयदोषप्रसक्तेः, अनुमानात् प्रवृत्तौ संवादनिश्चयः, ततश्चाबाधितत्वावगमेऽनुमानप्रवृत्तिरिति।
न चाविनाभावनिश्चयादप्यबाधितविषयत्वनिश्चयः, पञ्चलक्षणयोगिन्यविनाभावपरिसमाप्ति-
वादिनामबाधितविषयत्वानिश्चयेऽविनाभावनिश्चयस्यैवासम्भवात् यदि च प्रत्यक्षागमबाधित-
कर्मनिर्देशानन्तरप्रयुक्तस्यैव कालात्ययापदिष्टत्वं तर्हि मूर्खोऽयं देवदत्तः, त्वत्पुत्रत्वात्,
उभयाभिमतत्वत्पुत्रवदित्यस्यापि गमकता स्यात्, न हि सकलशास्त्रव्याख्यातृत्वलिङ्गज-
20 नितानुमानबाधितविषयत्वमन्तरेणान्यदध्यक्षबाधितविषयत्वमागमबाधितविषयत्वं वाऽगमक-
तानिबन्धनमस्यास्ति। न चानुमानस्य तुल्यबलत्वान्नानुमानं प्रति बाधकता सम्भविनीति
वक्तव्यम्, निश्चितप्रतिबन्धलिङ्गसमुत्थस्यानुमानस्यानिश्चितप्रतिबन्धलिङ्गसमुत्थेनातुल्यबल-
त्वात्। अत एव न साधर्म्यमात्राद्धेतुर्गमकः, अपि त्वाक्षिप्तव्यतिरेकात् साधर्म्यविशेषात्,
नापि व्यतिरेकमात्रात्, किन्त्वङ्गीकृतान्वयात्तद्विशेषात्, न वा परस्पराननुविद्धोभयमात्रा-
25 दपि, किन्तु परस्परस्वरूपाजहद्वृत्तिसाधर्म्यवैधर्म्यरूपात्, न च प्रकृतहेतौ प्रतिबन्ध-
निश्चायकप्रमाणनिबन्धनं त्रैरूप्यं निश्चितम्, तदभावादेवास्य हेत्वाभासत्वम्, न पुनरस-
त्प्रतिपक्षत्वाबाधितविषयत्वापररूपविरहात्। यदा च पक्षधर्मत्वाद्यनेकवास्तवरूपात्मकमेकं

---

१ प्रत्यक्षागमयोः स्वप्रतिपाद्यविषयविरहे सति असम्भवः, अनुभूयेते च तावतस्तद्विषयोऽवश्यम्भावी हेतुप्रतिपाद्यो विषयोऽतो बाधितो भवतीति तयोर्बाधकत्वमिति भावः॥

लिङ्गमभ्युपगमविषयस्तदा तत्तथाभूतमेव वस्तु प्रसाधयतीति कथं न विपर्ययसिद्धिः, न च साध्यसाधनयोः परस्परतो धर्मिणश्चैकान्तभेदे पक्षधर्मत्वादियोगो लिङ्गस्योपपत्तिमान्, सम्बन्धासिद्धेः, हेतोश्च पक्षधर्मत्वादित्रैरूप्याभ्युपगमे कथं न परवादाश्रयणम् , एकस्य हेतोरनेकधर्मात्मकस्याभ्युपगमात् । न च यदेव पक्षधर्मस्य सपक्ष एव सत्त्वं तदेव विपक्षात् सर्वतो व्यावृत्तत्वमिति वाच्यम् , अन्वयव्यतिरेकयोर्भावाभावरूपयोः सर्वथा तादात्म्यायोगात्, तत्त्वे वा केवलान्वयी केवलव्यतिरेकी वा सर्वो हेतुः स्यात् , न त्रिरूपवान् , व्यतिरेकस्य चाभावरूपत्वेन हेतोस्तद्रूपत्वेऽभावरूपो हेतुः स्यात् , न चाभावस्य तुच्छरूपत्वात् स्वसाध्येन धर्मिणा वा सम्बन्ध उपपत्तिमान् , न च विपक्षे सर्वत्रासत्त्वमेव हेतोः स्वकीयं रूपं व्यतिरेको न तुच्छाभावमात्रमिति वक्तव्यम् , यदि हि सपक्ष एव सत्त्वं विपक्षाद्व्यावृत्तत्वं न ततो भिन्नमस्ति तदा तस्य तदेव सावधारणं नोपपत्तिमत् , वस्तुभूतान्याभावमन्तरेण प्रतिनियतस्य तस्य तत्रासम्भवात् । अथ ततस्तदन्यद्धर्मान्तरं तर्हि एकरूपस्यानेकधर्मात्मकस्य हेतोस्तथाभूतस्य साध्याविनाभूतत्वेन निश्चितस्यानेकान्तात्मकवस्तुप्रतिपादनात् कथं न परोपन्यस्तहेतूनां सर्वेषां विरुद्धता, एकान्तविरुद्धेनानेकान्तेन व्याप्तत्वात् । किञ्च परैः सामान्यरूपो वा विशेषरूपो वा हेतुरुपादीयते, आद्ये किं स व्यक्तिभ्यो भिन्नोऽभिन्नो वा इदं सामान्यमयं विशेषोऽयञ्च तद्वानिति वस्तुत्रयोपलम्भाभावाच्च भेदाभ्युपगमो युक्तः, न च समवायवशात् परस्परं तेषामनुपलक्षणमिति वक्तव्यम् , भेदग्रहमन्तरेण इहेदमवस्थितमिति समवायबुद्ध्युत्पत्त्यसम्भवात् । किञ्च नागृहीतविशेषणा विशेष्ये बुद्धिरिति काणादानां सिद्धान्तः, न च संस्थानभेदावसायमन्तरेण सामान्यनिश्चयस्योपपत्तिः, दूराद्धि पदार्थस्वरूपमुपलभमानो नागृहीतसंस्थानभेदोऽश्वत्वादिसामान्यमुपलब्धुं शक्नोति, न च संस्थानभेदावगमस्तदाधारोपलम्भमन्तरेण संभवतीति कथं नान्योऽन्याश्रयः, पदार्थग्रहणे सति संस्थानभेदावगमः, तत्र च सामान्यावबोधः तस्मिंश्च सति पदार्थस्वरूपावगतिरिति । किञ्चाश्वत्वादिसामान्यस्य स्वाश्रयसर्वगतत्वे कर्कादिव्यक्तिशून्यदेशे उपजायमानव्यक्तेरश्वत्वादिसामान्ययोगो न भवेत् , व्यक्तिशून्यदेशे सामान्यस्यानवस्थानात् , व्यक्त्यन्तरादनागमनाच्च ततः सर्वसर्वगतं तदभ्युपगन्तव्यमिति कर्कादिभिरिव शाबलेयादिभिरपि तदभिव्यज्येत, कर्कादिव्यक्तीनामेव तदभिव्यक्तिसामर्थ्ये यया प्रत्यासत्त्या ता एव तत्स्वात्मन्यवस्थापयन्ति तयैव ता एवैकाकारपरामर्शप्रत्ययमुपजनयिष्यन्तीति किमपरतद्भिन्नसामान्यप्रकल्पनया । न च स्वाश्रयेन्द्रियसंयोगात् प्राक् स्वज्ञानजननेऽसमर्थं सामान्यं तदा परैरनाधेयातिशयं तमपेक्ष्य स्वावभासि ज्ञानं जनयति, प्राक्तनासामर्थ्यस्वभावापरित्यागे

स्वभावान्तरानुत्पादे च तदयोगात्, तथाभ्युपगमे च क्षणिकताप्रसक्तेः । न च स्वभावान्तरस्योपजायमानस्य ततो भेदः, सम्बन्धासिद्धितः तत्सद्भावेऽपि प्रागवत्तस्य स्वावभासिज्ञानजननायोगाच्च तत्प्रतिभासः स्यात्, तथा च सामान्यस्य व्यक्तिभ्यो भेदेनाप्रतिभासमानस्यासिद्धत्वात्कथं हेतुत्वम् । किञ्च प्रतिव्यक्ति सामान्यस्य परिसमाप्तत्वाभ्युपगमादेकस्यां व्यक्तौ विनिवेशित[1]स्वरूपस्य तदैव व्यक्त्यन्तरे वृत्त्यनुपपत्तेस्तदनुरूपप्रत्ययस्य तत्रासम्भवादसाधारणता च हेतोः स्यात् । यदि चासाधारणरूपा व्यक्तयः स्वरूपतस्तदा परसामान्ययोगादपि न साधारणरूपतां प्रतिपद्यन्त इति व्यर्था सामान्यप्रकल्पना, स्वतोऽसाधारणस्यान्ययोगादपि साधारणरूपत्वानुपपत्तेः, स्वतस्तद्रूपत्वेऽपि निष्फला सामान्यप्रकल्पनेति व्यक्तिव्यतिरिक्तस्य सामान्यस्याभावादसिद्धस्तल्लक्षणो हेतुरिति कथं ततः साध्यसिद्धिः । अथ व्यक्त्यव्यतिरिक्तं सामान्यं हेतुस्तदप्यसंगतमेव, व्यक्त्यव्यतिरिक्तस्य व्यक्तिस्वरूपवद्व्यक्त्यन्तराननुगमात् सामान्यरूपतानुपपत्तेः, व्यक्त्यन्तरसाधारणस्यैव वस्तुनः सामान्यमित्यभिधानात्, तत्साधारणत्वे वा न तस्य व्यक्तिस्वरूपाव्यतिरिच्यमानमूर्त्तिरूपता, सामान्यरूपतया भेदाव्यतिरिच्यमानस्वरूपस्य विरोधात्, तन्न व्यक्त्यव्यतिरिक्तमपि सामान्यं हेतुः, व्यक्तिस्वरूपवदसाधारणत्वेन गमकत्वायोगात्, अत एव न व्यक्तिरूपमपि हेतुः, न चोभयं परस्परानुविद्धं हेतुः, उभयदोषप्रसङ्गात् । न चानुभयमन्योन्यव्यवच्छेदरूपाणामेकाभावे द्वितीयविधानादनुभयस्यासत्त्वेन हेतुत्वायोगात् । बुद्धिप्रकल्पितञ्च सामान्यमवस्तुरूपत्वात्साध्येनाप्रतिबद्धत्वादसिद्धत्वाच्च न हेतुः, तस्मात् पदार्थान्तरानुवृत्तव्यावृत्तरूपमात्मानं बिभ्रदेकमेव पदार्थस्वरूपं प्रतिपत्तुर्भेदाभेदप्रत्ययप्रसूतिनिबन्धनं हेतुत्वेनोपादीयमानं तथाभूतसाध्यसिद्धिनिबन्धनमभ्युपगन्तव्यम् । न च यदेव रूपं रूपान्तराद्व्यावर्त्तते तदेव कथमनुवृत्तिमासादयति, यच्चानुवर्त्तते तत् कथं व्यावृत्तिरूपतामात्मसात्करोतीति वक्तव्यम्, भेदाभेदरूपतयाऽध्यक्षतः प्रतीयमाने वस्तुस्वरूपे विरोधासिद्धेः तस्मादेकान्तेन भिन्नसामान्यविशेषवादौ द्वावप्यसद्वादाविति सिद्धम् ॥ ५६ ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलिते सम्मतितत्त्वसोपाने हेत्वाभासविमर्शनं नाम षट्त्रिंशं सोपानम् ॥



१ एकस्यां व्यक्तौ सर्वात्मना तस्य सद्भावादिति भावः ।

# अथ सन्मार्गप्रदर्शनम् ।

सामान्यविशेषयोः स्वरूपं परस्परविविक्तमनूद्य निराकरोति—

**दव्वट्ठियवत्तव्वं सामण्णं पज्जवस्स य विसेसो ।**
**एए समोवणीआ विभज्जवायं विसेसिंति ॥ ५७ ॥**

द्रव्यार्थिकवक्तव्यं सामान्यं पर्यवस्य च विशेषः ।　　5
एतौ समुपनीतौ विभज्यवादं विशेषयतः ॥ छाया ॥

द्रव्यार्थिकेति, द्रव्यास्तिकस्य वाच्यं विशेषनिरपेक्षं सामान्यम्, पर्यायास्तिकस्य चानुस्यूताकारविविक्तो विशेषो वाच्यः, एतौ सामान्यविशेषावन्योन्यनिरपेक्षावेकैकरूपतया परस्परप्राधान्येन वा प्रदर्शितौ सत्यस्वरूपमनेकान्तवादमतिशयाते, असत्यरूपतया ततस्तावतिशयं लभेते इति यावत्, विशेषे साध्येऽनुगमाभावतः सामान्ये साध्ये सिद्धसाधनात्साधन- 10 वैफल्यतः प्रधानोभयसाध्ये उभयदोषापत्तितः, अनुभयरूपे साध्ये उभयाभावतस्साध्यत्वायोगात् । तस्माद्विवादास्पदीभूतसामान्यविशेषोभयात्मकसाध्यधर्माधारसाध्यधर्मिणि अन्योन्यानुविद्धसाधर्म्यवैधर्म्यस्वभावद्वयात्मकैकहेतुप्रदर्शनतो नैकान्तवादपक्षोक्तदोषावकाशः, अत एव गाथापश्चार्द्धेन एतौ सामान्यविशेषौ समुपनीतौ परस्परसव्यपेक्षतया स्यात्पदप्रयोगतो धर्मिण्यवस्थापितौ विभज्यवादमेकान्तवादलक्षणं विशेषयतो निराकुरुतः, एवमेव 15 तयोरात्मलाभात्, अन्यथाऽनुमानविषयस्योक्तन्यायतोऽसत्त्वादित्यपि दर्शितम ॥ ५७ ॥

यत्रानुमानविषयतयाऽभ्युपगम्यमाने साध्ये दूषणवादिनोऽवकाश एव न भवति तदेव साध्यं हेतुविषयतयाऽभ्युपगन्तव्यमिति दर्शयति—

**हेउविसओवणीयं जह वयणिज्जं परो नियत्तेइ ।**
**जइ तं तहा पुरिल्लो दाइंतो केण जीव्वंतो ॥ ५८ ॥**　　20

हेतुविषयोपनीतं यथा वचनीयं परो निवर्त्तयति ।
यदि तत्तथा पुरिल्लोऽदर्शयिष्यत केनाजेष्यत ॥ छाया ॥

हेत्विति, हेतुविषयतयोपदर्शितं साध्यधर्मिलक्षणं वस्तु पूर्वपक्षवादिना अनित्यः शब्द इत्येवं यथा परो निवर्त्तयति, सिद्धसाध्यताननुगमदोषाद्युपन्यासेनैकान्तवचनीयस्य तदितरधर्माननुषक्तस्यानेकदोषदुष्टतया निवर्त्तयितुं शक्यत्वात् । यदि तदेव स्याच्छब्दयोजनया 25 द्वितीयधर्माक्रान्तं पुरिल्लः—पूर्वपक्षवादी अदर्शयिष्यत ततोऽसौ नैव केनचिदजेष्यत, जितश्चासौ तथाभूतस्य साध्यधर्मिणोऽप्रदर्शनात् प्रदर्शितस्य चैकान्तरूपस्यासत्त्वात्, तत्प्रदर्शकोऽसत्यवादितया निग्रहार्हः ॥ ५८ ॥

एतदेवाह—

**एयन्तासब्भूयं सब्भूयमणिच्छियं च वयमाणो ।**
**लोइयपरिच्छियाणं वयणिज्जपहे पडइ वादी ॥ ५९ ॥**

एकान्तासद्भूतं सद्भूतमनिश्चितञ्च वदन् ।
5 लौकिकपरीक्षकाणां वचनीयपक्षे पतति वादी ॥ छाया ॥

**एकान्तेति,** असत्यमेकान्तेनासद्भूतं सद्भूतमप्यनिश्चितं वदन् वादी लौकिकानां परीक्षकाणाञ्च वचनीयमार्गे पतति । अनेकान्तात्मकाद्धि हेतोः तथाभूतमेव साध्यधर्मिणं साधयन् वादी सद्वादी भवेदिति तथैव साध्याविनाभूतो हेतुर्धर्मिणि तेन प्रदर्शनीयः, तन्मात्रादेव साध्यप्रतिपत्तेः सपक्षविपक्षयोः सदसत्त्वे नावश्यं प्रदर्शनीये । तथापि तत्र तयोर्विद्यमानतयाऽ
10 वश्यं प्रदर्शनीयत्वे ज्ञानत्वादीनामप्यपरधर्माणां तत्र सतां प्रदर्शनीयता स्यात् । यदि सामर्थ्यात्ते प्रतीयन्त एवेति न प्रदर्श्यन्ते तदाऽन्वयव्यतिरेकावपि तत एव नावश्यं प्रदर्शनीयौ, अत एव दृष्टान्तोऽपि नावश्यं वाच्यः, तस्य साधर्म्यवैधर्म्यप्रदर्शनपरत्वात् । उपनयनिगमनयोस्तु दूरापास्तता, तदन्तरेणापि साध्याविनाभूतहेतुप्रदर्शनमात्रात् साध्यप्रतिपत्त्युत्पत्तेः, अन्यथा तदयोगात् । हेतोस्त्रैलक्षण्यप्रदर्शनवादिनस्तु निरंशे त्रैलक्षण्यविरोधान्निरं-
15 शवस्त्वभ्युपगमविरोधः स्यात्, परिकल्पितस्वरूपत्रैरूप्याभ्युपगमोऽप्यसङ्गतः, परिकल्पितस्य परमार्थसत्त्वे तद्दोषानतिवृत्तेः, अपरमार्थसत्त्वे तु तल्लक्षणत्वायोगः, असतः सल्लक्षणत्वविरोधात्, न हि कल्पनाव्यवस्थापितलक्षणभेदाल्लक्ष्यभेदो युक्त इति लिङ्गस्य निरंशस्वभावस्य किञ्चिद्रूपं वाच्यम्, न च साधर्म्यादिव्यतिरेकेण तस्य स्वरूपं प्रदर्शयितुं शक्यत इति तस्य निःस्वभावताप्रसक्तिः । न चैकलक्षणहेतुवादिनोऽप्यनेकान्तात्मकवस्त्वभ्यु-
20 पगमाद्दर्शनव्याघात इति वाच्यम्, प्रयोगनियम एवैकलक्षणो हेतुरित्यभिधानात्, न च स्वभावनियमे तथाभूतस्य शशशृङ्गादेरिव निःस्वभावत्वम्, गमकताङ्गनिरूपणयैकलक्षणो हेतुरिति व्यवस्थापितत्वात् । न चैकान्तवादिनां प्रतिबन्धग्रहणमपि युक्तिसङ्गतम्, अविचलितस्वरूपे आत्मनि ज्ञानपौर्वापर्याभावात्, प्रतिक्षणध्वंसिन्यप्युभयग्रहणानुवृत्तैकचैतन्यस्याभावात्, कारणस्वरूपग्राहिणा ज्ञानेन कार्यस्य तत्स्वरूपग्राहिणा च कारणस्य ग्रहणासम्भ-
25 वात्, एकेन च द्वयोरग्रहणे कार्यकारणभावादिप्रतिबन्धग्रहणायोगात् । न च कार्यानुभवानन्तरभाविस्मरणेन कार्यकारणभावोऽनुसन्धीयत इति वक्तव्यम्, अनुभूत एव स्मरणोदयेन प्रतिबन्धस्योभयनिष्ठस्य केनचिदननुभवात्, उभयस्य पूर्वापरकालभावित्वेन एकेनाग्रहणात्, न वा स्मरणस्य कार्यानुभवो जनकः, तदनन्तरमेव स्मरणस्याभावात्, नापि क्षणिकैकान्तवादे कार्यकारणभावः सम्भवतीत्युक्तमेव, सन्तानादिकल्पनापि नात्रोपयोगिनी । स्मरणकाले

च नातीततद्विषयस्मरणमात्रं प्रतीयते किन्तु तदनुभवितापि, अहमेवमिदमनुभूतवानित्यनुभविज्ञाधारानुभूतविषयस्मृत्यध्यवसायादेकाधारे अनुभवस्मरणे अभ्युपगन्तव्ये, तदभावे तथाध्यवसायानुपपत्तेः । न चानुभवस्मरणयोरनुगतचैतन्याभावे तद्धर्मतया प्रतिपत्तिर्युक्ता, न हि यत्प्रतिपत्तिकाले यन्नास्ति तत्तद्धर्मतया प्रतिपत्तुं युक्तम्, बोधाभावे ग्राह्यग्राहकसंवित्तित्रितयप्रतिपत्तिवत्, अस्ति च तद्धर्मतयाऽनुभवस्मरणयोस्तदा प्रतिपत्तिरिति कथं क्षणिकैकान्तवादः, तत्र वा प्रतिबन्धनिश्चय इति । न चैकान्तवादिनः सामान्यादिकं साध्यं सम्भवतीत्युक्तम्, तस्मादनेकान्तात्मकं वस्त्वभ्युपगन्तव्यम्, अध्यक्षादेः प्रमाणस्य तत्प्रतिपादकत्वेन प्रवृत्तेः ॥ ५९ ॥

स एव सन्मार्ग इत्युपसंहरति—

**दव्वं खित्तं कालं भावं पज्जायदेससंयोगे ।**
**भेदं च पडुच्च समा भावाणं पण्णवणपज्जा ॥ ६० ॥**

द्रव्यं क्षेत्रं कालं भावं पर्यायदेशसंयोगान् ।
भेदं च प्रतीत्य समा भावानां प्रज्ञापनापर्या ॥ छाया ॥

द्रव्यमिति, द्रव्यक्षेत्रकालभावपर्यायदेशसंयोगभेदानष्टौ भावानाश्रित्य वस्तुनो भेदे सति सर्ववस्तुविषयायाः स्याद्वादरूपायाः प्रज्ञापनायाः पर्या—पन्था मार्ग इति यावत् । तत्र द्रव्यं पृथिव्यादि, क्षेत्रं स्वारम्भकावयवस्वरूपम्, तदाश्रयं वाऽऽकाशं, कालं युगपदयुगपच्चिरक्षिप्रप्रत्ययलिङ्गलक्षणम्, वर्त्तनात्मकं वा नवपुराणादिलक्षणम्, भावं मूलाङ्कुरादिलक्षणम्, पर्यायं रूपादिस्वरूपम्, देशं मूलाङ्कुरपत्रकाण्डादिक्रमभाविविभागम्, संयोगं भूम्यादिप्रत्येकसमुदायम्, द्रव्यपर्यायलक्षणं भेदं प्रतिक्षणविवर्त्तात्मकं वा जीवाजीवादिभावानां प्रतीत्य समानतया तदतदात्मकत्वेन प्रज्ञापना—निरूपणा या सा सत्पथ इति, न हि तदतदात्मकैकद्रव्यत्वादिभेदाभावे खरविषाणादेर्जीवादिद्रव्यस्य विशेषः, यतो न द्रव्यक्षेत्रकालभावपर्यायदेशसंयोगभेदरहितं वस्तु केनचित् प्रत्यक्षाद्यन्यतमप्रमाणेनावगन्तुं शक्यम्, न च प्रमाणागोचरस्य सद्व्यवहारयोग्यतेति तदतदात्मकं तदभ्युपेयम् । न ह्येकान्ततस्तदात्मकं द्रव्यादिभेदभिन्नं व्यतिरिक्तञ्च प्रमाणतस्तन्निरूपयितुं शक्यम् द्रव्यादिव्यतिरिक्तस्य शशशृङ्गवत् कुतश्चित् प्रमाणादप्रतीतेः, न हि ततो द्रव्यादीनां भेदेऽपि समवायसम्बन्धात्तत्सम्बन्धिताप्रसङ्गः, सम्बन्धिभेदेन भेदाभेदकल्पनाद्वयानतिवृत्तेः, भेदपक्षे समवायानेकत्वप्रसङ्गः, सम्बन्धिभेदेन भेदात्, संयोगवदनित्यताप्रसङ्गश्च । अभेदकल्पे तु सम्बन्धिसङ्करप्रसङ्गः, न चैवमस्ति, छत्रदण्डकुण्डलादिसम्बन्धविशेषविशिष्टदेवदत्तादेरिव

जातिगुणादेः समवायिनो भेदेनोपलम्भात्, य एव दण्डदेवदत्तयोर्हि सम्बन्धो न स एव छत्रादिभिरपि, तत्सम्बन्धाविशेषे तद्विशेषणविशेष्यवैफल्यप्रसङ्गात्, न हि विशेष्यं धर्मान्तराद्व्यवच्छिद्य स्वात्मन्यवस्थापयद्विशेषणं विशेषणरूपतां प्रतिपद्यते, एवं समवायस्याविशेषे द्रव्यत्वादीनामपि विशेषणानामविशेषाच्च जीवाजीवादिद्रव्यव्यवच्छेदकता स्यादिति कथं न समवायिसङ्करप्रसक्तिर्भवेत् । नापि समवायस्तद्ग्राहकप्रमाणाभावात् सम्भवति, तदभावे च न वस्तुनो वस्तुत्वयोग इति तदनेकान्तात्मकैकरूपमभ्युपगन्तव्यम्, न चैकानेकात्मकत्वं वस्तुनो विरुद्धम्, प्रमाणप्रतिपन्ने वस्तुनि विरोधासम्भवात्, तथाहि आत्मादिवस्त्वेकानेकात्मकम् प्रमेयत्वात्, चित्ररूपपटवत्, ग्राह्यग्राहकाकारसंवित्तिरूपैकविज्ञानवद्वा, न च वैशेषिकं प्रति चित्रपटरूपस्यैकानेकत्वमसिद्धम्, प्राक्साधितत्वात् । नापि ग्राह्यग्राहकसंवित्तिलक्षणरूपत्रयात्मकमेकं विज्ञानं बौद्धं प्रत्यसिद्धम्, तथाभूतविज्ञानस्य प्रत्यात्मसंवेदनीयस्य प्रतिक्षेपे सर्वप्रमाणप्रमेयप्रतिक्षेपप्रसक्तेः, स्वार्थाकारयोर्विज्ञानमभिन्नस्वरूपम्, विज्ञानस्य च वेद्यवेदकाकारौ भिन्नात्मानौ कथञ्चिदनुभवगोचरापन्नौ, एतच्च प्रतिक्षणं स्वभावभेदमनुभवदपि न सर्वथा भेदवत् संवेद्यते इति संविदात्मनः स्वयमेकस्य क्रमवर्त्त्येनेकात्मकत्वं न विरुद्धमिति कथमध्यक्षादिविरुद्धं निरन्वयविनाशित्वमभ्युपगन्तुं युक्तम्, न हि कदाचित् कचित् क्षणिकत्वमन्तर्बहिर्वोऽध्यक्षतोऽनुभूयते, तथैवेति निर्णयानुत्पत्तेः, भेदात्मन एवान्तर्विज्ञानस्य बहिर्घटादेश्चाभिन्नस्य निश्चयात् । तथाभूतस्याप्यनुभवस्य भ्रान्तिकल्पनायां न किञ्चिदध्यक्षमभ्रान्तं भवेत्, न हि ज्ञानं वेद्यवेदकाकारशून्यं स्थूलाकारविविक्तं परमाणुरूपं वा घटादिकमेकं निरीक्षामहे यतो बाह्याध्यात्मिकं भेदाभेदरूपतयाऽनुभूयमानं भ्रान्तविज्ञानविषयतया व्यवस्थाप्येत, यदा चैकान्तप्रतिक्षणविशरारुताऽध्यक्षविरुद्धा तदा कथं तत्रानुमानमपि प्रवर्त्तेत, अध्यक्षबाधितविषयत्वात्तस्य, अत एव क्षणिकतैकान्तसाधनाय उपादीयमानः सर्व एव सत्त्वादिहेतुर्विरुद्ध एव, अनेकान्त एव तस्य सम्भवात् । अर्थक्रियालक्षणं हि सत्त्वं नैकान्ते क्रमयौगपद्याभ्यां सम्भवति, यतो यस्मिन् सत्येव यद्भवति तत्तस्य कारणमितरच्च कार्यमिति कारणलक्षणम्, क्षणिके च कारणे सति यदि कार्योत्पत्तिर्भवेत्तदा कार्यकारणयोः सहोत्पत्तेः किं कस्य कारणं किं वा कार्यं व्यवस्थाप्येत, त्रैलोक्यस्यैकक्षणवर्त्तिता च प्रसज्येत । यदनन्तरं यद्भवति तत्तस्य कार्यमितरत् कारणमिति व्यवस्थायां कारणाभिमते वस्तुन्यसत्येव भवतस्तदनन्तरभावित्वस्य दुर्घटत्वात्, चिरतरविनष्टादपि च तस्य भावो भवेत् तदभावाविशेषात् । न चानन्तरस्यापि कार्योत्पत्तिकालमप्राप्य विनाशमनुभवतश्चिरातीतस्येव कारणता, यतोऽर्थक्रियाऽक्षणक्षयेण विरुध्येत, प्राक्कालभावित्वेन कारणत्वे तु सर्वं सर्वस्य कारणं स्यात् सर्ववस्तुक्षणानां विवक्षितकार्यं

प्रति प्राग्भावित्वाविशेषात्, तथा च स्वपरसन्तानव्यवस्थाऽप्यनुपपन्नैव स्यात् सादृश्यादपि तदसम्भवात् सर्वथा सादृश्ये हि कार्यस्य कारणरूपताप्रसक्त्यैकक्षणमात्रं सन्तानः स्यात्, कथञ्चित्सादृश्येऽनेकान्तवादप्रसङ्गः, न वा सादृश्यं भवदभिप्रायेणास्ति, सर्वत्र वैलक्षण्याविशेषात्, अन्यथा स्वकृतान्तप्रकोपात्, नापि क्षणिकैकान्तपक्षेऽन्वयव्यतिरेकप्रतिपत्तिः, साध्यसाधनयोस्त्रिकालविषययोः साकल्येन व्याप्तेरसिद्धेर्यत्सत् तत्सर्वं क्षणिकं संश्च शब्द 5 इत्याद्यनुमानप्रवृत्तिः कथं भवेत्, अकारणस्य प्रमाणविषयत्वानभ्युपगमे साध्यसाधनयोस्त्रिकालविषयव्याप्तिग्रहणस्य दूरोत्सारितत्वात्। तथा नाननुकृतान्वयव्यतिरेकं कारणं नाकारणं विषय इति वचनमनुमानोच्छेदकञ्च प्रसक्तम्, ग्राह्यग्राहकाकारज्ञानैकत्ववद्ग्राह्याकारस्यापि युगपदनेकार्थावभासिनश्चित्रैकरूपता एकान्तवादं प्रतिक्षिपत्येव। भ्रान्तात्मनश्च दर्शनस्यान्तर्बहिश्चाभ्रान्तात्मकत्वं कथञ्चिदभ्युपेयम्, अन्यथा कथं स्वसंवेदनाध्यक्षता तस्य भवेत्, 10 तदभावे च कथं तत्स्वभावसिद्धिर्युक्ता, कथञ्च भ्रान्तज्ञानं भ्रान्तिरूपतया आत्मानमसंविदज्ज्ञानरूपतया वाऽवगच्छद्बहिस्तथा नावगच्छेत्, यतो भ्रान्तैकान्तरूपता तिमिराद्युपप्लुतदृशां भवेत्, कथञ्च भ्रान्तविकल्पज्ञानयोः स्वसंवेदनमभ्रान्तमविकल्पं वाऽभ्युपगच्छन्ननेकान्तं नाभ्युपगच्छेत्, ग्राह्यग्राहकसंवित्त्याकारविवेकं संविदः स्वसंवेदनेनासंवेदयन् सविद्रूपताञ्चानुभवन् कथं क्रमभाविनोर्विकल्पेतरात्मनोरनुगतसंवेदनात्मानमनुभवप्रसिद्धं प्रति- 15 क्षिपेत्, ततः क्रमसहभाविनः परस्परविलक्षणान् स्वभावान् यथावस्थितरूपतया व्याप्नुवत्सकललोकप्रतीतं स्वसंवेदनमनेकान्ततत्त्वव्यवस्थापकमेकान्तवादप्रतिक्षेपि प्रतिष्ठितमिति निरंशक्षणिकस्वलक्षणमन्तर्बहिश्चानिश्चितमपि संवित्तिर्विषयीकरोतीति कल्पना अयुक्तिसंगतैव, अप्रमाणप्रसिद्धकल्पनायाः सर्वत्र निरंकुशत्वात् सकलसर्वज्ञताकल्पनाप्रसक्तेः, न ह्येकस्य संवित्तिरपरस्यासंवित्तिः, सर्वत्र सम्बन्धाभावाविशेषात्, न हि वास्तवसम्बन्धाभावे 20 परिकल्पितस्य तस्य नियामकत्वं युक्तमतिप्रसङ्गात्। न च वास्तवः सम्बन्धः परस्य सिद्ध इति तादात्म्यतदुत्पत्त्योरभावात् साध्यसाधनयोः प्रतिबन्धनियमाभावेऽनुमानप्रवृत्तिर्दूरोत्सारितैव, अथार्थक्रियालक्षणं सत्त्वमक्षणिकेऽवस्थापयतीति चेन्न, तत्रापि क्रमयौगपद्याभ्यां तस्य विरोधात्, तत्करणस्वभावस्याक्षणिकस्य तदकरणविरोधेन क्रमकारित्वासम्भवात्, पूर्वं तदकरणसामर्थ्यस्य पश्चादपि तत्करणसामर्थ्यासम्भवात्, अप- 25 रिणामित्वेनानाधेयाप्रहेयातिशयत्वात्, स्वभावोत्पत्तिविनाशाभ्युपगमे च नित्यैकान्तविरोधः स्यात्, ततो व्यतिरिक्तस्यातिशयस्य करणेऽनतिशयस्य तस्य प्रागिव पश्चादपि करणासम्भवः। सहकार्यपेक्षापि तस्यायुक्तैव, प्रागसहायस्याकरणस्वभावस्य पुनः ससहायस्य कार्यकरणाङ्गीकारे तत्कृतातिशयमनङ्गीकुर्वतस्तदपेक्षायोगात्, तस्मादपरिणामी भावो

न क्रमेण कार्यनिर्वर्त्तकः । नापि यौगपद्येन, कालान्तरेऽकिञ्चित्करत्वया तस्यावस्तुत्वापत्तेः क्षणमात्रावस्थायिताप्रसक्तेश्च । तस्मादन्यप्रकाराभावेन व्यापिकाऽर्थक्रिया ततो निवर्त्तमाना स्वव्याप्यां सत्तामादाय निवर्त्तेत इति यत्सत्तत्सर्वमनेकान्तात्मकं सिद्धम्, अन्यथा प्रत्यक्षादिविरोधप्रसङ्गः, न हि भेदमन्तरेण कदाचित् कस्यचिदभेदोपलब्धिः
5 हर्षविषादाद्यनेकाकारविवर्तात्मकस्यान्तश्चैतन्यस्य स्वसंवेदनाध्यक्षतः वर्णसंस्थानसदाद्यनेकाकारस्य स्थूलस्य पूर्वापरस्वभावपरित्यागोपादानात्मकस्य घटादेर्बहिरेकस्येन्द्रियजाध्यक्षतः संवेदनात्, सुखादिभेदविकलतया चैतन्यघटादेः कदाचिदप्युपलम्भागोचरत्वात्, महासामान्यस्यावान्तरसामान्यस्य वा सर्वगतासर्वगतधर्मात्मकस्य व्यक्त्यतिरिक्तस्वभावतया कदाचित्कचिदनुपलब्धेर्द्रव्यगुणकर्मणां कथं तद्विशिष्टतया प्रतिपत्तिर्भवेत् । समवायस्य चान-
10 वस्थादोषतः सम्बन्धान्तराभावात् द्रव्यगुणकर्मसामान्यविशेषाणामन्योन्यं तादात्म्यानिष्टौ तेष्ववृत्तेः सर्वपदार्थस्वरूपाप्रसिद्धिः स्यात् । स्वत एव द्रव्यादिषु वृत्तौ समवायमन्तरेणापि द्रव्यादयोऽपि स्वाधारेषु वृत्तिं स्वत एवात्मसात्करिष्यन्तीति समवायकल्पनावैयर्थ्यप्रसक्तिः । अवयविनोऽपि स्वारम्भकावयवेषु तादात्म्यानभ्युपगमे सामान्यस्येव तद्वत्सु वृत्तिविकल्पादनवस्थादिदोषप्रसङ्गान्न वृत्तिर्भवेत्, वृत्तौ वा साकल्येन प्रत्याधारं ग्रहणासम्भ-
15 वात् व्यक्तिवद्भेदप्रसक्तिः खण्डशः प्रतिपत्तेरगृहीतस्वभावाद्गृहीतस्वभावस्य भेदात्, तथा च सामान्यादिरूपताहानिप्रसक्तिः । किञ्च सर्वस्वाधारव्यापिनः सामान्यस्य द्रव्यस्य वा तद्गतां सामस्त्येन ग्रहणासंभवात् कथं तदग्रहे तद्ग्रहणं भवेत्, आधाराप्रतिपत्तौ तदाधेयस्य तत्त्वेनाप्रतिपत्तेः, सामान्याद्यंशेषु गृहीतेष्वपि सामान्यादेर्वृत्तिविकल्पादेर्दोषस्तेष्वपि पूर्ववत्समानः, तदंशग्रहणेऽपि च सामान्यस्य व्यापिनः कदाचिदप्यप्रतिपत्तेः सद्द्रव्यमित्यादिप्रति-
20 पत्तिः तद्वत्सु न कदाचिद्भवेत्, तदंशानां सामान्यादेरत्यंतभेदात्, अत एव द्रव्यादिषट्पदार्थव्यवस्थाप्यनुपपन्ना भवेत्, प्रतिभासगोचरचारिणां सामान्याद्यंशानां पदार्थान्तरताप्रसक्तेः । अथ निरंशं सामान्यमभ्युपगम्यते तर्हि सकलस्वाश्रयप्रतिपत्त्यभावतो मनागपि न सामान्यप्रतिपत्तिरिति सद्द्रव्यं पृथिवीत्यादिप्रतिपत्तेर्नितरामभावः स्यात् । तदंशानां सामान्याद्भेदाभेदकल्पनायां द्रव्यादय एव भेदाभेदात्मकाः किं नाभ्युपगम्यन्त इति
25 सामान्यादिप्रकल्पना दूरोत्सारितैवेति कुतस्तद्वैकान्तकल्पना, ततः सामान्यविशेषात्मकं सर्वं वस्तु सत्त्वात्, न हि विशेषरहितं सामान्यमात्रं सामान्यरहितं विशेषमात्रं वा सम्भवति, तादृशः कचिदपि वृत्तिविरोधात्, वृत्त्या हि सत्त्वं व्याप्तं स्वलक्षणात् सामान्यलक्षणाद्वा तादृशाद्वृत्तिनिवृत्त्या निवर्त्तेत एव, यतः कचिद्वृत्तिमतोऽपि स्वलक्षणस्य न देशान्तरवर्त्तिनान्येन संयोगः तत्संसर्गाव्यवच्छिन्नस्वभावान्तरविरहात्, विशेषविक-

लसामान्यवत्, एकस्य प्रतिसम्बन्धिस्वभावविशेषाभ्युपगमे विशेषाणां तत्स्वलक्षणं सामान्य-
लक्षणमेव स्यात् । न च विशेषैरन्यदेशावस्थितैरसंयुक्तस्यैकत्र तस्य वृत्तिः अव्यवधानाविशे-
षात्, एवञ्च स्वभावविशेषाणां सामान्यरूपाः सर्वे एव भावा विशेषरूपाश्च । तत्र देशका-
लावस्थाविशेषनियतानां सर्वेषामपि सत्त्वं सामान्यमेकरूपमव्यवधानात्, तस्य च ते
विशेषा एवानेकं रूपम्, यतस्तदेव सत्त्वं परिणामविशेषापेक्षया गोत्वब्राह्मणत्वादिलक्षणा 5
जातिः परिणामविशेषाश्च तदात्मका व्यक्तय इति परस्परव्यावृत्तानेकपरिणामयोगा-
देकस्यैकानेकपरिणतिरूपता संशयज्ञानस्येवाविरुद्धा, व्यक्तिव्यतिरिक्तस्य सामान्यस्य उप-
लब्धिलक्षणप्राप्तस्यानुपलब्धेः शशशृङ्गवदसत्त्वात् सन् घट इत्यादिप्रत्ययः सामान्यविशेषा-
त्मकैकवस्तुस्वभावेऽबाधितरूपो न स्यात् । न च चक्षुरादिबुद्धौ वर्णाकृत्यक्षराकारशून्यं
सामान्यं परव्यावर्णितस्वरूपमवभासते, प्रतिभासभेदप्रसङ्गात्, तस्य सर्वगतत्वे चान्तरालेऽ- 10
प्युपलंभप्रसङ्गः, आश्रयस्याभिव्यंजकस्याभावाभ्युपगमेऽभिव्यक्तादनभिव्यक्तस्वरूपस्य भेद-
प्रसङ्गात् सामान्यरूपताक्षतिः, नित्यैकस्वभावस्य चाश्रयभावाभावावभिव्यक्त्यनभिव्यक्ती
सत्प्रत्ययकर्तृत्वाकर्तृत्वे न च युज्येते, एकस्य तद्योगे चानेकान्तसिद्धिरेव । स्वाश्रयसर्वगतत्वेऽपि
एकेनाश्रयेणैकदा प्रकाशितायाः सत्तायास्सर्वदा सर्वत्र प्रकाशितत्वात् सकलवस्तुप्रपञ्चस्य
सकृदुपलब्धिप्रसङ्गः, न वा कस्यचिदप्युपलब्धिः स्यादविशेषात्, प्रकारान्तरेण प्रतीत्यभ्यु- 15
पगमेऽनेकान्तवाद एव । स्वतः सतां विशेषाणां सत्तासम्बन्धानर्थक्यमसताञ्च तत्सम्बन्धा-
नुपपत्तिरतिप्रसङ्गात् । निष्क्रियसामान्यसम्बन्धाद्व्यक्तीनामक्रियत्वं सामान्यस्य वा क्रियाव-
त्त्वादव्यापकत्वं स्यात् । व्यक्त्यव्यतिरेके व्यक्तिस्वलक्षणवन्न तस्य सामान्यरूपता भवेत्
व्यक्तीनां वा सामान्याव्यतिरेकाद्व्यक्तिस्वरूपहानेः सामान्यस्य तद्रूपता न भवेत् । न च व्य-
तिरेकाव्यतिरेकपक्षेऽप्यनवस्थोभयपक्षदोषवैयधिकरण्यसंशयविरोधादिदोषप्रसङ्गात् सर्वथा 20
तदभावः, अनवस्थादिदोषस्य प्राक्प्रतिषिद्धत्वात्, प्रतीयमानेऽपि तथाभूते वस्तुनि विरो-
धादिदोषासञ्जने प्रकारान्तरेण प्रतिभासासम्भवात् सर्वशून्यताप्रसङ्गः । न च सैवास्त्विति
वक्तव्यम्, स्वसंवेदनमात्रस्याप्यभावप्रसक्तो निष्प्रमाणिकायास्तस्या अप्यभ्युपगन्तुमशक्य-
त्वात्, तथापि तस्या अभ्युपगमे वरमनेकान्तात्मकं वस्त्वभ्युपगन्तुं युक्तम्, तस्याबाधितप्रती-
तिगोचरत्वात् । तेन रूपादिक्षणिकविज्ञानमात्रशून्यताभ्युपगमः, पृथिव्याद्येकान्तनित्यत्वा- 25
भ्युपगमः, आत्माद्वैताङ्गीकरणम्, परलोकाभावनिरूपणम्, द्रव्यगुणादेरत्यन्तभेदप्रतिज्ञानम्
हिंसातो धर्माभ्युपगमः, दीक्षातो मुक्तिप्रतिपादनमित्याद्येकान्तवादिप्रसिद्धं सर्वमसत् प्रतिप-
त्तव्यम्, तत्प्रतिपादकहेतूनां प्रदर्शितरीत्याऽनेकान्तव्याप्तत्वेन विरोधात्, इतरधर्मसव्यपेक्ष-

स्यैकान्तवाद्यभ्युपगतस्य सर्वस्य पारमार्थिकत्वादभिष्वङ्गादिप्रतिषेधार्थं विज्ञानमात्राद्यभिधा-
नस्य सार्थकत्वात्, तथाहि अहमस्यैवायं ममैवेत्येकान्तनित्यत्वस्वस्वामिसम्बन्धाभिनिवेश-
प्रभवरागादिप्रतिषेधपरं क्षणिकरूपादिप्रतिपादनं युक्तमेव, सालम्बनज्ञानैकान्तप्रतिषेधपरं
विज्ञानमात्राभिधानम्, सर्वविषयाभिष्वङ्गनिषेधपरं शून्यताप्रकाशनम्, क्षणिक एवायं पृथि-
5 व्यादिरित्येकान्ताभिनिवेशमूलद्वेषादिनिषेधपरं तन्नित्यत्वप्रणयनम्, जात्यादिमदोन्मूलतानु-
गुणमात्माद्यद्वैतप्रकाशनम्, जन्मान्तरजनितकर्मफलभोक्तृत्वमेव धर्मानुष्ठानमित्येकान्तनिरा-
सप्रयोजनं परलोकाभावावबोधनम्, द्रव्याद्यव्यतिरेकैकान्तप्रतिषेधाभिप्रायं तद्भेदाख्यानम्,
अप्रमत्तस्य योगनिबन्धनप्राणव्यपरोपणस्याहिंसात्वप्रतिपादनार्थं हिंसातो धर्म इति वचनम्,
रागद्वेषमोहतृष्णादिनिबन्धनस्य प्राणव्यपरोपणस्य दुःखसंवेदनीयफलनिर्वर्तकत्वेन हिंसा-
10 त्वोपपत्तेः, अत एव वैदिकहिंसाया अपि तन्निमित्तत्वेऽपायहेतुत्वमन्यहिंसावत् प्रसक्तम्, न
च तस्या अतन्निमित्तत्वम्, चित्रया यजेत पशुकाम इति तृष्णानिमित्तत्व श्रवणात्। न चैवं-
विधस्य वाक्यस्य प्रामाण्यमपि, तत्प्राप्तिनिमित्ततद्धिंसोपदेशकत्वात्, तृष्णादिवृद्धिनिमित्त-
तदन्यतद्विघातोपदेशवाक्यवत्। न चापौरुषेयत्वादस्य प्रामाण्यं तस्य निषिद्धत्वात्। न च
पुरुषप्रणीतस्य हिंसाविधायकस्य तस्य प्रामाण्यम्, ब्राह्मणो हन्तव्य इति वाक्यवत्। न च
15 वेदविहितत्वात्तद्धिंसाया अहिंसात्वम्, प्रकृतहिंसाया अपि तत्त्वोपपत्तेः। न च ब्राह्मणो न
हन्तव्य इति तद्वाक्यबाधितत्वान्न प्रकृतहिंसायास्तद्विहितत्वम्, न वै हिंस्रो भवेदिति वेद-
वाक्यबाधितचित्रादियजनवाक्यविहितहिंसावत् प्रकृतहिंसायास्तद्विहितत्वोपपत्तेः। अथ
ब्राह्मणो हन्तव्य इतिवाक्यं न कचिद्वेदे श्रूयते, न, उत्सन्नानेकशाखानां तत्राभ्युपगमात्,
तथा च सहस्रवर्त्मा सामवेद इत्यादिश्रुतिः। अथ यज्ञादन्यत्र हिंसाप्रतिषेधः, तत्र च तद्वि-
20 धानम्, यथा चान्यत्र हिंसाऽपायहेतुरित्यागमात् सिद्धं तथा तत एव तत्र स्वर्गहेतुरित्यपि
सिद्धम्, न च यदेकदा एकत्रापायहेतुः तत्सर्वदा सर्वत्र तथेत्यभ्युपगन्तव्यम्, आतुरस्वस्थ-
भुजिक्रियावदवस्थादिभेदेन भावानां परस्परविरुद्धफलकर्तृत्वोपलम्भात्, असम्यगेतत्, तृष्णा-
दिनिमित्तहिंसाया अपायहेतुत्वेन सर्वशास्त्रेषु प्रसिद्धेः, तृष्णादिनिमित्ता च प्रकृतहिंसेत्युक्त-
त्वात्। न च यन्निमित्तत्वेन यत् प्रसिद्धं तत्फलान्तरार्थित्वेन विधीयमानमौत्सर्गिकं दोषं न
25 निर्वर्तयति, यथाऽऽयुर्वेदप्रसिद्धं दाहादिकं रुगपगमार्थितया विधीयमानं स्वनिमित्तं दुःखम्,
क्लिष्टकर्मसम्बन्धहेतुतया च मखविधानादन्यत्र हिंसादिकं शास्त्रे प्रसिद्धमिति सप्ततन्तावपि

---

१ न च जिनायतनविधापनादौ पृथिव्यादिजीववधेऽपि न गुणः, यतः तद्दर्शनात् गुणानुरागितया भव्यानां बोधिलाभः, पूजातिशयविलोकनादिना च मनःप्रसादस्ततः समाधिः, ततश्च क्रमेण निःश्रेयसप्राप्तिरिति स्वल्पपुण्यव्ययेनापरिमितसुकृतसम्प्राप्तिरस्ति, न तु वैदिकहिंसायां तथा, यमनियमाद्युपायान्तरतोऽपि स्वर्गावाप्तिसम्भवादिति ॥

तद्विधीयमानं काम्यमानफलसद्भावेऽपि तत्कर्मनिमित्तं तद्भवत्येव । न च हिंसातः स्वर्गसुखप्राप्तावसुखनिर्वर्त्तकक्लिष्टकर्महेतुताऽसङ्गता, नरेश्वराराधननिमित्तब्राह्मणादिवधानन्तरावाप्तग्रामादिलाभजनितसुखसम्प्राप्तौ तद्वधस्यापि तथात्वोपपत्तेः । अथ ग्रामादिलाभो ब्राह्मणादिवधनिर्वर्त्तितादृष्टनिमित्तो न भवति तर्हि स्वर्गादिप्राप्तिरप्यध्वरविहितहिंसानिर्वर्त्तिता न भवतीति ब्रुमानम् । अथाश्वमेधादावालभ्यमानानां छागादीनां स्वर्गप्राप्तेर्न तद्धिंसा 5 हिंसेति तर्हि संसारमोचकविरचिताऽपि तत एव हिंसा न हिंसा स्यात्, देवतोद्देशतो म्लेच्छादिविरचिता च ब्राह्मणगवादिहिंसा न हिंसा स्यात् । अथ तदागमस्याप्रमाणत्वं तद्वेदस्यापि तुल्यम्, गुणवत्पुरुषप्रणीतत्वस्यापौरुषेयत्वस्य वा परैरनभ्युपगमात्, तन्न प्रदर्शिताभिप्रायाद्विना हिंसातो धर्मावाप्तिर्युक्ता । परमप्रकर्षावस्थज्ञानदर्शनचारित्रात्मकमुक्तिमार्गस्य दीक्षाशब्देनाभिधाने दीक्षातो मुक्तिरुपपन्नैव, अविकलकारणस्य कार्यनिर्वर्त्तकत्वात्, 10 अन्यथा करणत्वायोगात् । तत्र तद्भक्त्युत्पादनार्थं चैवमभिधानाददोषः, न हि तद्भक्त्यभावे उपादेयफलप्राप्तिनिमित्तसम्यग्ज्ञानादिपुष्टिनिमित्तदीक्षाप्रवृत्तिप्रवणो भवेत्, तन्नान्यपरत्वं प्रदर्शितवचसामभ्युपगन्तव्यम्, तथाऽभ्युपगमे वा अनाप्तत्वं तद्वादिनां प्रसज्येत तत्र पूर्वोक्तदोषानतिवृत्तेः ॥ ६० ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलिते सम्मतितत्त्वसोपाने सन्मार्गप्रदर्शनं नाम सप्तत्रिंशं सोपानम् ॥ 15



## अथाऽऽर्त्तादिध्यानवर्णनम् । 20

ये त्वविवेचितागमप्रतिपत्तिमाश्रयन्ते तेऽनवगतपरमार्था एवेत्याह—

**पाडेक्कनयपहगयं सुत्तं सुत्तहरसद्दसंतुट्ठा ।**
**अविकोवियसामत्था जहागमविभत्तपडिवत्ती ॥ ६१ ॥**

प्रत्येकनयपथगतं सूत्रं सूत्रधरशब्दसन्तुष्टाः ।
अविकोविदसामर्थ्या यथागमाविभक्तप्रतिपत्तयः ॥ छाया ॥ 25

प्रत्येकेति, प्रत्येकनयमार्गगतं सूत्रम् यथा ' क्षणिकाः सर्वसंस्काराः विज्ञानमात्रमेवेदं भो जिनपुत्राः ! यदिदं त्रैधातुकम् ' इति, ' ग्राह्यग्राहकोभयशून्यं तत्त्वम् ' इति, नित्यमेकमणुव्यापि निष्क्रियम् ' इत्यादि, ' सदकारणवन्नित्यम् ' इति, ' आत्मा रे श्रोतव्यो ज्ञात-

व्यो मन्तव्यो निदिध्यासितव्यः ' इत्यादि, सत्ताद्रव्यत्वसम्बन्धात् सद्द्रव्यं वस्तु ' इति, ' परलोकिनोऽभावात् परलोकाभावः ' इति, ' चोदनालक्षणोऽर्थो धर्मः ' इति, धर्माधर्मक्षयङ्करी दीक्षा ' इत्यादिकमधीत्य सूत्रधरा वयमिति शब्दमात्रेण गर्विता अविदितसूत्रव्यापारविषयास्ते, सूत्राभिप्रायव्यतिरिक्तविषयविप्रतिपत्तित्वादितरजनवदज्ञा इत्यभिप्रायः । अथवा
5 स्वयूथ्या एवैकनयदर्शनेन कतिचित्सूत्राण्यधीत्य केचित् सूत्रधरा वयमिति गर्विता यथावस्थितान्यनयसव्यपेक्षसूत्रार्थापरिज्ञानादविदितात्मविद्वत्स्वरूपा इति गाथाभिप्रायः ॥ ६१ ॥

अथैषामेकनयप्रदर्शनेन प्रवृत्तानां यो दोषस्तमाह—

**सम्मदंसणमिणमो सयलसमत्तवयणिज्जणिद्दोसं ।**
**अत्तुक्कोसविणट्ठा सलाहमाणा विणासेंति ॥ ६२ ॥**

10 सम्यग्दर्शनमेतत् सकलसमाप्तवचनीयनिर्दोषम् ।
आत्मोत्कर्षविनष्टा श्लाघमाना विनाशयन्ति ॥ छाया ॥

**सम्यगिति,** परस्परविषयापरित्यागप्रवृत्तानेकनयात्मकं स्यान्नित्य इत्यादिसकलधर्मपरिसमाप्तवचनीयतया निर्दोषं सम्यग्दर्शनमेतत्, एकनयवादिनस्त्वविषये सूत्रव्यवस्थापनेन आत्मोत्कर्षेण विनष्टाः स्याद्वादाभिगमं प्रत्यनाद्रियमाणा वयं सूत्रधरा इत्यात्मानं श्लाघमानाः
15 सम्यग्दर्शनं विनाशयन्ति, तदात्मनि न व्यवस्थापयन्तीति यावत् ॥ ६२ ॥

अथ न ते आगमप्रत्यनीकाः तद्भक्तत्वात्, तद्देशपरिज्ञानवन्तश्चेति कथं तद्विनाशयन्तीत्यत्राह—

**ण हु सासणभत्तीमेत्तएण सिद्धंतजाणओ होइ ।**
**ण विजाणओ वि णियमा पण्णवणाणिच्छिओ णामं ॥६३॥**

20 न च शासनभक्तिमात्रेण सिद्धान्तज्ञाता भवति ।
न विज्ञाताऽपि नियमात् प्रज्ञापनानिश्चितो नाम ॥ छाया ॥

**न चेति,** न च शासनभक्तिमात्रेणैव सिद्धान्तज्ञाता भवति, न च तद्ज्ञानवान् भावसम्यक्त्ववान् भवति, अज्ञातस्यार्थस्य विशिष्टरुचिविषयत्वानुपपत्तेः तद्भक्तिमात्रेण श्रद्धानुसारितया द्रव्यसम्यक्त्वम्, मार्गानुसार्यवबोधमात्रानुषक्तरुचिस्वभावं तु सदपि न भाव-
25 सम्यक्त्वसाध्यफलनिर्वर्तकम्, भावसम्यक्त्वनिमित्तत्वेनैव तस्य द्रव्यसम्यक्त्वरूपत्वोपपत्तेः। न च जीवादितत्त्वैकदेशज्ञाताऽपि नियमतोऽनेकान्तात्मकवस्तुस्वरूपप्रज्ञापनायां निश्चितो भवति, एकदेशज्ञानवतः सकलधर्मात्मकवस्तुज्ञानविकलतया सम्यक् तत्प्ररूपणासम्भवात् । तथाहि सर्वज्ञो यथावस्थितैकदेशज्ञः जीवादिसकलतत्त्वज्ञता तु आगमविदः सामान्यरूपतया

अभिधीयते ' मतिश्रुतयोर्निबन्धो द्रव्येष्वसर्वपर्यायेषु ' [तत्त्वार्थ० १-२७] इति वचनात् । तत्त्वन्तु जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षाख्याः सप्त पदार्थाः,तत्र चेतनालक्षणोऽर्थो जीवः, तद्विपरीतलक्षणस्त्वजीवः, असौ धर्माधर्माऽऽकाशकालपुद्गलभेदतः पञ्चधा, एतत्पदार्थद्वयान्तर्वर्तिनश्च सर्वेऽपि भावाः, न हि रूपरसगन्धस्पर्शादयः साधारणासाधारणरूपाः मूर्त्तामूर्त्तचेतनाचेतनद्रव्यगुणाः, उत्क्षेपणापक्षेपणादीनि च कर्माणि सामान्यविशेषसमवायाश्च जीवा- 5 जीवव्यतिरेकेणाऽऽत्मस्थितिं लभन्ते, तद्भेदेनैकान्ततस्तेषामनुपलम्भात् तदात्मकत्वेन प्रतिपत्तेः, अन्यथा तदसत्त्वप्रसक्तेः । ततो जीवाजीवाभ्यां पृथक् जात्यन्तरत्वेन द्रव्यगुणकर्मसामान्यविशेषसमवाया न वाच्याः, एवं प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासछलजातिनिग्रहस्थानानि च न पृथगभिधानीयानि, तथा प्रकृतिमहदहङ्कारादिचतुर्विंशतिः पदार्थाः पुरुषश्चेति न वक्तव्यम्, एवं दुःखसमुदायमार्गनिरोधाख्यत्वा- 10 र्यार्यसत्त्वानि न वक्तव्यानि, पृथिव्यापस्तेजोवायुरिति तत्त्वानीत्यपि न वक्तव्यम् । तत्प्रभेदरूपतयाऽभिधाने न दोषः, जात्यन्तरकल्पनाया एवाघटमानत्वात्, राशिद्वयेन सकलस्य जगतो व्याप्तत्वात्, तदव्याप्तस्य शशशृङ्गतुल्यत्वात्। शब्दब्रह्माद्येकान्तस्य च पूर्वं निषिद्धत्वात्, अबाधितरूपोभयप्रतिभासस्य तथाभूतवस्तुव्यवस्थापकस्य प्रसाधितत्वात्, विद्याऽविद्याद्वयभेदाद् द्वैतकल्पनायामपि त्रित्वप्रसक्तेः, बाह्यालम्बनभूतभावापेक्षया विद्यात्वोपपत्तेः, अन्यथा निर्विष- 15 यत्वेनोभयोरविशेषात् तत्प्रविभागस्याघटमानत्वात्, न हि द्वयोर्निरालम्बनत्वे विपर्यस्ताविपर्यस्तज्ञानयोरिव विद्याविद्यात्वभेदः, ततो नाद्वयं वस्तु नापि तद्व्यतिरिक्तमस्ति । आस्रवादीनां राशिद्वयेऽन्तर्भूतत्वेऽपि कथञ्चिद्भेदेनाभिधानं तथापरिणतयोर्जीवाजीवयोरेव सकारणसंसारमुक्तिप्रतिपादनपरम्, अनेन वा क्रमेण तज्ज्ञानस्य मुक्तिहेतुत्वप्रदर्शनार्थम्, विप्रतिपत्तिनिरासार्थत्वं वा, ततो न दुष्टता तथाभिधानस्य । कायवाङ्मनोव्यापारो हि आस्रवः 20 कर्महेतुत्वात्, स च जीवाजीवाभ्यां कथञ्चिद्भिन्नः, तथैव प्रतीतेः । अथ बन्धाभावे कथं तस्योपपत्तिः, प्राक् सद्भावे वा न तस्य बन्धहेतुता, न हि यद्यद्धेतुकं तत्तदभावेऽपि भवत्यतिप्रसङ्गात्, असदेतत्, पूर्वोत्तरापेक्षयाऽन्योऽन्यं कार्यकारणभावनियमात्, न चेतरेतराश्रयदोषः, प्रवाहापेक्षयाऽनादित्वात् । पुण्यापुण्यबन्धनहेतुतया चासौ द्विविधः, उत्कर्षापकर्षभेदेनानेकप्रकारोऽपि दण्डगुप्त्यादित्रित्वादिसंख्याभेदमासादयन् फलानुबन्ध्यननुबन्धिभेदतोऽनेक- 25 शब्दविशेषवाच्यतामनुभवति, एकान्तवादिनां नायं सम्भवति, तन्निमित्तः सकषायस्यात्मनः कर्मवर्गणापुद्गलैः संश्लेषो बन्धः, स च सामान्येनैकविधोऽपि प्रकृतिस्थित्यनुभागप्रदेशभेदेन चतुर्धा पुनरेकैको ज्ञानावरणीयादिमूलप्रकृतिभेदादष्टविधः, पुनरपि मत्यावरणाद्युत्तरप्रकृतिभेदादनेकविधः, अथच्च कश्चित्तीर्थकरत्वादिफलनिर्वर्त्तकत्वात् प्रशस्तः, अपरश्च नारकादि

फलनिर्वर्त्तकत्वादप्रशस्तः, प्रशस्ताप्रशस्तात्मपरिणामोद्भूतस्य कर्मणः सुखदुःखसंवेदनीयफलनिर्वर्त्तकत्वात् । तत्र अप्रशस्तात्मपरिणामो द्विविधः आर्त्तरौद्रभेदात्, आमुहूर्त्तस्थायी आक्रन्दनविलपनपरिदेवनशोचनपरविभवविस्मयविषयसङ्गादिकश्च स्वसंवेद्य आत्मनः परेषामनुमेयश्च क्लिष्टः परिणामविशेष आर्तध्यानशब्दवाच्यो बाह्यः, आभ्यन्तरश्चामनोज्ञसम्प्रयोगानुत्पत्त्यध्यवसानम्, उत्पन्नस्य च विनाशाध्यवसायः, मनोज्ञसम्प्रयोगस्योत्पत्तिकल्पनाध्यवसायः, उत्पन्नस्य विनाशसंकल्पाध्यवसानमित्येतच्चतुर्विधमार्त्तध्यानम् । अमनोज्ञसम्प्रयोगश्च बाह्याध्यात्मजत्वेन द्विधा, शीतातपव्यालादिजनितो बाह्यः, वातपित्तश्लेष्मादिप्रादुर्भूतोऽभ्यन्तरः शारीरः, भयविषादारतिशोकजुगुप्सादौर्मनस्यादिप्रभवो मानसः, अयं मनोज्ञसम्प्रयोगः कथं नाम न मे सम्पद्यत इति संकल्पप्रबन्ध आर्त्तध्यानं कृष्णनीलकापोतलेश्याबलाधायकं प्रमादाधिष्ठानम्, आ प्रमत्तगुणस्थानात्तिर्यङ्मनुष्यगतिनिर्वर्त्तकमुत्कर्षापकर्षभेदात् क्षायोपशमिकभावरूपं परोक्षज्ञानरूपत्वात् । हिंसानृतस्तेयसंरक्षणानन्दभेदेन रौद्रं चतुर्विधम्, हिंसायामानन्दो रुचिर्यस्मिंस्तदिति हिंसानन्द इत्येवं सर्वत्र । एतदपि बाह्याध्यात्मभेदतो द्विविधम् । परुषनिष्ठुरवचनाक्रोशनिर्भर्त्सनताडनपरदारातिक्रमाभिनिवेशादिरूपं बाह्यम्, स्वपराभ्यां स्वसंवेदनानुमानगम्यं तत् । आध्यात्मिकं हिंसायां संरम्भसमारम्भादिलक्षणायां नैर्घृण्येन प्रवर्त्तमानस्य संकल्पाध्यवसानं प्रथमं हिंसानन्दं नाम, परेषामनेकप्रकारैर्मिथ्यावचनैर्वञ्चनं प्रति संकल्पाध्यवसानं मृषानन्दं नाम । परद्रव्यापहरणं प्रति अनेकोपायैः संकल्पाध्यवसानं स्तेयानन्दम् । परिग्रहे मम एवेदं स्वम्, अहमेवास्य स्वामीत्यभिनिवेशः तदपहर्तृविघातेन संरक्षणं प्रति संकल्पाध्यवसानं संरक्षणानन्दम् । चतुर्विधमप्येतत् कृष्णादिलेश्याबलाधायकं प्राक् प्रमत्तगुणस्थानात् प्रमादाधिष्ठानं कषायप्राधान्यादौदयिकभावरूपं नरकगतिफलनिर्वर्त्तकं पापध्यानद्वयमपि हेयम् । उपादेयन्तु प्रशस्तं धर्मशुक्लध्यानद्वयम्, तत्र पर्वतगुहाजीर्णोद्यानशून्यागारादौ मनुष्याद्यापातविकलेऽवकाशे मनोविक्षेपनिमित्तशून्ये सत्त्वोपघातरहिते उचिते शिलातलादौ यथा समाधानं विहितपर्यङ्कासन ऊर्ध्वस्थानस्थो वा मन्दमन्दप्राणापानप्रचारः निरुद्धलोचनादिकरणप्रचारो हृदि ललाटे मस्तकेऽन्यत्र वा यथापरिचयं मनोवृत्तिं प्रणिधाय मुमुक्षुर्ध्यायेत् प्रशस्तं ध्यानम् । तत्र बाह्याध्यात्मिकभावानां याथात्म्यं धर्मस्तस्मादनपेतं धर्म्यम्, तद्द्विविधं बाह्यमाध्यात्मिकञ्च, सूत्रार्थपर्यालोचनं दृढव्रतता शीलगुणानुरागः निभृतकायवाग्व्यापारादि बाह्यम्, आत्मनः स्वसंवेदनग्राह्यमन्ये-

१ विषयान्तरसञ्चारानन्तरितैकार्थविज्ञानेऽन्तर्मुहूर्तं निष्प्रकम्पतया चेतसो वर्त्तनं ध्यानम्, तच्चतुर्विधमार्त्तरौद्रधर्मशुक्लभेदात् । आद्ये अप्रशस्ते अपरे च प्रशस्ते इत्याशयेनाह प्रशस्तेति ॥ २ अपरिणतयोगादीनां ध्यानस्थानमाह–तत्रेति, परिणतानान्तु सर्वत्र तुल्यभावत्वाज्जनाऽकीर्णे तच्छून्ये वा स्थाने ध्यानं भवति ।

षामनुमेयमाध्यात्मिकं तत्त्वार्थसङ्ग्रहादौ चातुर्विध्येन प्रदर्शितं संक्षेपतः, अन्यत्र दशविधम्, तद्यथा अपायोपायजीवाजीवविपाकविरागभवसंस्थानाज्ञाहेतुविचयानि चेति, लोकसंसार-विचययोः संस्थानभवविचययोरन्तर्भावान्नोद्दिष्टदशभेदेभ्यः पृथगभिधानम्, एतेषां स्वरू-पाण्यन्यत्र द्रष्टव्याणि । एतच्च सर्वं धर्मध्यानं श्रेयोहेतुत्वात्, एतच्च संवररूपम्, अशुभा-स्रवप्रत्यनीकत्वात्, गुप्तिसमितिधर्मानुप्रेक्षादीनामास्रवप्रतिबन्धकारित्वात् । अयमपि जीवा- 5
जीवाभ्यां कथञ्चिदभिन्नो भेदाभेदैकान्ते दोषोपपत्तेः । न चायमेकान्तवादिनां घटते, मिथ्या-ज्ञानान्मिथ्याज्ञानस्य निरोधानुपपत्तेः । संवरश्च सर्वदेशभेदतो द्विविधः, पीतपद्मलेश्याब-लाधानमप्रमत्तसंयतस्यान्तर्मुहूर्त्तकालप्रमाणं स्वर्गसुखनिबन्धनमेतद्धर्मध्यानम् । कषायदोषम-लापगमात् शुचित्वं तदनुषङ्गात् शुक्लं ध्यानम्, शुक्लपरमशुक्लभेदात्तच्च द्विविधम् । तत्र पृथक्त्व-वितर्कवीचारमेकत्ववितर्कवीचारञ्चेति शुक्लं द्विविधम् । सूक्ष्मक्रियाप्रतिपातिव्युपरतक्रिया- 10
निर्वर्त्ति चेति परमशुक्लमपि द्विविधम्, एतदपि बाह्याध्यात्मिकभेदेन द्विविधम् । गात्र-दृष्टिपरिस्पन्दाभावः जृम्भोद्गारक्षवथुविरहोऽनभिव्यक्तप्राणापानप्रचारत्वमित्यादिगुणयोगि बाह्यं परेषामनुमेयमात्मनश्च स्वसंवेद्यम्, आध्यात्मिकन्तु नानात्वेन द्वादशाङ्गस्यार्थ-व्यञ्जनयोगेषु संक्रान्तिर्यस्मिन्नस्ति तत् पृथक्त्ववितर्कवीचारम्, तथाहि असावुत्तमसंहननो भावयति विजृम्भितपुरुषकारवीर्यसामर्थ्यः संहृताशेषचित्तव्याक्षेपः कर्मप्रकृतीः स्थित्यनुभागा- 15
दिभिर्ह्रासयन् महासंवरसामर्थ्यतो मोहनीयमचिन्त्यसामर्थ्यमशेषमुपशमयन् क्षपयन् वा द्रव्यपरमाणुं भावपरमाणुञ्चैकमवलम्ब्य द्रव्यपर्यायार्थाद्व्यञ्जनं व्यञ्जनाद्वाऽर्थं योगाद्योगान्तरं व्यञ्जनाद्व्यञ्जनान्तरञ्च संक्रामन् पृथक्त्ववितर्कवीचारं शुक्लतरलेश्यमुपशमकक्षपकगुणस्थान-भूमिकमन्तर्मुहूर्त्तार्द्धं क्षायोपशमिकभूमिकं प्रायः पूर्वधरनिषेव्यमाश्रितार्थव्यञ्जनयोगसंक्रमणं श्रेणिभेदात् स्वर्गापवर्गफलप्रदमाद्यं शुक्लध्यानमवलम्बते, एतच्च निर्जरात्मकम्, आत्मस्थित- 20
कर्मक्षयकारणत्वात्, 'तपसा निर्जरा च' [ तत्त्वार्थ० ९–३ ] इति वचनात्, ध्यानस्य चान्तरोत्कृष्टतपोरूपत्वात् । जीवाजीवाभ्यां कथञ्चिदसावभिन्ना द्व्यङ्गुलवियोगवद्वियुक्ता-त्मनो वियोगस्य कथञ्चिदभेदात् । एकान्तवादे तु पूर्ववत् पश्चादप्यवियोगः, अतद्धर्मत्वात् वियोगे वा पूर्वमपि तत्स्वभावत्वादयुक्तस्य वियोगभाव एव न हि बन्धाभावे तद्विनाशः सम्भवी, तस्य वस्तुधर्मत्वात्, न ह्यङ्गुल्योः संयोगाभावे तद्वियोग इति व्यवहारः, तस्मा- 25

---

१ अर्थो द्रव्यं, व्यञ्जनं शब्दः, योगो मन आदिः, एषु सङ्क्रान्तिः, अर्थाद्व्यञ्जनमित्यादिरूपेण संक्र-मणम्, तत रागपरिणामरहितस्य ध्यातुः पृथक्त्वेन भेदेन विस्तीर्णभावेन अन्ते वितर्कः श्रुतं यस्मिंस्तत् तथाविधं वीचारं पृथक्त्ववितर्कवीचारम् । द्वितीयन्तु अर्थव्यञ्जनयोगसंक्रान्तिरहितमभेदेन व्यञ्जनरूपमर्थरूपं वा यत्र तथाविधं पूर्वगतश्रुतालम्बनं पूर्वगतश्रुतानुसारिध्यानमेकत्ववितर्कम् । तत्र प्रथमं योगे योगेषु वा द्वितीयमेकयोग एव तृतीयं सूक्ष्मक्रियाऽनिवर्त्तिकाययोग एव चतुर्थं व्युपरतक्रियं योगाभावादयोगिनि भवति ॥

न्निर्जराया अपि एकान्तवादेऽनुपपत्तिः । यस्मिन्नेकत्वेन वितर्कस्तदेकत्ववितर्कं विगतार्थव्यञ्जनयोगसंक्रमत्वादवीचारं द्वितीयं शुक्लध्यानम्, तथाह्येकपरमाणावेकमेव पर्यायमालम्ब्यत्वेनादाय अन्यतरैकयोगबलाधानमाश्रितव्यतिरिक्ताशेषार्थव्यञ्जनयोगसंक्रमविषयचिन्ताविक्षेपरहितं बहुतरकर्मनिर्जरारूपं निःशेषमोहनीयक्षयानन्तरं युगपद्घातिघातिकर्मत्रयध्वंसनसमर्थमकषायछद्मस्थवीतरागगुणस्थानभूमिकं क्षपको द्वितीयं शुक्लध्यानमासादयति । प्रायः पूर्वविदेव तदनन्तरं ध्यानान्तरे वर्तमानः क्षायिकज्ञानदर्शनचारित्रवीर्यातिशयसंपत्समन्वितो भगवान् केवली जायत इति, स चात्यन्तापुनर्भवसम्पदङ्गनासमालिङ्गिततनुः कृतकृत्योऽचिन्त्यज्ञानाद्यैश्वर्यमाहात्म्यातिशयपरमभक्तिनम्रामरेश्वरादिवन्द्यचरणोऽन्तर्मुहूर्तं देशोनां वा पूर्वकोटिं भवोपग्राहिकर्मवशाद्विहरन् यदाऽन्तर्मुहूर्तपरिशेषायुष्कस्तत्तुल्यस्थितिनामगोत्रवेदनीयश्च भवति तदा मनोवाग्बादरकाययोगं निरुध्य सूक्ष्मकाययोगोपगः सूक्ष्मक्रियाऽप्रतिपाति शुक्लध्यानं तृतीयमध्यास्ते । यदा पुनरन्तर्मुहूर्तस्थितिकायुष्ककर्माधिकस्थितिशेषकर्मत्रयो भवत्यसौ तदाऽऽयुष्ककर्मस्थितिसमानस्थितिशेषकर्मसम्पादनार्थं समुद्घातमाश्रित्य दण्डकपाटमन्थलोकपूरणानि स्वात्मप्रदेशविसरणतश्चतुर्भिः समयैर्विधाय तावद्भिरेव तैः पुनस्तानुपसंहृत्य स्वप्रदेशविसरणसमीकृतभवोपग्राहिकर्मा स्वशरीरपरिमाणो भूत्वा ततस्तृतीयं शुक्लध्यानभेदं परिसमाप्य पुनश्चतुर्थं शुक्लध्यानमारभते, तत् पुनर्विगतप्राणापानप्रचाराशेषकायवाङ्मनोयोगसर्वदेशपरिस्पन्दत्वाद्विगतक्रियानिवर्तीत्युच्यते, तत्र च सर्वबन्धास्रवनिरोधः, अशेषकर्मपरिक्षयसामर्थ्योपपत्तेः, तदेव च निश्शेषभवदुःखविटपिदावानलकल्पं साक्षान्मोक्षकारणम्, तद्ध्यानवांश्चायोगिकेवली निःशेषितमलकलङ्कोऽवाप्तनिजशुद्धस्वभावः ऊर्ध्वगतिपरिणामस्वाभाव्यान्निर्वातप्रदेशप्रदीपशिखावदूर्ध्वं गच्छति एकसमयेनाऽऽलोकान्ताद्विनिर्मुक्ताशेषबन्धस्य प्राप्तनिजस्वरूपस्य आत्मनो लोकान्तेऽवस्थानं मोक्षः[1] अत्र च जीवाजीवयोरास्रवस्यापि आगमादिवाध्यक्षानुमानतोऽपि सिद्धिः प्रदर्शिता, कर्मयोगपुद्गलाऽऽत्मप्रदेशानां परस्परानुप्रवेशस्वभावस्य त्वध्यक्षतोऽनुपलब्धावपि अनुमानान् सिद्धिः, तथाहि, सकलज्ञेयज्ञानस्वभावस्यात्मनः स्वविषयेऽप्रवृत्तिर्विशिष्टद्रव्यसम्बन्धनिमित्ता, पीतहृत्पूरपुरुषस्वविषयज्ञानाप्रवृत्तिवत, यच्च ज्ञानस्य स्वविषयप्रतिबंधकं द्रव्यं तज्ज्ञानावरणादि वस्तु सत् पुद्गलरूपं कर्म, आत्मनश्च सकलज्ञेयज्ञानस्वभावता स्वविषयाप्रवृत्तिश्च छद्मस्थावस्थायां प्राक् प्रदर्शितैव । औदारिकाद्यशेषशरीरनिबन्धनस्यानेकावान्तरभेदभिन्नाष्टविधकर्मात्मकस्य कार्मणशरीरस्य सर्वज्ञप्रणीतागमात् सिद्धेः कथं न ततो बन्धसिद्धिः । न च कार्मणशरीरस्य मूर्त्तिमत्त्वात् सत्त्वे उपल-

१ तथा च देशतः कर्मक्षयो निर्जरा, सर्वतः कर्मक्षयो मोक्ष इति न तयोरभेदः, संवरस्त्वास्रवनिरोधलक्षणः ॥

किंचः स्यादनुपलभ्यते चातो न तत्सदिति वाच्यम्, यतो न सर्वं मूर्त्तिमदुपलभ्यते सौक्ष्मात् पिशाचादिशरीरस्येवौदारिकादिशरीरनिमित्ततयोपकल्पितस्यानुपलम्भेऽप्यपह्नोतुमशक्यत्वात्, अनुपलभ्यमानस्यास्तित्वं चाप्तवादात्, न च तदभावे औदारिकाद्यपूर्वशरीरसम्बन्ध आत्मनः स्यात्, न हि रज्ज्वाकाशयोरिव मूर्तामूर्तयोर्बन्धविशेषयोगः, कार्मणशरीराविनाभूतश्चामुक्तैः सदात्मेति तस्य कथञ्चिन्मूर्त्तत्वं ततश्चौदारिकादिशरीरसम्बन्धो रज्जुघटयो· 5 रिवोपपत्तिमान् । अथ सूक्ष्मशरीरसिद्धावप्यास्रवनिरपेक्षाः परमाणवो वाय्वादिसूक्ष्मद्रव्यनिमित्तपरमाणुद्रव्यवद्भविष्यतीति न बन्धहेत्वास्रवसिद्धिः, नैतत्, क्रोडीकृतचैतन्यप्रयोजनस्याचेतनस्यास्रवनिरपेक्षपरमाणुहेतुत्वानुपपत्तेः, न ह्यभ्यन्तरीकृतचैतन्यप्रयोजनस्य आकाशद्रव्यादेर्योगबुद्धिशरीरारम्भनिरपेक्षपरमाणुजन्यता परस्यापि सिद्धा, अतस्तृष्णानुबद्धस्य चैतन्यस्य मनोवाक्कायव्यापारवतः कर्मवर्गणापुद्गलसञ्चितस्य कार्मणशरीरानुविद्धस्य 10 तथाविधतच्छरीरनिर्वर्तकत्वम्, अन्यथा तथाविधकारणप्रभवतच्छरीराभावे आत्मनो बन्धाभावतः संसारिसत्त्वविकलं जगत् स्यादेव, तदेवमनुमानागमाभ्यां बन्धस्य प्रसिद्धिः । संवरस्य त्वध्यक्षानुमानागमप्रसिद्धता न्यायानुगतैव, चैतन्यपरिणतेः स्वात्मनि स्वसंवेदनाध्यक्षसिद्धत्वात्, अन्यत्र तु तत्प्रभवकार्यानुमेयत्वात्, तत्प्रतिपादकस्यागमस्य सद्भावा । निर्जरा तु ज्ञानावरणीयादेः कर्मणः केवलज्ञानसद्भावान्यथानुपपत्त्याऽनुमानतः आगमतश्चास्मदा- 15 दादिभिः प्रतीयते, सर्वकर्मनिर्जरावद्भिस्तु स्वसंवेदनाध्यक्षतः, परमपदप्राप्तिहेतोः सम्यग्ज्ञानादेः स्वसंविदितत्वात् । सर्वकर्मापगमाविर्भूतचैतन्यसुखस्वभावात्मस्वरूपस्य मोक्षस्याप्यनन्तरोक्तन्यायतः प्रतिपत्तिः, तथाहि यदुत्कर्षतारतम्याद्यस्यापचयतारतम्यं तत्प्रकर्षनिष्ठागमने भवति तस्यात्यन्तिकः क्षयः, यथोष्णस्पर्शतारतम्यात् शीतस्पर्शस्य, भवति च ज्ञानवैराग्यादेरुत्कर्षतारतम्यादज्ञानरागादेरपचयतारतम्यमित्यनुमानतो भगवदागमतश्चा- 20 स्मदादेरपवर्गसिद्धिः, भगवतान्तु केवलाध्यक्षत इति जीवाजीवपदार्थद्वयाऽव्यतिरिक्तास्रवादि-

१ एव क्वचिदात्मनि सामस्त्येन कर्माणि निर्जीर्यन्ते विपाकान्तत्वात्, यथैव तथैवं यथाकालादि, विपाकान्तानि च कर्माणि, फलावसानत्वादन्यथा नित्यत्वप्रसङ्गात् सर्वकर्मनिर्जरासिद्धिर्भाव्या ॥ २ अत्र यद्यपि जीवाजीवव्यतिरिक्ता नाश्रवादयः, तत्राश्रवः मिथ्यादर्शनादिरूपो जीवस्य परिणामः संवरश्च देशसर्वभेद आश्रवनिरोधलक्षण· आत्मनो निवृत्तिरूपः परिणामः, परिणामपरिणामिनोश्चानन्यत्वादात्मरूप एव, निर्जरापि कर्मपरिशाटः, जीवः स्वशक्त्या कर्मणां यत्पार्थक्यमापादयति, मोक्षोऽपि समस्तकर्मविरहित आत्मा, बन्धश्च कर्मस्वरूपः पुद्गलात्मत्वादजीव एवेति जीवाजीवावेव तत्त्वं तथापि प्राणिनां मोक्षमार्गप्रवृत्तिसम्पादयायास्रवादय. पृथक्तत्त्वतया तत्र तत्राभिहिता इति मत्वोक्त जीवाजीवेत्यादि ॥

प्रतिपत्तिर्मुमुक्षुभिर्विधेया । तथाहि मोक्षार्थिभिरवश्यं मोक्षः प्रमाणतः प्रतिपत्तव्यः, अन्यथा तदुपायप्रवृत्त्यनुपपत्तेः, न ह्यनवगतसस्यादिसद्भावस्तत्प्राप्त्युपाये कृष्यादौ प्रवर्त्तितुमुत्सहते, तदुपायप्रवृत्तिरप्युपायस्वरूपसंवरनिर्जरालक्षणपदार्थद्वयप्रतिपत्तिमन्तरेणानुपपन्ना, अज्ञातस्य प्रेक्षापूर्वकादिविषयत्वानुपपत्तेः, तथाऽशेषकर्मवियोगलक्षणो मोक्षः संवरनिर्जराफलः तद-
5 भावेऽनुपपद्यमानस्तत्प्रवृत्तिं तज्ज्ञानपूर्विकामाक्षिपति, न ह्यभिनवकर्मोत्पत्तौ प्राक्तनाशेषकर्मसंयोगाभावो भावे वाऽऽत्यन्तिकस्तद्वियोगः सम्भवतीति संवरनिर्जराज्ञानं मुमुक्षुभिरवश्यं विधातव्यम् । कर्मबन्धोऽपि संवरनिर्जरानिवर्त्तनीयः संसारसरित्स्रोतः प्रवर्त्तको ज्ञातव्यः, अज्ञातस्योपायनिवर्त्तनीयत्वायोगात् ; अयमप्यास्रवयुक्तत्वेन ज्ञातव्यः, अन्यथा तदनुपपत्तेः, यथा हि घटादेः स्नेहाभावे रजःसम्बन्धो न घटते तथा कषायस्नेहाभावे
10 नात्मनः कर्मरजःसम्बन्ध उपपत्तिमान् । आस्रवोऽपि बन्धहेतुर्जीवाजीवकारणतया ज्ञातव्यः, अन्यथा कारणस्य तस्यासम्भवात्, न ह्यज्ञातकारणं तत्कार्यतया शाल्यङ्कुरादिवज्ज्ञातुं शक्यम् । न च जीवाजीवबहिर्भूतमास्रवस्य कारणं भवति तद्व्यतिरेकेण पदार्थान्तरस्यासत्वात्, जीवाजीवयोश्च परिणामित्वे सत्यास्रवहेतुत्वम्, एकान्तनित्यस्यानित्यस्य वाऽर्थक्रियाऽनिर्वर्त्तकत्वेनासत्त्वात्, तस्मात् परिणामिजीवाजीवपदार्थद्वयाव्यतिरिक्तौ कथञ्चित्सकारणौ
15 हेयोपादेयरूपौ बन्धमोक्षौ प्रतिपत्तव्याविति सप्तपदार्थाः प्रमाणतोऽभ्युपगन्तव्याः । यथा च संवरनिर्जरयोर्मोक्षहेतुता आस्रवस्य बन्धनिमित्तत्वं तथाऽऽगमात् प्रतिपत्तव्यम्, तस्य च जीवाजीवादिलक्षणे दृष्टविषये वस्तुतत्वे सर्वदाऽविसंवादाददृष्टविषयेऽप्येकवाक्यतया प्रवर्त्तमानस्य प्रामाण्यं प्रतिपत्तव्यम् । न च वक्त्रधीनत्वात्तस्याप्रामाण्यम्, वक्त्रधीनत्वप्रमाणत्वयोर्विरोधाभावात्, वक्त्रधीनस्यापि प्रत्यक्षस्य प्रामाण्योपलब्धेः । न चाक्षजत्वाद्वस्तुप्रति-
20 बद्धत्वेन तत्र प्रामाण्यं न शाब्दस्य विपर्ययादिति वक्तव्यम् । शाब्दस्यात एव प्रमाणान्तरत्वोपपत्तेः, अन्यथाऽनुमानादविशेषप्रसङ्गात्, तथाहि गुणवद्वक्तृप्रयुक्तशब्दप्रभवत्वादेव शाब्दमनुमानज्ञानाद्विशिष्यते, अन्यथा बाह्यार्थप्रतिबन्धस्यात्रापि सद्भावान्नानुमानादस्य विशेषः स्यात् । यदा च परोक्षेऽपि विषयेऽस्य प्रामाण्यमुक्तन्यायात्तदा गुणवद्वक्तृप्रयुक्तत्वेनास्य प्रामाण्यमतश्च गुणवद्वक्तृप्रयुक्तत्वमितीतरेतराश्रयदोषोऽपि नात्रावकाशं
25 लभते । यथोक्तसंवादादस्य प्रामाण्यनिश्चये कुतोऽयमस्यात्र संवाद इत्यपेक्षायामाप्तप्रणीतत्वादित्यवगमो न पुनः प्रथममेव तत्प्रणीतत्वनिश्चयादस्यार्थप्रतिपादकत्वम्, प्रतिबन्धनिश्चयादनुमानस्येव, नापि दृष्टविषयाविसंवादिवाक्यैकवाक्यतां विरहय्यादृष्टार्थवाक्यैकदेश-

स्यान्यतः कुतश्चित् प्राक् संवादित्वनिबन्धनस्य प्रामाण्यस्य निश्चयः, अभ्यासावस्थायान्तु आप्तप्रणीतत्वनिश्चयात् प्रवृत्तिरदृष्टार्थवाक्याच वार्यत इति कुत इतरेतराश्रयावकाशः ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानंदसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलिते सम्मतितत्त्वसोपाने आप्तादिध्यानवर्णनं नाम अष्टत्रिंशं सोपानम् ॥ 5

## अथ वचनविचारः ।

एकान्तवादिवचनानां सामान्यं विशेषः उभयमनुभयं वा वाच्यं न सम्भवति यतो विसंवादिनो दृष्टार्थेऽपि सर्वथाप्रवृत्तिरेव, निश्चितविसंवादाङ्गुल्यग्रहस्तियूथशतप्रतिपादक- 10 वाक्यादिवत् किं पुनरदृष्टार्थे । सामान्यस्य ह्येकान्तवादिवचनवाच्यत्वे घटाद्यानयनाय प्रेरितः सर्वत्र प्रवर्त्तेत, सामान्यस्येतरव्यावृत्तप्रतिनियतैकवस्तुरूपत्वायोगात्, न वा कचित् प्रवर्त्तेत, प्रवृत्तेर्विशेषनिबन्धनत्वात्, सामान्यस्यानर्थक्रियाकारितया च प्रवृत्तिनिबन्धनत्वायोगात् । न च यदाऽश्रुतपूर्वं वाक्यं प्रतिपत्ता शृणोति तदा सङ्केतकालानुभूतानां पदानां सामान्यमेवार्थं प्रतिपद्यते, वाक्यार्थप्रतिपत्तिस्त्वपेक्षासन्निधानाभ्यां विशेषणविशेष्यभावात् पदार्थप्रति- 15 पत्तिनिबन्धना, न पुनस्ततो वाक्यात्तथाविधस्य, तस्य स्वार्थेन सह सम्बन्धाप्रतिपत्तेः । वाक्यमेव च प्रवृत्तिनिवृत्तिव्यवहारक्षमम्, न पदम्, अनर्थक्रियाकारिसामान्यप्रतिपादकत्वादिति वाच्यम्, एवं कल्पनायां पदार्थानामपि वाक्यार्थप्रतिपत्तिहेतुत्वासम्भवात्, यथा हि घटः पटः कुम्भ इत्यादिपदेभ्योऽन्योन्याननुषक्तस्वतंत्रसामान्यात्मकार्थप्रतिपत्तिस्तथा सम्बद्धपदसमूहश्रवणादपि तथाविधसामान्यप्रतिपत्तिः कुतो न भवेत्, न हि ततः सामान्यमात्रा- 20 धिगमे तत्परित्यागेन विशिष्टार्थप्रतिपत्तौ निमित्तमस्ति, पदार्थस्य पदार्थान्तरं प्रत्युत्पत्तौ प्रतिपत्तौ वा अपेक्षादेरयोगान्न पदार्थानां प्रतिपत्तावपेक्षासन्निधानादिकं निमित्तम्, पदार्थस्य सामान्यात्मकत्वेनोत्पत्तेरसम्भवात्, स्वपदेभ्य एव पदार्थप्रतिपत्त्या तत्प्रतिपत्तावपि पदार्थान्तरापेक्षाद्यनुपपत्तेश्च । न वा सामान्यपरित्यागे किञ्चिन्निबन्धनमस्ति बाधकाभावात् सत्यर्थित्वे उभयप्रतिपत्तिप्रवृत्ती स्याताम् । न च वाक्यार्थप्रत्यय एव बाधकः, तेन तस्य 25 विरोधाभावात्, सामान्यविशेषयोः साहचर्यात्, सामान्यप्रत्ययस्य च विशेषप्रतिपत्तिं प्रति निमित्तत्वाभ्युपगमात् निमित्तस्य च निमित्तिनाऽबाध्यत्वात्, अन्यथा तस्य तन्निमित्तत्वायोगात् । न च यत्र पदार्थानामेकद्रव्यसम्भवस्तत्र पदार्थसामान्यपरित्यागाद्विशेषः प्रतिपत्तव्यः, यथा नीलोत्पलादाविति वाच्यम्, तथा सति हि सकलवाक्यान्यस्य व्यु-

स्यादिशान्येव भवन्ति, तथाहि यः कश्चित्सम्भवदेकद्रव्यार्थनिवेशः पदसमूहः स सङ्केत-
समयावगतसामान्यात्मकावयवार्थपरित्यागतः तेषामेव विशेष्यविशेषणभावेन विशिष्टार्थ-
गोचरः प्रतिपत्तव्यः, यथा नीलोत्पलं पश्येत्यादि पदसङ्घातः, तथा चायमपूर्ववाक्या-
त्मकः पदसमुदाय इति सङ्केतमनुसृत्य यदा ततस्तथाभूतमर्थं प्रत्येति तदा कथं न विशि-
5 ष्टार्थवाचकं वाक्यम्, अनेनैव च क्रमेण शब्दविदां समयव्यवहारः उपलभ्यते, यथा
धात्वादिः क्रियादिवचनः, कर्त्रादिवचनश्च लडादिरिति समयपूर्वकं प्रकृतिप्रत्ययौ प्रत्ययार्थं
सह ब्रूत इति व्युत्पादितोऽनर्थक्रियाकारित्वेन सामान्यमात्रस्य विशेषनिरपेक्षस्य प्रतिपाद-
यितुमनिष्टेस्तत्परित्यागेन व्यवहारकाले विशेषमवगच्छति व्यवहारी, तस्मात् केवलस्य
पदस्य प्रयोगानर्हत्वात् प्रयोगार्हस्य च वाक्यस्य सामान्यानभिधायकत्वात् कथं सामान्यं
10 शब्दार्थः स्यात्। केचित्तु पूर्वपदानुरञ्जितं पदमेव वाक्यम्, पदार्थान्तरविशेषितः पदार्थ
एव च वाक्यार्थः, यथाहि दण्डी छत्रीत्यादिव्यपदेशं पुरुष एव समासादयति नान्यस्तद्व्यति-
रिक्तः तथा अपाक्षीत् पचति पक्ष्यतीत्यादिपदैरतीतकालाद्यवच्छिन्नः क्रियाविशिष्टश्च देवदत्त
एव प्रतीयते देवदत्तशब्देन तेषां सामानाधिकरण्यात्, न तु तद्व्यतिरिक्तोऽर्थः। अग्निहोत्रं
जुहुयात्, ग्रामं गच्छ, स्वाध्यायः कर्त्तव्य इति लिङ्लोट्कृत्यप्रयोगेष्वपि कर्मणि नियुक्तः
15 क्रियाविशिष्टोऽध्येषणादिविशिष्टश्च देवदत्त एव प्रतीयते, केवलं वर्त्तमानादिकालो नात्र विशे-
षणत्वेनावतिष्ठते। नन्वत्र यद्यतिरेकावगतिर्न भवेत्तर्हि कथं पुरुषो भावसाधने प्रवर्त्तेत,
यथाहि देवदत्तः पचतीत्यादिवाक्यान्न प्रवर्त्तते तथा जुहुयादित्यस्मादपि न प्रवर्त्तेत, प्रवृत्ति-
निमित्तस्यानवबोधादिति चेन्न, जुहुयादित्यादिवाक्यजनितविज्ञानस्यैव प्रवर्त्तकत्वात्,
प्रवृत्तेस्तद्भावभावित्वेनोपलम्भात्, एतद्वाक्यजन्यं हि विज्ञानं स्वर्गादिसाधने पुरुषं नियोजय-
20 दुपलभ्यते, न तु पचतीत्यादिवाक्यजनितमिति वदन्ति तन्न सम्यक्, एकान्तपक्षे विशेषण-
विशेष्ययोरत्यन्तं भेदेऽभेदे वा विशेषणानुरागस्य पदे पदार्थे वाऽसम्भवाद्वाक्यार्थकल्पनादे-
रनुपपत्तेः, भेदे सम्बन्धासिद्धेः, अभेदे एकस्य वास्तविकविशेषणविशेष्यरूपत्वासङ्गतेः, अतो
नापाक्षीद्देवदत्त इत्यादौ कालक्रियाविशिष्टदेवदत्तादिप्रतिपत्तिः। तद्भावभावित्वस्यान्यथासिद्ध-
त्वान्न न लिङादियुक्तवाक्यजनितविज्ञानस्य प्रवर्त्तकत्वम्। यत्तु लिङादिभिः साध्यतया भाव
25 एवाभिधीयते न तु कर्त्ता, पूर्वापरीभूतं भावमाख्यातमाचष्ट इति वचनात्, भाव एव च
कालत्रयशून्यः साध्यतया प्रतीयमानो विधिरुच्यते स चात्मलाभाय पुरुषं प्रवर्त्तयन् लिङर्थ
इति मतं तदपि न युक्तम्, फलसापेक्षत्वनिरपेक्षत्वविकल्पाभ्यां भावस्य साध्यत्वानुपपत्तेः।
तत्र न तावत्फलनिरपेक्षो भावः पुरुषं प्रेरयितुं समर्थः, फलविकले कर्मणि प्रेक्षापूर्वकारिणां
प्रवृत्त्यसम्भवात्। किञ्च न निष्पन्नस्य तस्य प्रेरकत्वम्, तत्सद्भावस्य पूर्वमेव सिद्धत्वात्,

साध्यनिष्पन्नस्य, अविद्यमानत्वेन तदसम्भवात्, अन्यथाऽतिप्रसङ्गात् । न च सामान्यरूपेण सन्नपि विशेषाकारसंपादनाय पुरुषं प्रवर्त्तयतीति वक्तव्यम्, विद्यमानस्य वर्त्तमानत्वेन सामान्याकारेण भावस्य लिङर्थत्वानुपपत्तेः, साध्यत्वासम्भवात्, विशेषाकारतायाः साध्यत्वेऽपि तद्रूपेण तस्य प्रेरकत्वानुपपत्तेः । फलापेक्षभावस्य स्वात्मसम्पादनाय प्रेरकत्वे फलस्यैव प्रेरकत्वं स्यात्, इष्टापत्तौ विद्यमानाविद्यमानविकल्पाभ्यामुक्तदोषो दुर्वारः स्यात्, 5
विद्यमानस्य प्रवर्त्तकत्वासम्भवात्, न हि यद्यस्यास्ति स तदर्थमेव लोके प्रवर्त्तते । न च फलस्यात्मसम्बन्धितासम्पादनाय प्रवृत्तिः, तस्यापि विद्यमानत्वेन प्रवृत्तिविषयत्वासम्भवात् । अविद्यमानन्तु फलं न प्रवर्त्तकम्, अविद्यमानस्य कारणत्वानुपपत्तेः । न च कार्यतया तत्तत्र प्रवर्त्तयतीति वाच्यम्, तस्य भावरूपतायां विद्यमानतयाऽप्रवर्त्तकत्वात्, विद्यमानस्य कार्यताविरोधात् । अभावरूपत्वेऽपि न प्रेरकत्वम्, तस्यापि स्वरूपतः सत्त्वात्, परस्परविविक्तभावाभावोभयरूपतास्वीकारेऽपि उभयदोषानुषङ्गः, अन्योऽन्यानुषक्तोभयरूपतास्वीकारे 10
तु परपक्षप्रवेशप्रसङ्गः फलानुभवपर्यायाऽव्यतिरिक्तस्य कारणपर्यायात्मकस्यात्मनः फलात्मतया परिणामात् कारणफलपर्याययोः कथञ्चिदभेदादेकस्यैवात्मद्रव्यस्य तत्तद्रूपतया विवृत्तेः फलस्य भावाभावरूपतया प्रवर्त्तकत्वात्, अन्यथा सर्वव्यवहारोच्छेदप्रसक्तेः । परे तु प्रेषणाऽध्येषणादिभिन्नो विधिरेव प्रवर्त्तकैकस्वभावो लिङाद्युपदिश्यमानः कर्मणि पुरुषं नियोजयति, सत्कारपूर्वको नियोगोऽध्येषणा, न्यक्कारपूर्वको नियोगः प्रेषणा, अनयोर्न प्रवर्त्तक- 15
त्वम्, व्यभिचारादिति वदन्ति तदपि प्रत्युक्तमेव, अविद्यमानस्य विधेः प्रेरकत्वासम्भवात्, विद्यमानस्य च वर्त्तमानत्वेन लिङ्प्रत्ययगम्यता न स्यात्, विधेर्वर्त्तमानत्वे तत्र प्रत्यक्षादेरप्यवतारात् चोदनैव धर्मे प्रमाणम्, प्रमाणमेव चोदनेति न वक्तव्यं स्यात्, तत्र प्रत्यक्षादेः प्रवृत्तौ अवधारणद्वयस्याप्यनुपपत्तेः । न वा सामान्याभिधायि पदं विशेषाभिधायि युक्तम्, 20
सामान्यलक्षणेन ह्यर्थेन शब्दस्यौत्पत्तिकः सम्बन्धो न विशेषेण, ततो न पदं विशेषविज्ञानजननक्षममसम्बन्धात्, अतो नानवगतो विधिः प्रवर्त्तकः किञ्च विधेरपि निष्पाद्यतया तन्निष्पत्तये पुरुषस्य प्रवर्त्तको यद्यन्यो विधिरपेक्ष्यते तर्ह्यनवस्था, यदि च तत्रेच्छातः प्रवृत्तिस्तर्हि सर्वत्र तथैव प्रवृत्तिसम्भवेऽप्रमाणकविधिकल्पना व्यर्था । अथ विध्यर्थो न निष्पाद्यः किन्तु नित्य इत्युच्यते तर्हि नित्यस्य वर्त्तमानकालत्वेन त्रिकालशून्यार्थविषयत्वाभावात् 25
लिङ्प्रत्ययवाच्यता तस्य न भवेत्, लिङस्त्रिकालशून्यार्थविषयत्वात्, विध्यर्थस्य वर्त्तमानकालत्वे च तत्र प्रत्यक्षादेरपि प्रवृत्त्याऽवगतार्थानुवादकतया प्रेरणायाः प्रामाण्यं न स्यात्, विध्यर्थस्य नित्यत्वे च धर्मरूपता न स्यात्, कार्यरूपस्यार्थस्य धर्मरूपताभ्युपगमात्, चोदनैकगम्यस्य तु विध्यर्थस्य लिङा सम्बन्धानवगमात्र तत्सम्प्रतिपत्तिर्भवेत् । सम्बन्धान-

वगमेऽपि शब्दशक्तिस्वाभाव्यात्तत्पदं तमर्थमेव बोधयतीति चेत्तर्हि गवादिपदान्यप्यनवगत-
सम्बन्धानि शब्दशक्त्यैव स्वार्थप्रत्यायकानि स्युः। अपि च विधेर्वाक्यश्रवणानन्तरं प्रति-
भासो यदि स्वीक्रियते तन्न सम्भवति, वाक्यश्रवणानन्तरं पुरुषस्यैवाऽध्येषणादिविशिष्टतया
प्रतीतेः, पुरुषश्चात्मानमेव वाक्यात् कर्मणि नियुज्यमानमवगच्छति, तदवगमाच्चेच्छयैव प्रव-
5 र्तते, अत एव प्रवृत्तिरप्यन्यथा सिद्धेति नासौ लिङर्थमवगमयति तस्मात् पुरुषव्यापारान्य-
थानुपपत्त्या विधिप्रतीतिरित्यप्यभ्युपगमो निरस्तः। प्रवृत्त्यन्यथानुपपत्त्या निमित्तमात्रस्यैवा-
वगतेश्च, प्रत्यक्षादेरपि हि हेयमुपादेयञ्चार्थमवगत्य निवर्त्तन्ते प्रवर्तन्ते वा प्राणिनः, न च तत्र
विधेर्निवर्तकत्वं प्रवर्त्तकत्वं वेष्यते, एवमिहाभिप्रेतफलार्थी अध्येषणादेरिच्छातो वा प्रवर्त्तेत।
अध्येषणादेश्च यदाध्येषणा तदा तस्या एव यदा च प्रेषणा तदा तस्या एव यथासम्भवं
10 प्रवर्त्तकतासम्भवान्न व्यभिचारित्वम्, अन्यथा रक्ततन्त्वभावेऽपि शुक्लतन्तुभ्यः पटोत्पत्तौ
रक्ततन्तवः पटकारणं न स्युः, तस्मान्न विधेः प्रवर्त्तकत्वम्। एवं न हिंस्यादिति प्रतिषेधविधि-
रपि प्रत्युक्तः, न ह्ययं विधिर्नञर्थे प्रेरयति, तस्याभावरूपत्वेन तत्र विधेः प्रवर्त्तकत्वासम्भ-
वात्, न ह्यक्रियात्मके नञर्थे कस्यचित्प्रेरकत्वम्। न च वधप्रवृत्तं पुरुषं निवर्त्तयति प्रति-
षेधविधिरिति वाच्यम्, प्रतिषेधेनैव निवर्त्तितत्वात्तत्र विधेर्वैयर्थ्यात्। न च भावनायां विध्य-
15 र्थे वा विधेः प्रवर्त्तकत्वम्, पुरुषस्य रागत एव तत्र प्रवृत्त्यां विधेर्व्यर्थत्वात्, विधिर्ह्यप्रवृत्त-
प्रवर्तकः, रागात् प्रवृत्तस्य प्रवर्त्तने विधित्वायोगात्। न च नञ्सम्बद्धभावनायां नञर्थ-
सम्बद्धधात्वर्थे वा प्रेरकत्वं वाच्यम्, अभावरूपत्वेन तस्य प्रवृत्तिविषयत्वानुपपत्तेः। न च
हिंसनविशिष्टायां भावनायां रागात् प्रवर्त्तमानः पुरुषः प्रतिषेधपर्युदस्तायां विधिना नियुज्यत
इति वक्तव्यम्, अभावविशिष्टाया भावनाया विधिविषयत्वायोगात्, न चासौ हिंसनाभाव-
20 विशिष्टा विधिविषयतां प्रतिपद्यते, अभावस्याव्यापाररूपतया भावनां प्रति व्यवच्छेदकत्वा-
योगात्। न च नञुपहितो हिंसतिरभक्ष्यास्पर्शनीयन्यायेन हिंसनव्यतिरिक्तधात्वर्थान्तराभि-
धायकत्वात् तदवच्छिन्नां भावनां प्रकाशयति सा च विधिगोचरचारिणीति वाच्यम्, हिंस-
नव्यतिरिक्तधात्वर्थमात्रविशिष्टायां भावनायां विधेः प्रवर्त्तकत्वस्यैव सम्प्राप्तेः, न तु निवर्त्त-
कत्वस्य, विधेश्च प्रवर्तकत्वं न सम्भवतीति पूर्वमेव प्रतिपादितम्, नातो विधेः प्रवर्त्तकत्वं
25 निवर्तकत्वं वा मीमांसकाभिप्रायेण सम्भवति। अन्ये तु वाक्यार्थो भावना, सा च भाव्येऽर्थे
स्वर्गादिके पुरुषस्य व्यापारः, किं केन कथमिति त्र्यंशपरिपूर्णा, किमिति स्वर्गं केनेति
दर्शपूर्णमास्यादिना भावयन् कथमिति प्रयोगादिव्यापाररूपामितिकर्त्तव्यतां दर्शयति, इयं
भावना पदार्थप्रतिपाद्या, पदानां वाक्यार्थप्रतिपादने सामर्थ्याभावात्, पदानि हि न वाक्यार्थं
बोधयन्ति, स्वार्थप्रतिपादनमात्रेण तद्व्यापारस्य निवृत्तेः, वाक्यार्थबोधकत्वञ्चान्वयव्यतिरेका-

भ्यां पदार्थानामेवाकाङ्क्षायोग्यतासन्निध्यवच्छिन्नानाम्, पदश्रवणाभावेऽपि हि यदा श्वेतगुणं द्रव्यं पश्यति हेषाशब्दादश्वजातिञ्चानुमिनोति खुरविक्षेपादिजनितशब्देन क्रियां बुध्यते तदा श्वेतोऽश्वो धावतीत्यवगच्छति, यत्र च मानसादपचाराच्छृण्वन्नपि पदानि न पदार्थानवधारयति तत्र न भवति वाक्यार्थप्रत्यय इत्यन्वयव्यतिरेकबलात् पदार्थानां वाक्यार्थबोधकत्वं निश्चीयत इति तदप्ययुक्तम्, पुरुषव्यापारस्य तद्व्यतिरिक्तस्य पूर्वं प्रतिषिद्धत्वाद्वाक्यार्थानुपपत्तेः, तत्सत्त्वेऽपि पदार्थात्तस्याभेदे पदार्थ एव स्यान्न वाक्यार्थः, ततश्च वाक्यार्थस्य पदार्थगम्यता पदार्थस्य सामान्यात्मकतयाऽकार्यत्वेन धर्मरूपता न स्यात् । सामान्यस्य नित्यतया च वर्त्तमानत्वात् प्रत्यक्षाद्यवतारेण चोदनाया अनुवादकत्वं स्यात् । तथा च तद्विषये प्रवृत्ता चोदना प्रमाणं न स्यात्, पदानामपि स्मृत्युत्पादकत्वेनैव प्रामाण्यस्य भवद्भिः स्वीकारात् शाब्दस्य न कचिदर्थे प्रामाण्यं भवेत् । किञ्च पदार्थाः वाक्यार्थं किं शब्दप्रमाणतयाऽवबोधयन्ति, उतानुमानत्वेन, किं वाऽर्थापत्तितः, आहोस्वित् प्रमाणान्तरत्वेन, नाद्यः पदार्थानामशब्दात्मकत्वात् । न द्वितीयः, वाक्यार्थप्रतिबद्धतया पदार्थानां प्रागप्रतिपत्तेरनुमानानवतारात्, न च वाक्यार्थो न प्रमाणान्तरगोचरः, अतोऽनवगता पदार्थव्यापकताऽनुमानगोचर इति वाच्यम्, अन्यत्रापि तथाभावप्रसक्तेः । वाक्यार्थाविनाभावित्वावगमे वा चोदनाया अनुवादरूपताप्रसक्त्याऽप्रामाण्यं स्यात् । न वा पदार्थानां पक्षधर्मता कचिदवगता न च तदवगममन्तरेणानुमानप्रवृत्तिः । न तृतीयः, चोदनालक्षणोऽर्थो धर्म इत्यभ्युपगमव्याघातात्, अनुमानादर्थापत्तेरव्यतिरेकाच्च । अत एव न तुर्यविकल्पोऽपि युक्तः । न च पदेभ्यः पदार्थास्तेभ्यश्च वाक्यार्थः प्रतीयत इति परम्परया चोदनाया धर्मं प्रति निमित्तत्वमिति वक्तव्यम् तथा सति श्रोत्रात् पदज्ञानं ततः पदार्थविज्ञानं तस्माच्च धर्मज्ञानमिति परम्परया प्रत्यक्षलक्षणोऽर्थो धर्मः स्यात्, साक्षाद्धर्मं प्रति न प्रत्यक्षस्य व्यापार इति तु चोदनायामपि समानम् । पदञ्च पदार्थस्यापि स्मारकत्वान्न वाचकम्, न वा स्मर्यमाणपदार्थसम्बद्धतयाऽविज्ञाते वाक्यार्थे पदार्थस्मरणान्यथानुपपत्त्या प्रतिपत्तिर्युक्ता, न च सम्बन्धो वाक्यार्थेन सह कस्यचिदवगन्तुं शक्यः, सम्बन्धप्रतिपत्तेः सम्बन्ध्यवगमपूर्वकत्वात्, स्मर्यमाणपदार्थप्रतिपत्त्यन्यथानुपपत्तिञ्च विना नान्यतो वाक्यार्थप्रतिपत्तिः, तामन्तरेण च नान्यथानुपपत्तेः प्रवृत्तिरितीतरेतराश्रयप्रसक्तेर्न कथञ्चिद्वाक्यार्थप्रतिपत्तिः स्यात् । मानसापचारस्थलेऽपि न पदार्थानवगमाद्वाक्यार्थानवगमः किन्तु विशिष्टपदसमुदायात् कथंचिदभिन्नस्य वाक्यस्यैवानवबोधान्न तत्र वाक्यार्थप्रतिपत्तिः । न ह्युपहितमनसो वाक्यात्मकपदानां श्रोत्रसम्बन्धमात्रेणावगमः, न चानवगतं स्वरूपेण वाक्यं वाक्यार्थसम्बद्धत्वेन वा स्वार्थं प्रतिपादयत्यतिप्रसङ्गात् । किञ्चोपहतमना यदि शृणोति पदानि

किमिति नावधारयत्यर्थान्, न च तदर्थावधारणं परामर्शरूपम्, तच्च न सम्भवति, उपहत-मनस्कत्वादिति वाच्यम्, यदश्रवणस्याप्यवधारणात्मकत्वादतदात्मकस्य च तच्छ्रवणस्य स्वापमदमूर्च्छादिष्विव परमार्थतोऽश्रवणरूपत्वात्, अविकल्पज्ञानस्याज्ञानरूपत्वाच्च। अपि च पूर्वपदानुविद्धमन्त्यपदं हि वाक्यम्, पूर्वपदानि च स्वाभिधेयविशिष्टतया चरमपदप्रति-
5 पत्तिकाले परामृश्यमानानि वाक्यार्थप्रतिपत्तिजनकानि, तथा च पदार्थानवगमे वाक्यस्यैव स्वार्थाभिसम्बद्धतयाऽनवगमात् कथं ततो वाक्यार्थप्रतिपत्तिः भवेत्, तथाहि गौर्गच्छतीतिवाक्यप्रयोगे गोशब्दात् सामान्यविशेषात्मकं गवार्थं गच्छत्यादिक्रियासापेक्षं प्राक् प्रतिपद्यते, गच्छतीत्येतस्माच्च तमेव प्रतिनियतगमिक्रियावच्छिन्नमवगच्छति, ततः क्रिया-वच्छिन्नः सामान्यविशेषात्मको वाक्यार्थो व्यवतिष्ठते पदसमुदायात्मकाद्वाक्यात् पदार्था-
10 त्मकस्यैव तस्य प्रतिपत्तेः, यस्मिन्नुच्चरिते यः प्रतीयते स एव तस्यार्थ इति शाब्दिकानां व्यवहारात्, तस्मात् पदेभ्यः पदार्थप्रत्ययः पदार्थेभ्यो वाक्यार्थप्रत्यय इत्यपास्तम्, अतो नाभिहितान्वयः। नाप्यन्वितानां क्रियाकारकादीनामेकान्ततोऽभिधानम्, पदार्थान्तरासक्तपदार्थस्यैव पदेनाभिधाने प्रथमपदेनैव वाक्यार्थस्याभिधानेन शेषपदोच्चारणवैयर्थ्यप्रसङ्गात्, प्रतिपदं वाक्यरूपताप्रसक्तेः गौरित्युक्तौ गच्छतीत्यादिक्रियाविशेषाकांक्षाभावप्रसङ्गाच्च, तत
15 एव क्रियाविशेषसंसर्गस्यावगतत्वात्। किञ्च विशेषाणामानन्त्यात् संकेतकरणासम्भवाद्सङ्केतितस्य चातिप्रसङ्गतः प्रतिपादकत्वायोगात् पदार्थानां विशेषप्रत्यायनसामर्थ्यं न स्यात्, सामान्यस्य चार्थक्रियाऽनिर्वर्त्तकत्वेन व्यापित्वेन चानयनादिक्रियासंसर्गाभावाच्च पदप्रतिपाद्यतेति कथमन्विताभिधानं स्यात्, तस्मात् सामान्यशब्दार्थवादिप्रकल्पितं पदाभिधेयं सामान्यं न सम्भवति, विशेषाः शब्दवाच्या इति द्वितीयपक्षोऽपि न युक्तः, एकस्यैव
20 विशेषस्य शब्दवाच्यत्वे विवक्षितदुग्धशब्दवाच्यत्वं एकविशेषव्यतिरेकेणान्येषां न स्यात्, सर्वेषां विशेषाणां वाच्यत्वे चैकस्मिन्नपि पयसि तद्बहुत्वप्रसङ्गः, परस्परविविक्तपयःपरमाणूनां तत्रानेकत्वात्, तद्व्यतिरेकेण पयसोऽनभ्युपगमात् तथा तस्याप्रतीतेश्च। न चैककार्यकारितयैकत्वव्यपदेशः, तस्यापि वस्तुत्वे तद्रूपत्वात् अवस्तुत्वे कार्यविरोधात्। तेषामेकत्रैव सामर्थ्ये तस्यैकस्यैकपरमाणुरूपत्वेऽनुपलभ्यताप्रसङ्गात्, अनेकाणुरूपत्वे एककार्यत्वविरोधात्
25 एकस्य तत्कर्तृकत्वविरोधाच्च, स्थूलैकवस्तुनस्तदेककार्यत्वे तस्य समानरूपत्वं स्यात् स्वारम्भकावयवद्रव्यव्यापकैकरूपत्वादेवञ्च विशेषमात्रवादत्यागः स्यात्। तृतीयविकल्पोऽपि प्रत्येकपक्षभाविदोषप्रसङ्गान्नाभ्युपगन्तुं युक्तः, परस्परनिरपेक्षसामान्यविशेषयोरभावेनाकुलिद्वयाभावे तत्संयोगवत्तदाश्रयोभयवादायोगात्। प्रतिनियतसामान्यविशेषयोरनभिधाने प्रवृत्त्यादिक्रिया-

१ स्वस्यारंभकद्रव्येषु व्यापकतया वर्त्तमान यदेकं तस्य सामान्यरूपत्वादिति भावः॥

वहाराभावप्रसङ्गेनानुभयविकल्पस्वीकारोऽपि न सङ्गतः । न चानुभयपक्षः सम्भवति, अन्योऽन्यव्यवच्छेदरूपयोरन्यतरनिषेधस्य तदपरविधिनान्तरीयकत्वात् । परस्परापेक्षया द्वयोरप्युपसर्जनत्वे निरपेक्षत्वे चासत्त्वमेव सापेक्षत्वे चेतरेतराश्रयः, द्वयोरपि प्राधान्ये सापेक्षत्वानुपपत्तेरसत्त्वमेव, अन्यतरस्यैवोपसर्जनत्वे निमित्तानुपपत्तिः । द्वयोरप्यौदासीन्याभ्युपगमेऽव्यवहार्यता स्यात् । तदतदात्मकैकवस्तुनो यथाक्षयोपशमं प्रमाणतः प्रधानोपसर्जनरूपतया 5 प्रतिपत्त्यभ्युपगमे स्यात्सामान्यविशेषात्मकं वस्त्वित्यशेषरूपात्मकवस्तुप्रतिपादकत्वेन शब्दादेः प्रमाणभूतप्रतिपत्तिनिबन्धनस्याभ्युपगमादनेकान्तमतानुप्रवेशः समानासमानपरिणामात्मकैकवस्तुप्रतिपादकत्वेन शब्दादेरभ्युपगमात् । तदेवमेकान्तवादिप्रकल्पितस्य प्रमाणप्रमेयादेः सर्वस्याघटमानत्वात्तच्छासनं दृष्टवददृष्टार्थेऽपि विसंवादित्वादप्रमाणम्, तत्प्रतिपक्षभूतञ्च यथोक्तजीवादितत्त्वप्रकाशकं सर्वत्र दृष्टार्थेऽव्यभिचारित्वाददृष्टार्थेऽपि सहेतुके 10 हेयोपादेयस्वरूपे बन्धमोक्षलक्षणे वस्तुतत्त्वे प्रमाणमिति स्थितम्, अतः पूर्वापरैकवाक्यतया सकलानन्तधर्मात्मकजीवादितत्त्वप्रतिपादकसूत्रसन्दर्भस्य नयप्रमाणद्वारेण प्रवृत्तस्य तात्पर्यार्थज्ञाता सिद्धान्तज्ञाता, न पुनरपरिहृतविरोधतदेकदेशज्ञाता, न चैकदेशज्ञः स्याद्वादप्ररूपणायाः सम्यक्समर्थ इति व्यवस्थितम् ॥ ६३ ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानंदसूरीश्वरपट्टालङ्कारश्रीमद्विजय- 15
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
लब्धिसूरिणा सङ्कलिते सम्मतितत्त्वसोपाने वचन-
विचारो नाम एकोनचत्वारिंशं सोपानम् ॥



## अथ मुनिवस्त्रादिसमर्थनम् । 20

सूत्रस्य सूचनार्थत्वादर्थवशात्तस्य निष्पत्तिः, न तु सूत्रमात्रेणैवान्यनिरपेक्षेणार्थनिष्पत्तिरित्याह—

**सुत्तं अत्थनिमेणं न सुत्तमेत्तेण अत्थपडिवत्ती ।**
**अत्थगई उण णयवायगहणलीणा दुरभिगम्मा ॥ ६४ ॥**

**सूत्रमर्थनिमेनं न सूत्रमात्रेणार्थप्रतिपत्तिः ।** 25
**अर्थगतिः पुनर्नयवादगहनलीना दुरधिगम्या ॥ छाया ॥**

१ कस्योपसर्जनतेत्यत्र निमित्तं नोपलभ्यते, इदमेवोपसर्जनं नान्यदित्यत्र नियामकाभावादिति भावः ॥

सूत्रमिति, अनेकार्थराशिसूचनात् सूते वाऽस्मादर्थराशिः शेते वाऽस्मिन्नर्थसमूहः श्रूयते वाऽस्मादनेकोऽर्थ इति निरुक्तिवशात् सूत्रम्, अर्यत इत्यर्थस्तस्य साक्षादभिधेयो गम्यश्च सामर्थ्यात्तस्य स्थानमेव सूत्रम्, यथार्थं सूत्रार्थव्यवस्थापनात् सूत्रान्तरनिरपेक्षस्य तस्यार्थव्यवस्थापने प्रमाणान्तरबाधया तदर्थस्य तत्सूत्रस्योन्मत्तवाक्यवदसूत्रत्वापत्तेः,
5 अत एव निर्युक्त्याद्यपेक्षत्वात् सूत्रार्थस्य न सूत्रमात्रेणैवार्थस्य पौर्वापर्येणाविरुद्धस्य प्रतिपत्तिः, अयथार्थतयाऽपि तस्याविवृतस्य श्रुतेः। अर्थस्य यथाव्यवस्थितस्य प्रतिपत्तिस्तु द्रव्यार्थपर्यायार्थलक्षणनयवादस्वरूपारण्ये लीना, तथा च दुरधिगम्या। सकलनयसम्मतार्थस्य प्रतिपादकं सूत्रम् 'जीवो अणाइणिहणो' इत्यादिवाक्यवत्र प्रमाणार्थसूचकं स्यात्, प्रवृत्तानि च नयवादेन सूत्राणि, तथा चागमः, 'णत्थि णएण विहूणं सुत्तं अत्थो य जिणमए किंचि।
10 आसज्ज उ सोआरं णए णअविसारओ बूआ' [ आवश्यकनि० उवग्घायनि० गा० ३८ ] इति ॥ ६४ ॥

यत एवमनेकान्तात्मकार्थप्रतिपादकत्वेन सूत्रं व्याख्येयम्—

तम्हा अहिगयसुत्तेण अत्थसंपायणम्मि जइयव्वं ।
आयरियधीरहत्था हंदि महाणं विलंबेंति ॥ ६५ ॥

15
तस्मादधिगतसूत्रेणार्थसम्पादने यतितव्यम् ।
आचार्यधीरहस्ता हंदि महाज्ञां विडम्बयन्ति ॥ छाया ॥

तस्मादिति, तस्मादधीततत्कालव्यावहारिकाशेषसिद्धान्तेनार्थविषयप्रमाणनयस्वरूपावधारणे यतितव्यम्, अधीत्य सूत्रं श्रोतव्यं श्रुत्वा च नयसर्वसंवादविनिश्चयपरिशुद्धं भावनीयमन्यथाऽऽचार्या धीरहस्ता अशिक्षितशास्त्रार्थाः, अनभ्यस्तकर्माऽपि कर्मणि
20 धृष्टतया व्याप्रियते येषां हस्तास्ते धीरहस्ता आचार्याश्च ते धीरहस्ताश्च आचार्यधीरहस्ता अशिक्षितधृष्टाश्चेति यावत्, हंदि गृह्यताम्, ते तादृशा महाज्ञामाप्तशासनं विडम्बयन्ति। तथा च दृश्यन्त एव वस्त्रपात्रादिधर्मोपकरणसमन्वितानां यतीनां नैर्ग्रन्थ्याभावान्न सम्यग्व्रतानि तीर्थकृद्भिः प्रतिपादितानीति प्रतिपादयन्तः सर्वज्ञवचनं यथावस्थितं नावगच्छन्तो दिग्वाससः, तथाहि यद्रागाद्युपचयनिमित्तं नैर्ग्रन्थ्यविपक्षरूपं तत्तदुपचयहेतुः,
25 यथा विशिष्टशृङ्गारानुषक्ताङ्गनाङ्गसङ्गादिकम्, यथोक्तनैर्ग्रन्थ्यविपक्षभूतञ्च श्वेतवाससां वस्त्रादिग्रहणमिति, तदसमीचीनम्, रागाद्युपचयनिमित्तं हि किमेकदेशनैर्ग्रन्थ्यम्, आहोस्वित् सर्वथा नैर्ग्रन्थ्यम्, तत्र न चरमपक्षो युक्तः, तथाभूतनैर्ग्रन्थ्यस्य मुक्तव्यतिरेकेणासम्भवात् मिथ्यात्वाविरतिप्रमादकषाययोगबलप्रवृत्ताष्टविधकर्मसम्बन्धस्य ग्रन्थत्वात्तदभावस्य चात्यन्ति-

कस्य निश्शेषतो मुक्तेष्वेव सम्भवात्तत्र कथं तस्य रागाद्यपचयहेतुतेति हेतोर्विशेषणा-
सिद्धत्वात् । न प्रथमः, देशनैर्ग्रन्थ्यं हि किं सम्यग्ज्ञानादितारतम्येनोपचीयमानमथवा
बाह्यवस्त्राद्यभावरूपम्, नाद्यः, तथाभूतस्य वस्त्रादिग्रहणस्य सम्यग्ज्ञानादिविपक्षत्वेनासिद्धे-
र्हेतोर्विशेष्यासिद्धिप्रसङ्गात् । नान्त्यः, वस्त्राद्यभावस्य रागाद्यपचयनिमित्तत्वासिद्धया हेतो-
र्विशेषणासिद्धत्वात् । वस्त्राद्यभावो रागाद्यपचयहेतुरिति न वक्तव्यम्, अतिशयरागवद्भिः 5
पारापतादिभिर्व्यभिचारात् । न च पुरुषत्वे सति वस्त्राभावो रागाद्यपचयहेतुरिति वाच्यम्,
वस्त्रविकलनाहलैर्व्यभिचारात् । आर्यदेशोत्पत्तिमत्पुरुषत्वे सतीति न विशेषणीयम्, तथा-
भूतकामुकपुरुषैर्व्यभिचारात् । व्रतधारितथाभूतपुरुषत्वे सतीत्यपि न चारु, तथाभूतपाशु-
पतैर्व्यभिचारात् । न चार्हतशासनप्रतिपत्तिमत्तथाभूतपुरुषत्वे सतीति विशेषणमुपादीयत इति
वाच्यम्, उन्मत्तदिगम्बरैर्व्यभिचारात्, अनुन्मत्तत्वे सतीति विशेषणे मिथ्यात्वोपेतद्रव्य- 10
लिङ्गावलम्बिदिग्वाससा व्यभिचारः, सम्यग्दर्शनादिसमन्वितपुरुषत्वे सतीत्याद्युक्तौ तु विशेष-
णस्यैव स्वसाध्यसाधनसामर्थ्ये विशेष्यस्य वैयर्थ्यम्, विशिष्टश्रुतसंहननविकलानामर्वाका-
लभाविपुरुषाणां वस्त्रादिधर्मोपकरणाभावे यतियोग्याहारविरह इव विशिष्टशरीरस्थितेरभावतो
न सम्यग्दर्शनादिसमन्वितत्वविशेषणोपपत्तिरिति विशेष्यसद्भावो विशेषणस्य बाधक एव ।
ननु वस्त्रादिपरिग्रहस्तृष्णापूर्वकः, तस्याः सत्त्वे रागादेरवश्यम्भावात् सम्यग्दर्शनादेस्त- 15
द्विपक्षत्वात्तृष्णाप्रभववस्त्रग्रहणाभावः स्वकारणनिवृत्तिमन्तरेणानुपपद्यमानो रागादिविपक्ष-
भूतसम्यग्ज्ञानाद्युत्कर्षविधायकत्वात् कथं तद्भावबाधकत्वेनोपदिश्यत इति चेन्न, वस्त्रादि
परिग्रहस्य तृष्णानिमित्ततायामाहारग्रहणस्यापि तथात्वप्रसक्तेः । न चाहारग्रहणं न परिग्रह-
व्यवहारविषयमिति वाच्यम्, मूर्च्छाविषयत्वे तस्य परिग्रहशब्दवाच्यत्वोपपत्तेः । न चाहारो
ज्ञानाद्युपष्टम्भनिमित्तशरीरस्थित्यादिनिमित्तं गृह्यते न तु मांसादिभक्षणवच्छरीरबृंहणार्थं 20
स्रक्चंदनादिवदुपभोगार्थं वेति नासौ तृष्णापूर्वक इति वाच्यम्, वस्त्रादिधर्मोपकरणग्रहणेऽपि
समानत्वात् । न चाहारमन्तरेण चिरतरकालशरीरस्थितेरस्मदादेरदर्शनाद्वेदनोपशमादिभिः
षड्भिर्निमित्तैस्तस्य ग्रहणं न तु तृष्णापूर्वकं तद्ग्रहणमिति वाच्यम्, अनुत्तमसंहननस्य विशिष्ट-
श्रुतापरिकर्मितचित्तवृत्तेः कालातिक्रान्तादिवसतिपरिहारकृतप्रयत्नस्य षड्विधजीवनिकाय-
विध्वंसविधाय्यग्न्याद्यनारम्भिणः शीताद्युपद्रवाद्वस्त्रादिग्रहणमन्तरेण शरीरस्थितेरभावात्त- 25
द्ग्रहणस्यापि न्याय्यत्वात् । तथा वाय्वादिनिमित्तप्रादुर्भूतविक्रियावल्लिङ्गसंवरणप्रयोजन-
पटलाद्युपधिविशेषस्य च ग्रहणं शीतादिबाधोपजायमानार्तध्यानप्रतिषेधार्थं युक्तकल्पादे-
श्चादानं किमिति नेष्यते । न च शीतस्रक्चन्दनाद्यभावोपजायमानसंक्लेशपरिणामनिबर्हणार्थं
स्त्र्यादेरपि ग्रहणं प्रसज्यत इति वाच्यम्, अङ्गनासम्प्रयोगसंकल्पप्रभववेदनापरिणामोपशमार्थं

पृथक्तरमांसाद्याहारग्रहणस्यापि प्रसक्तेः, क्षुद्वेदनाप्रशमनिमित्तत्रिकोटीपरिशुद्धाहारग्रहणवत् ।
तथाभूताहारग्रहणे सुतरां क्लिष्टाध्यवसायोत्पत्तिप्राबल्यान्न तद्ग्रहत इति चेत्समानं स्त्र्यादि-
ग्रहणेऽपि । न च वस्त्राद्यभावे संक्लेशपरिणामप्रादुर्भावः कातराणामेव न तु दिग्वाससां
स्वशरीरमपि काष्ठवन्मन्यमानानामिति वाच्यम्, आर्तध्यानोपगातानामनन्तसत्त्वोपमर्दविधा-
5 य्यनलारम्भादिप्रतिषिद्धाचरणवत्तया तेषामुपलम्भेनानुभवविरोधात्, तदनाचरणवतस्त्वा-
त्महिंसकत्वेनाविरत्याश्रयणादयतित्वस्य न्यायतः प्रसक्तेः । शीतादिदुःखमसहमानो न
संसारबाधान्तमुपयातुं क्षम इति चेत्तुल्यं क्षुद्वेदनादुःखासहनेऽपि, न चाहारग्रहणं मुक्ति-
मार्गाविरोधीति वाच्यम्, अत एव वस्त्रादिग्रहणेऽप्यदोषात् । न च वस्त्रादेर्मलादिदिग्धस्य
सम्मूर्छनानेकसत्त्वहेतुतया तद्ग्रहणे तद्व्यापत्तेरवश्यंभावित्वान्मुक्तिमार्गाविरोधित्वं तस्यासिद्ध-
10 मिति वाच्यम्, आहारग्रहणेऽपि सम्मूर्च्छनाद्यनेकजन्तुसम्पातहेतुत्वस्य तत्परिभोगनिमित्त-
तद्विनाशस्य च समानत्वात् । अथ विधानेन तत्परिभोगादिकं विदधतो न सत्त्वव्यापत्तिर्व्या-
पत्तौ वा शुद्धाशयस्य तद्रक्षादौ यत्नवतो गीतार्थस्य ज्ञानादिपुष्टालम्बनप्रवृत्तेरहिंसकत्वान्न
तद्ग्रहणं मुक्तिमार्गविरोधीति चेत्तर्हि वस्त्रादिग्रहणमप्येवंक्रियमाणं कथं मुक्तिमार्गविरोधि
भवेत्, तथा चागमोक्तविधिना वस्त्रादिग्रहणस्य हिंसाद्यपायरक्षणनिमित्ततया मुक्तिमार्ग-
15 सम्यग्ज्ञानाद्युपबृंहकत्वात्तत्परित्यागस्य त्वर्वाक्कालीनयत्यपेक्षया तद्बाधकत्वाद्विशेष्यसद्भावे
सम्यग्ज्ञानाद्यन्वितत्वे सतीति विशेषणमसिद्धम्, सति चास्मिन् विशेष्यमसिद्धमतो न
रागाद्यपचयनिमित्तता परव्यावर्णितस्वरूपस्य नैर्ग्रन्थ्यस्य सिद्धा । अत एव व्यावर्णितस्व-
रूपनैर्ग्रन्थ्यविपक्षभूतत्वेऽपि वस्त्रादिग्रहणस्य न रागाद्युपचयं प्रति गमकत्वम्, तद्विरुद्धेन
सम्यग्दर्शनाद्युपचयेन यथोक्तवस्त्रादिग्रहस्य व्याप्तत्वेन तद्विरुद्धसाधकत्वात् । दृष्टान्तस्यापि
20 परव्यावर्णितनैर्ग्रन्थ्यविपक्षभूतत्वासिद्धेः साधनविकलता । न च यथोक्ताङ्गनासङ्गादिरप्युप-
सर्गसहिष्णोर्वैराग्यभाववशीकृतचेतसो योगिनो रागाद्यपचयहेतुः, भरतेश्वरप्रभृतिषु तस्य
तत्प्रक्षयहेतुत्वेन 'जे जत्तिआ इ हेऊ भवस्स' इत्यादि शास्त्रे श्रवणात् । रागाद्यपचयनिमित्त-
नैर्ग्रन्थ्यविपक्षभूतत्वञ्च वस्त्राद्युपादानस्यासिद्धम्, धर्मोपकरणत्वेन तस्य ग्रन्थत्वानुपपत्तेः, तथा
च प्रयोगः, अर्हन्मार्गोक्तक्रियाव्यवस्थितानां सम्यग्दर्शनादिसम्प्रयुक्तानां यतीनां वस्त्रादिकं न
25 ग्रन्थः, धर्मोपकरणत्वात्, प्रमार्जनादिनिमित्तोपादीयमानपिञ्छिकादिवत्, यत्तु कर्मबन्धहेतु-
तया ग्रन्थत्वेन प्रसिद्धं तद्धर्मोपकरणमपि न भवति यथालुब्धकादेर्मृगादिबन्धनिमित्तं वागु-
रादिकम् । न च धर्मोपकरणत्वं वस्त्रादेरसिद्धम्, वस्त्राद्यन्तरेण यतीनामुक्तलक्षणानामर्हत्प्र-
णीतात्रह्मपरित्यागादिलक्षणस्य व्रतसमूहस्य सर्वथा संरक्षणहेतुत्वानुपपत्तेः, यच्च व्रतसंरक्षण-
हेतुस्तद्धर्मोपकरणत्वेन परस्यापि सिद्धम्, यथा पिञ्छिकादि, वैधर्म्येण वागुरादि । न च

पिच्छिकादेरभिष्वङ्गहेतुत्वानुपपत्तेर्धर्मोपकरणत्वं युक्तं न वस्त्रादेस्तद्विपर्ययादिति वाच्यम्, अनभिष्वङ्गनिमित्तस्यैव तस्यापि धर्मोपकरणत्वाभ्युपगमात्, अभिष्वङ्गनिबन्धस्य शरीरादेरपि धर्मोपकरणत्वात्, न हि शरीरेऽप्यप्रतिबद्धानां विदितवेद्यानां साधूनां वस्त्रादिषु ममेद-मित्यभिनिवेशः, परेणाप्यभ्युपगमनीयमेतत्, अन्यथा शुक्लध्यानाग्निना कर्मेन्धनं भस्मसा-त्कुर्वतः परित्यक्ताशेषपरिग्रहस्य केनचित् तदुपसर्गकरणबुद्ध्या भक्त्या वा वस्त्राद्यावृतशरीरस्य 5
ग्रन्थत्वात् परमयोगिनो मुक्तिसाधकत्वं न स्यात्, स्वयमादत्तवस्त्रादेरेवाभिष्वङ्गनिमित्ततया न धर्मोपकरणत्वमिति चेन्न, स्वयं गृहीतपिच्छिकादिनाऽव्यभिचारात् । न च पिच्छिकाग्र-ग्रहेऽप्रमार्जितासनाद्युपवेशनादिसम्भवतः सूक्ष्मसत्त्वव्यापत्तिसद्भावे प्राणातिपातविरमणादि-महाव्रतधारणानुपपत्तेस्तस्य ग्रहणं धर्मोपकरणत्वञ्चात एवेति वाच्यम्, एवं पात्रस्यापि धर्मोपकरणत्वात्तद्ग्रहणात्तदन्तरेणैकत्रैव हस्त एव वा भुजिक्रियां विदधतामारम्भदोषतः कर- 10
चरणक्षालने च जलगतासंख्येयादिसत्त्वव्यापत्तितो महाव्रतधारणानुपपत्तेः । न च प्रतिगृहं भिक्षामात्रस्योदनस्योपभोगाद्वस्त्रपूतोदकाङ्गीकरणाच्चायमदोष इति वक्तव्यम्, तथाभूतप्रवृत्ते-र्युष्मास्वनुपलम्भात्, प्रवृत्तावपि प्रवचनोपघातप्रसक्तेः, तस्य चाबोधिबीजत्वात् 'छक्काय-दयावंतो वि संजओ दुल्लहं कुणइ बोहिं । आहार' इत्याद्यागमप्रामाण्यात्, न च गृहस्थ-वाससा पूतमप्युदकं निर्जन्तुकं सर्वं सम्पद्यते, तज्जन्तूनां सूक्ष्मत्वाद्वस्त्रस्य चाघनत्वात्, 15
गृहिणां तच्छोधनेऽतिशयप्रयत्नानुपपत्तेश्च । न च कर एव प्रत्युपेक्षणात्तत्सत्त्वानुपलब्धौ तदुपभोगान्न दोष इति वाच्यम्, तथाऽनिरीक्षणात्, तदनुपलब्धावपि तदभावनिश्चया-योगात् । न च यत्ननिरीक्षणानुपलब्ध्या व्यापाद्यमाना अपि सत्त्वा न व्रतातिचार-निमित्ताः, विषचूर्णादेर्यत्नानुपलब्धभुक्तस्य प्राणनाशहेतुत्वोपलब्धेः । न च चतुर्थरसादेः प्रासुकोदकस्योपभोगादयमदोषः, तत्रापि सत्त्वसंसक्तिसंभवात् । करप्रक्षिप्ते तस्मिन् तन्निरी- 20
क्षणे पानोज्झनयोस्तद्व्यापत्तिदोषस्यापरिहार्यत्वात्, पात्रादिग्रहणे तु तत्प्रत्युपेक्षणस्य तद्र-क्षणस्य च सुकरत्वान्न व्रतातिचारदोषापत्तिः । न च त्रिवारोद्वृत्तोष्णोदकस्यैव परिभोगादय-मदोषः, तथाभूतस्य प्रतिगृहं तत्कालोपस्थायिनस्तस्याप्राप्तेः, प्राप्तावपि तृडपनोदाक्षमत्वा त्तद्युक्तस्य चानुत्तमसंहननस्येदानीन्तनयतेरार्त्तध्यानोपपत्तेस्तस्य च दुर्गतिनिबन्धनत्वात् । न च तृडादिदुःखस्य तपोरूपतया न दोष इति वाच्यम्, अनशनादेर्बाह्यतपस आन्तरतपउपचय- 25
हेतुत्वेनाश्रणीयत्वात्, अन्यादृग्भूतस्य चातपस्त्वात् 'सो य तवो कायव्वो जेण मणो मंगुलं न चिंतेइ" [ पञ्चव० गा० २१४ ] इत्याद्यागमप्रामाण्यात्, तन्न वस्त्रपात्रादिविक-लस्येदानीन्तनयतेः सर्वसावद्ययोगप्रत्याख्यानं सम्भवतीति कथं न तस्य धर्मोपकरणत्वम् । अल्पमूल्याशोभनवस्त्रादिग्रहणाच्च न पथि सञ्चरतो यतेश्चोरादिभीतिरिति कथं स्वीकृतग्रन्थस्या-

ध्वनि सञ्चरतो नाभीष्टस्थानप्राप्तिः येन यः स्वीकृतग्रन्थः सोऽध्वनि सञ्चरन्नाभीष्टस्थानप्राप्तिमान्, यथा चौराद्युपप्लुते पथि सञ्चरन्नसहायः स्वीकृतग्रन्थोऽध्वगः, स्वीकृतग्रंथश्च मोक्षाध्वनि सञ्चरन् वस्त्राद्युपकरणवान् सितपट इति प्रयोगः साध्यसाधको भवेत्, वस्त्रादिधर्मोपकरणस्याग्रन्थत्वस्य प्रतिपादितत्वादत्रत्यहेतुरसिद्धश्च । अथाधमचोरास्तथाभूतमपि गृह्णन्तीति तद्ग्राह्यत्वं तस्यासिद्धमिति चेत्तर्हि पुस्तकाद्यपि मोक्षाध्वसञ्चारिणान ग्राह्यं स्यात्, तदपि भगवता प्रतिषिद्धमिति न वक्तव्यम्, तत्प्रतिषिद्धपुस्तकादिग्राहिणामिदानीतनयतीनां तदाज्ञाविलोपकारित्वेनायतित्वप्रसक्तेः । ज्ञानाद्युपष्टम्भहेतुत्वेन तद्ग्रहणे पात्रादेरपि तत एव ग्रहणप्रसक्तिः । न वा पाथेयाद्युपकरणरहितस्याध्वगस्याप्यभीष्टस्थानप्राप्तिः सम्भविनीति दृष्टान्तोऽप्यसङ्गत एव, सर्वस्य विशिष्टफलारम्भिणस्तदुपकरणरहितस्य तत्फलाप्रसाधकत्वात् तथाहि यो यत्रोपायविकलो नासौ तत्साधयति, यथा कृष्याद्युपायविकलस्तत्फलम्, अशेषकर्मविगमस्वभावमुक्तिफलवस्त्रादिधर्मोपकरणोपायविकलश्च मुनिर्भवद्भिरभ्युपगम्यत इति । न च क्षायिकज्ञानदर्शनचारित्राण्येव तदुपाय इति वक्तव्यम्, वस्त्रादिधर्मोपकरणविकलस्य क्षायिकज्ञानादेरेवासम्भवात्तदेवं धर्मोपकरणयुक्तस्य महाव्रतधारिणो निर्ग्रन्थत्वादार्यिकाणामपि मुक्तिप्राप्त्यविरोध इति ॥

इति श्रीतपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजय-<br>कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-<br>लब्धिसूरिणा सङ्कलिते सम्मतितत्त्वसोपाने मुनिवस्त्रादि-<br>समर्थनं नाम चत्वारिंशं सोपानम् ॥



## अथ स्त्रीमुक्तिसाधनम्

ननु स्त्रियो मुक्तिभाजो न भवन्ति स्त्रीत्वाच्चतुर्दशपूर्वसंविद्भागिन्य इव, मैवम् सर्वासां मुक्तिभाक्त्वाभावसाधने सिद्धसाध्यत्वादभव्यस्त्रीणां मुक्तिसद्भावानभ्युपगमात्, भव्यस्त्रीणां तद्भाक्त्वाभावसाधनेऽपि तथैव दोषत्वाद्भव्यानामपि सर्वासां मुक्त्यनिष्टेः 'भव्वा वि ते अणंता सिद्धिपहं जेण पावेंति' इति वचनप्रामाण्यात् । यद्यवाप्तसम्यग्दर्शना भव्यस्त्रिय इत्युच्यतेऽत्रापि स एव दोषः, प्रोज्झितसम्यग्दर्शनानां तासां तदनिष्टेः, अपरित्यक्तसम्यग्दर्शना इत्युक्तावपि न तद्दोषबहिष्कृतिः, अप्राप्ताविकलचारित्राणां तत्प्राप्त्यनभ्युपगमात् । न चाविकलचारित्रप्राप्तिरेव स्त्रीत्वात्तासां न भवतीति वाच्यम्, पुरुषस्यापि पुरुषत्वात्तदभावप्रसक्तेः । न च पुरुषे सकलसावद्ययोगनिवृत्तिरूपा चित्तपरिणतिः स्वात्मनि स्वसंवेदनाध्यक्षसिद्धा, परात्मनि चानुमानत इति वाच्यम्, स्त्रीणामपि तत्परिणतेस्तथैव सिद्धेः ।

न च भगवता तासां नैर्ग्रन्थ्यं नाभिहितमिति शङ्क्यम्, 'णो कप्पइ निग्गन्थस्स णिग्गंथीए वा अभिन्नतालपलंबे पडिगाहित्तए' [ कप्पसू० उ० १ सू० १ ] इत्याद्यागमेन बहुशः प्रतिपादनात्, अयोग्यायाश्च प्रव्रज्याप्रतिपत्तिप्रतिषेधस्य 'अट्ठारसपुरिसेसुं वीसं इत्थीसु' इत्याद्यागमेन विधानाच्च । विशेषप्रतिषेधस्य शेषाभ्यनुज्ञापरत्वाच्च न तासां भगवदुक्तनैर्ग्रन्थ्यनिमित्ताविकलचारित्रप्राप्त्यनुपपत्तिः । तथाभूतचारित्रवत्त्वेऽपि तासां न तत्प्राप्तिरित्यभिधानन्त्वनुमानबाधितमेव, अविकलकारणस्यावश्यमुत्पत्तेरन्त्यावस्थाप्राप्तबीजादिसामग्रीकाङ्कुरादिवत् । स्त्रीवेदपरिक्षयाभावोऽपि न तत्प्राप्तिप्रतिरोधकोऽन्यथा पुंवेदपरिक्षयाभावस्यापि प्रतिरोधकत्वापत्त्या पुरुषस्यापि तदप्राप्तिप्रसङ्गात् । न च पुरुषस्य तत्परिक्षये शैलेश्यवस्थाभाविचारित्रप्राप्तिमतो मुक्तिप्राप्तिर्न तु प्रागिति वाच्यम्, स्त्रियोऽप्येवं मुक्तिप्राप्तौ विरोधाभावात्, स्त्रीवेदपरिक्षयसामर्थ्यानुपपत्तिर्बाधक इति चेत्तथाविधसामर्थ्याभावस्य तस्या असिद्धेः, तथाविधसामर्थ्याभावबोधकस्यागमस्य द्वादशाङ्ग्यामनुपलब्धेः । न च तत्परिक्षयसामर्थ्यप्रतिपादकस्याप्यनुपलब्धिरिति वाच्यम्, 'मज्झत्थो वा नित्थपरिसिद्धा तित्थयरितित्थे अतित्थयरिसिद्धा असंखेज्जगुणा' इत्यादिसिद्धप्राभृतागमस्यानेकस्य स्त्रीणां स्त्रीवेदपरिक्षयसामर्थ्यप्रतिपादकस्योपलम्भात्र हि सर्वकर्मानीकनायकरूपमोहनीयकर्माङ्गभूतस्त्रीवेदपरिक्षयमन्तरेण तासां मुक्तिप्राप्तिरिति मुक्तिसद्भावाऽऽवेदकमेव वचस्तासां सामर्थ्यावेदकं सिद्धमतो न स्त्रीत्वं तत्परिक्षयसामर्थ्येन विरुद्धम्, सहानवस्थानलक्षणविरोधस्यासिद्धेरन्योन्यव्यवच्छेदरूपताया अनयोरनवगततया परस्परपरिहारस्थितिलक्षणविरोधस्याप्यसिद्धेः । किञ्च स्त्रीत्वादिति हेतुनोदितस्त्रीवेदत्वादिति विवक्षणेऽसिद्धता, मुक्तिप्राप्तिप्राक्तनसमयादिषु स्त्रीवेदोदयस्य तासामभावादनिवृत्तिगुणस्थान एव तस्य परिक्षयात्, परिक्षीणस्त्रीवेदत्वादिति विवक्षणे च विरुद्धता, हेतोर्विपर्ययव्याप्तत्वात्, स्याकारयोगित्वादिति विवक्षणे त्वनैकान्तिकता, विपर्यये बाधकप्रमाणाभावेन सन्दिग्धविपक्षव्यावृत्तिकत्वात् । चतुर्दशपूर्वसंवित्सम्बन्धित्वाभावोऽपि तासां कुतः सिद्धो येन साध्यविकलो दृष्टान्तो न स्यात्, सर्वज्ञप्रणीतागमनादिति चेत्तत एव मुक्तिभाक्त्वस्यापि सिद्धिरस्तु, न ह्येकवाक्यतया व्यवस्थितो दृष्टेष्टादिषु बाधामननुभवन्नाप्तागमः क्वचित् प्रमाणं क्वचिन्नेत्यभ्युपगन्तुं प्रेक्षापूर्वकारिणा शक्यः । अथ विवादगोचरापन्नाऽबला अशेषकर्मक्षयनिबन्धनाध्यवसायविकला, अविद्यमानाधःसप्तमनरकप्राप्त्य-

१. सर्वोत्कृष्टपदप्राप्तिः सर्वोत्कृष्टाध्यवसायेन भवति, तत्र सर्वोत्कृष्टदुःखस्थानं सर्वोत्कृष्टसुखस्थानमपि सिद्धम्, प्रथमा सप्तमनरकपृथ्वी, परमदुःखस्यातोऽन्यत्राभावात्, द्वितीयं निःश्रेयसम्, आगमे च स्त्रीणामाद्यस्थानगमनं निषिद्धम् तत्र कारणं तद्योग्यतथाविधोत्कृष्टतममनोवीर्यपरिणत्यभावः, अत एव संमूर्छिमादिवत्

विकलकारणकर्मबीजभूताध्यवसानत्वात्, यस्तु नैवं नासौ तथा, यथोभयसंप्रतिपत्तिविषयः पुरुष इति वैधर्म्यदृष्टान्त इति चेन्न, साध्यसाधनयोः प्रतिबन्धासिद्धेः, निरुक्ताध्यवसानम- बलातो हि निवर्त्तमानमशेषकर्मक्षयाध्यवसायनिवर्त्तकं कारणं वा भवद्भवेत्, व्यापकं वा, नाद्यः, अशेषकर्मक्षयाध्यवसानं प्रति निरुक्ताध्यवसानस्याकारणत्वात, येन तन्निवृत्त्या तस्यापि
5 निवृत्तिर्भवेत । कारणत्वे वा यत्राशेषकर्मक्षयाध्यवसानं योगिनि सम्भवति तत्राधःसप्तम- नरकपृथिवीप्राप्तावबन्ध्यकारणस्य बीजभूताध्यवसानस्य सद्भावात्, कार्यस्य कारणाव्यभि- चारित्वात्तस्य नरकप्राप्तिसद्भाव इत्यनिष्टापत्तिः । न च तत्र कारणसद्भावेऽपि कार्यं नोत्पद्यत इति वक्तव्यम्, अविकलकारणस्यावश्यंतया स्वकार्यनिर्वर्त्तकत्वात् । न द्वितीयः, व्याप्यस्य सत्त्वे व्यापकस्यावश्यं सद्भावात्तत्रैव तद्दोषपातादवस्थ्यात् । न च यत्र क्लिष्ट-
10 तराध्यवसायसद्भावस्तत्रातिशुभतराध्यवसायेन भाव्यमिति प्रतिबन्धसम्भवः, तन्दुलमत्स्येन व्यभिचारात्, न च मनुष्यजातियोगित्वे सतीति विशेषणं वाच्यम्, उत्तमसंहननेन चारित्र- प्राप्तिकालार्वाक्समयभाविना सर्वपर्याप्तिसम्पन्नेन तथाविधक्लिष्टपरिणामवता पुरुषेण व्यभिचा- रात् । न च यत्रातिशुभतरः परिणामस्तत्राप्यशुभतरपरिणामेन भाव्यमित्यत्रापि प्रतिबन्धः, तथाविधयोगिना व्यभिचारात् । स्त्रीणां सप्तमनरकपृथ्वीप्राप्तिनिबंधनकर्मबीजाध्यवसाया-
15 भावो यद्यागमात् प्रतिपन्नस्तर्हि तत एवाशेषकर्मपरिक्षयनिबन्धनाध्यवसायसद्भावोऽपि प्रतिपन्न एव, न ह्यतीन्द्रिय एवंविधेऽर्थेऽर्वाग्दृशोऽस्मदादेरागमादृतेऽन्यत् प्रमाणमस्ति, न च दृष्टेष्टाविरोध्याप्तवचनमसत्तर्कानुसारिजातिविकल्पैर्बाधामनुभवति, तेषामवस्तुसंस्पर्शि- त्वात् । न चात्र वस्तुन्यागमनिरपेक्षमनुमानं प्रवर्त्तते, पक्षधर्मादेर्लिङ्गरूपस्य प्रमाणान्त- रतः प्रतिपत्तुमशक्तेः, प्रतिपत्तौ वा साध्यस्यापि प्रतिबन्धग्राहिप्रमाणतः प्रतिपत्तेर्नैकान्ततोऽ-
20 तीन्द्रियता भवेत्, आगमानुसारि चानुमानं न बाधकम्, प्रकृतवस्तुसंवादकत्वात् । न चाप्त- वचनं स्त्रीनिर्वाणप्रतिपादकमप्रमाणम्, सप्तमनरकप्राप्तिप्रतिषेधकञ्च प्रमाणमिति वक्तव्यम्, प्रामाण्यनिबन्धनस्याप्तप्रणीतत्वादेरुभयत्राविशेषात् । एकमाप्तप्रणीतमेव न भवतीति चेन्न, इतरत्राप्यस्य समानत्वात्, पूर्वापरोपनिबद्धाशेषदृष्टादृष्टप्रयोजनार्थप्रतिपादकावान्तरवाक्यस- मूहात्मकैकमहावाक्यरूपतयाऽर्हदागमस्यैकत्वात् तथा चान्तरवाक्यानां केषाञ्चिदप्रामाण्ये
25 सर्वस्याप्यागमस्याप्रामाण्यप्रसक्तेः, अङ्गदुष्टत्वे तदात्मकाङ्गिनोऽपि दुष्टत्वापत्तेः । न च प्रद-

---

सर्वोत्कृष्टपदप्राप्तिरपि न तासां समस्ति तथावादलब्धिविकुर्वणत्वादिलब्धिपूर्वगतश्रुताधिगतिषु सामर्थ्याभावा- दपि न तत्प्राप्तिरिति पूर्वपक्षाशयः ॥ निःश्रेयसं प्रत्यपि तासां सर्वोत्कृष्टमनोवीर्यपरिणतिर्नास्तीत्यस्यसाधक नास्ति किञ्चित् प्रमाणम्, अन्तर्व्याप्तिमन्तरेण केवलसम्मूर्छिमादिदृष्टान्तमात्रेण च न साध्यसिद्धिरित्याशये- नाह साध्येति ॥

र्शितवाक्यं सर्वज्ञप्रणीततयाऽस्मान् प्रत्यसिद्धमिति वाच्यम्, नास्तिकादीन् प्रति पुरुषनिर्वाणा-
वेदकस्यापि तत्प्रणीतत्वेनासिद्धत्वा तान् प्रति तत्प्रणीतत्वसाधकतयोपन्यस्यमानाया युक्तेरत्रापि
समानत्वात्, पूर्वापरैकवाक्यत्वदृष्टादृष्टाबाधितत्वादेरविशेषात् । ननु स्त्रीणां घातिकर्मक्षय-
निमित्तमाद्यशुक्लध्यानद्वयं न सम्भवतीति न निर्वाणप्राप्तिसम्भवः, 'आद्ये पूर्वविद' इति वचनात्
पूर्वधरस्यैव तयोः सद्भावात्, न च पूर्वधरत्वं तासाम्, तदनधिकारित्वादिति चेन्न, 5
तथा सति प्राक्तनभवानधीतपूर्वाणां वर्त्तमानतीर्थाधिपत्यादीनामपि तन्न भवेत्तदध्ययना-
सम्भवादाद्यशुक्लध्यानद्वयासम्भवतस्तन्निमित्तघातिकर्मक्षयसमुद्भूताशेषतत्त्वावबोधस्वभावकेव-
लज्ञानाभावे न मुक्तिसङ्गतिः स्यादित्यनिष्टापत्तिः । अथ शास्त्रयोगागम्यसामर्थ्ययोगावसेय-
भावेष्वतिसूक्ष्मेष्वपि तेषां विशिष्टक्षयोपशमवीर्यविशेषप्रभवप्रभावयोगात् पूर्वधरस्येव बोधा-
तिरेकसद्भावादाद्यशुक्लध्यानद्वयप्राप्तेः कैवल्यावाप्तिक्रमेण मुक्त्यवाप्तिरिति न दोषः, तद- 10
ध्ययनमन्तरेणापि विशिष्टक्षयोपशमसमुद्भूतज्ञानात् पूर्ववित्त्वसम्भवादिति चेत्तर्हि निर्ग्रन्थी-
नामप्येवं द्वितयसम्भवे न कश्चिद्दोषः, अन्यथा मरुदेवीस्वामिनीप्रभृतीनां जन्मान्तरेऽप्य-
नधीतपूर्वाणां न मुक्तिप्राप्तिर्भवेन्न चासौ तेषामसिद्धा, सिद्धप्राभृतादिग्रन्थेषु गृहिलिङ्ग-
सिद्धानां प्रतिपादनात्, न च ते अप्रमाणम्, सर्वज्ञप्रणीतत्वेन तेषां प्रामाण्यात् । न च
मायागारवादिभूयस्त्वादबलानां न मुक्तिप्राप्तिः, तदा तासां तद्भूयस्त्वासम्भवात्, प्राक् तु 15
पुरुषाणामपि तत्सम्भवोऽविरुद्धः । न चाल्पसत्त्वाः क्रूराध्यवसायाश्च ता इति वाच्यम्,
सत्त्वस्य कार्यगम्यत्वात्तस्य च तासु दर्शनादल्पसत्त्वासिद्धेः, दृश्यन्ते ह्यसदभियोगादौ
तृणवत्ताः प्राणपरित्यागं कुर्वाणाः, परीषहोपसर्गाभिभवं चाङ्गीकृतमहाव्रता विदधानाः ।
क्रूराध्यवसायत्वं दृढप्रहारिप्रभृतीनां प्रागवस्थायां तद्भवे विद्यमानमपि न मुक्तिप्राप्तिप्रति-
बन्धकम्, तदवस्थायां तु तास्वप्यभाव एव । धर्मे पुरुषस्योत्तमत्वात्तासां चानुत्तमत्वान्न 20
मुक्तिप्राप्तिरिति चेन्न, अन्यगुणापेक्षयाऽनुत्तमत्वस्य मुक्तिप्राप्त्यप्रतिबन्धकत्वात्, अन्यथा
तीर्थकृद्गुणापेक्षया गणधरादेरप्यनुत्तमत्वान्मुक्तिप्राप्त्यभावो भवेत्, तस्मान्न युक्त्यागमाभ्यां
तासां मुक्त्यभावः प्रतिपत्तुं शक्यः ॥ यत्तु भगवत्प्रतिमाया आभरणादिभिर्भूषा न
विधेयेति दिगम्बरैरुच्यते तदप्यर्हत्प्रणीतागमापरिज्ञानस्य विजृम्भितमुपलक्ष्यते तत्कर-
णस्य शुभभावनिमित्ततया कर्मक्षयावन्ध्यकारणत्वात्, भगवत्प्रतिमाया भूषणाद्यारोपणं हि 25
कर्मक्षयकारणम्, कर्त्तुर्मनःप्रसादजनकत्वात्, कुङ्कुमाद्यालेपनवत्, न च व्रतावस्थायां भग-
वता भूषणादेरनङ्गीकृतत्वान्न तत्प्रतिकृतौ तद्विधेयम्, संमज्जनाङ्गरागपुष्पादिधारणस्यापि
तदवस्थायां भगवताऽनाश्रितत्वान्न तत्तत्र विधेयं स्यात् । अथ मेरुमस्तकादिषु तदभिषेकादा

बिम्बादिभिस्तस्य विहितत्वादस्मदादिभिरपि कृतानुकरणादिभिः प्रयोजनैस्तत्तत्र विधीयते तर्हि तत एवाभरणादिभिर्विभूषणादिकमपि विधेयम्, कृतानुकरणादेः समानत्वात्। एवमन्यदप्यागमबाह्यं परपरिकल्पितमागमयुक्तिप्रदर्शनेन प्रतिषेद्धव्यम्। तदेवमनधीताश्रुतयथावदपरिभावितागमतात्पर्या दिग्वासस इवाप्राज्ञा विगोपयन्तीति व्यवस्थितम्॥ ६५॥

5 यत एवं ततः—

**जह जह बहुस्सुओ संमओ य सिस्सगणसंपरिवुडो य।**
**अविणिच्छिओ य समए तह तह सिद्धंतपडिणीओ ॥६६॥**

यथा यथा बहुश्रुतः सम्मतश्च शिष्यगणसंपरिवृतश्च।
अविनिश्चितश्च समये तथा तथा सिद्धान्तप्रत्यनीकः॥ छाया॥

10 यथेति, सम्यगर्थमनवधार्यानेकशास्त्रश्रवणमात्रतः शास्त्रज्ञत्वेन तथाविधापराविदितशास्त्राभिप्रायाणां सम्मतोऽत एव श्रुतविशेषानभिज्ञैः शिष्यगणैः सम्परिवृतः, तथाविधपरिवारदर्पाच्छास्त्रपर्यालोचनेऽनादरात् समयेऽविनिश्चितश्च यथा यथा भवति तथा तथा सिद्धान्तप्रत्यनीकोऽपि, यथावस्थितवस्तुस्वरूपप्रकाशकागमप्रतिपक्षो निस्सारप्ररूपणयाऽन्यागमेभ्योऽपि भगवदागममधः करोतीति यावत्॥ ६६॥

15 एवञ्च शास्त्रमधीत्य तदर्थावधारणं विधेयम्, अवधृततदर्थश्च नयप्रमाणाभिप्रायतो यथावदर्थः परिभावनीयोऽन्यथा तत्फलपरिज्ञानविकलता स्यादित्याह—

**चरणकरणप्पहाणा ससमयपरसमयमुक्कवावारा।**
**चरणकरणस्स सारं णिच्छयसुद्धं ण याणंति॥ ६७॥**

चरणकरणप्रधानाः स्वसमयपरसमयमुक्तव्यापाराः।
20 चरणकरणयोः सारं निश्चयशुद्धं न जानन्ति॥ छाया॥

चरणेति, व्रतश्रमणधर्मसंयमवैयावृत्त्यब्रह्मगुप्तिज्ञानादित्रयतपःक्रोधादिनिग्रहस्वरूपं चरणम्, पिण्डविशुद्धिसमितिभावनाप्रतिमेन्द्रियनिरोधप्रतिलेखनगुप्त्यभिग्रहस्वरूपं करणम्, तदनुष्ठानतत्पराः। अयं स्वसमयोऽनेकान्तात्मकवस्तुप्ररूपणादयं परसमयः केवलनयाभिप्रायप्रतिपादनादित्येतस्मिन् परिज्ञानेऽनादृता अनेकान्तात्मकवस्तुतत्त्वं यथावदनवबुध्य-
25 मानाश्चरणकरणयोः फलं ज्ञानदर्शनयोगात्मकं निष्कलङ्कं नानुभवन्ति, तस्य ज्ञानदर्शनचारित्रात्मककारणप्रभवत्वात् कारणाभावे च कार्यस्यासम्भवादन्यथा तस्य निर्हेतुकत्वापत्तेः, चरणकरणयोश्चारित्रात्मकत्वाद्द्रव्यपर्यायात्मकजीवादितत्त्वावगमस्वभावकव्यभावेऽभावादिति॥ ६७॥

सम्यग्दर्शनस्य सम्यग्ज्ञानादभेदात् ज्ञानक्रिययोरन्यतरविकलयोर्नाशेषकर्मक्षयलक्षणफल-निर्वर्तकत्वं सम्भवतीति प्रतिपादयति—

**णाणं किरियारहियं किरियामेत्तं च दो वि एगंता ।**
**असमत्था दाएउं जम्ममरणदुक्ख मा भाइ ॥ ६८ ॥**

ज्ञानं क्रियारहितं क्रियामात्रञ्च द्वावप्येकान्तौ । 5
असमर्थौ दर्शयितुं जन्ममरणदुःखेभ्यो मा भैषीः ॥ छाया ॥

ज्ञानमिति, यथावज्जीवादितत्त्वप्रकाशकं ज्ञानं यथोक्तानुष्ठानरहितं जन्ममरणदुःखेभ्यो मा भैषीरिति दर्शयितुमसमर्थम्, न हि ज्ञानमात्रेणैव पुरुषो भयेभ्यो मुच्यते क्रियारहितत्वात्, दृष्टप्रदीपनकपलायनमार्गपङ्गुवत् । क्रियामात्रं वा ज्ञानरहितं न तेभ्यो मा भैषीरिति दर्शयितुं समर्थम्, न हि क्रियामात्रात् पुरुषो भयेभ्यो मुच्यते सज्ज्ञानविकलत्वात् प्रदीपनक- 10 भयप्रपलायमानान्धवत् । उभयसद्भावस्तु तेभ्यो मा भैषीरिति दर्शयितुं समर्थः, तथाहि सम्यग्ज्ञानक्रियावान् भयेभ्यो मुच्यते, उभयसंयोगवत्त्वात्, प्रदीपनकभयान्धस्कन्धारूढपङ्गुवत्, तस्मात्सम्यग्ज्ञानादित्रितयनयसमूहात् मुक्तिः, नयसमूहविषयञ्च सम्यग्ज्ञानं श्रद्धानञ्च तद्विषयं सम्यग्दर्शनं तत्पूर्वञ्चाशेषपापक्रियानिवृत्तिलक्षणं चारित्रम्, प्रधानोपसर्जनभावेन मुख्यवृत्त्या वा तत्त्रितयप्रदर्शकञ्च वाक्यमागमो नान्यः, एकान्तप्रतिपादकस्यासदर्थत्वेन 15 विसंवादकतया तस्य प्राधान्यानुपपत्तेः, जिनवचनस्य तु तद्विपर्ययेण दृष्टवद्दृष्टार्थेऽपि प्रामाण्यसङ्गतेः ॥ ६८ ॥

तस्य तथाभूतस्य स्तुतिप्रतिपादनाय मङ्गलार्थत्वात् प्रकरणपरिसमाप्तौ गाथासूत्रमाह—

**भद्दं मिच्छादंसणसमूहमइयस्स अमयसारस्स ।**
**जिणवयणस्स भगवओ संविग्गसुहाहिगम्मस्स ॥ ६९ ॥** 20

भद्रं मिथ्यादर्शनसमूहमयस्यामृतसारस्य ।
जिनवचनस्य भगवतः संविग्नसुखाधिगम्यस्य ॥ छाया ॥

भद्रमिति, भगवतो जिनवचनस्य भद्रमस्तु, कथंभूतस्य मिथ्यादर्शनसमूहमयस्य तथात्वेऽप्यमृतसारस्य, न च वाच्यं मिथ्यादर्शनसमूहमयं यत् तद्विषकणिकासमूहमयस्येव कथं सम्यग्रूपतामासादयतीति, परस्परनिरपेक्षसंग्रहादिनयरूपापन्नसांख्यादिमिथ्यादर्शनानां 25

---

१. मतिश्रुतादिकं ज्ञानं चारित्रप्राप्तौ प्रधानं कारणम्, चरणविषयजीवाजीवादेर्हेयोपादेयादेश्च वस्तुनो ज्ञानमन्तरेणापरिज्ञानात् अपरिज्ञातस्य च यथावत्कर्तुमशक्यत्वात् तपःसंयमरूपाच्चरणात्तु निर्वाणं भवति तस्मात्सर्वसंवररूपनिर्वाणस्य चरणमेव प्रधानं कारणं ज्ञानन्तु कारणकारणत्वाद्गौणं कारणम् अतएव ज्ञानस्य सारश्चरणमिति आप्तवचनमपि संगच्छते । यदि ज्ञानस्य मोक्षं प्रति परम्परया क्रियायाश्चानन्तर्येणोपकारित्वे गुणप्रधानभावः, अथ युगपद् द्वे अपि कार्योत्पत्तावुपकुरुतस्तदा द्वयोरपि प्राधान्यमित्याशयः ॥

परस्परसव्यपेक्षतासमासादितानेकान्तरूपाणां विषकणिकासमूहविशेषमयस्यामृतसन्दोहस्येव सम्यक्त्वापत्तेः । दृश्यन्ते हि विषादयो भावाः परस्परसंयोगविशेषेण परिणत्यन्तरमापन्ना अगदरूपतामासादयन्तः, तथा मध्वाज्यप्रभृतयस्तु विशिष्टसंयोगेनावाप्तद्रव्यान्तराकृतिप्राप्ति-निमित्ततापन्नाः, अत एव निरपेक्षा नैगमादयो दुर्नयाः सापेक्षास्तु सुनया उच्यन्ते । न विद्यते
5 मृतं मरणं यस्मिन्नसौ अमृतो मोक्षः, तं मारयति गमयति प्रापयति वा, तस्यामृतसारस्य, अवन्ध्यमोक्षकारणत्वान्मोक्षप्रतिपादकत्वाच्च । रागाद्यशेषशत्रुजेतृपुरुषविशेषैरुच्यत इति जिनवचनं तस्य, अनेन विशिष्टपुरुषप्रणेतृत्वनिबन्धनं प्रामाण्यं निगमयति क्षीरास्रवाद्यनेक-लब्ध्याद्यैश्वर्योद्गमितो भगवत इत्यनेनापि विशेषणेन तस्यैहिकसम्पद्विशेषजनकत्वमाह । पुनः कीदृशस्य वचनस्य संविग्नसुखाधिगम्यस्य, संविग्नैः संसारभयोद्वेगाविर्भूतमोक्षाभिलाषैरप-
10 कृष्यमाणरागद्वेषाहङ्कारकालुष्यैरिदमेव जिनवचनं तत्त्वमित्येवं सुखेनावगम्यते यत्तत् संविग्न-सुखाभिगम्यं तस्य, एतेनापि विशिष्टबुध्यतिशयसम्पत्समन्वितयतिवृषभनिषेव्यत्वमस्य प्रति-पादयति, एवंविधगुणाध्यासितस्य जिनवचनस्य सामायिकादिबिन्दुसारपर्यन्तश्रुताम्भोधेः कल्याणमस्तु, इतिप्रकरणसमाप्तावन्त्यमङ्गलप्रतिपादिकाविशिष्टस्तुतिः ॥ ६९ ॥

विख्यातार्हतशासने वरतपागच्छाम्बधायोदय-
क्षोणीध्रेऽभवदुष्णभानुविजयानन्दाख्यसूरीश्वरः ।
यद्विज्ञानरुचा ततं जिनपतेर्मूर्त्तिप्रतिक्षेपकं
वाग्ध्वान्तमनीयताशु तुहिनक्ष्माभृद्गभीरां गुहाम् ॥ १ ॥
योगाभ्यासवशीकृतेन्द्रियगणः साक्षात्तपोविग्रहो.
वादिव्रातवचोविमर्दनपटुः शास्त्राटवीकेसरी ।
अर्हच्छासनवारिधिप्रमथनाद्रत्नत्रयं प्राप्तवान्
जातः श्रीकमलाख्यसूरिमघवा तत्पट्टभानुः सुधीः ॥ २ ॥
कृत्वा तत्पदपङ्कजं हृदि सदा तत्पट्टविद्योतनो,
राकायां नभसो शुखाभ्रनयनैर्वर्षे मिते वैक्रमे ।
ध्यात्वा पार्श्वजिनेशपादकमलं श्रीस्तम्भपुर्यामहम्
व्याख्यानेन च लब्धिसूरिमुनिपः सोपानपूर्त्तिं व्यधाम् ॥ ३ ॥
सोपानचन्द्र एष भवतु न वा खलहृदयतमश्छित्यै ।
सरलहृदां साधूनां चेतोनलिनीपतिर्भवति नूनम् ॥ ४ ॥

इति श्रीतपोगच्छनभोमणि श्रीमद्विजयानंदसूरीश्वरपट्टालङ्कार श्रीमद्विजय-कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-लब्धिसूरिणा सङ्कलिते सम्मतितत्त्वसोपाने श्रीमुक्तिसमर्थनं नाम एकचत्वारिंशं सोपानम् ॥

---

समाप्तञ्च सम्मतितत्त्वसोपानम् ।

# सम्मतिमूलगाथानामकाराद्यनुक्रमः




| गाथा | पृ. | पं. |
|---|---|---|
| अणु दुअणुएहिं दव्वे | २७६ | ९ |
| अण्णायं पासंतो | २४० | १८ |
| अण्णोण्णाणुगयाण | १७७ | १७ |
| अत्थि अविणासधम्मी | ३२२ | २० |
| अत्थि त्ति णिव्वियप्पं | १६५ | १९ |
| अत्थंतरभूएहि य | १६७ | १० |
| अहिट्ठ अण्णायं च | २४० | ७ |
| अह देसो सब्भावे | १७० | १९ |
| अह पुण पुव्वपयुत्तो | २५४ | १४ |
| आइट्ठोऽसब्भावे | १७१ | २० |
| इहरा समूहसिद्धो | १५४ | ४ |
| उप्पज्जमाणकालं | २७५ | १ |
| उप्पज्जंति वियंति य | १३९ | २३ |
| उप्पाओ दुवियप्पो | २७० | १७ |
| एए पुण संगहओ | १४७ | २५ |
| एगदवियम्मि जे | १५९ | २७ |
| एगसमयम्मि एग | २७९ | १९ |
| एगतणिव्विसेसं | २५७ | ७ |
| एयंतपक्खवाओ | २६४ | ४ |
| एयंताऽसब्भूयं | ३३२ | २ |
| एवं एगे आया | १७८ | १३ |
| एवं जिणपण्णत्ते | २५२ | ७ |
| एवं जीवद्दव्वं | २५५ | ६ |
| एवं सत्तवियप्पो | १७२ | १६ |
| एवं सेसिंदिय | २४८ | ५ |
| कम्मं जोगनिमित्तं | १५१ | ५ |
| कायमणवयण | २८० | २ |
| कालो सहावणियई | ३१६ | १६ |
| कुंभो ण जीवदवियं | २६९ | २६ |
| केई भणंति जइया | २३५ | २ |
| केवलणाणमणंतं | २४० | २४ |
| केवलणाणावरण | २३६ | १७ |
| केवलणाणं साई | २५३ | १ |
| कोवं उप्पायंतो | २६० | २५ |
| गइपरिगयं गई | २६९ | १ |
| गुणणिव्वत्तियसण्णा | २६९ | १३ |
| गुणसद्दमंतरेणावि | २६३ | १० |
| चक्खुअचक्खुअवहि | २४६ | १९ |
| चरणकरणप्पहाणा | ३६२ | १७ |
| जइ उग्गहमेत्त | २४७ | १९ |
| जइ सव्वं सायारं | २३९ | ७ |
| जह एए तह अण्णे | १४९ | १ |
| जइ कोइ सट्ठिवरिसो | २५४ | २२ |
| जह जह बहुस्सुओ | ३६२ | ६ |
| जहऽणेयलक्खण | १५२ | २० |
| जह दवियमप्पियं | १७३ | १७ |
| जह दससु दसगुणम्मि | २६३ | १९ |
| जह पुण ते चेव मणी | १५२ | २५ |
| जह संबंधविसिट्ठो | २६४ | २० |
| जाइकुलरूवलक्खण | १७४ | २१ |
| जावइया वयणवहा | २८४ | ८ |
| जीवो अणाइणिहणो केवल | २५३ | २७ |
| जीवो अणाइणिहणो जीव | २५५ | १९ |
| जुज्जइ संबंधवसा | २६५ | १९ |
| जेण मणो विसयगयाण | २४६ | ८ |
| जे वयणिज्जवियप्पा | १८१ | १ |
| जे संतवायदोसे | ३१० | १० |
| जे संघयणाईया | २५३ | ८ |
| जो आउंचणकालो | २७४ | १६ |
| जो हेउवायपक्खम्मि | २८२ | १९ |

| गाथा | पृ. | पं. |
|---|---|---|
| जं अप्पुट्ठा भावा (६१ गा०) | २५० | ४ |
| जं अप्पुट्ठे भावे | २५० | ११ |
| जं काविलं दरिसणं | २८४ | २१ |
| जं च पुण अरिहया | २६२ | ९ |
| जं पच्चक्खग्गहणं | २४९ | २१ |
| जंपंति अत्थि समये | २६३ | २ |
| जं सामण्णग्गहणं | १८९ | ५ |
| णत्थि ण णिच्चो ण कुणइ | ३२१ | १८ |
| ण य तइओ अत्थि णओ | १४८ | १४ |
| ण य दव्वट्ठियपक्खे | १५० | ४ |
| ण य बाहिरओ भावो | १७८ | २६ |
| ण य होइ जोव्वणत्थो | १७४ | १० |
| ण वि अत्थि अण्णवादो | २६७ | १५ |
| ण हु सासणभत्ती | ३४० | १८ |
| णाणं अपुट्ठे अविसये | २४८ | १७ |
| णाणं किरियारहियं | ३६३ | ३ |
| णियमेण सद्दहंतो | २६८ | १४ |
| णिययवयणिज्जसच्चा | १५८ | १८ |
| तम्हा अण्णो जीवो | २५४ | ६ |
| तम्हा अहिगयसुत्तेण | ३५४ | १३ |
| तम्हा चउव्विभागो | २४५ | १ |
| तम्हा सव्वे वि णया | १५२ | ४ |
| तह णिययवायसुविणिच्छिया | १५२ | २२ |
| तह सव्वे णयवाया | १५२ | २७ |
| तिण्णि वि उप्पायाई | २७३ | १३ |
| तित्थयरवयणसंगह | ८५ | १४ |
| ते उ भयणोवणीया | ३१५ | ९ |
| तेहिं अतीताणागय | १७५ | ५ |
| दव्वट्ठियोत्ति तम्हा | १३८ | १९ |
| दव्वट्ठिओ वि होऊण | २३४ | १ |
| दव्वट्ठियणयपयडी | १०७ | १० |
| दव्वट्ठियवत्तव्वं अवत्थु | १३९ | ५ |
| दव्वट्ठियवत्तव्वं सव्वं | १५९ | ४ |
| दव्वट्ठियवत्तव्वं सामण्ण | ३३१ | ३ |
| दव्वट्ठियस्स आया | १८० | ११ |
| दव्वट्ठियस्स जो चेव | १८० | २० |
| दव्वत्थंतरभूया | २६६ | २३ |
| दव्वंतरसंजोगाहि | २७३ | १ |
| दव्वस्स ठिई जम्म | २६६ | १३ |
| दव्वं खित्तं कालं | ३३३ | १० |
| दव्वं जहा परिणयं | २५९ | १६ |
| दव्व पज्जवविउयं | १४० | १० |
| दुविहो धम्मावाओ | २८१ | ४ |
| दूरे ता अण्णत्तं | २६१ | १८ |
| दो उण णया भगवया | २६२ | १० |
| दो हि वि णयहि णीअं | २८५ | ११ |
| दंसणणाणावरणक्खए | २३८ | २२ |
| दंसणपुव्वं णाणं | २४७ | ११ |
| दंसणमोग्गहमेत्तं | २४७ | १ |
| नत्थि पुढवीविसिट्ठो | ३१५ | २१ |
| नामं ठवणा दविएत्ति | १२३ | २७ |
| पच्चुप्पण्णम्मि वि पज्जयम्मि | २६० | ११ |
| पच्चुप्पण्णं भावं | २५७ | १९ |
| पज्जवणयवोक्कंतं | १३८ | १ |
| पज्जवणिस्सामण्णं | १३७ | ४ |
| पडिपुण्णजोव्वणगुणो | १७४ | १ |
| पण्णवणिज्जा भावा | २४४ | १८ |
| परपज्जवेहिं असरिसगमेहिं | २५७ | २५ |
| परवत्तव्वयपक्खा | २४५ | २२ |
| परिगमणं पज्जाओ | २६२ | १८ |
| परिसुद्धो नयवाओ | २८३ | २२ |
| परिसुद्धं सायारं | २३९ | २० |
| पाडेक्कनयपहगयं | ३३९ | १३ |
| पिउपुत्तणत्तु भव्वय | २६४ | १३ |
| पुरिसज्जायं तु पडुच्च | १८१ | १३ |
| पुरिसम्मि पुरिससद्दो | १६० | १५ |
| बहुयाण एगसद्दे | २७९ | ७ |
| बंधम्मि अपूरंते | १५१ | १७ |
| भण्णइ खीणावरणे | २३७ | ७ |
| भण्णइ जह चउणाणी | २४१ | ९ |

| गाथा | पृ. | पं. |
|---|---|---|
| भण्णइ विसमपरिणयं | २६६ | २ |
| भण्णइ संबंधवसा | २६५ | १२ |
| भद्दं मिच्छदंसणसमूह | ३६३ | १९ |
| भयणा वि हु भइयव्वा | २६७ | २५ |
| भविओ सम्मद्दंसण | २८२ | ४ |
| मइसुयणाणणिमित्तो | २४९ | १३ |
| मणपज्जवणाणंतो | २३४ | १६ |
| मणपज्जवणाणं दंसणं | २४८ | २६ |
| मूलणिमेणं पज्जवणयस्स | १०८ | ८ |
| रूआइ पज्जवा जे देहे | १७८ | १ |
| रूवरसगंधफासा | २६१ | ७ |
| लोइयपरिच्छयसुहो | १५३ | २० |
| वंजणपज्जायस्स उ | १६६ | १ |
| विगमस्स वि एस विही | २७२ | २४ |
| सब्भावासब्भावे देसो | १७२ | २ |
| सब्भावे आइट्ठो | १७१ | ६ |
| समयपरमत्थवित्थर | ६० | ५ |
| सम्मण्णाणे णियमेण | २५२ | १६ |
| सम्मद्दंसणमिणमो | ३४० | ८ |
| सवियप्पणिव्वियप्पं | १६६ | १४ |
| सव्वणयसमूहम्मि वि | १४९ | १६ |
| साई अपज्जवसियं | २५१ | २८ |
| साभाविओ वि समुदयकओ | २७१ | १ |
| सामण्णंम्मि विसेसो | २५६ | २२ |
| साहम्मउ व्व अत्थं | ३२४ | १ |
| सिद्धत्तणेण य पुणो | २५३ | १७ |
| सिद्धं सिद्धत्थाणं | ३ | १६ |
| सीसमईविप्फारण | २६७ | ७ |
| सुत्तं अत्थनिमेणं | ३५३ | २३ |
| सुत्तम्मि चेव साई | २३७ | १५ |
| सुहदुक्ख सम्पओगो | १५० | २१ |
| सोऊण समासओ च्चिय | १५९ | १३ |
| संखेज्जमसंखेज्जं | २५६ | ३ |
| संतम्मि केवले दंसणम्मि | २३८ | १५ |
| हेउविसओवणीअं | ३३१ | १९ |
| होज्जाहि दुगुणमहुरं | २६५ | २ |


१६६ सम्पूर्ण श्लोकसंख्या

